प्रकाशक —
लाला तुलसीराम जैन, मैनेजिङ्ग
ोप्राइटर, मेहरचन्द्र लक्ष्मणदास,
ंस्कृत हिन्दी पुस्तक विक्रेता,
दमिट्ठा बाज़ार, लाहौर



मुद्रक —
लाला ख़ज़ानचीराम जैन,
मैनेजर, मनोहर इलैक्ट्रिक
प्रेस, सैदमिट्ठा बाज़ार, लाहौर

# पञ्चतन्त्रस्थश्लोकानुक्रमणिका ।

ॐ

# द्वित्राः शब्दाः ।

---

एवं नु ध्यातव्यं यद्विल महाकविविशाखदत्तप्रणीते मुद्राराक्ष- नामनि नाटके कौटिल्योक्ति—"अस्ति चास्माकं सहाध्यायी मित्रं [illegible] शर्मा नाम ब्राह्मणः, स चौशनस्यां दण्डनीतौ चतुःषष्ट्यङ्गे [illegible] परं प्रावीण्यमुपगतः" इति । तदनेनायमेव विष्णुशर्मा [illegible] त्याभाति । असौ महानुभावः क्रिस्तोत्पत्तेः पूर्वं [illegible] चातुर्थिकस्य वा प्रारम्भे जन्म लेभे, यतः [illegible] प्रतिष्ठापकस्य सार्वभौमस्य चन्द्रगुप्तस्य क्रिस्तात्पूर्वं [illegible] न्दीया सत्ताऽवधार्यते पुरातत्त्वविद्भिर्विपश्चिद्भिः । सोऽसौ सुमहत्साहाय्य- कारिणं कुटिलनीतिविदां धौरेयं कौटिल्यापराभिधं चाणक्यं नाम प्रधाना- मात्यं प्राप्य नव नन्दान् जघान, तेषां राज्यसिंहासनमधितष्ठौ । तदेवं चाणक्यस्य परमसुहृदयं विष्णुशर्मेति तत्समानकालिकः स्यादिति केचित् ।

अन्येतु—मुद्राराक्षसीयं संवादमप्रमाणयन्तश्चाणक्यमित्रादन्यमेव विष्णुशर्माणं पञ्चतन्त्रकारं समाकलयन्ते, परं दुर्घटमिदमापतते यदाद्यग्रन्थकर्तॄणां समयनिर्धारणं नाम, यत्र बहुक्लेशभाजां विदुषां भिन्ना भिन्नाः कल्पनाः सम्भवन्ति । सम्भवन्तु वा ताः, परन्त्वस्य ग्रन्थस्य विष्णुशर्मप्रणीतत्वे—

> सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम् ।
> तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥

इति ग्रन्थारम्भ एव स्वीयपरिचयदानात् न कोऽपि विवादावस- रोऽस्ति । अस्य पारसीकादिविविधभाषास्वनुवादोऽपि वर्तते, येनास्य परा ख्यातिर्नयमाहात्म्यञ्च ननु प्रतिष्ठास्थानमित्यपि न विस्मर्त्तव्यम् । अन्या अपि एतद्विषयिण्यः कल्पनाः कुत्रचित् कुत्रचिदुपलभ्यन्ते । मया तु ग्रन्था-

न्तररचनाभ्यासक्तेन बहुविवेचनामकुर्वता तदीयपरिचयमात्रं प्रदत्तम् ।

यद्यपि अस्योपरि परेषा विदुषामपि सविस्तरा टीका समुपलभ्यन्ते, परं "मेहरचन्द्र लक्ष्मणदास" इत्यनेनानेकग्रन्थप्रकाशनरसिकेन श्रेष्ठिवरेण प्रेरितोऽहं "सुबोधिनी" नाम टीका व्यरचयम्, याऽल्पपाठा सत्यपि मूलार्थ-मर्मप्रकाशने सर्वतोऽतिशेत इति कृतधियो विद्वास स्वयमेव निष्पक्षदृशा समालोचयन्तु, कोऽहि नाम स्वात्मानं न श्लाघत इति । किन्तु मणिमाणिक्यादिपरीक्षणनयनिपुणै परीक्षितमेव सुवर्ण सुप्रतिष्ठितं भवतीति स्वात्मश्लाघनं न शोभते ।

एतदीयप्रूफसंशोधनादिविषयकोऽधिको भारस्तु मदीयशिष्येण **खण्डूड़ीत्युपाह्वेन विजयानन्दशास्त्रिणैव** स्वाशिरसि धृत आसीदित्यहं हृदा तस्मा आशिषां ततीं प्रकाशयामि ।

एवंकृतेऽप्यस्य संशोधने मनुष्यजनसुलभप्रमादहेतोर्यदि क्वचित् कथञ्चित् किञ्चिदशुद्धं समुपलभ्येत, तदा तस्य संशोधनेन मयि कृपा विधास्यन्ति दयैकधना गुणग्रहिला महानुभावो विद्वास । यत —

गच्छत स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जना ॥ इति

प्रार्थयते—

विदुषामनुचर.—

ता० १।१०।३२ ई० } **नृसिंहदेवः ।**

# पञ्चतन्त्रस्थविषयानुक्रमणिका ।

## (३) काकोलूकीयम्—



## (४) लब्धप्रणाशम्—



## (५) अपरीक्षितकारकम्—

॥ श्रीः ॥

# पञ्चतन्त्रम् ।

( सुबोधिनीटीकोपेतम् )

## कथामुखम् ।

ब्रह्मा रुद्रः कुमारो हरिवरुणयमा वह्निरिन्द्रः कुबेर-
श्चन्द्रादित्यौ सरस्वत्युदधियुगनगा वायुरुर्वी भुजङ्गाः ।
सिद्धा नद्योऽश्विनौ श्रीर्दितिरदितिसुता मातरश्चण्डिकाद्या
वेदास्तीर्थानि यज्ञा गणवसुमुनयः पान्तु नित्यं ग्रहाश्च ॥ १ ॥
मनवे वाचस्पतये शुक्राय पराशराय ससुताय ।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्तृभ्यः ॥ २ ॥
सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम् ।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥ ३ ॥

तद्यथानुश्रूयते-अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र सकलार्थिकल्पद्रुम प्रवरमुकुटमणिमरीचिमञ्जरीचर्चितचरणयुगल सकलकलापारंगतोऽमरशक्तिर्नाम राजा बभूव । तस्य त्रयः पुत्राः परमदुर्मेधसो बहुशक्तिरुग्रशक्तिरनन्तशक्तिश्चेति नामानो बभूवु । अथ राजा ताञ्शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच,—भो ! ज्ञातमेतद्भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च । तत् एतान् पश्यतो मे महदपि राज्यं न सौख्यमावहति । अथवा साध्विदमुच्यते—

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ४ ॥

वरं गर्भस्रावो वरमृतुषु नैवाभिगमनं
वरं जातः प्रेतो वरमपि च कन्यैव जनिता ।
वरं वन्ध्या भार्या वरमपि च गर्भेषु वसति

न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनय ॥ ५ ॥
किं तया क्रियते धेन्वा या न सूते न दुग्धदा ? ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न भक्तिमान् ? ॥ ६ ॥
वरमिह वा सुतमरणं मा मूर्खत्वं कुलप्रसूतस्य ।
येन विबुधजनमध्ये जारज इव लज्जते मनुजः ॥ ७ ॥
गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमा यस्य ।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी भवति ॥ ८ ॥

## अथ पञ्चतन्त्रस्य 'सुबोधिनी' नाम टीका प्रारभ्यते—

### * टीकाकारमङ्गलम् *

हेरम्बपदपाथोजमकरन्दलिहां सताम् ।
प्रत्यूहा नाशमायान्ति तमांसीवारुणोदये ॥ १ ॥
हे ! हेरम्ब ! भवन्नाम स्मराम्यनिशमादरात् ।
विघ्नपुञ्जमहाध्वान्तं विध्वंसय निजेक्षणात् ॥ २ ॥
सारस्वतं महाधाम चिन्तये बोधलब्धये ।
अन्ध एव सदा तिष्ठेद् विशालाक्षोऽपि यद्विना ॥ ३ ॥
शिवं शिवां गुरूंश्चापि पितरौ प्रणिपत्य च ।
व्याकृतिं पञ्चतन्त्रस्य रचयामि "सुबोधिनीम्" ॥ ४ ॥
दुरूहग्रन्थग्रन्थीनां भेदने या प्रगल्भताम् ।
धत्ते सा कठिनी नाद्य मनागपि विलक्षताम् ॥ ५ ॥
अस्त्यत्र कारणं छात्रदया शास्त्ररसोऽपि च ।
"काव्यशास्त्रविनोदेन" त्येतच्छास्त्रविदां वचः ॥ ६ ॥
ननु सन्त्येवात्र टीकाः ? सन्तु नाम तथापि किम् ।
स्वयं सूरिजनज्ञेयाऽस्त्येवात्रापि विचित्रता ॥ ७ ॥

प्रारिप्सितपरिसमाप्तिप्रतिबन्धकीभूतप्रत्यूहप्रशमनकामो ग्रन्थारम्भे शिष्टाचारपरिपालनं दर्शयन् ग्रन्थकारो नानादेवसङ्कीर्त्तनव्याजेन आशीर्वादात्मकं समङ्गलमाचरति—"ब्रह्मा" इत्यादिना ।

ब्रह्मा आदिशरीरी हिरण्यगर्भः । उक्तञ्च—

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत ॥ इति ।

रुद्रः=महादेवः । "या ते रुद्र शिवा तनूरघोरा पापकाशिनी" तिश्रुतेः । कुमारः=षडाननः कार्त्तिकेयः । हरिः=शेषशायी भगवान् विष्णुः । वरुणः=जलाधिष्ठातृदेवः । यमः=निरयाधिकारे नियुक्तो देवविशेषो दण्डहस्तः । वह्निः=हुतभुक् । इन्द्रः=देवानां राजा स्वर्पतिः । कुबेरः=धनाध्यक्षः । चन्द्रः=शशी । आदित्यः=रविः । सरस्वती=वागधिष्ठात्री देवी । उदधिः=समुद्रः । युगानि=कृतं, त्रेता द्वापरं कलिश्चेति चत्वारि । नगाः=महीधराः । वायुः=पवनः । उर्वी=पृथिवी, भुजङ्गाः=सर्पाः, सिद्धाः=देवयोनिविशेषाः, नद्यः=सरितः, अश्विनौ=स्वर्वैद्यौ नासत्यापरपर्यायौ, श्रीः=लक्ष्मीः विष्णुशक्तिः दितिः=कश्यपपत्नी दैत्यमाता, अदितिसुताः=देवाः, चण्डिकाद्याः=चण्डीप्रभृतयो मातरः, आदिपदेन ब्रह्माण्या-दीनां ग्रहणम् । वेदाः=ऋग्यजुःसामाख्याश्चत्वारः, तीर्थानि=गङ्गाप्रभृतीनि, यज्ञाः=सन्ध्यादिपञ्चमहायज्ञाः, दर्शपौर्णमासाद्या वा । गणाः=प्रमथाद्याः शिव-गणाः, वसवः=अष्टौ गणदेवाः । मुनयः=व्यासप्रभृतयो वसिष्ठाद्या वा सप्त । ग्रहाः=सूर्याद्या नव । एते सर्वे नित्यं=सदैव पान्तु=अस्मान् पठकान् पाठ-कांश्च सर्वानेव रक्षयन्त्वित्यर्थः ।

अत्र—"हरिवरुणयमाः" 'चन्द्रादित्यौ" "सरस्वत्युदधियुगनगाः' "गणवसुमुनयः" एतेषां द्वन्द्वः । "पान्तु" इति "पा रक्षणे" इत्यस्य अदा-दिकस्य लोटि प्रथमपुरुषैकवचने रूपम् । वसवश्च—

धरो ध्रुवश्च सोमश्च विष्णुश्चैवाऽनिलोऽनलः
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ क्रमात्स्मृताः ॥

इत्यष्टौ ज्ञेयाः । "वस निवासे" इत्यस्मात्—शृस्वृस्निह्त्रप्यसिवसि हनिक्लिदिबन्धिमनिभ्यश्च" इत्यौणादिक उप्रत्ययः ।"देवभेदे नदे रत्ने धने वसु" इत्यमरः । स्रग्धरा वृत्तम् । "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्ति-तेयम्" इति तल्लक्षणात् ॥ १ ॥

सम्प्रति नयशास्त्रप्रवर्त्तकानाचार्यान् प्रणमति—

"**मनवे**" इति । आदिमनवे स्वयम्भूसुताय, वाचस्पतये = देवगुरवे बृहस्पतये, शुक्राय=दैत्यगुरवे, ससुताय=पुत्रसहिताय, पराशराय, तथा विदुषे = पण्डिताय सन्धिविग्रहादिकुशलाय चाणक्याय=कौटिल्यार्थशास्त्रप्रणेत्रे तन्नाम्ने नमोऽस्तु = प्रणामो भवतु । एवमेवेभ्योऽन्येभ्योऽपि नयशास्त्रकर्तृभ्य = नीतिशास्त्रप्रणेतृभ्य आचार्येभ्यो नमोऽस्त्विति सम्बन्ध. ।

सर्वत्रैवात्र नमोयोगे चतुर्थी । आर्याख्यं छन्द । "यस्या प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या" इति तल्लक्षणात् ॥ २ ॥

सकलार्थेति—स = नयशास्त्रसङ्गृहीतृषु प्रसिद्ध विष्णुशर्मा नाम पण्डित जगति = लोके सकलार्थशास्त्रसारम् = सकलाना समग्राणामर्थशास्त्राणा नीतिग्रन्थाना सारं तत्त्वं मार्मिकमर्थजातमिति यावत् समालोक्य= सम्यगालोच्य पञ्चभि = पञ्चसङ्ख्याकै तन्त्रै = भागै एतत = पञ्चतन्त्राख्यं सुमनोहरम् = हृद्यं युवजनमनोवशीकरणसमर्थं लोकव्यवहारोपकारक शिक्षणकरत्वादिति भाव । नीतिशास्त्र चकार = प्रणिनायेत्यर्थ 'तजगत्स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु" इति "सारो बले स्थिरांशे च मज्ञि पुंसि जले धने । न्याय्ये क्लीब त्रिषु वरे" इति च मेदिनी । वृत्तमार्या । लक्षणमुक्त प्राक् ॥ ३ ॥

दाक्षिणात्ये=दक्षिणस्यादिशि वर्त्तमाने । जनपदे = देशे । "दक्षिणापश्चात्पुरसस्त्यक्" ( ४ । २ । ९८ ) इति सूत्रेण दक्षिणेत्याजन्ताव्ययपदात् त्यक् ताद्धित । सकलेति—सकलाश्च तेऽर्थिनो याचका इति सकलार्थिन सकलार्थिना कल्पद्रुम = कल्पवृक्ष सकलकामनाप्रपूरकत्वात्, यथा कल्पपादपमासाद्य वाञ्छितार्थप्रपूर्त्तिस्तथैव तम्प्राप्य याचकाना कामनाप्रपूर्त्तिरासीदिति भाव । अत्र रूपकालङ्कार । तदुक्त भामहेन—

उपमानेन यत्तत्त्वमुपमेयेन रूप्यते ।
गुणाना समता दृष्ट्वा रूपकं नाम तद्विदु ॥ इति ॥

प्रवरेति—प्रवरा = अतिश्रेष्ठा ये राजान तेषा प्रवराणा मुकुटमणीनां किरीटरत्नाना या मरीचय किरणा एव मञ्जर्य शिञ्जर्य मयूखमाला इति

यावत्, ताभि र्चार्चितं पूजितं चरणयुगलं पादद्वन्द्वं यस्य स । क्वचित्तु "प्रवर-नृपतिमुकुटमणिमरीचि"—इति पाठः । अत्र प्रवराश्च ते नृपतयो राजानः इति स्पष्टैवार्थप्रतिपत्तिः । सकलकलापारगतः = सकलाश्च ताः कला विद्या इति सकलकलाः तासां पारमन्तङ्गतः प्राप्तः चतुःषष्टिकलावित् अमरशक्तिर्नाम = "अमरशक्ति" रितिनामधेयः । राजा बभूवेति सम्बन्धः । "अमरशक्ति" रिति नाम्ना तस्य दिव्यं सामर्थ्यं सूचितम् । पुत्राः = सुताः । परमदुर्मेधसः = दुर्दुष्टा मेधा बुद्धिर्येषां ते दुर्मेधसः 'नित्यमसिच् प्रजामेधयोः' (५।४।१४) इत्यनेन असिच् समासान्तः । परमाश्च दुर्मेधस इति "परमदुर्मेधसः" अत्यन्तं मूर्खा इत्यर्थः । तान् = निजान् ज्ञान्सुतानशास्त्रविमुखान् = शास्त्रज्ञानशून्यानित्यर्थः । सचिवान् = मन्त्रिणः (मन्त्री सहायः सचिवौ इत्यमरः) आहूय = आकार्य । शास्त्रविमुखाः = शास्त्रज्ञानशून्याः विवेकरहिताः = कर्त्तव्याऽ-कर्त्तव्यविचारहीनाः । इति यावत् ।

अजातेति—न जातोऽजातः । अजातश्च मृतश्च मूर्खश्च ते, तेभ्यः अपेक्षाया पञ्चमी । अजातमृतमूर्खानपेक्ष्येत्यर्थः । सा च ल्यब्लोपे बोध्या । मृताजातौ=मृतश्च अजातश्च तौ मृताजातौ अर्थात् उत्पद्य यो मृतः परलोकङ्गतः यश्चोत्पन्न एव नास्ति तौ द्वावपि सुतौ वरम्=किञ्चित्प्रियौ स्तः । (देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये" इत्यमरः) उक्तेऽर्थे हेतुं दर्शयति—"यतः" इति । यतः = यस्मात्कारणात् तौ = द्वौ मृताजातौ, स्वल्पदुःखाय=किञ्चिद्दुःखाय "स्तः" इति शेषः । जडः = मूर्खस्तु यावज्जीवम् = सकलंजीवनं यावत् जीवनपर्यन्तमित्यर्थः । दहेत् = पीडयेत्, मूर्खपुत्रजनितः सन्तापो मरणावधि तिष्ठतीति भावः । पथ्यावक्त्रं वृत्तम् । "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्ति-तम्" इति तल्लक्षणात् ॥ ४ ॥

भङ्ग्यन्तरेण तमेव मूर्खं पुत्रं निन्दति—"**वरं गर्भस्राव**" इति । गर्भस्रावः = गर्भस्य भ्रूणस्य स्रावः स्खलनं गर्भस्रावः अपक्वस्यैव गर्भस्य पातः इत्यर्थः, वरम् = मनाक्प्रियः प्रायो 'वर' पदस्य=सर्वत्र पूर्ववदेवार्थो बोध्यः । ऋतुषु = स्त्रियः आर्त्तवदिवसेषु अभिगमनम् = सङ्गमो नैव वरम् = नैवोचितम् अयमाशयः—रजोनिःसरणादारभ्य षोडशनिशासु स्त्रीणामृतुर्भवति तेष्वेव

दिवसेषु गृहस्थस्य स्त्रीसङ्गमविधि "ऋतौ भार्यामुपेयादिति" श्रुते ।

ऋतुकालाभिगामी स्यात्स्वदारनिरत सदा ।

* पर्ववर्ज व्रजेच्चैना तद्व्रतो रतिकाम्यया ॥ ( मनु० ३ । ४५ )

इति स्मृतेश्च । यश्चर्त्तौ भार्या नोपैति स पापीयान् भवति। उक्तञ्च पराशरेण—

ऋतुस्नाता तु यो भार्यां सन्निधौ नोपगच्छति ।

घोरायां भ्रूणहत्यायां† पतते नात्र संशय ॥ इति ।

यद्यप्येव शास्त्रदृष्ट्यर्त्तौ भार्याभिगमनाभावे दोपस्तथापि मूर्खसन्तान-भीतिहेतोस्तत्त्याग एवोचित इति मूर्खानिन्दाया तात्पर्य नतु शास्त्रनियमोल्लङ्घन इति सुधीभिर्विभावनीय 'नहि निन्दा निन्दितु प्रवर्त्तते' इति न्यायादिति भाव । जात = उत्पन्न सन्नेव प्रेत = मृतो वरम्, कन्या = पुत्री अपि जनिता = उत्पन्ना वरम्, वन्ध्या = प्रसवसामर्थ्यशून्या भार्या = पत्नी वरम् गर्भेषु = मातुर्गर्भाशयेषु ( करङ्करूपेण ) स्थिति = वासोऽर्थात् भ्रूणस्य गर्भाद्-निर्गमो वरम्, रूपद्रविणगुणयुक्त =रूपञ्च द्रविणञ्च रूपद्रविणे ते एव गुणा तद्युक्तोपि अर्थात् सुरूपो धनाढ्यश्च अविद्वान् = मूर्खश्चेत् तनय = पुत्र ( सतु ) नच = नैव वरम । मूर्खपुत्रो महादु खप्रद इति भाव । शिखरणी छन्द । "रसै रुद्रै छिन्ना यमनसभला ग: शिखरिणी" इति तल्लक्षणात् ॥ ५ ॥

"कोऽर्थ" इति । जातेन=उत्पन्नेन (तेन) पुत्रेण=सुतेन क अर्थ =किं प्रयोजन नैव किञ्चिदित्यर्थ , कीदृशेन —य = पुत्र न = नैव विद्वान् = पण्डित न = नापि भक्तिमान् = मातृपितृसेवापरायण । "न च धार्मिक " इति पाठे तु । वेदविहितकर्मानुष्ठानपरो नास्तीत्यर्थो बोध्य । उक्तेऽर्थे दृष्टान्तमाह— "..." इति । या धेनु = गौ न सूते = प्रसवं न करोति, न = नच

* पर्वाण्यमावास्यादीनि तानि वर्जयित्वा । अत्र ( मनुवाक्ये ) विधित्रयं ...ध्यम् —ऋतावुपेयादेव, अन्यभार्यां नोपगच्छेत्, अनृतावपि भार्याप्रीतये गच्छेदित्यपि न विस्मरणीयम ।

† आर्षम । परस्मैपदात्मनेपदव्यवस्थाने प्राञ्च स्वतन्त्रा अभूवन्निति तु वयम् ।

दुग्धदा = दुग्धं न ददाति अर्थात् पयस्विनी नास्ति तया=प्रसवपयोदानशक्तिविहीनया धेन्वा = गवा, किं क्रियते=न किमपीत्यर्थ । यथोक्तगुणद्वयशून्या धेनु पालयितु केवल भारभूता मुख्यप्रयोजनराहितत्वात् तद्वन्मूर्खपुत्रोऽपि निष्प्रयोजन एवेति भाव । अत्र दृष्टान्तालङ्कार । उक्तं च विश्वनाथेन—"दृष्टान्तस्तु सधर्मस्य वस्तुन प्रतिविम्वनम्" इति । अस्य फलितार्थस्तु—समानधर्मिण प्रणिधानगम्यसाम्यकतया वाक्यान्तरेणोपादानं दृष्टान्त. । प्रकृते—पूर्वार्धे विद्याभक्तिशून्यपुत्रजन्मनैष्फल्यरूपधर्मेण समानधर्मिरूपया प्रसवपयोदानहीनया धेन्वा उत्तरार्धे वाक्येनोपादानात् तया च धेन्वा सह प्रथमवाक्यगततादृशपुत्रीयसाम्यस्य वाचकाभावात् प्रणिधानेनैव गम्यतया दृष्टान्तता वोध्या ॥६॥

"वर" मिति—वा = अथवा इह = लोके सुतमर = सुतस्य पुत्रस्य मरण मृत्युर्वरम् । कुलप्रसूतस्य = उत्तमकुलजातस्य मूर्खत्वम् = मूर्खीभूत तस्य भावो मूर्खत्व मौढ्यं मा वरम् = नैव श्रेष्ठम् । मूर्खपुत्रापेक्षया तस्य मरणमेवश्रेय इति भाव । ( "अज्ञे मूढयथाजातमूर्खवैधेयवालिशा· इत्यमर ) उक्तमर्थमुपमालङ्कारेण द्रढयति —"येन" इति । येन = मूर्खभावेन मनुज = मूर्खोजन विवुधजनमध्ये = विवुधा पण्डिताश्च ते जना विवुधजना तेषा मध्ये अर्थात् पण्डितजनसमाजे जारज =जाराज्जायते इति जारज ( अमृते जारज कुण्डः इत्यमर ) कुण्ड इव लज्जते = व्रीडा प्राप्नोति । यथा कश्चन जारज ( मातुर्जाराज्जात न तु स्वपितु पुत्र ) कुलीनसभामध्ये स्वमुखमुन्नमयितु न प्रभवति तथैव मूर्खोऽपीति भाव । अत्रोपमालङ्कार । तदुक्तं दर्पणकारेण—'साम्य वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयो ' इति । वृत्तमार्या लक्षणमुक्तं प्राक् ॥ ७ ॥

"गुणिगणे' ति – गुणिना विदुषा गणा समाजा समूहा तेषा या गणना सङ्ख्यान तस्या आरम्भे = प्रकालेऽर्थात् एषु गुणिषु प्रथम कोऽस्तीति सङ्ख्याकाले यस्य = पुरुषस्य 'नामधेये इति शेष कठिनी = खटिका ( 'कठिनी खटिकायामपि कठिना गुडशर्करायाश्च' इति विश्व ) ससम्भ्रमा = सम्भ्रमेण त्वरया सह वर्त्तमाना ससम्भ्रमा सत्वरा न = नैव पतति = नामलेखायोद्यता न भवति, अर्थात्सगौरवं यस्य नाम न लिख्येत,

तेन = तादृशेन पुत्रेण अम्बा = माता यदि सुतिनी = पुत्रिणी स्यादिति शेष । ( तदा ) वद = त्वं कथय । वन्ध्या=प्रसवशून्या स्त्री कीदृशी = किमाकारा भवति । मूर्खपुत्रजनन्या वन्ध्यायाश्च तौल्यमेवेति भाव । वृत्तमुक्तं प्राक् ॥ ८ ॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम् । अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति । ततो यथा मम मनोरथाः सिद्धिं यान्ति तथानुष्ठीयतामिति । तत्रैक प्रोवाच—'देव ! द्वादशभिर्वर्षैर्व्याकरणं श्रूयते । ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि । एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते । तत प्रतिबोधनं भवति । अथ तन्मध्यतः सुमतिर्नाम सचिव प्राह—अशाश्वतोऽयं जीवितव्यविषय । प्रभूतकालज्ञेयानि शब्दशास्त्राणि । तत्सङ्क्षेपमात्रशास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यतामिति । उक्तं च यत —

अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥ ९ ॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारङ्गमश्छात्रसंसदि लब्धकीर्ति । तस्मै समर्पयतु एतान्, स नूनं द्राक्प्रबुद्धा... [illegible] इति । स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवा... 'भो ! भगवन् ! मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग्यथान... [illegible] स्मि तथा कुरु । तदहं त्वां शासनशतेन योज... [illegible] मि । अथ विष्णुशर्मा तं राजानमूचे—'देव ! श्रूयतां मे तथ्यवचनम् । नाहं विद्याविक्रयं शासनशतेनापि करोमि । पुनरेतांस्तव पुत्रान्मासषट्केन यदि नीतिशास्त्रज्ञान्न करोमि, तत स्वनामत्यागं करोमि । किं बहुना ? श्रूयतां ममैष सिंहनाद ।

नाहमर्थलिप्सुर्ब्रवीमि। ममाशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य न किञ्चिदर्थेन प्रयोजनम्। किंतु त्वत्प्रार्थनासिद्ध्यर्थं सरस्वतीविनोद करिष्यामि। तल्लिख्यतामद्यतनो दिवस। यद्यहं षण्मासाभ्यन्तरे तव पुत्रान्नयशास्त्रं प्रत्यनन्यसदृशान्न करिष्यामि, ततो नार्हति देवो देवमार्गं सदर्शयितुम्। अथासौ राजा तां ब्राह्मणस्यासम्भाव्यां प्रतिज्ञां श्रुत्वा ससचिव प्रहृष्टो विस्मयान्वितस्तस्मै सादरं तान्कुमारान्समर्प्य परां निर्वृतिमाजगाम। विष्णुशर्मणापि तानादाय तदर्थं मित्रभेद-मित्रसम्प्राप्ति-काकोलूकीय-लब्धप्रणाशाऽपरीक्षितकारकाणि चेति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्रा। तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ता। ततः प्रभृत्येतत्पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले प्रवृत्तम्। किं बहुना—

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।
न पराभवमाप्नोति शक्रादपि कदाचन ॥ १० ॥

## इति कथामुखम्।

तत् = तस्मात् कारणात्, एतेषाम् = मम पुत्राणाम्। बुद्धिप्रकाश = बुद्धेर्ज्ञानस्य प्रकाश उदय। उपाय = साधन प्रतीकार। वृत्तिम् = आजीविकाम्। = स्वीकुर्वाणानामित्यर्थ। पञ्चशती = पञ्चानां शतानां समाहार 'पञ्चशती' "अकारान्तोत्तरपदो द्विगु स्त्रियामिष्ट" (वा० २।४।१७) इति स्त्रीत्वे 'द्विगो' (४।१।२१) इति सूत्रेण ङीप्।

मनोरथा = सङ्कल्पा। श्रूयते = अधीयते। प्रतिबोधनम् = लोकपरलोकव्यवहारज्ञानम्। अशाश्वत = अस्थिर क्षणभङ्गुर। जीवितव्यविषय = जीवनसमय। प्रभूतकालज्ञेयानि = प्रचुर (बहु) कालवेद्यानि। शब्दशास्त्राणि = पाणिन्यादिप्रणीतव्याकरणादिशास्त्राणि।

"अनन्तपारम्" इति। किल = निश्चितमिदं (यत्) शब्दशास्त्रम् = व्याकरणम् अनन्तपारम = अगाधम्। उक्तञ्च महाभाष्ये—"बृहस्पतिश्च

अवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो नान्त जगाम" इति। तथा आयु = जीवनावधि स्वल्पम् = न बहु। विघ्ना = अन्तराया (शास्त्राणामध्ययने इति शेषः) बहव = प्रचुरा सन्ति तत = तस्माद्धेतो फल्गु = तुच्छमसारम् अपास्य = परित्यज्य सारम् = उत्कृष्ट (यदस्ति तदेव) ग्राह्यम्= आदेयम । अत्रार्थे उपमामाह—अम्बुमध्यात् = जलाभ्यन्तरात् हंसै = पक्षिविशेषै क्षीरं यथा = दुग्धमिव। यथा क्षीरनीरविवेकशक्तिमन्तो हंसा जलाविलदुग्धात् क्षीरभागमेवोपाददते जलभागञ्च परिहरन्ति तथैव विवेकिभिर्महतोऽपि महर्घ्यस शास्त्रसमुदायात् सारमेवादेयमिति भाव ॥६॥

सकलशास्त्रपारङ्गम = निखिलविद्यावेत्ता । छात्रसंसदि = छात्राणा समाजे। लब्धकीर्त्ति = प्राप्तप्रतिष्ठ। द्राक् = शीघ्रम्। प्रबुद्धान् = पण्डितान अनन्यसदृशान= न अन्यसदृशा अनन्यसदृशा तान् असाधारणानित्यर्थ । शासनशतेन=शतसङ्ख्या कग्रामात्मकसम्पत्तिप्रदानेन । तथ्यवचनम् = यथार्थवाक्यम्। विद्याविक्रयम् = विद्याया अर्थात् शास्त्राध्यापनस्य विक्रयं विपणम ('विपणो विक्रय" इत्यमर)। शास्त्रविक्रये दोष उक्तो धर्मशास्त्रे। सिंहनाद = सिंहस्य नाद इव नाद सिंहनाद गर्जनेत्यर्थ । अर्थलिप्सु = धनलुब्ध । अशीतिवर्षस्य=अशीतिसङ्ख्या वर्षा यस्य वृद्धस्येत्यर्थ । व्यावृत्तसर्वेन्द्रियार्थस्य= व्यावृत्ता निवृत्ता (सर्वे) सर्वेषामिन्द्रियाणा चक्षुरादीनामर्था रूपाद्या विषया यस्य स तादृशोऽहम, तस्य सकलेन्द्रियविषयेभ्यो विरक्तस्येत्यर्थ । न किञ्चिदिति= अल्पमपि धनेन प्रयोजनं नास्तीत्यर्थ । सरस्वतीविनोदम् = सरस्वत्या वाग्देव्या अर्थात् शास्त्रस्यैव विनोदं बालोपदेशेन मनोविलासं करोमि। ममाराद् ...तस्य मम सत्कृते किञ्चिदपि प्रयोजन नास्तीति भाव । एतेन विष्णुशर्मणो निरपेक्षत्व परोपकारित्वञ्च व्यज्यते।

देव =जगत्पतिर्भगवान । देवमार्गम् = स्वर्गसरणिम् । सन्दर्शयितुम् ...मर्हतीति शेष । अर्थात् यद्यहं स्वकीया प्रतिज्ञा न पूरये तदा भगवान मम ...प्ति न करोतु। एतेन ब्राह्मणा दृढप्रतिज्ञा भवन्तीत्यपि प्रत्यायितम्। पराम्= अत्यन्तम निर्वृतिम=सुखम्। तदर्थम् = राजपुत्रार्थम्। मित्रभेदेत्यादीना तन्त्रनाम्ना तत्तत्तन्त्रारम्भे व्याख्या द्रष्टव्या । अधीत्य = पठित्वा । यथोक्ता =

यथा कथितास्तथैव शास्त्रकुशला । सवृत्ता = सम्पन्ना । तत प्रभृति = तस्मा ५ारभ्य । प्रवृत्तम् = प्रचारितम् ॥

"पञ्चतन्त्र 'नामकनीतिशास्त्रस्य श्रवणपठनयो फलमाह—"अधीते" इति । य = पुमान् इदम् (सम्प्रति ग्रन्थरूपेण प्रत्यक्षम्, विष्णुशर्मणो रचनाकाले तद्बुद्धिस्थम् ) नीतिशास्त्रम् = पञ्चतन्त्र नाम नित्यम् = प्रत्यहम् अधीते = ठति शृणोति च = तथा आकर्णयते स कदाचन = कदापि शक्रादपि इन्द्रतुल्यशक्तिसम्पन्नशत्रो सकाशादपीत्यर्थ पराभवम्=तिरस्कारं पराजय न=नैव आप्नोति=आसादयते । तस्माच्छत्रो सकाशात्पराभवमसहमानेन नरेणावश्यमध्येतव्यमिदं शास्त्रमिति भाव ॥ १० ॥

**इति कथामुखम्**=अस्य ग्रन्थस्योपोद्घात इत्यर्थः ।

# मित्रभेदः

अथात प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रम् । यस्यायमादिमः श्लोक —

वर्धमानो महान्स्नेहः सिंहगोवृषयोर्वने ।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्य नाम नगरम् । तत्र धर्मोपार्जितभूरिविभवो वर्धमानको नाम वणिक्पुत्रो बभूव । तस्य कदाचिद्रात्रौ शय्यारूढस्य चिन्ता समुत्पन्ना—यत्प्रभूतेऽपि वित्तेऽर्थोपायाश्चिन्तनीया कर्तव्याश्चेति । यत उक्तं च—

न हि तद्विद्यते किंचिद्यदर्थेन न सिद्ध्यति ।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवा ।
यस्यार्था स पुमांल्लोके यस्यार्थाः स च पण्डित ॥ ३ ॥
न सा विद्या न तद्दानं न तच्छिल्पं न सा कला ।
न तत्स्थैर्यं हि धनिनां याचकैर्यन्न गीयते ॥ ४ ॥

वक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकाले नान्तं जगाम" इति । तथा आयु = जीवनावधि स्वल्पम् = न बहु । विघ्ना = अन्तराया (शास्त्राणामध्ययने इति शेषः) बहव = प्रचुरा सन्ति तत = तस्माद्धेतो फल्गु = तुच्छमसारम् अपास्य = परित्यज्य सारम् = उत्कृष्टं (यदस्ति तदेव) ग्राह्यम् = आदेयम् । अत्रार्थे उपमामाह—अम्बुमध्यात् = जलाभ्यन्तरात् हंसै = पक्षिविशेषै क्षीरं यथा = दुग्धमिव । यथा क्षीरनीरविवेकशक्तिमन्तो हंसा जलमिलदुग्धात् क्षीरभागमेवोपाददते जलभागञ्च परिहरन्ति तथैव विवेकिभिर्महतोऽपि महीयस शास्त्रसमुदायात् सारमेवादेयमिति भाव ॥६॥

सकलशास्त्रपारङ्गम = निखिलविद्यावेत्ता । छात्रसंसदि = छात्राणा समाजे । लब्धकीर्त्ति = प्राप्तप्रतिष्ठ । द्राक् = शीघ्रम् । प्रबुद्धान् = पण्डितान अनन्यसदृशान् = न अन्यसदृशा अनन्यसदृशा तान् असाधारणानित्यर्थ । शासनशतेन=शतसङ्ख्याकग्रामात्मकसम्पत्तिप्रदानेन । तथ्यवचनम् = यथार्थवाक्यम् । विद्याविक्रयम् = विद्याया अर्थात् शास्त्राध्यापनस्य विक्रयं विपणम ("विपणो विक्रय" इत्यमर)। शास्त्रविक्रये दोष उक्तो धर्मशास्त्रे। सिंहनाद = सिंहस्य नाद इव नाद सिंहनाद गर्जनेत्यर्थ । अर्थलिप्सु = धनलुब्ध । अशीतिवर्षस्य=अशीतिसङ्ख्या वर्षा यस्य वृद्धस्येत्यर्थ । व्यावृत्तसर्वेन्द्रियार्थस्य= व्यावृत्ता निवृत्ता (सर्वे) सर्वेषामिन्द्रियाणा चक्षुरादीनामर्था रूपाद्या विषया यस्य स तादृशोऽहम्, तस्य सकलेन्द्रियविषयेभ्यो विरक्तस्येत्यर्थ । न किञ्चिदिति= अल्पमपि धनेन प्रयोजनं नास्तीत्यर्थ । सरस्वतीविनोदम् = सरस्वत्या वाग्देव्या अर्थात् शास्त्रस्यैव विनोदं बालोपदेशेन मनोविलासं करोमि । संसाराद्विरक्तस्य मम मत्कृते किञ्चिदपि प्रयोजनं नास्तीति भाव । एतेन विष्णुशर्मणो निरपेक्षत्वं परोपकारित्वञ्च व्यज्यते ।

देव =जगत्पतिर्भगवान् । देवमार्गम् = स्वर्गसरणिम् । सन्दर्शयितुम् (म)प्रतीति शेष । अर्थात् यद्यहं स्वकीया प्रतिज्ञा न पूरये तदा भगवान् मम सद्गतिं न करोतु। एतेन ब्राह्मणा दृढप्रतिज्ञा भवन्तीत्यपि प्रत्यायितम्। पराम्= अत्यन्तम् निर्वृतिम्=सुखम् । तदर्थम् = राजपुत्रार्थम् । मित्रभेदेत्यादीना तन्त्रनाम्ना तत्तत्तन्त्रारम्भे व्याख्या द्रष्टव्या । अधीत्य = पठित्वा । यथोक्ता =

यथा कथितास्तथैव शास्त्रकुशला । संवृत्ता = सम्पन्ना । तत प्रभृति = तस्मात् प्रारभ्य । प्रवृत्तम् = प्रचारितम् ॥

"पञ्चतन्त्र"नामकनीतिशास्त्रस्य श्रवणपठनयो फलमाह—"अधीते" इति । य = पुमान् इदम् (सम्प्रति ग्रन्थरूपेण प्रत्यक्षम्, विष्णुशर्मणो रचनाकाले तद्बुद्धिस्थम् ) नीतिशास्त्रम् = पञ्चतन्त्रं नाम नित्यम् = प्रत्यहम् अधीते = पठति शृणोति च = तथा आकर्णयते स कदाचन = कदापि शक्रादपि इन्द्रतुल्यशक्तिसम्पन्नशत्रो सकाशादपीत्यर्थ पराभवम्=तिरस्कारं पराजय न=नैव आप्नोति=प्राप्नोति । तस्माच्छत्रो सकाशात्पराभवमसहमानेन नरेणावश्यमध्येतव्यमिदं शास्त्रमिति भाव ॥ १० ॥

इति कथामुखम्=अस्य ग्रन्थस्योपोद्घात इत्यर्थ· ।

## मित्रभेदः

अथात प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रम् । यस्यायमादिमः श्लोक —

वर्धमानो महान्स्नेहः सिंहगोवृषयोर्वने ।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र धर्मोपार्जितभूरिविभवो वर्धमानको नाम वणिक्पुत्रो वभूव । तस्य कदाचिद्रात्रौ शय्यारूढस्य चिन्ता समुत्पन्ना—यत्प्रभूतेऽपि वित्तेऽर्थोपायाश्चिन्तनीया कर्तव्याश्चेति । यत उक्तं च—

न हि तद्विद्यते किंचिद्यदर्थेन न सिद्ध्यति ।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवा ।
यस्यार्था स पुमांल्लोके यस्यार्थाः स च पण्डित ॥ ३ ॥
न सा विद्या न तद्दानं न तच्छिल्पं न सा कला ।
न तत्स्थैर्यं हि धनिनां याचकैर्यन्न गीयते ॥ ४ ॥

इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ ५ ॥
अर्थेभ्योऽपि हि वृद्धेभ्यः सवृत्तेभ्यस्ततस्तत. ।
प्रवर्तन्ते क्रियाः सर्वा पर्वतेभ्य इवापगा ॥ ६ ॥
पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ ७ ॥
अशनादिन्द्रियाणीव स्यु कार्याण्यखिलान्यपि ।
एतस्मात्कारणाद्वित्तं सर्वसाधनमुच्यते ॥ ८ ॥
अर्थार्थी जीवलोकोऽय श्मशानमपि सेवते ।
त्यक्त्वा जनयितार स्वं नि स्वं गच्छति दूरत ॥ ९
गतवयसामपि पुंसां येष्वर्था भवन्ति ते तरुणा ।
अर्थेन तु ये हीना वृद्धास्ते यौवनेऽपि स्यु ॥ १० ॥

अथेति—कथामुखानन्तर्यमाह—

**मित्रभेद.** = मित्राणां सुहृदा भेद स्फोटनम् "मित्रभेद" इति प्रथमतन्त्रस्य सञ्ज्ञेयम् । "**वर्धमान**" इति । वने = अरण्ये, सिंहगोवृषयो = सिंहश्च गोवृषश्च सिंहगोवृषौ तयो. । तत्र गोवृष = श्रेष्ठो वलीवर्द इत्यर्थ । वर्धमान = एधमानो वृद्धिं प्राप्नुवन्, महान् = श्रेष्ठोऽपूर्व इति यावत् स्नेह = प्रीति प्रणयो वा, अतिलुब्धेन = अत्यन्तं लुब्धकेन लोभपराभूतेन-तथा पिशुनेन = क्रूरेण, सूचकेन वा ( चुगलखोर इति भाषा ) जम्बुकेन = शृगालेन, विनाशित = विध्वसं नीत. । परप्रीतिविध्वसकरणे खलाना सूच- । वा बहु सामर्थ्यं दृश्यत इति भाव ।

'पिशुन कुङ्कुमेऽपि च । कपिवक्त्रे च काके वा सूचककरयोस्त्रिपु,' इति । 'सृगाले वञ्चकक्रोष्टफेरफेरवजम्बुका" इत्यमरः । अयं सन् तालव्योऽपि—' शृगालो वञ्चके दैत्ये शृगालं डमरे विदु " इति व ॥२॥

**धर्मेति**—धर्मेण वेदशास्त्रोक्तकर्मणा अर्थात् शास्त्रमार्गमपीडयित्वैव उपार्जित राशीकृत सञ्चित इति यावत् ) भूरिर्महान् विभव सम्पत्तिर्येन

स तथाभूत । वणिक्पुत्र = वैश्य । शय्यारूढस्य = शयानस्य शय्यायामे-वोन्निद्रस्य प्रभूते = प्रचुरे । वित्ते = धने । अर्थोपाया = धनार्जनप्रकारा ।

**नहीति**—यत् अर्थेन = धनेन न = नैव सिध्यति = फलति तत् किञ्चित् = किञ्चदपि नहि विद्यते । सर्वमेव कार्यं धनसाध्यमिति भाव । तस्मात्=कारणात् मतिमान् = बुद्धिमान् यत्नेन = उद्योगेन एकम् = केवल-मुख्य वा अर्थं प्रसाधयेत् = धनमेवार्जयेदित्यर्थ । "एके मुख्यान्यकेवला" इत्यमरः ॥ २ ॥

"**यस्यार्था**" इति । यस्य पुरुषस्य अर्था = धनानि सन्तीति शेष तस्य = तस्यैव मित्राणि = सुहृद. । लोके = जगति ( भवन्ति ) निर्धने कोऽपि सौहार्द न करोतीति भाव । एवमेवाऽन्यदपि व्याख्येयम, यत्न्धवा = भ्रात्रादय. पुमान् = पौरुषयुक्त । पण्डित = चतुर ॥ ३ ॥

"**न सा**" इति । याचकै = धनस्य अर्थिभि धनिनाम् = अढ्याना पार्श्वे इति शेष , यत् न गीयते = नैव स्तूयेत तत्किमपि नास्तीत्यर्थ । हि= तथाहि सा विद्या = वेदादिशास्त्रविज्ञान न = नास्ति, तत् दानम् = सुवर्णादि पदार्थाना स्वत्वत्याग न तत् शिल्पम् = कारुककृत्यं न, सा = शास्त्रलोक प्रसिद्धा कला = चतु षष्टिसङ्ख्याको विद्याविशेषो न, तत् स्थैर्यम् = मर्यादा पालकत्वं न = नास्त्येव ।

अस्यायमाशय — याचका हि स्वेष्टलाभाय मूर्खादपि मूर्खं धनिकमुपेत्य तथास्तुवन्ति येन तस्मिन् सर्वविद्यादिकौशल ख्यात भवतीत्यहो धनस्य माहात्म्यम् अर्थात् —। ४ ।

हे ! श्रेष्टिन् ! श्रीमान् महान् विद्वान्, कर्णसमो दाता, चतुषष्ठि-कलावित्, वेदलोकमर्यादापालकश्च भवानेवास्तीति कृत्वा मूर्खमपि स्तुवन्ति सचेद्धनिको वर्तत इत्यर्थ ।

"**इह**" इति । 'हि' निश्चय ( इति निश्चितोऽयमर्थ ) । इह=लोके धनिनाम् = धनवतामाढ्याना पुरुषाणा परः = अन्योऽपि जन स्वजनायते= स्वजन इवाचरति, दरिद्राणाम्=निर्धनाना स्वजनोऽपि=स्वबन्धुरपि (भ्रात्रादि ) सर्वदा = सर्वस्मिन् काले दुर्जनायते = दुर्जन इवाचरति । स्वजनदुर्जन

प्रातिपदिकाभ्या "कर्त्तु. क्यङ् सलोपश्च" (३।१।११ ) इति सूत्रेणाचारार्थे वा क्यङ् । क्याङि लुप्तोपमेयम् ॥५॥

"**अर्थेभ्य**" इति । हि = निश्चयेन वृद्धेभ्य =कुसीदादिना वृद्धि प्राप्तेभ्यः तत तत =तेन तेन मार्गेण संवृत्तेभ्य =सञ्चितेभ्य अर्थेभ्य =धनेभ्य सर्वा = अखिला=(एव) क्रिया = कार्याणि गृहनिर्माणादीनि सुतसुताविवाहादीनि वा प्रवर्त्तन्ते = प्रवृत्ता भवन्ति सिद्ध्यन्तीत्यर्थ. । केभ्य का इव—पर्वतेभ्य. = महीधरेभ्य आपगा = नद्य इव । यथा पर्वतेभ्यो नद्य प्रस्रवन्ति वृद्धाश्च भवन्ति एवमेव वाणिज्यकुसीदाद्युपायैरर्थो अपि जायन्त वर्धन्त इत्याशय. । धनमेव सकलकार्यसाधनमिति पर सार । अत्रोपमालङ्कार स्फुट ॥६॥

पुनरपि धनस्य माहात्म्यं दर्शयति—"**पूज्यत**" इति । यत् अपूज्योऽपि = अर्चनानर्होऽपि पूज्यते = सत्क्रियते, यत् अगम्योऽपि = उपासनानर्होपि गम्यते = उपास्यते, अथवा—अगम्योऽलभ्योऽपि लभ्यते, यत् अवन्द्योऽपि = वन्दनायोग्योऽपि (शूद्रादिः) वन्द्यते = अभिवाद्यते सः धनस्य च = धनस्यैव प्रभाव = प्रतापः सामर्थ्यमिति यावत् । धनमेव सर्वान् पूज्यान् वन्द्यान् गम्यांश्च करोतीति भाव ॥७॥

"**अशनात्**" इति । अशनात् = भोजनकरणाद्धेतो इन्द्रियाणि = चक्षुरादीनि इव, धनात् (वित्तात्) अखिलानि = समग्राणि कार्याणि = लोकपरलोकव्यवहारा· स्यु. = भवन्ति, परिपुष्टानि जायन्ते इत्यर्थ । यथा भोजनेनेन्द्रियाणा परिपुष्टिस्तथैव वित्तेन कार्याणा परिपुष्टिरिति भाव· । एतस्मात् कारणात्=हेतो वित्तम्=धनं सर्वसाधनम्=सर्वेषा कार्याणा निष्पादकम्, उच्यते=कथ्यते कुशलैरिति शेषः ॥ ८ ॥

"**अर्थार्थी**" इति । अर्थार्थी = धनार्थी अयं जीवलोक = मनुष्यवर्ग पे = पितृवन (प्रेतावास) मपि सेवते = आश्रयते तत्र स्थित्वा देकं साधयत इत्यर्थ । तथाच—"मन्त्राराधनतत्परेण मनसा नीताः श्मनिशा" इत्याह भर्तृहरि. । (तथा) स्वम् = स्वकीयं नि स्वम् = निर्धनं जनयितारम् = पितरं त्यक्त्वा = विहाय दूरतः = अतिदूरं गच्छति = याति ॥ ९ ॥

"गतवयसा" मिति । गतवयसाम् = गतं नष्टं वयोऽर्थात् तारुण्यं येषा-मेवंविधानामपि येषां पुंसाम् = मनुष्याणां अर्थाः = धनानि भवन्ति, ते तरुणाः = युवान एव सन्तीत्यर्थः । अर्थेन तु = धनेन च हीनाः = रहिता अर्थात् दरिद्रा भवन्ति ते यौवने = तारुण्येऽपि वृद्धाः = (जरया) जीर्णा (एव) स्यु = सन्ति । "तु"रवधारणे । धनिनो वार्द्धक्येऽपि सोत्साहाः, निर्धनास्तु यौवनेऽपि निरुत्साहा भवन्तीति भावः । वृत्तमार्या लक्षणमुक्तं प्राक् ॥१०

**स चार्थः पुरुषाणां षड्भिरुपायैर्भवति—भिक्षया, नृपसेवया, कृषिकर्मणा, विद्योपार्जनेन, व्यवहारेण, वणिक्कर्मणा वा । सर्वेषामपि तेषां वाणिज्येनातिरस्कृतोऽर्थलाभः स्यात् । उक्तं च यतः—**

**कृता भिक्षानेकैर्वितरति नृपो नोचितमहो !**
**कृषिः क्लिष्टा विद्या गुरुविनयवृत्त्यातिविषमा ।**
**कुसीदाद्दारिद्र्यं परकरगतग्रन्थिशमना-**
**न्न मन्ये वाणिज्यात्किमपि परमं वर्तनमिह ॥ ११ ॥**
**उपायानां च सर्वेषामुपायः पण्यसङ्ग्रहः ।**
**धनार्थं शस्यते ह्येकस्तदन्यः संशयात्मकः ॥ १२ ॥**

**तच्च वाणिज्यं सप्तविधमर्थागमाय स्यात् । तद्यथा—गान्धिकव्यवहारः, निक्षेपप्रवेशः, गोष्ठिककर्म, परिचितग्राहकागमः, मिथ्याक्रयकथनम्, कूटतुलामानम्, देशान्तराद्भाण्डानयनञ्चेति । उक्तं च—**

**पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः ।**
**यत्रैकेन च यत्क्रीतं तच्छतेन प्रदीयते ॥ १३ ॥**
**निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम् ।**
**निक्षेपी म्रियते तुभ्यं प्रदास्याम्युपयाचितम् ॥ १४ ॥**
**गोष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः ।**
**वसुधा वसुसंपूर्णा मयाद्य लब्धा किमन्येन ॥ १५ ॥**
**परिचितमागच्छन्तं ग्राहकमुत्कण्ठया विलोक्यासौ ।**

हृष्यति तद्धनलुब्धो यद्वत्पुत्रेण जातेन ॥ १६ ॥

अन्यच्च ।

पूर्णापूर्णे माने परिचितजनवञ्चनं तथा नित्यम् ।
मिथ्याक्रयस्य कथनं प्रकृतिरियं स्यात्किरातानाम् ॥ १७ ॥

अन्यच्च

द्विगुण त्रिगुणं वित्त भाण्डक्रयविचक्षणा ।
प्राप्नुवन्त्युद्यमाल्लोका दूरदेशान्तरं गता ॥ १८ ॥

उपायै = साधने । भिक्षया = याच्ञया । याच्ञा भिक्षार्थनार्दना" इत्यमर । कृषिकर्म = हलाकर्षणम्) तेन । व्यवहारेण = कुसीदरीत्या । वणिक्कर्म = द्रव्याणां विक्रयणम् । अतिरस्कृत = प्रतिबन्धशून्य । अनिन्दितो वा ।

उक्तेषु पञ्चसूपायेषु मध्ये वाणिज्यमेव प्रशंसति–"कृता" इति । अनेकै = असङ्ख्यातैर्लोकैरिति शेष, भिक्षा कृता परं तया विशिष्टो लाभोनासादित इति भाव । नृपः = राजा उचितम् = योग्य-निजेच्छानुसारं न वितरति = नैव ददाति " अहो" इति खेदः । तस्माद्राजसेवाऽपि न कार्येति भावः । कृषि = भूमिकर्षणं क्लिष्टा = दुख प्रदा बाहु) बलिष्ठाना कृषीवलाना कृत एव सा फलप्रदा, नास्मादृशा शक्तिसाध्या, अत साऽपि न विशिष्टफलप्रदेति-भाव. । विद्या = ज्योतिःशास्त्राद्यध्ययनम्, गुरुविनयवृत्त्या = गुरुषु यो विनयो धर्मशास्त्रोक्तरीत्या शिष्टव्यवहार· तस्य या वृत्तीरीति तया अतिविषमा = अत्यन्तमसाध्या कदाचिद्योग्यरीत्या गुर्वाज्ञापालनाशक्तो प्रकुपितस्य गुरो शापेन मूलमपि नश्येदिति भाव. । कुसीदात् = वृद्धिग्रहणात् दारिद्र्यम् = निर्धनत्वं जायते इति शेष । अत्र हेतुमाह—परकरेति । परेषामन्येषा करे पाणौ गता या ग्रन्थि. धनराशि तस्य शमनात् क्षयात्, कुसीदलोभेन दत्तं धनं परकरगतं कदाचिन्नैव लभ्यते पश्चाच्चाभियोगादिदु समप्युत्पद्यते, तेन दरिद्रयमेव स्यादिति भाव । एभ्यो हेतुभ्योऽहमिह = लोके वाणिज्यात् परमम् = उत्तमं किमपि = किञ्चिदपि वर्त्तनम् = जीविकासाधनं न = नैव मन्ये = जाने ।

केचित्तु—"किमपि वर्त्तनं-न वर्त्तते" इति शेषेण पूरयित्वा व्याख्यान्ति

तेत्वत्तुमेव मार्गं परित्यजन्तीति दयनीया एव । शिखरिणी वृत्तम् ॥ "रसै रुद्रैश्छिन्ना यमनसभला ग शिखरिणी " इति लक्षणात् ॥ ११ ॥

भूयोऽपि वाणिज्य प्रशंसति–"**उपायानाम्**" **इति** । सर्वेषाम् = उक्ताना षड्विधानाम् उपायानाम् = अर्थार्जनप्रकाराणा मध्ये एक = केवलं पण्यसङ्ग्रहः=पण्याना विक्रेयाणा पदार्थाना सङ्ग्रह. राशीकरणम् ( एव ) उपायः = साधनं 'धनार्थम् = धनलाभाय शस्यते = स्तूयते अर्थात् पण्यसङ्ग्रहात्मक एवैको धनार्जनोपायः प्रशस्तरूपेण कीर्त्तनीयो भवति । "हि" इत्ययं निश्चितोर्थे । "चः" पादपूरण. । तदन्यः = तस्मादन्योऽपरो भिक्षादिः संशयात्मक. = संशयोपेत· फलप्राप्तावैकान्तिकत्वाभावादिति भाव. ॥१२॥

वाणिज्यस्य भेदानाह—तेति । **गान्धिकव्यवहारः**=गन्धेन = गन्धद्रव्येण दीव्यति व्यवहरतीति " गान्धिकः" । "**तेन दीव्यति खनति जयति जितम्**" ( ४।४।२ ) इति सूत्रेण दीव्यत्यर्थे ठक् । गान्धिकस्य व्यवहार विक्रयणमिति गान्धिकव्यवहारः । गन्धद्रव्याणा व्यवसाय इत्यर्थ. । **निक्षेपप्रवेश** =निक्षिप्यतेऽसौ निक्षेप तस्य प्रवेशो नियमनम्, अर्थात् ' बहुमूल्य प्रभूत द्रव्यमिद त्वयि निक्षिपामि त्वया च स्वपणनं साधयता प्रत्यहमेतावद्द्रव्यं तत्फलस्वरूपं मह्य देय" मिति सङ्केतेन व्यवसायिहस्ते यद्दीयते स "निक्षेप " तस्य प्रवेश. स्वायत्तीकरणम् । **गोष्ठिककर्म** = गवा स्थान गोष्ठ तत्सम्बन्धि कर्म अर्थादेकत्रैव बहूना गवा सञ्चयं कृत्वा-तद्दुग्धादेर्नियतीकृत्य विक्रयणं "गोष्ठिकवर्म" । अथवा सामाजिकरीत्या सङ्घीभूय व्यवसायकर्म । **परिचितग्राहकागमः** = परिचितेभ्य पूर्वानुभूतेभ्यो ग्राहकेभ्यः आगम. अर्थात् विक्रेयवस्तु दत्वा धनलाभ । परिचिता हि विश्वासमापन्ना यदुच्यते तदेव ददति, ते हि क्रय्यद्रव्यमूल्यविषये द्विरुक्तिं न कुर्वन्ति, ततोऽप्याधिकधनलाभो भवति । **मिथ्याक्रयकथनम्** = अल्पमूल्येन क्रीत्वा ग्राहकपार्श्वे बहुमूल्यख्यापनम् । **कूटतुलामानम्** = कूटेन कपटेन तुलायास्तुलादण्डस्य मान तोलनम् । **देशान्तराद् भाण्डानयनम्** = अन्यस्माद्देशात् भाण्डाना विक्रेयद्रव्याणामानयनम् अर्थात् नन्दनशार्मण्यादिदेशेभ्योऽल्पमूल्येन वस्तु लब्ध्वा भारते तस्य बहुमूल्येन विक्रयणम्–

इत्येवमित्यादि सम्प्रधार्य = निश्चित्य । शुभायां तिथौ = यात्रामुहूर्त्तोचितायां तिथौ, इदं—मुहूर्त्तचिन्तामण्यादौ स्पष्टम् ।

गुरुजनानुज्ञातः = पित्रादिसकाशात्प्राप्ताज्ञः । प्रस्थितः = प्रस्थानमकरोत् । मङ्गलवृषभौ = भद्रौ वलीवर्दौ । गृहीत्पन्नावित्यनेन तयोः सेवातिशयेन भद्रतैव समर्थिता । धूर्वोढारौ = भारवहनक्षमौ । यमुनाकच्छम् = कालिन्द्याः वहुजलक्लिन्नं कूलम् । "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः । अवतीर्णः = पारं कर्त्तुं कृतप्लवनः । पङ्कपूरम् = कर्दमपुञ्जम् । "निषद्वरस्तु जम्वालः पङ्कोऽस्त्रि शादकर्दमौ" इत्यमरः । कलितचरणः = स्खलितपादः । युगभङ्गम् = युगं शकटाग्रवर्त्ति दारुखण्डं तस्य भङ्गं त्रोटनम् । निषसाद = गत्यवसादमकरोत् । विषादम् = मनोग्लानिम् । स्नेहार्द्रहृदयः = स्नेहेनार्द्रं प्रीतियुतं हृदयं यस्य सः । त्रिरात्रम् = दिनत्रयपर्यन्तमित्यर्थः । प्रयाणभङ्गम् = यात्रायाः स्थगनम् । विषण्णम् = दुःखितम् । सार्थिकैः = सहचरैर्व्यापारिश्रेष्ठिभिः । सिंहव्याघ्रेति सर्वेषां घातुकानां जन्तूनामुपलक्षकम्, सिंहादिभिर्व्याप्ते । वह्वपाये = वहुविपदि । सन्देहे = प्राणसङ्कटे । नियोजितः = नीतः ।

आत्मानं विपद उद्धर्तुं पण्डितलक्षणमाह—"न" इति । मतिमान् = वुद्धिमान् प्राज्ञः स्वल्पस्य कृते = अल्पस्य द्रव्यस्य निमित्तं भूरि = वहु प्रशस्तं वा द्रव्यं न नाशयेत् = नैव विध्वंसयेत् । अत्र = इह लोके एतदेव पाण्डित्यम् = वुद्धिमत्ता यत् स्वल्पात् = स्वल्पमपेक्ष्य भूरिरक्षणम् = वहुनो द्रव्यस्य त्राणमित्यर्थः । स्वल्पादित्यत्र ल्यब्लोपे पञ्चमी ॥१६॥

**अथासौ (क) तदवधार्य संजीवकस्य रक्षापुरुषान्निरूप्याशेषं नीत्वा प्रस्थितः । अथ रक्षापुरुषा अपि वह्वपायं विदित्वा सञ्जीवकं परित्यज्य पृष्ठतो गत्वान्येद्युस्तं सार्थवाहं मित्याहुः—स्वामिन् ! मृतोऽसौ संजीवकः । अस्माभिस्तु सार्थवाहस्याभीष्ट इति मत्वा वह्निना संस्कृतः इति । तच्छ्रुत्वा**

(क) तत् = स्वसार्थोक्तम् । अवधार्य = युक्तं कथयन्तीमे इति निश्चित्य । रक्षापुरुषान् = प्रलेप(मल्हम)पट्टिकाद्युपचारकर्त्तॄन् नरान् । वह्निना संस्कृतः = अग्नौ

सार्थवाह (क)कृतज्ञतया स्नेहार्द्रहृदयस्तस्यौ (ख) र्ध्वदेहिकाक्रिया वृषोत्सर्गादिका सर्वाश्चकार। सञ्जीवकोऽप्यायुःशेषतया यमुनासलिलमिश्रै (ग)शिशिरतरवातैराप्यायितशरीरः कथञ्चिदप्युत्थाय यमुनातटमुपपेदे । तत्र मरकतसदृशानि वालतृणाग्राणि भक्षयन्कतिपयैरहोभिर्हरवृषभ इव (घ) पीनः ककुद्मान्बलवांश्च संवृत्तः प्रत्यहं वल्मीकशिखराग्राणि शृङ्गाभ्यां विदारयन्गर्जमान आस्ते। साधु चेदमुच्यते—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जित
कृतप्रयत्नोऽपि गृहे विनश्यति ॥ २० ॥

---

कृतदाह इत्यर्थ. ।(क)कृतज्ञतया = उपकारितया ।(ख)और्ध्वदेहिकाक्रियाः = ऊर्ध्वं देह प्रेतदेह तत्र भवा तस्मै वा देया श्राद्धादिरूपा क्रिया. । अत्र वृद्धिविकल्पे "और्ध्वदैहिक" मित्यपि भवति । कास्ता इति दर्शयति वृषोत्सर्गादिकाः । (ग) शिशिरतरवातैः = अतिशीतलैर्वायुभिः आप्यायित पुष्टं शरीरं यस्य स । मरकतसदृशानि = मरकतो हरिद्वर्णो मणि तत्तुल्यानि । वालतृणाग्राणि = वालतृणाना हरिद्घासाना अग्राणि = अग्रभागान् ते ह्यत्यन्त कोमला भवन्ति । कतिपयैः = अल्पैरेवेत्यर्थ. ।(घ) पीन = स्थूल । प्यायतेस्म इति "पीन" ओप्यायी वृद्धावित्यस्मात्—"गत्यर्थाकर्मक"—( ३ । ४ । ७२ ) इति क्त । "ओदितश्च" ( ८ । २ । ४५ ) नत्वम् । "प्यायः पी"(६।१।२८)इति . पाक्षिक 'पी"इत्यादेश. । ककुद्मान् = ककुद् वृषासस्थूलो-मासपिण्ड शयो सोऽस्यास्तीति "ककुद्मान्" तदस्यास्त्यस्मिन्"(५।२।९४) इति मतुप्। यवादित्वात् ( ८ । २ । ९ ) न वत्वम् ॥ वल्मीकशिखराग्राणि = वल्मीकं वामलूर. तस्य शिखराणा कोटीनामग्रभागानित्यर्थ । "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्" इत्यमरः । विदारयन्=उत्पाटयन् । गर्जमानः = महानादं स्वजातिसिद्धं हुम्भारवं कुर्वाणः ।

निराश्रयस्यापि सञ्जीवकस्य पुनरुज्जीवने दैवबलं स्तौति—

अथ कदाचित्पिङ्गलको नाम सिंह (क)सर्वमृगपरिवृतः पिपासाकुल उदकपानार्थं यमुनातटमवतीर्ण सञ्जीवकस्य(ख)गम्भीरतररावं दूरादेवाशृणोत् । तच्छ्रुत्वातीव व्याकुलहृदय (ग)ससाध्वसमाकारं प्रच्छाद्य वटतले चतुर्मण्डलावस्थानेनावस्थित । चतुर्मण्डलावस्थानं त्विदम्–सिंह, सिंहानुयायिन काकरवा किंवृत्ता इति अथ तस्य करटकदमनकनामानौ द्वौ शृगालौ मन्त्रिपुत्रौ (घ) भ्रष्टाधिकारौ सदानुयायिनावास्ताम् । तौ च परस्परं मन्त्रयत । तत्र दमनकोऽब्रवीत्—'भद्र करटक ! अयं तावदस्मत्स्वामी पिङ्गलक उदकग्रहणार्थं यमुनाकच्छमवतीर्य

---

"अरक्षितम्" इति । न रक्षितं पालितमित्यरक्षितं वस्त्विति शेषः दैवरक्षितम्=दैवेन=भागधेयेन पालितं चेत् तदा तिष्ठति=स्थितं भवति जीवतीत्यर्थः । तदेव सुरक्षितम्=सुष्ठु पालितमपि दैवहतम्=दैवेन दिष्टेन हतं नाशितं चेत्तदा विनश्यति=ध्वस्तं भवति । वने=अरण्ये विसर्जितः=परित्यक्तः अनाथोऽपि=निराश्रयोऽपि जीवति=तिष्ठत्येव,गृहे=सर्वोपकरणोपेते स्वभवने कृतप्रयत्नः अपि=कृतः सम्पादितो रक्षायै प्रकृष्टो यत्नो वैद्याद्युपचारविशेषो यस्य सः तथाविधोऽपि विनश्यति । दैवं हि सर्वतो बलीय इति भावः ।"दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः" इत्यमरः । वंशस्थं वृत्तम्–"जतौ तु वंशस्थमुदीरितं जरौ" इति तल्लक्षणात् ॥२०॥

(क)सर्वमृगपरिवृतः=सर्वे च ते मृगा वन्याः पशवः शार्दूलर्क्षादयः तैः परिवारित (ख) गम्भीरतररावम्=महतींगर्जनाम् । (ग) ससाध्वसं=सभयम् । आकारम्=मूर्त्तिम् । प्रच्छाद्य=गोपायित्वा । वटतले=न्यग्रोधतरोरधः प्रदेशे । चतुर्मण्डलावस्थानेन=चतसृषु दिक्षु स्वसार्थैर्मृगै सह वेष्टयित्वा यदवस्थानं तेनेत्यर्थः । इदञ्च ग्रन्थकारः स्वयमेव दर्शयति **चतुर्मण्डलेति** । सिंहानुयायिनः=सिंहस्य सहचराः । किंवृत्ताः=किमुपस्थितमिति ऊहापोहपूर्वकं तन्निर्णेतारः। काकरवाः=काकस्य रव इव रवो येषाम् । (घ) भ्रष्टाधिकारौ=भ्रष्टः अधिकारो येषा तौ स्वाधिकारात् प्रच्युतावित्यर्थः।

स्थित । स किं निमित्तं पिपासाकुलोऽपि निवृत्त्य(क)व्यूहरचनां विधाय(ख)दौर्मनस्येनाभिभूतोऽत्र वटतले स्थित । करटकश्चाह भद्र! किमावयोरनेन व्यापारेण।

उक्तं च यत—

अव्यापारेषु व्यापारं यो नर कर्तुमिच्छति।
स एव निधनं याति कीलोत्पाटीव वानर ॥ २१ ॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

## कथा १।

कस्मिंश्चिन्नगराभ्याशे(ग)केनापि वणिक्पुत्रेण तरुषण्डमध्ये देवतायतन कर्तुमारब्धम्। तत्र च ये(घ)कर्मकरा स्थपत्यादय,

परस्परम्=अन्योन्यम्। मन्त्रयतः=मन्त्रणा कुरुतः। (क)व्यूहरचनाम् स्वसैन्यमण्डलं बन्धयित्वाऽवस्थानम् "व्यूहस्तु बलविन्यासः" इत्यमरः। (ख)दौर्मनस्येन= दुर्मनसो भावो दौर्मनस्यमुद्वेगस्तेनेत्यर्थः। अभिभूतः=तिरस्कृतो व्याप्त इति यावत्।

अनेन व्यापारेण=स्वामिकृतेन व्यूहरचनादिविचारेण अर्थात् अस्मिन् कर्मणि नावयोरधिकारः। अनधिकारचर्चा च न कर्त्तव्येति भावः।

तदेतद्वानरकथानकेन स्पष्टीकरोति—"उक्तञ्च यत" इति।

"अव्यापारेषु" इति। यो नरः=मनुष्यः अव्यापारेषु=स्वानाधिकारेषु कर्मसु व्यापारम्=क्रिया प्रसङ्गं वा कर्त्तुमिच्छति=चिकीर्षति। सः कीलोत्पाटी=कील शङ्कुः तस्योत्पाटी उत्खनकः वानर इव=मर्कट इव, निधनमेव= मृत्युमेव याति = प्राप्नोति। 'कीलः कफोणिकाघाते स्थाणौ च ज्वलनार्चिषि" इति धरणिः। "कीलो लेशे द्वयोः स्तम्भज्वालाकफोणिशङ्कुषु" इति विश्वमेदिन्यौ। "मर्कटो वानरः कीशो वनौकाः" इत्यमरः ॥२१॥

(ग) नगराभ्यासे=नगरस्यान्तिके। तरुषण्डमध्ये=तरवो वृक्षास्तेषां षण्डो व्रजः तन्मध्ये। (घ) कर्मकराः=कारुकाः, स्थपत्यादयः=शिल्पिप्रभृतयः। "स्थपतिः कञ्चुकिन्यपि" इति मेदिनी। अत्र तु स्थपतिपदेन

ते मध्याह्नवेलायामाहारार्थं नगरमध्ये गच्छन्ति । अथ कदाचित्तत्रा(क)नुषङ्गिकं वानरयूथमितश्चेतश्च परिभ्रमद्रागतम् । तत्रैकस्य कस्यचिच्छिल्पिनोऽर्धस्फाटितोऽशनवृक्षदारुमयः स्तम्भः (ख)खदिरकीलकेन मध्यनिहितेन तिष्ठति । एतस्मिन्नन्तरे ते वानरास्तरुशिखरप्रासादशृङ्गदारुपर्यन्तेषु यथेच्छया क्रीडितुमारब्धाः । एकश्च तेषां(ग) प्रत्यासन्नमृत्युश्चापल्यात्तस्मिन्नर्धस्फाटितस्तम्भ उपविश्य पाणिभ्यां कीलकं संगृह्य यावदुत्पाटयितुमारेभे, तावत्तस्य स्तम्भमध्यगतवृषणस्य स्वस्थानाच्चलितकीलकेन यद्वृत्तं तत्प्रागेव निवेदितम् । अतोऽहं ब्रवीमि—"अव्यापारेषु" इति । आवयोर्भक्षितशेष(घ) आहारोऽस्त्येव । तत्किमनेन व्यापा-

---

काष्ठकर्मकराणां तक्षकादिशिल्पिनामेव ग्रहणम् । (क)आनुषङ्गिकम्=अनुषङ्गः=प्रसङ्गः स्वजातिव्यापारः तेनागतमिति । "तत आगत" ( ४ । ३ । ७४ ) इत्यनेन ठक् । स्वभावेन परिभ्रमदायातमित्यर्थः । वानरयूथम्=मर्कटसङ्घः । अर्धस्फाटितः=अर्ध एव द्वैधीकृतोऽर्धविदारित इति यावत् । अ ( ख ) शनवृक्षदारुमयः=अशनवृक्षः=पीतसालकः तस्य काष्ठनिर्मितः स्तम्भः=स्थूणा "अशन" इति दन्त्यमध्योऽपि-"अथो पीतसालके । सर्जकासनबन्धूकपुष्पप्रियकजीमकाः" इत्यमरः। (ख) खादिरकीलकेन=यन्त्रतरुशङ्कुना । मध्यनिहितेन=अन्तर्जोडितेन । तरुशिखरेति-तरवो वृक्षाः तेषां शिखराणि अग्रभागाः । प्रासादाः=हर्म्याणि देवमन्दिराणि वा, तेषां शृङ्गाणि=चूडादारुपर्यन्ताः=काष्ठप्रान्तभागाः तेषु । तर्वादीनां द्वन्द्वः । यथेच्छया=स्वच्छन्दम् । क्रीडितुम् उत्प्लवनं कर्तुमित्यर्थः । "तेषाम्" इति निर्धारणे षष्ठी । (ग)प्रत्यासन्नमृत्युः=

: समीपवर्त्ती मृत्युर्यस्य सः आसन्नमरणः । चापल्यात्=चाञ्चल्यात् ।

ेति-स्तम्भस्य=स्फाटितकाष्ठभागस्य मध्ये गतौ प्राप्तौ वृषणावण्डकोषौ यस्य स तादृशः । स्वस्थानात्=विदारितभागात् । यद् वृत्तम्=जातम् । प्रागेवेति-"कीलोत्पाटीव वानर" इति कथनेन पूर्वमेव निवेदितमित्यर्थः । (घ) भक्षितशेषः=भक्षितादवशिष्टः ।

रेण। दमनकआह—'तत्किं भवानाहारार्थी केवलमेव। तन्न युक्तम्। उक्तं च—

सुहृदामुपकारकारणाद्-
द्विषतामप्यपकारकारणात्।
नृपसंश्रय इष्यते बुधै-
र्जठरं को न बिभर्ति केवलम्॥ २२॥

किंच।

यस्मिञ्जीवति जीवन्ति बहवः सोऽत्र जीवतु।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम्?॥ २३॥

---

आहारार्थीति कथनेन तस्य स्वार्थपरतैव बोधिता।

राजसेवायाः प्राशस्त्यं दर्शयति-"सुहृदा"मिति। सुहृदाम्=मित्राणाम् उपकारकारणात् (उपकारं कर्त्तुं) द्विषताम्=शत्रूणाम् अपकारकारणात्=अपकारविधानाद्धेतोः बुधैः=विवेकिभिः नृपसंश्रयः=नृपस्य राज्ञः संश्रयः सेवा इष्यते=काम्यते। (अन्यथा) कः पुरुषः केवलं जठरम्=उदरं न बिभर्त्ति=पोषयति। बुद्धिमद्भी राज्ञः साहाय्येन मित्रहितं शत्रोरहितञ्च सम्पादयितुं शक्यते तस्माद्राजसेवा प्रशस्ता, गर्धभादिसाधारणमुदरपूर्त्तिमात्रन्तु न राजसेवयाः फलमिति भावः। "वियोगिनी" वृत्तम्। "विषमे ससजाः समे गुरः समरालोऽथगुरुर्वियोगिनी" इति तल्लक्षणात्। छन्दोमञ्जर्यान्तु—एतस्यैव 'सुन्दरी' तिनामोक्तम्। लक्षणन्तु-"अयुजोर्यदि सौ सजौ युजोः सभरागौ यदि सुन्दरी तदा" इत्युक्तम्। नाम्न्येव विशेषः॥ २२॥

एवं राजसेवाया मित्रोपकारफलकत्वमभिधाय उपकारिणो जीवनं प्रशंसति-"यस्मिन्" इति। यस्मिन्=(अन्नादिना) परोपकारकरणशीले जीवति=प्राणिति सति, बहवः=अनेके जना जीवन्ति सः अत्र=लोके जीवतु इत्याशसनम्। तस्मान्न स्वोदरपूर्त्तिमात्रफलं जीवनमिति भावः। तदेव व्यतिरेकदृष्टान्तेन पोषयति-'वयांसी' ति। किं वयांसि=पक्षिणः चञ्च्वा=त्रोट्या स्वोदरपूरणम्=स्वजठरस्य पूर्त्तिं भरणं, किन्न कुर्वन्ति=कुर्वन्त्येवेत्यर्थः। यथा—तेषां तज्जीवनं न परोपकाराय, एवं यत्परोपकारशून्यं जीवनं तत्पशुपक्षिजीवनसमानिति भावः। २३॥

तथा च ।

यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानशौर्यविभवार्यगुणैः समेतम् ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ २४ ॥

यो नात्मना न च परेण च बन्धुवर्गे
दीने दयां न कुरुते न च मर्त्यवर्गे ।
किं तस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ २५ ॥

---

प्रकारान्तरेण प्रशस्तमेव जीवनं स्तौति— 'यदि" ति। मनुष्यैः=मानवै इह=संसारे यत् क्षणमपि यथा तथा प्रख्यातम्=प्रसिद्धं कीर्त्तिसहितं जीव्यते= प्राण्यते, तज्ज्ञा =जीवितमाहात्म्यवेदिनः पण्डिता विज्ञानशौर्यविभवार्यगुणैः= विज्ञानं=कलाकौशलम् अध्यात्मविद्या वा, शौर्यं=शूरता, विभवः=ऐश्वर्यम् विज्ञानादीना द्वन्द्वः, एवंरूपा विज्ञानाद्या ये आर्यगुणाः श्रेष्ठगुणास्तैः समेतम्= विशिष्टं तदेव जीवितं प्रवदन्ति=प्रकृष्टरूपेण कथयन्ति नामेति प्रसिद्धौ, विद्व- न्मण्डल्या प्रसिद्धमेतदित्यर्थः । ( अन्यथोदरपूर्त्तिमात्रे जीवनफले तु नैव प्राशस्त्यं यत ) काकोऽपि=वायसोऽपि जीवति=प्राणिति, चिराय=चिररात्राय वहुकालपर्यन्तं बलिम्=पञ्चयज्ञपरायणैर्दत्तमुपहारात्मकमन्नादिकं भुङ्क्ते= अभ्यवहरत्येव । अपरोपकारशीलिना काकसमं जीवनमिति भाव । " करो- पहारयो पुंसि बलि प्राण्यङ्गजे स्त्रियाम् " इत्यमर । वसन्ततिलकावृत्तम्- "उक्ता वसन्ततिलका तभजा जगौग·" इति तल्लक्षणात् ॥२४॥

उक्तमेवार्थं पुष्टयति— "य" इति । यो जन आत्मना=स्वेन रूपेण ...त्यर्थ नः=(नैव) इत्यस्य "कुरुते" इति क्रियापदेनान्वय· । परेण= ...ेन वा अन्यं वा द्वारीकृत्य बन्धुवर्गे=स्त्रीपुत्रादौ दया=कृपा न कुरुते, । दीने=अनाथे निराश्रये दया न कुरुते, नच मर्त्यवर्गे=सामान्यतो मनुष्य- मात्रे प्राणिमात्रे वा (दयापात्रे) दया न कुरुते, तस्य=तादृशस्य दयाशून्यस्य ( परोपकारहीनस्य ) मनुष्यलोके किं जीवितफलम् ? जीवितप्रयोजन

किंच ।

सुपूरा स्यात्कुनादिका सुपूरो मूषिकाञ्जलिः ।
सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ २६ ॥
किं तेन जातु जातेन मातुर्यौवनहारिणा ।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ २७ ॥
परिवर्तिनि संसारे मृतः को वा न जायते ।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाधिकः ॥ २८ ॥

---

किमस्ति, किमपि नैवाऽस्तीति भावः । काकोऽपीति शिष्टं पूर्ववद् व्याख्येयम् । वृत्तमपि तदेव ॥२५॥

मनुष्येण सर्वदा परहितमाचरता अल्पार्थप्राप्तौ सन्तोषो न कार्य इत्याभिप्रायेणाह—"सुपूरा" इति । कुनदिका=क्षुद्रनदी सुपूरा=सुष्ठु अनायासेनैव पूरयितव्या भवति, मूषिकाञ्जलिः= मूषिकस्य आखोरञ्जलिः युतहस्तद्वयं सुपूरः क्षुद्रत्वादेवानायासेन पूरयितुं शक्यः । सुसन्तुष्टः=अल्पेनापि तोषं प्राप्तः कापुरुषः=क्षुद्रप्रकृतिर्नरः (यः परोपकारादिसत्कर्मसु प्रवृत्तेर्बिभ्यति) स्वल्पकेनापि तुष्यति=यत्किञ्चिदर्थप्राप्त्यापि तुष्टो भवति । "उन्दुरुर्मूषिकोऽप्याखुः" "तौ युतावञ्जलिः पुमान्" इत्युभयत्रामरः । उदरमात्रपूर्तिकामास्तु क्षुद्राः, उदरपूर्तिमवान्तरफलं मन्वाना परोपकाराय धनमर्थयन्तश्च प्रकृष्टजीवना इति भावः ॥२६॥

सर्वदा कीर्तिमतैव भाव्यमित्याह—"किन्तेन" इति । यः=पुरुषः स्वस्य वंशस्य=कुलस्य अग्रे ध्वजो यथा=पताकेव जातु=कदाचिदपि न आरोहति= आरूढो न भवति अर्थात् ख्यातो न जायते, मातुः=जनन्या यौवनहारिणा= तारुण्यक्षयकारिणा तेन जातेन=उत्पन्नेन तादृशेन नरेण किम् ? न किमपि प्रयोजनमस्तीति शेषः । यस्येह कीर्तिः स एव जीवतीति भावः ।

प्रकारान्तरेणापि तमेवार्थमाह-"परिवर्तिनी"ति । परिवर्तिनि=अनास्थे अनेकरसेऽस्मिन् संसारे को वा जनो मृतः=पञ्चत्वं गतः सन् न जायते= पुनरुत्पन्नो न भवति किन्तु सर्वोऽपि मृतः पुनर्जायत एव । तु=वस्तुतस्तु यः=यो जनः अत्र=इह संसारे श्रिया=सम्पत्त्या, अधिकः=उन्नतः सन् स्फुरेत्=

किंच ।

जातस्य नदीतीरे तस्यापि तृणस्य जन्मसाफल्यम् ।
यत्सलिलमज्जनाकुलजनहस्तालम्बनं भवति ॥ २९ ॥

तथा च ।

स्तिमितोन्नतसञ्चारा जनसन्तापहारिणः ।
जायन्ते विरला लोके जलदा इव सज्जनाः ॥ ३० ॥

निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः ।
यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ३१ ॥

---

दीप्तो भवेत्, सतु=स एव जात =उत्पन्नो गरयते=व्यवह्रियते प्रशस्यते जनै-रिति शेप ॥२८॥

"जातस्ये" ति—तस्य=लोकप्रसिद्धस्य नदीतीरे=सरित्तटे जातस्य= उत्पन्नस्य तृणस्य=घासस्यापि जन्मसाफल्यम्=सफलस्य सार्थकस्य भाव साफल्यं, जन्मन साफल्यं जन्मसाफल्यम् अर्थवज्जन्मेत्यर्थ । तस्य (कीदृशस्य) कस्येत्याकाङ्क्षायामाह—यदिति । यत् तृणं सलिले पानीये मज्जनेन ब्रुडनेनाकुलो विह्वलो यो जनो मनुष्यस्तस्य हस्ते (हस्तस्य वा) अवलम्बनमाश्रयो भवति=जायते । परोपकारशून्यस्तु तृणादपि लघुरिति भाव: ॥२९॥

उक्तमर्थं प्रकारान्तरेणापि पुष्टीकर्तुमाह—"तथाचे" ति । स्तिमितेति—लोके=संसारे सज्जना =साधवो जना विरलाः=अल्पा एव जायन्ते । कीदृशा सज्जना —स्तिमितोन्नतसञ्चारा =स्तिमितो निश्चल उन्नतः अलघु उच्चादर्शः सञ्चारो व्यवहारो येपा ते तथाभूता । पुन. कीदृशा —जनसन्तापहारिण =जनाना दु खिताना लोकाना सन्तापं पीडा हर्तुं शीलमेपा ते–दु खिजनदु खनिवारणशीला· इत्यर्थ । के इव—जलदा इव= मेघा इवेत्यर्थ । मेघा अपि कीदृशा —स्तिमितो गम्भीर उन्नत सञ्चार ...रे परिभ्रमणं येपा ते, तथा जनसन्तापहारिण =अत्र सन्तापो धर्मजनिता दा शिष्ट समानम् । श्लेषानुप्राणितोपमालङ्कार. । "विरलम्" इति ...ठे तु विरलं यथा तथा जायन्ते इति क्रियाविशेषणं ज्ञेयम् ॥३०॥

"निरतिशय" मिति–यो गर्भः = भ्रूणं महताम् = माननीयानामपि गुरुः = मान्यः पूज्यो भवति, यत् = चेत् तादृशं कमपि = लोकोत्तरं गर्भं

अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥ ३२ ॥

करटक आह—आवां(क) तावदप्रधानौ । तत्किमावयोरनेन व्यापारेण । उक्तं च—

अपृष्टोऽत्राप्रधानो यो ब्रूते राज्ञः पुरः कुधीः ।
न केवलमसम्मानं लभते च विडम्बनम् ॥ ३३ ॥

---

वहति = धारयते (अर्थात् काचित्) जननीति शेषः । तर्हि ( तदा ) तेन = तादृशेन गर्भेण, विद्वांसः = महानुभावाः जनन्याः = ( तस्य भर्गस्य ) मातु निरतिशयम् = अतिशयरहितं महदित्यर्थ , गरिमाणम् = गौरवं, स्मरन्ति = भावयन्ते । एवंविधा विरला एवं केचन लोके विख्याताः सन्तो मातुरपि गौरवमापादयन्ति,अहो परहितकारित्वस्य माहात्म्यमिति भाव । आर्यावृत्तम्॥ ३१॥

प्रतापशालिनैव नरेण भाव्यमित्याह—"अप्रकटीकृते"ति–शक्तोऽपि = शक्तिसम्पन्नः समर्थोऽपि जनः, अप्रकटीकृतशक्तिः = न प्रकटीकृता नोद्भाविता शक्तिर्येन स तादृशः (चेत् तदा ) तिरस्क्रियाम् = अपमानं लभते = प्राप्नोति । अत्रार्थे दृष्टान्तमाह—अन्तर्दारुणि = काष्ठस्य मध्ये निवसन् = विद्यमानो व्याप्तोऽपि वह्निः = अग्निः, लङ्घ्यः = लङ्घनीयः क्रमणीयो ( भवति ) नतु ज्वलितः = ज्वलितस्तु नैव लङ्घ्यो भवतीत्यर्थ । सत्यवसरे आत्मशक्तिः प्रकाशनीयैव,नतु निरुद्योगेन भाव्यमिति भाव । उद्बुद्धशक्तिः परैरनतिक्रमणीयो भवतीति व्यङ्ग्यम् । वृत्तमार्या ॥ ३२ ॥

(क) अप्रधानौ = मुख्याधिकारेऽनियुक्तौ ॥

"अपृष्ट" इति । अत्र = अस्मिल्लोके योऽप्रधानः = योऽमुख्यः उन्नतपदस्थो नास्ति सः कुधीः = मूर्ख. अपृष्टः = अकृतप्रश्नः सन्चेत् राज्ञः = नृपतेः पुरः = अग्रे ब्रूते = कार्याकार्ये स्वसम्मतिप्रदानाय वाक्यमुच्चारयति, असौ केवलमसम्मानम् = तिरस्कारमेव न लभते = प्राप्नोति ( प्रत्युत ) विडम्बनञ्च = विडम्बनमप्यर्थाद् गलहस्तादिपूर्वकमुपानहत्प्रहारादिकमपि लभते । तस्मादाज्ञा विना तदग्रे किमपि न भाषणीयमिति सारः । ३३ ॥

तथा च ।

वक्तव्यस्तत्र प्रयोक्तव्य यत्रोक्त लभते फलम् ।
स्थायी भवति चात्यन्तं राग शुक्लपटे यथा ॥ ३४ ॥

दमनक आह—मा मैवं वद ।

अप्रधान प्रधानः स्यात्सेवते यदि पार्थिवम् ।
प्रधानोऽप्यप्रधानः स्याद्यदि सेवाविवर्जित ॥ ३५ ॥

यत उक्तं च—

आसन्नमेव नृपतिर्भजते मनुष्य
विद्याविहीनमकुलीनमसंस्कृतं वा ।
प्रायेण भूमिपतय प्रमदा लताश्च
यत्पार्श्वतो भवति तत्परिवेष्टयन्ति ॥ ३६ ॥

---

'वक्त' इति । शुक्लपटे = शुभ्रे वस्त्रे राग = रञ्जनक्रियायै साधितो रसः यथा = येन प्रकारेण अत्यन्तम् = अतिमात्र स्थायीभवति = स्थिरता धत्ते (तथा = तेन प्रकारेण तद्वत् ) यत्र = यस्मिन् देशे काले वा उक्तं = कथितं सत् वचः = वाक्यं फलं लभते = प्राप्नोति अर्थात् निरर्थकता न याति तत्र = तत्रैव वचः प्रयोक्तव्यम् = वाक्प्रयोगः करणीय इत्यर्थः । अनवसरमनधिकारिणा चोक्तं निष्फलं भवतीति भावः । उपमालङ्कारः । वृत्तमनुष्टुप् । ३४ ॥

"अप्रधान" इति । यदि पार्थिवम् = राजानं सेवते=श्रयते अर्थात् राज्ञो हिताय प्रवर्तते तदा अप्रधानः = हीनपदस्थितः (अपीत्यध्याहरणीयम् ) प्रधानः स्यात् = उच्चाधिकारभाग् भवतीत्यर्थः । यदि सेवाविवर्जितः = राज्ञः सेनः) सेवाया पराङ्मुखो जातः प्राप्ते कालेऽनुक्तोऽपि तद्धित नाचरतीर्थः तदा प्रधानोऽपि अप्रधानः स्यादिति स्पष्टमुक्तार्थञ्च । अपृष्टोऽपि स्वाहित वक्तव्यमिति दमनकाशयः ॥३५ ॥

स्वोक्तार्थे उपपत्तिमपि दर्शयति-"आसन्न"मिति । नृपतिः = राजा विद्याविहीनम् = विद्यया विरहितम्, अकुलीनम् = हीनवंशोत्पन्नम्, वा = अथवा असंस्कृतम् = अशिक्षितमपि अथवा सुनेपथ्यादिसंस्कारशून्यमपि, आसन्नमेव =

कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवका ।
आरोहन्ति शनै पश्चाद्धुन्वन्तमपि पार्थिवम् ॥ ३७ ॥
विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम् ।
सेवावृत्तिविदां चैव नाश्रय पार्थिवं विना ॥ ३८ ॥

---

समीपवर्तिनमेव मनुष्यम् = नरम् भजते = श्रयते अङ्गीकरोति स्वकार्यसिद्धया इत्यर्थ । भूमिपतयः = पृथिवीपालाः, प्रमदाः = योषा . लताश्च = वल्ल्यश्च यत् = यत् ,किमपि वस्तु पार्श्वत = समीपत समीप इत्यर्थः भवति प्रायेण = बाहुल्येन तत् = तदेव परिवेष्टयन्ति = आत्मना आसञ्जयन्ति आश्रयन्त इत्यर्थ । नृपतिरवश्यमुपसेव्य इति भावः ।

अत्र प्रस्तुताना भूमिपतीनामप्रस्तुतानाञ्च प्रमदादीना परिवेष्टनात्मकैक-क्रियारूपधर्मान्वयात् तुल्ययोगितालङ्कार । उक्तञ्च कुवलयानन्दे—"वर्ण्याना-मितरेषा वा धर्मैक्यं तुल्ययोगिता" इति । धर्मैक्यमिति गुणक्रियारूपैकधर्मा-न्वय इत्यर्थ. ।

यद्यपि दीपकेऽपि प्रस्तुताऽप्रस्तुतधर्मान्वयो न दण्डवारितः द्वयोरप्युपमा-लङ्कारस्य गम्यमानत्वात् तथापि दीपकेऽप्रस्तुतमुपमानं प्रस्तुतमुपमेयमित्युप-मानोपमेयभावो व्यवस्थित , तुल्ययोगितायान्तु विशेषग्रहणाभावात्स ऐच्छिक इत्युभयोर्विशेषो बोध्य । तस्मादत्र केषाञ्चिन्मते दीपकालङ्कार । विशिष्टन्त्व-स्माक "काव्यप्रकाश" व्याख्याया द्रष्टव्यम् ॥ ३६ ॥

राज्ञामुपसेवने फलं प्रदर्शयितुमाह—"कोपप्रसादे"ति। सेवका = ये सेवापरायणा भृत्या , कोपप्रसादवस्तूनि = कोप क्रोध प्रसाद प्रसन्नता तयो-र्वस्तूनि विषयान् अवसरानिति यावत्, विचिन्वन्ति = अर्थादेतस्मिन् काले राजा कुपित इदानीं प्रसन्न इति राज्ञ कोपप्रसादकारण गवेषयन्ति ते = तादृशा कालकुशल. सेवका पश्चात् शनै = क्रमश' धुन्वन्तम् = शिरोधूनयन्तं मा प्रविशत्वयमिति अर्थात् भृत्ये उदासीनमपि पार्थिवम् = राजानम्, आरोहन्ति = सङ्गच्छन्ते राज्ञा प्रसादपात्रं भवन्तीत्यर्थ. । राज्ञा सकाशात् दूरे दूरे वर्त्तमानस्त-दिङ्गितज्ञ एव न भवति तदभावे चोन्नतपदप्राप्तिरपि दुर्घटेति भाव ॥ ३७ ॥

के राजावश्यमाश्रयितव्य इत्याह—" विद्यावताम् " इति। विद्यावताम्

ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च ।
तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ ३९ ॥
ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः ।
प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ ४० ॥
सर्पान्व्याघ्रान्गजान्सिंहान्दृष्ट्वोपायैर्वशीकृतान् ।
राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ ४१ ॥

---

पण्डितानां ( व्याकरणादिशास्त्रविदुषाम् ) महेच्छानाम् = महाशयानाम्, शिल्पविक्रमशालिनाम् = शिल्पं कारुकृत्यं विक्रमो बलं ताभ्यां शालन्ते शोभन्त इति शिल्पविक्रमशालिनः शिल्पचतुराणां बलिष्ठानां ( योद्धृणां ) च सेवावृत्ति विदाम् = राजसेवाव्यवहारनिपुणानाम् पार्थिवं विना = राजानमन्तरेण नैवा- श्रय = जीविकाहेतुर्नास्तीत्यर्थः । सर्वमिदं विद्यादिकं राजानमाश्रित्यैव फली- भवतीति भावः ॥ ३८ ॥

अनाश्रितराजानो दुःखं वहन्तीत्याह—"ये" इति । ये पुरुषाः जात्यादि- महोत्साहात् = तत्र जातिर्ब्राह्मणत्वादि. आदिना कलाविज्ञत्वादीनां ग्रहः एतेषां यो महानुत्साहः अहं ब्राह्मणोऽस्मि अहममुककलाविज्ञोस्मीत्येवंरूपोऽभिमानः तस्माद्धेतोः नरेन्द्रान्=राज्ञः, न उपयान्ति=नैव भजन्ते तेषां कृते आमरणम्= मरणमभिव्याप्य मरणावधि भिक्षा = याचनमेव प्रायश्चितम् = प्रायश्चि- त्ताख्यं कर्म विनिर्मितम् = नियतीकृतं प्राजापतिनेति शेषः ॥ ३९ ॥

राज (सेवा) निन्दकान् दूषयति—"ये चे"ति । ये च दुरात्मानः =दुदुष्ट- मात्माऽन्तःकरणं येषां ते विचारशक्तिविधुरा इत्यर्थः महीभुजः =राजानः राध्य =दुःखेनाराधयितुं शक्याः (प्रभुत्वादिगर्वहेतोः) इति प्राहुः =कथ- तैः =तादृशैर्दुर्विवेकिभिः निजानि=स्वीयानि प्रमादालस्यजाड्यानि = प्र० = अनवधानता, आलस्यम् = तन्द्रा, जाड्यम् = मौर्ख्यम् एतेषां द्वः एतानि प्रमादादीनि ख्यापितानि = प्रकटीकृतानि सन्तीति शेषः । राजसेवाविरोधिनः प्रमादिनो जडाश्च सन्तीति भावः ॥४०॥

बुद्धिमतान्तु राजसेवा नैवाऽसाध्येत्याह—"सर्पान्" इति । सर्पान् = भुजगान्, व्याघ्रान् = शार्दूलान् ( शार्दूलद्वीपिनौ व्याघ्रे इत्यमरः ) गजान् =

राजानमेव संश्रित्य विद्वान्याति परां गतिम् ।
विना मलयमन्यत्र चन्दनं न प्ररोहति ॥ ४२ ॥
धवलान्यातपत्राणि वाजिनश्च मनोरमाः ।
सदा मत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ ॥ ४३ ॥

करटक आह—अथ भवान्किं (क) कर्तुमनाः । सोऽब्रवीत्—अद्यास्मत्स्वामी पिङ्गलको भीतो भीतपरिवारश्च वर्तते । तदेनं गत्वा भयकारणं विज्ञाय संधि-विग्रह-यान-आसन-संश्रय-

हस्तिनः, सिंहान्=मृगेन्द्रान् (सिंहो मृगेन्द्रः पञ्चास्य इत्यमरः) उपायैः=तैस्तैः प्रकारैः वशीकृतान्=स्वायत्तीकृतान्, दृष्ट्वा=विलोक्य अप्रमादिनाम्=प्रमादरहितानाम् धीमताम्=बुद्धिमतां पुरुषाणां (कृते) राजा इति कियती मात्रा=कियान्भारोऽस्तीत्यर्थः । सर्पादिवशीकरणसामर्थ्यभाजो मतिमन्तो निजबुद्धिप्रभावेण राजानमप्यनायासेनैव वशीकुर्वन्तीति भावः ॥ ४१॥

राजसेवामाहात्म्यं दृष्टान्तेन स्फुटयति—"राजान" मिति । विद्वान्=पण्डितः तत्र कलासु प्रवीणः राजानमेव संश्रित्य=संसेव्य पराम्=उत्कृष्टां गतिम्=अधिकारमौन्नत्यं याति=प्राप्नोति । चन्दनम्=मलयजं मलयम्=मलयाचलं विना, अन्यत्र=सह्यादिपर्वतप्रदेशे न प्ररोहति=नैवोद्भवतीत्यर्थः । अत्र प्राप्तिप्रतिरोहयोः साधारणधर्मयोर्बिम्बप्रतिबिम्बभावात् दृष्टान्तालङ्कारः- तथाच—कुवलयानन्दे—"चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः" इति तल्लक्षणम्, परमिदं वैधर्म्येण ॥४२॥

राजसेवकानां विभूतिमाह—"धवलानी"ति । भूपतौ=राजनि प्रसन्ने=(मूल) सेवया सन्तुष्टे सति धवलानि=शुभ्राणि आतपत्राणि=छत्राणि मनोरमाः=हृदयप्रियाः कम्बोजादिदेशोद्भवा वाजिनः=वेगवन्तोऽश्वाः, सदामत्ताः=सदैवमदस्राविणः मातङ्गाः=गजाः प्राप्ता भवन्तीति शेषः । राजप्रसादे विविधाः सम्पदो भुज्यन्त इति भावः ॥४३॥

(क) किं कर्तुमनाः=किं कर्तुमिच्छसीत्यर्थः ।

द्वैधीभावानामेकतमेन संविधास्ये। करटक आह—कथं वेत्ति भवान्यद्भयाविष्टोऽयं स्वामी ? सोऽब्रवीत्—ज्ञेयं किमत्र। यत उक्तं च—

उदीरितोऽर्थ पशुनापि गृह्यते

हयाश्च नागाश्च वहन्ति चोदिता ।

---

"**सन्धी**" ति—तत्र सन्धानं "सन्धिः"। "उपसर्गे घोः किः" (३। ३। ६) इति पाणिनिसूत्रेण सम्पूर्वात् "डुधाञ् धारणपोषणयो" इति धातोः किप्रत्यये सिद्धम्। स्वर्णादिदानेन द्वयोर्विरोधिनोः परस्परं प्रीत्युत्पादनं (मित्रीकरणं) **सन्धिः**। विरुद्धं विविधं वा ग्रहणं "विग्रह"। "ग्रहवृद"—(३। ३। ५८) इति सूत्रेणाप् प्रत्ययेन सिद्धयति। परमण्डले दाहलुण्ठनच्छेदनादिना युद्धकरणं **विग्रह**। या धातोः"करणा"-(३।३।११७) इत्यधिकरणे ल्युटि "यान" पदसिद्धिः। यात्यत्रेति **यानम्**। तच्च—उपचितशक्तेः कृतमूलराष्ट्ररक्षकस्य शत्रोरवस्कन्दनाय "शत्रुं" प्रति यात्राकरणम्। आसधातोः पूर्ववत् ल्युटि "आसन" पदं साधनीयम्। तच्च-कालप्रतीक्षणम्, अर्थात्—"नाहमिदानीं योद्धुं समर्थ" इति कालप्रतीक्षया विजिगीषोर्दुर्गादीन् वर्धयतः स्थिति**रासनम्**। "**संश्रयः**" बलवताऽरिणोच्छिद्यमानस्य हीनशक्तेर्यद्बलवद्धर्मविजयिसमाश्रयणं सः। अयमेव—"आश्रय" इत्युच्यते।—उक्तञ्च—

उच्छिद्यमानो रिपुणा निरुपायप्रतिक्रिय।

शक्तिहीनः संश्रयते बलिनं धार्मिकं नृपम्"

इति। "**द्वैधीभाव**" संशयेनावस्थानम्। (एतेषा सन्ध्यादीना ग्रन्था-न्तरेष्वनेके भेदाः, ग्रन्थगौरवभयान्नास्माभिरिह प्रदर्शिताः)॥ सन्ध्यादीना द्वन्द्वः। एतेषा मध्ये एकतमेन=अन्यतमेन उपायेन संविधास्ये=आचरिष्ये यत्र यदा यस्योपायस्य योगस्तमेव तत्र तदा प्रयोक्ष्ये येन राजाऽस्मदायत्तो भविष्यतीति भाव.। एत एव सन्ध्यादयो "गुण" शब्दवाच्या अपि। तदुक्तममरेण—"सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः" इति।

अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धय ॥ ४४ ॥

तथा च मनुः—

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गत मन ॥ ४५ ॥

---

सर्वव्यवहारहेतुभूता बुद्धि फलतः स्तौति—"**उदीरित**" इति । उदीरितः=व्यक्तमुच्चारित अर्थः=विषयः पशुना=गवादिपशुनाऽपि गृह्यते=ज्ञायते, हयाश्च नागाश्च=अश्वा गजाश्च चोदिताः=प्रेरिता सन्त वहन्ति=भारायत्थानेन स्वामिकृत्य साधयन्तीत्यर्थ । पण्डित =कर्त्तव्याऽकर्त्तव्यविवेकशालिनी बुद्धि "पण्डा" साऽस्य सञ्जाता इति "पण्डित" विवेकी पुरुष अनुक्तमपि=परेणाऽनभिहितमप्यर्थम् ऊहति=तर्कयते, हि=यत बुद्धय =बुद्धिवृत्तय', परेङ्गितज्ञानफला =परेषा यानीङ्गितानि हृद्गता भावविशेषाः तेषा ज्ञान बोध एव फलं यासा तादृश्यो भवन्तीति शेष । पण्डिताना कृते न किमप्यज्ञेय भवतीति भाव । अत्र सामान्येन विशेषसमर्थनरूप"अर्थान्तरन्यासो"ऽलङ्कार । तदुक्तं प्रकाशकृता—

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यास साधर्म्येणेतरेण वा ॥

इति । वशस्थं वृत्तम्—" जतौ तु वंशस्थमुदीरित जरौ" इति तल्लक्षणात् ॥ ४४ ॥

उक्तेऽर्थे मनुं साक्षीकरोति—तथा च '**मनु**' रिति । मनुनाऽप्युक्तमित्यर्थ । **आकारैरिति** । आकारै = अङ्गै तेषा न्यासविशेषैश्च तेच न्यासविशेषाः विषादप्रसादोत्था विज्ञेया । इङ्गितै = हृद्गतैर्भावविशेषैर्बहिरेव भङ्गया प्रकटितै , गत्या=गमनेन चेष्टया=हस्तपादादिव्यापारेण, भाषणेन=वचनेन, नेत्रवक्त्रविकारैश्च=नेत्रयोर्लोचनयो वक्त्रस्य मुखस्य ये विकारा विकृत्यवस्था , एतैः अन्तर्गतं मन =हृदयस्याऽभिप्राय लक्ष्यते=ज्ञायते । "आकारै" रित्यस्यैव सर्व प्रपञ्च ॥४५॥

तदद्यैनं भयाकुलं प्राप्य स्वबुद्धिप्रभावेण निर्भयं कृत्वा वशीकृत्य च निजां(क)साचिव्यपदवीं समासादयिष्यामि"। करटक आह-अनभिज्ञो भवान् (ख)सेवाधर्मस्य। तत्कथमेनं वशीकरिष्यसि?" सोऽब्रवीत्-कथमहं सेवानभिज्ञ ? मया हि तातोत्सङ्गे क्रीडताऽभ्यागतसाधूनां नीतिशास्त्रं पठतां यच्छ्रुतं सेवाधर्मस्य सारभूतं हृदि स्थापितम्। श्रूयताम्। तच्चेदम्—

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ४६ ॥
सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः।
आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा ॥ ४७ ॥

---

(क) साचिव्यपदवीम्=अमात्याधिकारम्।
(ख) समासादयिष्यामि=प्राप्स्यामि।
सेवाधर्मस्य=राजपरिचर्यायाः। सारभूतम्=तत्त्वम्।
सेवाविज्ञानवतो महांल्लाभ इत्याह-"सुवर्णपुष्पा"मिति। त्रयः पुरुषाः=जनाः सुवर्णपुष्पाम्=सुवर्णानि पुष्प्यतीति ता सुवर्णपुष्पा, सुवर्णस्य पुष्पाणि यत्रेति वा एवम्भूतां पृथिवीम्=भूमिं, चिन्वन्ति=सङ्गृहीतां कुर्वन्ति प्राप्नुवन्तीत्यर्थः। के ते त्रय इत्याह-'शूरश्चे'ति। तत्र प्रथमः-शूरः=विक्रान्तः "शूरोवीरश्च विक्रान्तः" इत्यमरः। द्वितीयः—कृतविद्यः=कृता सम्पादिता विद्या येन सः यस्याः कस्यामपि कलायां गुरुसम्प्रदायानुसारं दृढं प्रवीण इत्यर्थः। तृतीयः—यश्च सेवितुम्=स्वामिनः सेवां कर्त्तुं जानाति। एते त्रय एव सम्पद्भाजो भवन्तीति ...शयम्। उक्तञ्च—"ध्वन्यालोकलोचने" "एतच्च वाक्यमेवाऽसम्भव...र्थमिति कृत्वाऽविवक्षितवाच्यम्। तत एव पदार्थमभिधायान्वयं च तात्पर्यशक्त्यावगमय्यैव वाचकवशेनोपहत्य सादृश्यात्सुलभसमृद्धिसम्भारभाजनतां लक्षयति। तल्लक्षणाप्रयोजकं शूरकृतविद्यसेवकानां प्राशस्त्यमशब्दवाच्यत्वेन गोप्यमानं सत् नायिकाकुचकलशयुगलमिव महार्घतामुपयद् ध्वन्यते" इति ॥४६॥

राजवशकरीं सेवामाह—"सा" इति। सा प्रभुहिता=प्रभोः स्वामिनो

यो न वेत्ति गुणान्यस्य न त सेवेत पण्डितः ।
न हि तस्मात्फल किंचित्सुकृष्टादूषरादिव ॥ ४८ ॥
द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः ।
भवत्याजीवन तस्मात्फल कालान्तरादपि ॥ ४९ ॥
अपि स्थाणुवदासीन शुष्यन्परिगतः क्षुधा ।
न त्वेवानात्मसपन्नाद्वृत्तिमीहेत पण्डित ॥ ५० ॥

---

हितकारिणी सेवा या वाक्यविशेषत. = प्रभूक्तवचनविशेषेण ग्राह्या = श्रेयाऽनुमेयेति यावत् भवतीति शेष. । तद्द्वारेण = तामेतादृशीमेव सेवा द्वारीकृत्य विद्वान् = प्राज पार्थिवम् = राजानम् = आश्रयेत् = ससेवेत, अन्यथा न = अन्येन प्रकारेण न सेवयेत्, प्रकारान्तरन्तु राज्ञो वशीकरणाय नास्तीत्यर्थ ।

सेवकेन प्रभोर्हितमेव चिन्तनीयम्, हिताचरणपरस्तु सेवको राज्ञः प्रीतिपात्र भवतीति भाव ॥४७॥

प्रभुश्च कीदृशो न सेवनीय इत्याह–"य" इति । य = प्रभु यस्य = भृत्यादे गुणान् = शौर्यप्रभृतीन्, न वेत्ति = नैव जानाति पण्डित॰ = विवेकी जन तम् = तादृशमगुणज्ञ प्रभु न सेवेत = नाश्रयेत । हि = यत तस्मात् = अगुणज्ञात् प्रभो सुकृष्टात् = सुष्ठुहलव्यापारात् ऊषरात् = क्षारभूमेरिव न किंचित् फलम् = किमपि फल नास्ति । अगुणज्ञाश्रयण निष्फलमिति भाव ॥४८॥

कीदृशश्च प्रभु सेव्य इत्याह–"द्रव्ये" ति । सेव्यगुणान्वित = सेव्यस्य सेवार्हस्य ये गुणा दयौदार्यवदान्यत्वदाक्षिण्यप्रभृतय तैरन्वित सम्पन्नो य प्रभु ( स चेत् ) द्रव्यप्रकृतिहीन अपि = धनपरिवारजनविरहितोऽपि स्यादिति शेष , स सेव्य = सेवितु योग्य नेतादृशस्य सेवा निष्फलेत्याह– तस्मात् = गुणज्ञात् प्रभो , कालान्तरादपि = अन्य कालमासाद्यापि, आजीवनम् = जीविकारूप फल भवति ॥४९॥

प्रतिदु खितोऽपि विवेकशून्य प्रभु नाश्रयेदित्याह–"अपी" ति । पण्डित = कृत्याऽकृत्यनिपुणो विद्वाञ्जन , क्षुधा = बुभुक्षया परिगत = व्याप्त सन्

सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम् ।
आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ ५१ ॥
यमाश्रित्य न विश्रामं क्षुधार्ता यान्ति सेवकाः ।
सोऽर्कवन्नृपतिस्त्याज्यः सदा पुष्पफलोऽपि सन् ॥ ५२ ॥
राजमातरि देव्यां च कुमारे मुख्यमन्त्रिणि ।
पुरोहिते प्रतीहारे सदा वर्तेत राजवत् ॥ ५३ ॥

---

शुष्यन् अपि = अहाराऽलाभेन कृशतां प्राप्तोऽपि स्थाणुवत् = शाखापत्रशून्य-शुष्कवृक्षवत् आसीन = स्थितः स्यादिति शेषः । किन्तु अनात्मसम्पन्नात् = आत्माऽनात्मविवेकविकलात् मूर्खादित्यर्थः प्रभोरिति शेषः, वृत्तिम् = आजीवनं नत्वेव ईहेत = इच्छेदित्यर्थः ॥५०॥

अगुणज्ञप्रभो सेवापरो भृत्योऽपि गर्ह्य इत्याह-"सेवक" इति । यः सेवकः = भृत्यः कृपणम् = कदर्यं ( "कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः" इत्यमरः ) तथा-परुषाक्षरम् = कठोरभाषिणम् ( गालीप्रदम् ) स्वामिनम् = प्रभुं द्वेष्टि = गर्हते अर्थात् अदातरि कटुभाषिणि च अप्रीतिं करोति, स सेवकः आत्मानम् = स्वमेव किम् = कुतो हेतो न द्वेष्टि, यतोऽसौ--सेव्याऽसेव्यम् = सेवाकरणे योग्याऽयोग्यं प्रभुं न वेत्ति । अयं सेवार्ह इति यो न जानाति ( ज्ञातुं वा न प्रभवति ) स सेवक एव गर्ह्य इत्यर्थः । सेव्याऽसेव्यविचारपुरःसरमेव सेवाकरणे प्रवर्तितव्यम्, अन्यथा सेवकस्यैव निन्देति भावः ॥५१॥

सेवनार्हं राजानमाह—"यमाश्रित्ये" ति । यं प्रभुं राजानम्, आश्रित्य= सेवित्वा सेवकाः =भृत्याः क्षुधार्ताः=क्षुधया आर्त्ता बुभुक्षिताः सन्तः विश्रामम्= विरामं न यान्ति=नैव प्राप्नुवन्ति जठरपूर्तिमन्तरेणानारतं प्रभुकार्यमेव कुर्वन्तीत्यर्थः, सः नृपतिः =राजा सदापुष्पफलोऽपि=सदैव धनजनादिना सम्पन्नोऽपि अर्कवत्=अर्काख्यवृक्षवत् त्याज्यः=परिहेयः । अर्कवृक्षो हि पुष्पफलसमृद्धोऽपि न सेव्यते जनैः तद्वत्तादृशो धनादिना भृत्यानां भरणपोषणहितपराङ्मुखो नृपतिर्न कदापि सेवनीय इति भावः । "अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ" इति मेदिनी ॥५२॥

जीवेति प्रब्रुवन्प्रोक्त कृत्याकृत्यविचक्षणः।
करोति निर्विकल्पं यः स भवेद्राजवल्लभः॥ ५४॥
प्रभुप्रसादजं वित्त सुप्राप्तं यो निवेदयेत्।
वस्त्राद्यं च दधात्यङ्गे स भवेद्राजवल्लभ॥ ५५॥
अन्त पुरचरैः सार्धं यो न मन्त्रं समाचरेत्।
न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभ॥ ५६॥

---

राजमातरि=राज्ञो माता राजमाता तस्या, देव्याञ्च=पट्टाभिषिक्तायां राज्या महिष्यामपीत्यर्थे। कुमारे=राजपुत्रे, मुख्यमन्त्रिणि= प्रधानामात्ये तथा पुरोहिते पुरोधसि (पुरोधास्तु पुरोहित" इत्यमर) प्रतीहारे=द्वारपाले च सदा=सदैव राजवत्,=राज्ञा तुल्यं राजवत् वर्त्तेत=व्यवहरेत् भृत्य इति शेषः। सेवको राजमातृप्रभृतिषु राज्ञीव सम्मानना कुर्यादिति भाव। "प्रतीहारो द्वारपालद्वा स्थद्वा स्थितदर्शका." इत्यमर.। ५३॥

राजाज्ञाधारणप्रकारं ब्रुवन् राजवल्लभस्य (भृत्यस्य) लक्षणान्याह दशभि "जीवेती"ति इति। यो भृत्य. कृत्याकृत्यविचक्षण =कर्त्तव्याऽकर्त्तव्यविवेकवान्, प्रोक्त =प्रभुणा प्रोक्त अमुकं कार्यं साधयेत्याज्ञप्त सन्, जीव="जीव राजन्! जयदेव" इति प्रब्रुवन्=सादरमाभाषमाण, निर्विकल्पम्=विकल्पशून्यमर्थात् "नन्वेव नास्ति एवं वास्तीति ननुनचभावं वर्जयित्वाऽविचारितमेव करोति=कार्यं साधयते, स =तादृश आज्ञापालक राजवल्लभ.= राज्ञः प्रियो भवेत्। आज्ञागुरूणा ह्यविचारणीयेत्युक्ते राजापि गौरवोपेतत्वादविचारिताज्ञो भवतीति भाव॥ ५४॥

"प्रभुप्रसादजम्"इति य =यो भृत्य प्रभुप्रसादजम्=प्रभो प्रसादाज्जातमर्थात् स्वामिकृपालब्धं, वित्तं=धनम् सुप्राप्तम्=सुष्टुप्राप्तमिच्छानुसारं लब्धम्(इति) निवेदयेत्=राज्ञ पुरतस्तत्पृष्टे वा ख्यापयेत्. वस्त्राद्यञ्च=वास प्रभृति च राज्ञैव पारितोषिकादिविधानेन दत्तं, अङ्गे=स्वावयवे दधाति=राज्ञ समक्षमेव परिधारयते स राजवल्लभ =राज्ञ प्रियो भवेत्॥ ५५॥

"अन्त पुरचरै"रिति। अन्त पुरचरै =राज्ञोऽवरोऽधगृहे सञ्चरणाधिकारे

द्यूतं यो यमदूताभं हालां हालाहलोपमाम् ॥
पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभः ॥ ५७ ॥
युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे ।
प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ५८ ॥
संमतोऽहं विभोर्नित्यमिति मत्वा व्यतिक्रमेत् ।
कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभः ॥ ५९ ॥
द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् ।
यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ ६० ॥

---

नियुक्तैः कञ्चुकीप्रभृतिभिः सार्धं साकम् , यः=यो भृत्यः मन्त्रम्=मन्त्रणां गुप्तां वार्त्तां न समाचरेत् नैव करोतीत्यर्थः, तथा-नरेन्द्रस्य=राज्ञः कलत्रैर्दारैः सहापि मन्त्रं न समाचरेत् स राजवल्लभो भवेदिति पूर्ववद्व्याख्येयम् ॥ ५६॥

"द्यूतम्" इति । यो भृत्यो द्यूतम्=दुरोदरम् यमदूताभम्=यमदूतस्याभेवाभा यस्य तादृशमर्थात् यमकिङ्करवद्भयावहं, हालाम्=सुरां हालाहलोपमाम्=कालकूटतुल्यां, दारान्=राज्ञः स्त्रियः वृथाकारान्=वृथा कुत्सितः आकारो येषां तान् पश्येत्=जानीयात् स राजवल्लभो भवेत् । 'राजप्रियो भवेयम्" इतीच्छुको भृत्यो द्यूतादिषु कदाप्यासक्तिं न कुर्यादिति भावः ॥ ५७ ॥

"युद्धकाल" इति । यः प्रभोर्युद्धकाले=सङ्ग्रामसमये अग्रगः=पुरोगामी, पुरे=नगरे च सदा=सर्वदैव पृष्ठानुगः=पृष्ठचरः, तथा हर्म्ये=राजगृहे द्वाराश्रितः=द्वारि स्थितः स्यात् राजाज्ञां पालयितुं सज्ज एव भवेदित्यर्थः, स राजवल्लभो भवेत् ॥ ५८ ॥

"सम्मत" इति । अहं प्रभोर्नित्यं=निरन्तरं सम्मतः=आदृतः प्रमाणीतोऽस्मि इति मत्वा=ज्ञात्वा कृच्छ्रेष्वपि=दुःखेष्वपि मर्यादाम्=स्वाधिकारं न=नैव व्यतिक्रमेत्=उल्लङ्घयेत्, स राजव० राजनि प्रीयमाणेऽपि स्वाधिकारोल्लङ्घनं न कार्यमिति भावः ॥ ५९ ॥

"द्वेषिद्वेषपर"इति । यो नरः नित्यं=सदैव नरनाथस्य=राज्ञः द्वेषिद्वेषपरः=द्वेषिणां शत्रूणां द्वेषपरायणः अर्थात् ये राज्ञः शत्रवः तत्र सदैव शत्रुतामाच-

प्रोक्तः प्रत्युत्तरं नाह विरुद्धं प्रभुणा च यः।
न समीपे हसत्युच्चैः स भवेद्राजवल्लभः ॥ ६१ ॥
यो रणं शरणं तद्वन्मन्यते भयवर्जितः।
प्रवासं स्वपुरावासं स भवेद्राजवल्लभः ॥ ६२ ॥
न कुर्यान्नरनाथस्य योषिद्भिः सह सङ्गतिम्।
न निन्दां न विवादं च स भवेद्राजवल्लभः ॥ ६३ ॥

करटक आह—अथ भवांस्तत्र गत्वा किं तावत्प्रथमं वक्ष्यति तत्तावदुच्यताम्। दमनक आह—

उत्तरादुत्तरं वाक्यं वदतां सम्प्रजायते।
सुवृष्टिगुणसम्पन्नाद्बीजाद्बीजमिवापरम् ॥ ६४ ॥

---

रति, इष्टानाम्=राज्ञः प्रियाणाम् इष्टकर्मकृत्=हितसाधनकरः स राजवल्लभो भवेत् ॥ ६० ॥

"प्रोक्तः" इति। यः प्रभुणा विरुद्धं=विपरीतं प्रोक्तः अर्थात् कस्मिंश्चित् कर्मणि भर्त्सितोऽपि प्रत्युत्तरम्=प्रतिवचनं न आह=न ब्रूते, किन्तु राज्ञो विरुद्धं वचोऽपि शिरसि धारयते न च समीपे उच्चैः हसति=तारं हासं न कुरुते स राजवल्लभो भवेत् ॥ ६१ ॥

"यः" इति। यो नरः (राज्ञः किङ्करो भूत्वा जीविकार्थी) रणम्=सङ्ग्रामं शरणम्=स्वगृहं गृहतुल्यसुखप्रदमथवा स्वरक्षकं मन्यते (रणे जयलाभेन राज्ञि रक्षिते स्वस्यैव रक्षा भवति) तद्वत्=तथैव प्रवासम्=विदेशे निवासं स्वपुरावासम्=स्वनगरनिवासतुल्यं मन्यते स राजवल्लभो भवेत्। 'शरणं गृहरक्षित्रोः' 'आगारे नगरे पुरम्' इत्युभयत्राप्यमरः ॥ ६२ ॥

"न" इति। यो नरः नरनाथस्य योषिद्भिः=स्त्रीभिः सह सङ्गतिम्=गोष्ठीं सहवासं वा न=नैव कुर्यात्=आचरेत्, एवं निन्दां=गर्हणां पैशुन्यं वा, विवादम्=विरुद्धं वादं वैपरीत्येन उत्तरं प्रत्युत्तरं न कुर्यात् स राजवल्लभो भवेत् ॥ ६३ ॥

करटकेन वक्तव्ये पृष्टे दमनकः कालोचितं वचनप्रकारमाह—

अपायसंदर्शनजां विपत्ति-
मुपायसंदर्शनजां च सिद्धिम् ।
मेधाविनो नीतिगुणप्रयुक्तां
पुरः स्फुरन्तीमिव वर्णयन्ति ॥ ६५ ॥

एकेषां वाचि शुकवदन्येषां हृदि मूकवत् ।
हृदि वाचि तथान्येषां वल्गु वल्गन्ति सूक्तयः ॥ ६६ ॥

"उत्तरादि" ति—वदताम् = अन्योन्य वाकोवाक्यं कुर्वता उत्तरात् = उत्तरवाक्यात् उत्तरम् = अन्यदुत्तर वाक्यं प्रजायते = निःसरति अर्थात् ये परस्परमालापं कुर्वन्ति तेषा वाक्यपरम्परा प्रचलति । अत्रोपमानमाह- 'सुवृष्टि' ति-कस्मादिव ? सुवृष्टि गुणसम्पन्नात् = शोभाना वृष्टिर्वर्षणं सुवृष्टिः सैव गुण पुष्टिकरत्वात् तेन गुणेन सम्पन्नात्=अङ्कुरादिरूपेण वृद्धिं गतात् बीजात्, अपरम् = द्वितीयं बीजमिवोत्तरं वाक्यं प्रजायते इत्यर्थ । कथाप्रसङ्गे प्रचलिते बुद्धिमद्धृदये स्वयमेव वाक्यप्रयोगावसर स्फुरति, तत्र पूर्वं किं वक्ष्यामीति नियन्तु न शक्यमिति भाव ॥६४॥

उक्तमर्थं प्रकारान्तरेण स्फुटीकरोति-"अपाये" ति । मेधाविन = धारणावती बुद्धिर्मेधा तद्वन्तो जनाः पण्डिता, नीतिगुणप्रयुक्ताम् = नीतिरुचितोव्यवहार स एव गुणस्तेन प्रयुक्तामनुष्ठिताम् अपायसन्दर्शनजाम् = अपायो दुरुपयोगस्तस्य सन्दर्शनात् जातामर्थादनुमिता विपत्तिम् = विपदाम् (एभि साधनैर्विपदेव प्राप्ता भविष्यतीत्यर्थ) उपायसन्दर्शनजाम् = उपाय सूपयोग पाड्गुण्यरूप तत्सन्दर्शनाज्जाताञ्च सिद्धिम् = लाभरूपा पुरः स्फुर-[illegible]म् = अग्रे स्पष्टं भासमानामायान्तीमिव वर्णयन्ति = कथयन्तीत्यर्थ । [illegible] निपुणा प्रथममेव राजानम्प्रति हानिलाभौ बोधयन्तीति [illegible] । उपजातिर्वृत्तम् ॥६५॥

"एकेषा" मिति । सूक्तय = शोभना उक्तय गोष्ठो मन्त्रणे वा कालानुसार प्रयोगार्हाणि वचासि, एकेषा मनुष्याणा वाचि = वाण्या शुकवत् = कीरवत् वल्गन्ति = भासन्ते, यथा शुका पक्षिणो यथाश्रुत रटितमविविच्यैव समयं

न चाहमप्राप्तकालं वक्ष्ये। आकर्णितं मया नीतिसारं पितुः पूर्वमुत्सङ्गं हि निषेवता।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन्।
लभते बह्ववज्ञानमपमानञ्च पुष्कलम् ॥ ६७ ॥
दुराराध्या हि राजानः पर्वता इव सर्वदा।
व्यालाकीर्णाः सुविषमाः कठिना दुष्प्रसेविताः ॥ ६८ ॥

---

भाषन्ते तद्वदेके समयानभिज्ञा श्रुतमेव प्रयुञ्जते नतु यथाकालं स्वयमपि किञ्चिदूहितुं शक्नुवन्तीति भाव। गत्यर्थोऽपि 'वल्ग' धातुर्धातूनामनेकार्थत्वात्प्रकाशार्थं। अन्येषां जनानां मूकवत्=मूकाः वाक्शक्तिविहीनाः. ( अवाचि मूकः" इत्यमरः ) तेषामिव हृदि=अन्तःकरण एव वल्गन्ति, एके सभायां मूकवत्तिष्ठन्ति श्रुतमपि वक्तुमसमर्था इत्यर्थः। अन्येषां परेषां धीराणान्तु हृदि तथा वाचि च वल्गु=मनोहरं यथा स्यात्तथा वाचोवल्गन्ति। वाचि कुशलास्तु प्राप्तकालमेव वाचा स्वाभिप्रायं प्रकटीकुर्वन्तीति भाव ॥ ६६ ॥

अप्राप्तकालम्=अप्रासाङ्गिकम्। नीतिसारम्=नीतेस्तत्त्वम्। उत्सङ्गम्=अङ्कम्।

"अप्राप्तकाल"मिति। अप्राप्तकालम्=असामयिकं वचनं=वाक्यं ब्रुवन् सन् बृहस्पतिः=देवगुरुरपि बहु=प्रचुरम् अवज्ञानम्=अवहेलना, पुष्कलम्=प्रभूतम् अपमानम्=तिरस्क्रियाञ्च लभते=प्राप्नोति। यत्र वाक्यकालानभिज्ञाताया देवगुरोरपि इयं दशा तत्रेतरेषां का कथा, तस्माद् वाक्यप्रयोगकालज्ञेनैव भाव्यमिति भाव ॥ ६७ ॥

करकटो राज्ञां दुराध्यत्वमाचष्टे-"दुराराध्या"इति। राजानो नृपाः पर्वता=महीध्रा इव सर्वदा=सदैव दुराराध्याः=दुःसेव्याः आश्रयितुमशक्याः "हि" निश्चये। कीदृशो राजानः-व्यालाकीर्णाः=व्यालैर्दुर्जनैराकीर्णा व्याप्ताः परिवृताः, पर्वतपक्षे-सर्पैः सङ्कुलाः, दुष्टगजैर्वाऽऽकीर्णाः। "व्यालो दुष्टगजे सर्पे श्वापदेनाऽन्यवत् खले" इति मेदिनी। पुनः कीदृशाः-सुविषमाः=क्रूराः, पर्वतपक्षे-निम्नोन्नताः, तथा कठिनाः=राजपक्षे निर्दयाः, पर्वतपक्षे-कठोरस्पर्शाः

तथा च।

भोगिनः कञ्चुकाविष्टाः कुटिलाः क्रूरचेष्टिताः।
सुदुष्टा मन्त्रसाध्याश्च राजानः पन्नगा इव॥ ६९॥
द्विजिह्वाः क्रूरकर्माणोऽनिष्टाश्छिद्रानुसारिणः।
दूरतोऽपि हि पश्यन्ति राजानो भुजगा इव॥ ७०॥

---

पाषाणमयत्वात्, दुष्टसेविता =दुष्टैर्दुर्जनैरुत्कोचभाग्भिः सेविताः पर्वतपक्षे-दुष्ट सिंहव्याघ्रादिभिः श्वापदजन्तुभिरधिष्ठिता। अत्यन्त कठिना राजसेवेति भावः। अत्र—श्लेषानुप्राणितोपमालङ्कारः॥ ६८॥

उक्तविषयेऽन्यदप्याह—"भोगिन" इति। भोगिनः=नानाविधखाद्यपेय-चोष्यलेह्यकान्तालिङ्गनादिरसास्वादिनः फणावन्तश्च, कञ्चुकाऽऽविष्टा =कञ्चुकं वर्म तदाऽऽविष्टास्तद्धारिणः निर्मोकभाजश्च, कुटिला =कपटिनः वक्रगतयश्च, क्रूरचेष्टिताः=क्रूरं कठोरं चेष्टितं व्यवहारो येषां ते, पक्षद्वयेऽप्ययमेवार्थः, सुदुष्टा =बहुदोषिणः इत्युभयत्र समानम्, मन्त्रसाध्या =मन्त्रेण गुप्तेन राष्ट्रपरामर्शेन साध्या वशीकरणार्हाः, पक्षान्तरे—मन्त्रैर्गारुडिकेन प्रयुक्तैरुपायैर्वश्याः, एवम्भूता राजानः पन्नगा =सर्पा इव भवन्तीतिशेषः। अत्रापि श्लेषाऽनुप्राणितोपमालङ्कारः। "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" रित्यमरः॥ ॥ ६९॥

"द्विजिह्वा" इति। द्विजिह्वा =द्वे जिह्वे येषां ते तथोक्ताः प्रतिक्षणं भिन्नभिन्नवाग्व्यवहाराः सर्पपक्षे—रसनाद्वयभाजः, द्विजिह्वा अपि सर्पा भवन्तीति प्रसिद्धिः। क्रूरकर्माण =क्रूरचेष्टिता इत्युभयत्र तुल्यम्। अनिष्टा =न स्थ पि स्वतन्त्रसुखिनः इष्टाः समानमन्यत्रापि, "अनिष्ठा" इति पाठे तु- नेष्ठानिष्पत्तिनाशान्ताः" इत्यमरः प्रमाणेन न निष्ठा एकत्र स्थाने कर्मणि वा स्थितिर्येषां ते तथा विधाः, अपरत्र अनिष्ठाः=असङ्ख्येयाः, छिद्रानुसारिणः=छिद्रं रन्ध्रं दोषस्थलं तस्यानुसन्धानपराः, परत्र—बिलानुगामिनः। एवम्भूता राजानः तथाविधाः भुजगाः—सर्पा इव हि=निश्चयेन दूरतोऽपि पश्यन्ति=दूरस्थिता अपि चारद्वारा निरीक्षन्ते "चारैः पश्यन्ति राजानः" इति

स्वल्पमप्यपकुर्वन्ति येऽभीष्टा हि महीपते ।
ते वह्नाविव दह्यन्ते पतङ्गा पापचेतस ॥ ७१ ॥
दुरारोह पद राज्ञां सर्वलोकनमस्कृतम् ।
स्वल्पेनाप्यपकारेण ब्राह्मण्यमिव दुष्यति ॥ ७२ ॥
दुराराध्या श्रियो राज्ञां दुरापा दुष्परिग्रहा ।
तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्थिता ॥ ७३ ॥

स्मृनेः । भुजगाश्च दूरप्रसारिण्या दृष्टेः प्रभावाद्दूरतोऽपि पश्यन्तीति प्रसिद्धि ॥७०॥

"स्वल्प"मपीति । ये अभीष्टा = वय राजमान्या अर्थाद् अस्मासु राजा प्रीति करोतीति मानिन, महीपते = राज्ञः स्वल्पम् = अत्यल्पमपि अपकुर्वन्ति = अपकारमाचरन्ति ते पापचेतस = पापं चेतसि येषा मलीनमतय वह्नौ = अग्नौ पतङ्गा = शलभा इव दह्यन्ते = दग्धा भवन्ति 'दह्यन्ते" इति कर्मकर्त्तरि लटि प्रयोग । राजापकारिण क्षिप्र नश्यन्तीति भाव ॥७१॥

"दुरारोह"मिति । राज्ञा पदम् = राजभाव इत्यर्थ, दुरारोहम् = दुःखेनारोढु शक्य दुष्प्रापमिति यावत् अतो हेतो —सर्वलोकनमस्कृतम् = सर्वलोकैर्जनै. नमस्कृत पूज्य सर्वजनवन्दनीय ब्राह्मण्यमिव = ब्राह्म तेज इव स्वल्पेनापि अपकारेण = विरुद्धाचारणेन दुष्यति = प्रतिकूल भवतीत्यर्थ. । उपमालङ्कार । ७२ ॥

राजलब्धा श्रीर्यत्ने सत्येव स्थिरा स्यादित्याह—"दुराराध्या" इति । राज्ञा श्रिय = सम्पत्तय अर्थात् राजतः प्राप्ताः अधिकारा दुराराध्या = दुःखेना राधयितु शक्या बहुयत्नेन सेव्या इत्यर्थ, तथा—दुरापा = सुदुर्लभा, दुष्परिग्रहाश्च = महतायासेन ग्रहीतु शक्याः । ताश्च-आत्मनि संस्थिता = स्वामिनि (अधिकारिणि) सावधानतया रक्षिताः, आधारे = पात्रे-आपः = जलानीव तिष्ठन्ति । यथा जल पात्राधार विना न तिष्ठति अत्यल्पेऽपि छिद्रे सत्यकालान्तरे सर्व नश्यति, एवमेव राजतो लब्धा अपि नाना बहुयत्नरक्षा भवन्ति, अल्पेऽपि दोषे सति नाश यान्ति तस्माद्धीमता महता

दमनक आह—सत्यमेतत्परम् । किंतु—

यस्य यस्य हि यो भावस्तेन तेन समाचरेत् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ७४ ॥
भर्तुश्चित्तानुवर्तित्वं सुवृत्तं चानुजीविनाम् ।
राक्षसाश्चपि गृह्यन्ते नित्यं छन्दानुवर्तिभि ॥ ७५ ॥
सरुपि नृपे स्तुतिवचनं तदभिमते प्रेम तद्द्विषि द्वेपः ।
तद्दानस्य च शसा अमन्त्रतन्त्रं वशीकरणम् ॥ ७६ ॥

करटक आह—यद्येवमभिमत तर्हि शिवास्ते पन्थान सन्तु ।

---

येत्नन प्राप्तोऽधिकार पालनीय इति भाव ॥ ७३ ॥

इदानीं परस्य वशीकारोपायमाह—"**यस्य**" इति । यस्य यस्य जनस्य यो भाव =यादृशोऽभिप्राय तेन तेन भावेन ( त त जन ) समाचरेत्=सेवेत, मेधावी = धारणात्मिकबुद्धिमान् पुरुषः अनुप्रविश्य = स्वामिनोन्तः करणे प्रवेश लब्ध्वा अर्थात् प्रभोरभिप्राय ज्ञात्वा, क्षिप्रम् = शीघ्रमेव आत्मवशात् = स्वाधीनं नयेत् = प्रभुं स्वायत्तीकुर्यादित्यर्थः ॥ ७४ ।

उक्तमेवार्थ प्रकारान्तरेण पोपयति—"**भर्त्तु**"रिति । अनुजीविनाम् = सेवकाना भर्त्तु = प्रभोरेव चित्तानुवर्त्तित्वम् = चिन्तितार्थसाधनपरत्व सुवृत्तम् = शोभनं वृत्तमस्ति अर्थात् उचितो व्यवहारोऽस्ति । इदमर्था न्तरेण समर्थयते—नित्यम् = प्रतिदिनं छन्दानुवर्त्तिभि = अभिप्रायानुसारिभि राक्षसाश्च अपि = अतिकठोरस्वभावा अपि राक्षसाः गृह्यन्ते = वशीक्रियन्ते का पुन कथा नराणा वशीकारस्येत्यर्थः ॥ ७५ ॥

"**सरुपी**"ति—नृपे=राजनि सरुपि=सक्रोधे स्तुतिवचनम्=स्तुतिवाक् न स्तुतिं कृत्वा प्रकोपशमनम् , तदभिमते=राजाभिमते प्रेम=प्रीतिप्रदर्शनमित्यर्थ , तद्द्विपि=राजवैरिणि, द्वेष =वैरकरणम्, तद्दानस्य=राजादानस्य राजता लब्धप्रसादस्य शंसा=लोकेपु ख्यापनम्, ( एतत्सर्वम् ) अमन्त्रतन्त्रम्= मन्त्रतन्त्र विनैव वशीकरणम्=राज्ञ.स्वायतीकरणम ज्ञेयमिति शेप. । आर्या ॥ ७६ ॥

यथाभिलषितमनुष्ठीयताम्। सोऽपि प्रणम्य पिङ्गलकाभिमुखं प्रतस्थे। अथागच्छन्त दमनकमालोक्य पिङ्गलको द्वा स्थमब्रवीत् अपसार्यतां वेत्रलता। अयमस्माकं चिरन्तनो मन्त्रिपुत्रो दमनकोऽव्याहतप्रवेश। तत्प्रवेश्यतां द्वितीयमण्डलभागी इति। स आह—यथावादीद्भवान् इति। अथोपसृत्य दमनको निर्दिष्ट आसने पिङ्गलकं प्रणम्य प्राप्तानुज्ञ उपविष्ट। स तु तस्य नखकुलिशालङ्कृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच—अपि शिवं भवतः। कस्माच्चिराद्दृष्टोऽसि। दमनक आह—न किञ्चिद्देवपादानामस्माभि प्रयोजनम्। परं भवतां प्राप्तकालं वक्तव्यम्, यत उत्तममध्यमाधमै सर्वैरपि राज्ञां प्रयोजनम्। उक्तं च—

---

"यदि" इत्यव्ययं चेदित्यर्थे, एवम्=राज्ञः स्वायतीकाररूपम्। अभिमतम्=इष्टम्। शिवाः=कल्याणरूपा इष्टसिद्धिहेतोरित्यर्थ। अनुष्ठीयताम्=विधीयताम्। प्रतस्थे=प्रस्थानमकरोत्। द्वाः स्थम्=द्वारपालकम् दौवारिकमिति यावत् अपसार्यताम्=दूरीक्रियताम्। आयान्तमेनम्प्रति नास्ति प्रतिबन्ध इति भावः।

अव्याहतप्रवेशः=अव्याहतोऽनिरुद्धः प्रवेशो यस्य, अनिवार्यागमनः इत्यर्थः। द्वितीयमण्डलभाक्=अमात्यसुतत्वाद् द्वितीयास्मिन् मण्डलेऽवस्थानाधिकारी, प्रथममण्डले मन्त्रिणामेवावस्थानाधिकार इत्यर्थः। "मण्डलं परिवेषश्च परिधिश्चोपसूर्यके" इति भागुरिः। राजा मध्ये तिष्ठति अनुजीविनश्च त यथाधिकारं वेष्टयित्वाऽवस्थिता भवन्तीति प्राचां प्रकारः। सः=द्वाःस्थः। स तु=पिङ्गलकस्तु। तस्य=दमनकस्य। "नखे"ति नखा करजाः कुलिशानीव वज्राणीविति तैरलङ्कृतम्=मण्डितम्। दक्षिणपाणिम्=वामेतर हस्तम्, मानपुरःसरम्=सादरम्। "अपि" इति प्रश्ने। शिवम्=भद्रम्। "श्व श्रेयस शिव भद्रम्" इत्यमरः। देवपादानाम्=श्रीमतामित्यर्थः। 'न प्रयोजनम्" इति प्रयोजनाभावएवावयोरागमने चिरकारणमित्यर्थः। प्राप्तकालम्=समयोचितम्।

दन्तस्य निष्कोषणकेन नित्यं
कर्णस्य कण्डूयनकेन चापि ।
तृणेन कार्यं भवतीश्वराणां
किमङ्ग वाग्घस्तवता नरेण ॥ ७७ ॥

तथा वयं देवपादानामन्वयागता भृत्या आपत्स्वपि पृष्ठगामिनो यद्यपि स्वमधिकारं न लभामहे तथापि देवपादानामेतद्युक्तं न भवति । उक्तं च—

स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च ।
नहि चूडामणिः पादे प्रभवामीति बध्यते ॥ ७८ ॥

---

संवरुत्रमादिभिः सह राज्ञो प्रयोजनं दृष्टान्तावष्टम्भेन दर्शयति-"दन्तस्येति" दन्तस्य=रदस्य निष्कोषणकेन=घर्षणेन अर्थात् दन्तान्तःप्रविष्टभक्ष्योच्छिष्टकणादिनिष्कालनकेन, तथा कर्णस्य= श्रवणस्य कण्डूयनकेन=कण्डूतिकरणेन नित्यम्=सर्वदेव ईश्वराणां=राज्ञामपि सता प्रभूणां कार्यम्=प्रयोजनं भवति, हे 'अङ्ग' प्रिय राजन् ! वाग्घस्तवता=वचनकरादिविशिष्टाङ्गोपेतेन नरेण= मनुष्येण साकं कार्यं भवतीति किमु वक्तव्यम् । यत्र जडस्यापि तृणस्यापेक्षा तत्र चेतनस्य नरस्यापेक्षा न स्यादिति कथं घटेतेति भावः । इत्थञ्चावयोर्निष्कालितयोर्वाऽधिकाराच्च्यावितयोरपि भवितुमर्हत्येव श्रीमतः प्रयोजनमिति स्वीकार्यमिति व्यज्यते ॥ अत्र परिसङ्ख्यालङ्कारं ब्रुवन् पण्डितैरेव प्रष्टव्य ॥ 'वाग्घस्ते" त्यत्र-"झयो होऽन्यतरस्याम्" ( ८।४।६२ ) इति सूत्रेण हस्य वर्गचतुर्थः॥७७॥

अन्वयागता=वंशपरम्पराक्रमेण प्राप्ता । आपत्सु=विपत्तिषु । पृष्ठगामिनः=पृष्ठसलग्ना ये क्षीणेऽप्यधिकारे विपत्तिष्वपि स्वामिनं न मुञ्चन्तीत्यर्थः । एतत्=अस्माकं सर्वथोपेक्षाकरणम् ।

"स्थानेष्वि"ति । भृत्याः=दासाः आभरणानि=भूषणानि च स्थानेषु=उचितेष्वेवाधिकारेषु शिरआद्यङ्गेषु च नियोक्तव्या = निवेश्याः धारणीयानि च । अहं प्रभवामि=प्रभुरस्मि, स्वतन्त्रोऽस्मीति हेतोः चूडामणिः=शिरोभूषणं पादे=चरणे नहि बध्यते=नैव सन्धार्यते केनापीति शेषः ।

अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते ।
धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः ॥७९॥

उक्तं च—

असमैः समीयमानः समैश्च परिहीयमाणसत्कारः ।
धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥८०॥

---

अत्र प्रस्तुताना भृत्यानामप्रस्तुतानाञ्चाभरणानामेकनियोजनक्रियाऽभिसम्बन्धा-द्दीपकालङ्कारः । उक्तञ्च विश्वनाथेन-"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते" इति । प्रकृताप्रकृतयोरेकधर्माऽभिसम्बन्धो दीपकमिति सूत्रार्थः ।

किञ्च-प्रतिवस्तूपमापि, तथाचोक्तं तेनैव—

प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययो ।
एकोऽपि धर्म सामान्यो यत्र निर्दिश्यते पृथक् ॥ इति ।

वाक्यार्थयोर्वाक्याना वोपमासम्पादकस्यैकस्यापि गुणक्रियादिरूपस्य धर्मस्य विभिन्नशब्दोपातत्त्व प्रतिवस्तूपमा" इति फलितम् । अत्र भृत्याना चूडामणिसम्बन्धिगम्यसाम्याना योग्यस्थाननिवेशनरूपस्यैकस्यापि " न बध्यते " इत्ययोग्यस्थाननिवेशाभावरूपत्वेन पृथङ्निर्देशाद्वैधर्म्यहेतुका प्रतिवस्तूपमा बोध्या । द्वयोऽन्योन्यापेक्षास्थितेश्च सङ्कर इति विज्ञेयम् ॥७८॥

अनभिज्ञ इति । यो भूपती राजा धनाढ्य =बहुकोषसम्पन्नोऽपि कुलीनः= सत्कुलजातोऽपिस्यात् ( स चेद् ) गुणानाम् = भृत्यनिष्ठानामौद्धत्यादिगुणा-नाम् अनभिज्ञ = अबोध स्यात् स भृत्यै =सेवकैर्नानुगम्यते=नैव सेव्यत इत्यर्थः । राज्ञा भृत्यगुणज्ञेन भाव्यम्, अन्यथा तद्राष्ट्ररक्षा न भवेदिति भाव ॥ ७९ ॥

कीदृशो भृत्यो राजानं परित्यजतीत्याह-"असमै"रिति । असमै = तुलनानर्हैः भृत्यै· समीयमानः =समीक्रियमाणः समैः =तुल्यै समानगुण-क्रियादिविशिष्टै भृत्यै परिहीयमाणसत्कारः = परिहीयमाण तिरस्क्रियमाणः सत्कारः आदरो यस्य स तादृश , तथा ( योग्योऽपि सन् ) कार्यभारे = कार्योद्वहने, न युज्यमानः = यो न नियुक्त क्रियमाण , स पूर्वोक्तैस्त्रिभिः कारणै-

यच्चाविवेकितया राजा भृत्या(क)नुत्तमपदयोग्यान्हीनाधमस्थाने नियोजयति, न ते तत्रैव तिष्ठन्ति, स भूपतेर्दोषो न तेषाम्। उक्तं च—

कनकभूषणसङ्ग्रहणोचितो
यदि मणिस्त्रपुणि प्रतिबध्यते।
न स विरौति न चापि स शोभते
भवति योजयितुर्वचनीयता ॥८१॥

यच्च स्वाम्येवं वदति 'चिराद्दृश्यते' तदपि श्रूयताम्—

सव्यदक्षिणयोर्यत्र विशेषो नास्ति हस्तयोः।
कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत् ॥ ८२ ॥

---

दोषे, अर्थपतिम्=स्वामिनं, त्यजति=जहाति। आर्यावृत्तम् ॥८०॥

(क) उत्तमपदयोग्यान्=उत्तमपदार्हान्। हीनाऽधमस्थाने=हीने=मध्यमेऽधमे स्थाने चेत्यर्थः। तत्र=स्वामिनादत्ते स्थाने, न तिष्ठन्ति=तत्परित्यज्यान्यत्र यान्तीत्यर्थः, नहि योग्यो भृत्यो योग्यतातिरस्कारं सोढुं समर्थ इति भावः।

उक्तमर्थं दृष्टान्तेनोपपादयति-"कनकभूषणे"ति कनकं सुवर्णं तस्य भूषणं ताटङ्कं कर्णकण्टकादिर्वा तस्य सङ्ग्रहणे रचनाविशेषे तस्मिन् वा योजने उचितो योग्यो यो मणिर्मरकतादिरत्नं यदि त्रपुणि=सीसकाख्ये निकृष्टे धातुविशेषे प्रतिबध्यते=योज्यते तदा स मणिर्न विरौति=नैव शब्दायते अयुक्ते स्थाने किमर्थं मम निवेशं करोषीति न भाषते क्रन्दते वा, नचापि सः शोभते=सौन्दर्यं धारयते, किन्तु योजयितुः=भूषणेषु रत्नयोगं कुर्वतः'जड़िया' इत्याख्यस्य शिल्पिन एव वचनीयता=निन्दनीयता भवति। युक्ताऽयुक्तविचारणासम[illegible] योजकस्यैव गर्हा नतु मणेरित्यर्थः। द्रुतविलम्बितम् ॥८१॥

सम्प्रत्यविवेकिनः प्रभोः पार्श्वे न वस्तव्यमित्याह—"सव्ये"ति। यत्र=देशे सव्यदक्षिणयोः=वामदक्षिणयोर्हस्तयोः=करयोः विशेषः=वैधर्म्यं सव्यत्वदक्षिणत्वरूपं नास्ति तत्र=तस्मिन् देशे कः आर्यः=साधुः श्रेष्ठपुरुषो देशकालज्ञः, विद्यमानगतिः=विद्यमाना गतिरुपायो यस्यैवम्भूतः उपायज्ञ

काचे मणिर्मणौ काचो येषां बुद्धिर्विकल्पते ।
न तेषां संनिधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ ८३ ॥

परीक्षका यत्र न सन्ति देशे
नार्घन्ति रत्नानि समुद्रजानि ।
आभीरदेशे किल चन्द्रकान्तं
त्रिभिर्वराटैर्विपणन्ति गोपाः ॥ ८४ ॥

लोहिताख्यस्य च मणेः पद्मरागस्य चान्तरम् ।
यत्र नास्ति कथं तत्र क्रियते रत्नविक्रयः ॥ ८५ ॥

निर्विशेषं यदा स्वामी समं भृत्येषु वर्तते ।
तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ ८६ ॥

---

सनित्यर्थ, क्षणमपि वसेत्=निवासं कुर्यात् । बुद्धिमान् अविवेकिनि भूपाले स्थानान्तरमाश्रयत इति भाव. ॥८२॥

'काच' इति । येषा पुरुषाणा काचे मणिः मणौ काचः इत्येवंरूपा बुद्धिः विकल्पते=विरुद्धकल्पनावती भवति तेषा सन्निधौ=समीपे नाममात्रोऽपि= भृत्यनाम्ना प्रसिद्धोऽपि न तिष्ठति, भृत्यगुणसम्पन्नस्तिष्ठेदिति किमु वक्तव्यमित्यर्थ ॥८३॥

"परीक्षका" इति—यत्र देशे परीक्षकाः=सदसद्विवेचका न सन्ति, तत्र समुद्रजानानि=सागरोत्पन्नानि महामूल्यानीति यावत् रत्नानि न अर्घन्ति= उचित मूल्यं न भजन्ते । एतदुपपादयति दृष्टान्तेन "आभीरदेश" इति । किलेति वार्त्तायां निश्चये वा, आभीरदेशे=गोपाना वासभूमौ गोपाः=अभीरा· त्रिभिर्वराटैः=त्रित्वसङ्ख्याविशिष्टैः कार्षापणैः चन्द्रकान्तं नाम बहुमूल्य मणिं, विपणन्ति=विक्रीणते । उपजातिवृत्तम् ॥८४॥

'लोहिताख्यस्ये' ति-लोहिताख्यस्य=लोहितनाम्नो गोमेदाख्यस्य मणेः पद्मरागस्य च मणेर्यत्र अन्तरम्=विशेषो नास्ति तत्र कथं रत्नविक्रय =रत्नाना विपणन क्रियते । नैव कर्त्तव्यमिति भाव ॥८५॥

एवमेनैर्दृष्टान्तैर्विचारशून्य प्रभुं गर्हयित्वा अन्यानपि तद्दोषानाह—

शिरसा विधृता नित्यं स्नेहेन परिपालिताः ।
केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः ॥ ९० ॥
राजा तुष्टो हि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु संमानमात्रेण प्राणैरप्युपकुर्वते ॥ ९१ ॥
एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ।
कुलीनाः शौर्यसंयुक्ताः शक्ता भक्ताः क्रमागताः ॥ ९२ ॥

---

भावः ॥८९॥

भृत्येषु प्रीतिविमुखं दृष्ट्वा भृत्या अपि तत्र स्नेहशून्या जायन्त इत्याह— "**शिरसा**" इति । शिरसा = उत्तमाङ्गेन नित्यं विधृताः = सदैव धारिताः स्नेहेन = तैलादिना परिपालिताः = पोषिताः वर्धिता इति यावत् एवम्भूताः केशाः शिरोवाला अपि निःस्नेहाः = स्नेहशून्याः तैलाद्युपचारहीनाश्चेत् क्रियेरन् तदा विरज्यन्ते = शुष्कतारूपविकारं भजन्ते, भृत्याः = सेवकाः किं न विरज्यन्ते अपितववश्यं विरक्ता भवन्ति । कीदृशा भृत्याः—निःस्नेहाः = स्वामिप्रीतिशून्या अर्थात् स्वामिनोपेक्षिताः । श्लेषानुप्राणितो दीपकालङ्कारः ॥९०॥

भृत्येषु प्रीतिं दधानस्य राज्ञ एवाधिकं फलमित्याह—'**राजे**"ति । राजा तुष्टः = प्रसन्नश्चेत् तदा भृत्यानाम् = भृत्येभ्य इत्यर्थः. सम्बन्धविवक्षया षष्ठी "यथा गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजै"रित्यत्र । अर्थमात्रम् = धनमेव प्रयच्छति = ददाति । ते तु = ते भृत्यास्तु सम्मानमात्रेण = राजतः प्राप्तपरितोषादिना हेतुना, प्राणैरपि = अत्यन्तं प्रियैरप्यसुभिः उपकुर्वते = राजानमुपकुर्वन्तीत्यर्थः । 'ही' ति निश्चितोऽयमर्थः । राज्ञाऽवश्यं भृत्यास्तोषणीया इति भावः ॥९१॥

"**एव**" मिति—एवमुक्तप्रकारेण स्वामिभृत्यव्यवहारं ज्ञात्वा=अवबुध्य नरेन्द्रेण=राज्ञा विचक्षणाः=पण्डिताः कुलीनाः=सुवंशोत्पन्नाः, शौर्यसंयुक्ताः शूरतोपेताः, शक्ताः=शक्तिसम्पन्नाः कार्यमात्रसाधकबलविशिष्टा इत्यर्थः भक्ताः= अनुरागिणः क्रमागताः=कुलपरम्परया आयाताः भृत्याः=दासाः कार्याः=तेषु

यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् ।
लज्जया वक्ति नो किंचित्तेन राजा सहायवान् ॥ ६३ ॥
यस्मिन्कृत्यं समावेश्य निर्विशङ्केन चेतसा ।
आस्यते सेवकः स स्यात्कुलत्रमिव चापरम् ॥ ९४ ॥
योऽनाहूत समभ्येति द्वारि तिष्ठति सर्वदा ।
पृष्ट· सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ६५ ॥
अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरं च य ।
यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥ ६६ ॥

---

तेष्वधिकारेषु नियोजनीया इत्यर्थ ॥६२॥

"य" इति—य राज्ञः (सम्बन्धि कर्त्तव्यं) दुष्करं=परैरसाध्यम्, उत्तमम्=महनीयं हितम्=इष्टं, सुकृतं=शोभनकार्यं कृत्वा=विधाय लज्जया=व्रीडया आत्मश्लाघाभयेनेत्यर्थः किञ्चिदपि नो वक्ति=मयैवैतत्साधितमिति महाभिमान नो धत्ते, तेन=भृत्येन राजा सहायवान्=शक्तिसम्पन्नो भवति। एतेन निष्कारणभावसाधकत्वं भृत्यगुण इत्युक्तं भवति ॥६३॥

"यस्मिन्" इति—यस्मिन् भृत्ये कृत्यम्=तत्तदधिकारविशिष्टं राज्यकार्यं समावेश्य=सम्यगर्पयित्वा निर्विशङ्केन=शङ्काशून्येन चेतसा=हृदयेन आस्यते=स्थीयते स्वामिनेतिशेष, स एव सेवकः वस्तुत. सेवापदयोग्यो भृत्यो भवति, अपरः=अन्यस्तु सेवक कलत्रमिव=भार्येव केवलं भरणयोग्यो न कार्यकर इति भावः ॥६४॥

"य" इति—यो भृत्य अनाहूतः=अनाकारितोऽपि समभ्येति=राज्ञ समीपमुपैति, सर्वदा=सर्वस्मिन् काले द्वारि तिष्ठति, पृष्ट.=प्रभुना कृतप्रश्न सत्यम्=ऋतम्, मितम्=परिमितं च ब्रूते स भृत्यो महीभुजा राज्ञामर्हो योग्यो भवतीत्यर्थः ॥६५॥

"अनादिष्ट" इति । यो भृत्य अनादिष्टः=भूपतिनाऽनाज्ञप्तोऽपि भूपस्य=राज्ञ हानिकरम् विनाशकरं दृष्ट्वा=आलोक्य तस्य नाशाय=निध्वंसनाय यतते=प्रयत्नं करोति स महीभुजामर्हो भृत्यो भवतीत्यर्थः ॥६६

ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा।
यो न चिन्तयते पापं स भृत्योऽर्हो महीभुजाम् ॥ ९७ ॥
न गर्वं कुरुते माने नापमाने च तप्यते।
स्वाकारं रक्षयेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ९८ ॥
न क्षुधा पीड्यते यस्तु निद्रया न कदाचन।
न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ९९ ॥
श्रुत्वा साङ्ग्रामिकीं वार्तां भविष्यां स्वामिनं प्रति।
प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ १०० ॥

---

"ताडित" इति। यो महीभुजा = नृपेण ताडित = प्रहारविषयीकृतोऽपि दुरुक्तोऽपि = दुर्वचोभिर्भर्त्सनावाक्यैरुक्तोऽपि, दण्डितोऽपि = दत्तदण्डोऽपि, पापं = दोष किमप्यनिष्ट, न चिन्तयते = विचारयते राज्ञ इति शेषः, स महीभुजामर्हो योग्यो भृत्यो ज्ञेय इति शेष ॥९७॥

'न गर्व" मिति—यो माने = राज्ञ क्रियमाणे सत्कारे गर्वम् = अहङ्कारं न कुरुते, अपमाने = तिरस्कारे च न तप्यते = सन्तापं नोपैति किन्तु—य स्वाकारम् = मानापमानयो सतोर्जायमान स्व भावं रक्षयेत् स महीभुजा मर्हो भृत्य इत्यर्थ ॥९८॥

"न क्षुधे" ति—य कदाचन = कदाचिदपि क्षुधा = बुभुक्षया न, निद्रया च न, शीतातपाद्यैश्च न, पीड्यते = दु खीक्रियते स महीभुजामर्हो भृत्य अर्थाद्यो क्षुधादिजनित क्लेश सोढ्वापि महीपते कार्य साधयति नच तत्र जायमानं खेद गणयति (यथा शिवराजस्य रघुवीर आसीत्) स एव राज्ञा भृत्यपदवीयोग्यो भवति ॥९९॥

"श्रुत्वे' ति-भविष्याम् = भाविनीं साङ्ग्रामिकीम् = सङ्ग्रामप्रयोजना वार्त्ता वृत्तान्त श्रुत्वा = आकर्ण्य य स्वामिनम्प्रति प्रसन्नास्यः = प्रसन्नमुखो भवेत् स महीभुजामर्हो भृत्य। भृत्यो युद्धवार्त्तामाकर्ण्य विरक्तिं न प्रकाशयेदिति भाव ॥१००॥

सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट् ।
नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥१०१॥
सीमा सङ्कोचमायाति वह्नौ चर्म इवाहितम् ।
स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥१०२॥

तथा शृगालोऽयमिति मन्यमानेन ममोपरि स्वामिना यदवज्ञा क्रियते, तदप्ययुक्तम् । उक्तं च यतः—

कौशेयं कृमिजं सुवर्णमुपलाद्दूर्वापि गोरोमत
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात् ।
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥१०३॥

---

"सीमे" ति । नियोगसंस्थिते=राज्ञा दत्तं स्वाधिकारं प्राप्य कर्म कुर्वति यस्मिन् भृत्ये शुक्लपक्षे=सिते पक्षे उडुराडिव=चन्द्र इव, सीमा=कार्यमर्यादा प्रभोः, स्वस्याधिकारो वा वृद्धिं=विस्तारं समायाति=प्राप्नोति स भृत्यो महीभुजामर्हो योग्य इत्यर्थः ॥ १०१ ॥

परिहेयभृत्यलक्षणमाह—"सीमे"ति । यस्मिन् भृत्ये स्थिते=स्वाधिकारानुसारं कर्म कुर्वति वह्नौ=अग्नौ आहितं=निक्षिप्तं चर्मेव सीमा सङ्कोचं=ह्रासभावमायाति, स भृत्योऽनुचर राज्यं समीहता=राज्यरक्षाकामेन नृपेण त्याज्य परिहेय । "समीहता" इति परस्मैपदं चिन्त्यं, समाधेयं वा ॥१०२॥

"कौशेयम्" इति । कौशेयम् = पट्टवासः कृमिजम्=कृमेः कीटविशेषाज्जायत इति कृमिजम्, सुवर्णम् = उपलात् = पाषाणात् पर्वतस्याकरादिमध्ये , दूर्वाऽपि=दर्भविशेषोऽपि गोरोमतः = गवां लोमभ्य इत्यर्थः पङ्कात् = कर्दमात् तामरसम् = कमलम् शशाङ्क = चन्द्र उदधेः समुद्रात्, इन्दीवर=नीलोत्पलं गोमयात्, अग्निर्वह्निः काष्ठात्=अग्निमन्थाख्याद्दारुविशेषात्, मणिरपि = रत्नविशेषोऽपि अहे = सर्पस्य फणात् रोचना = गोरोचना गोपित्ततः = गवां पित्तात् यकृति वर्त्तमानात् पित्ताख्याद्दोषविशेषात् 'जायते' इति सर्वत्र शेषो बोध्यः । एवं सत्यपि—गुणिनः = गुणवन्ति वस्तूनि स्वगुणो-

मूषिका गृहजातापि हन्तव्या स्वापकारिणी ।
भक्ष्यप्रदानैर्मार्जारो हितकृत्प्रार्थ्यते जनैः ॥१०४॥
एरण्डभिण्डार्कनलैः प्रभूतैरपि सञ्चितैः ।
दारुकृत्यं यथा नास्ति तथैवाज्ञैः प्रयोजनम् ॥१०५॥
किं भक्तेनासमर्थेन किं शक्तेनापकारिणा ।
भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥१०६॥

---

दयात् = स्वेषां गुणानामुदयनेन आविर्भावेन प्राकाश्यम् = प्रकाशस्य भाव. प्राकाश्यं ख्यातिं गच्छन्ति = प्राप्नुवन्ति, किं जन्मना उत्पत्त्या किं ख्यातिं यान्ति ? । यथा कौशेयादिकं केवलं स्वेन स्वेन गुणेनैवोत्कर्षं भजन्ते नतूत्पत्तिस्थानमात्रसम्बन्धेन, तथा सर्वोऽपि जन. स्वगुणमाहिम्नैव ख्यातिं लभते नतु वंशमात्रसम्बन्धेनेति भाव ॥ शार्दूलविक्रीडितम् ॥१०३॥

ख्यातिहेतुगुणोत्कर्षे दृष्टान्तान्तरमप्याचष्टे—'मूषिके'ति । मूषिका = आखुः, गृहजाताऽपि = गृहिणः स्वस्य गृहे उत्पन्नापि स्वापकारिणी = गृहस्वामिनो धान्यादिवस्तुविनाशनेनापकारवती हन्तव्या = मारणीया भवति, हितकृत् = मूषिकाहननाद्धेतो कल्याणकारी मार्जारः=विडालस्तु जनैर्गृहिभि भक्ष्यप्रदानै =भक्ष्याणां खाद्यानां पय प्रभृतीनां वस्तूनां प्रदानै प्रार्थ्यते = स्वगृहे रक्ष्यते पोष्यते चेत्यर्थ । स्वात्मपरात्मविचारं परित्यज्य हितैषिणस्तु सर्वदैव परिपाल्या इति तात्पर्यम् ॥१०४॥

सम्प्रति मूर्खैं प्रयोजनसिद्ध्यभावमुपदर्शयति—"एरण्डे" ति । सञ्चितैः= राशीकृतै प्रभूतै = प्रचुरैरपि एरण्डभिण्डार्कनलैः = नि सारवृक्षविशेषैः दारुकृत्यम् = काष्ठकृत्यम् भित्तिनिर्माणादिरूप यथा नास्ति = नैव सिद्धं भवति तथैव=तद्वदेव अज्ञै =बहुभिरपि मूर्खैं सङ्घीभूतैरपि प्रयोजनम्=इष्टसिद्धिर्न भवतीत्यर्थ । उपमा ॥ १०५ ॥

'किमि' ति—असमर्थेन=शक्तिहीनेन कार्यं साधयितुमक्षमेण भक्तेन=भक्ति सेवा तद्भावोपेतेन सतापि भृत्येन किम्=नैव किञ्चित् फलमित्यर्थ । शक्तेन=कार्यदक्षेण सतापि अपकारिणा=स्वामिविरुद्धाचारिणा तेनैव किम् ?

पिङ्गलक आह—भवत्वेवं तावत्। असमर्थः समर्थो वा चिरन्तनस्त्वमस्माकं मन्त्रिपुत्रः तद्विश्रब्धं ब्रूहि यत्किंचिद्वक्तुकामः। दमनक आह—देव, विज्ञाप्यं किञ्चिदस्ति।' पिङ्गलक आह—तन्निवेदयाभिप्रेतम्। सोऽब्रवीत्—

अपि स्वल्पतरं कार्यं यद्भवेत्पृथिवीपतेः।
तन्न वाच्यं सभामध्ये प्रोवाचेदं बृहस्पतिः ॥१०७॥

(क) तदैकान्तिके मद्विज्ञाप्यमाकर्णयन्तु देवपादाः। यतः—

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णः स्थिरो भवेत्।
तस्मात्सर्वप्रयत्नेन षट्कर्णं वर्जयेत्सुधीः ॥१०८॥

अथ (ख) पिङ्गलकाभिप्रायज्ञा व्याघ्रद्वीपिवृकपुरःसराः सर्वेऽपि तद्वचः समाकर्ण्य संसदि तत्क्षणादेव दूरीभूताः। ततश्च दमनक आह—उदकग्रहणार्थं प्रवृत्तस्य स्वामिनःकिमिह निवृत्त्या

हे राजन्! भक्तम्=स्वामिहितचिन्तकं शक्तम्=कार्यकुशलञ्च मामवज्ञातुम्=तिरस्कर्तुं नार्हसि। शक्तिर्भक्तिश्चैतौ द्वौ गुणौ भृत्यस्याभ्यर्हितौ तादृशस्य सेवकस्य राजाकदाप्यपमानं न कुर्यादिति भावः ॥ १०६ ॥

राजहितं तस्मै गुप्तमेव निवेदनीयमित्याह—"अपी"ति—पृथिवीपते=राज्ञः यत् स्वल्पतरम्=अत्यल्पमपि कार्यं भवेत् तत् सभामध्ये न वाच्यं=नैव प्रकथ्यम् तदिदं बृहस्पति=देवगुरुर्नीतिशास्त्रस्यादिम आचार्य प्रोवाच=उक्तवान् ॥ १०७ ॥

(क) ऐकान्तिके=निर्जने। मद्विज्ञाप्यम्=मया निवेदनीयम्।

मन्त्रस्य गोप्यतामेवाह—"षट्कर्णो" इति। षट्कर्णः=षड्भि कर्ण- ... न अर्थात् तृतीयपुरुषगामी मन्त्र=कर्त्तव्याऽकर्त्तव्यगोप्यविचार ... धते=स्फुटितो भवति। चतुष्कर्णं=चत्वार कर्णा यत्र अर्थात् द्वयो ...वक्त्रोरेव विद्यमान मन्त्र स्थिरः=दृढो भवेत्, तस्मात् सुधी= ... सर्वप्रयत्नेन=महता यत्नेन येनकेनापि प्रकारेण षट्कर्णं वर्जयेत्=परिहरेत्, अन्यथा कार्यसिद्धौ नाशो भवेदिति भाव ॥ १०८ ॥

(ख) पिङ्गलकाभिप्रायज्ञा=राज्ञो भावविद। संसदि=सभायाम्।

वस्थानम्। पिङ्गलक आह(क)सविलक्षस्मितम्-किंचिदपि। सोऽब्रवीत्—'देव, यद्यनाख्येयं तत्तिष्ठतु। उक्तं च—

दारेषु किंचित्स्वजनेषु किंचि-
द्गोप्यं वयस्येषु सुतेषु किंचित्।
युक्तं न वा युक्तमिदं विचिन्त्य
वदेद्विपश्चिन्महतोऽनुरोधात् ॥१०९॥

तच्छ्रुत्वा पिङ्गलकश्चिन्तयामास—योग्योऽयं दृश्यते तत्कथयाम्येतस्याग्र आत्मनोऽभिप्रायम्। उक्तञ्च—

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे।
स्वामिनि सौहृदयुक्ते निवेद्य दुःखं सुखी भवति ॥११०॥

---

(क) सविलक्षस्मितम् = सलज्जं मन्दहाससहितञ्च। क्रियाविशेषणमिदम्। अनाख्येयम्=ख्यातुमयोग्यम् अवाच्यं गोप्यमिति यावत्।

अस्मिन्नर्थे वृद्धगाथामाह—"दारेष्वि" ति। दारेषु = स्त्रीजनेषु किञ्चित् वस्तु गोप्यम् = अप्रकाश्यम्, यद्यपि "शरीरार्धं स्मृता जाया" इति स्मार्त्तं वच, तेनात्मनोऽभिन्नत्वेऽपि सर्वं दारेषु न प्रकाशयेदिति नीतिविदां परामर्श·। स्वजनेषु = आत्मीयेषु बन्धुषु किञ्चिद् गोप्यम् बन्धुष्वपि सर्वं न प्रकाश्यमिति भाव वयस्येषु = समानवयस्केषु मित्रेष्वपि, सुतेषु = आत्मजेषु च किञ्चिद् गोप्यम् = नैव प्रकाश्यमित्यर्थ।

विपश्चित् = विवेकशाली पुरुष महत = इष्टस्य कार्यस्य अनुरोधात् = सम्पादनाद्धेतो युक्तम् = उचितम्, न वा युक्तम् = नोचितमितीदं सर्वं विचिन्त्य = विचार्यैव वदेत् = यदि युक्तं स्यात्तदा कथयेत् न चेद् गोपयेदेवेत्यर्थ। इन्द्रवज्रोपेन्द्रवज्रयोरुपजाति ॥ १०६ ॥

दुःखस्य प्रकाशनार्हविषयानाह—"सुहृदी"ति—निरन्तरमभिन्नं चित्तमन्तःकरणं यस्य स तस्मिन् सुहृदि=मित्रे गुणवति = शक्तिभक्त्यादिपूर्वोक्त-गुणसम्पन्ने भृत्ये = दासे, अनुवर्त्तिनि = आज्ञाकारिणि अनुरागवति कलत्रे = भार्यायां, तथा सौहृदयुक्ते = प्रीतिकारिणि स्वामिनि = प्रभौ दुःखम् = कष्टं

भो दमनक, शृणोषि शब्दं दूरान्महान्तम् । सोऽब्रवीत्--स्वामिन्, शृणोमि । ततः किम् । पिङ्गलक आह—भद्र ! अहमस्माद्वनाद्गन्तुमिच्छामि । दमनक आह--कस्मात् । पिङ्गलक आह- यतोऽद्यास्मद्वने(क)किमप्यपूर्वं सत्त्वं प्रविष्टं यस्यायं महाशब्दः श्रूयते ।

(ख)तस्य च शब्दानुरूपेण पराक्रमेण भाव्यमिति । दमनक आह-(ग)यच्छब्दमात्रादपि भयमुपगतः स्वामी, तदप्ययुक्तम् । उक्तं च-

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षित ।
पैशुन्याद्भिद्यते स्नेहो भिद्यते वाग्भिरातुरः ॥१११॥

तन्न युक्तं स्वामिनः पूर्वोपार्जितं वनं त्यक्तुम् । यतो(घ)भेरीवेणुवीणामृदङ्गतालपटहशङ्खकाहलादिभेदेन शब्दा अनेकविधा भवन्ति । तन्न केवलाच्छब्दमात्रादपि भेतव्यम । उक्तं च—

---

( हृदि वर्त्तमाने ) निवेद्य = प्रकाश्य सुखीभवति = शान्तिं प्राप्नोति लोक इति शेष ॥ ११० ॥

(क) अपूर्वम् = अलौकिकमदृष्टचरमिति यावत् । सत्त्वं = प्राणिविशेष ।

(ख) तस्य=अपूर्वसत्त्वस्य । शब्दानुरूपेण=शब्दतुल्येन । पराक्रमेण=बलेन । यादृशस्तस्य शब्दो भयावह , तादृश एवासावपि स्यादिति भाव. ।

(ग)शब्दमात्रात्=केवलं शब्दादेवेत्यर्थः । 'अयुक्त' मितिशब्दमात्रान्न भेतव्यमित्यर्थः ।

"अम्भसे"ति–सेतुः=आलिः जलरोधार्थमिष्टिकादिरचितो मृत्कूटः अम्भसा=जलेन भिद्यते, तथा=तद्वत् अरक्षितः=अगोपायितः मन्त्रोऽपि ते=विनाशमुपैति पैशुन्यात्=पिशुनस्य भावः पैशुन्यं कर्णेजपत्वं तस्मात् हः=प्रीतिर्भिद्यते, आतुर =भयं प्राप्त , वाग्भिः=शब्दैर्भिद्यते=भेदमुपजापप्नोतीत्यर्थ । भवास्तु मृगेन्द्रत्वादनातुर सन् कथं शब्दश्रवणमात्राद्भय गतवानित्याश्चर्यमिति भावः ॥१११॥

(घ)'भेरी' ति—भेरीप्रभृतयो वाद्यविशेषा , तेषा भेदेन आकारविशेषेण शब्दा =ध्वनय । अनेकविधा =नानाप्रकारा ।

अत्युत्कटे च रौद्रे च शत्रौ प्राप्ते न हीयते।
धैर्यं यस्य महीनाथो न स याति पराभवम् ॥११२॥
दर्शितभयेऽपि धातरि धैर्यध्वंसो भवेन्न धीराणाम्।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः ॥११३॥

तथा च।

यस्य न विपदि विषादः सम्पदि हर्षो रणे न भीरुत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥११४॥

---

'अत्युत्कटे' इति। अत्युत्कटे=अत्यन्त दारुणे रौद्रे=क्रूरे च, शत्रौ=वैरिणि प्राप्ते सति यस्य धैर्यं=धीरता न हीयते=नैव नश्यति स महीनाथः=भूमिपतिः पराभवं=पराजयं न याति। 'हीयते' इति कर्मकर्त्तरि लट् ॥११२॥

अधीर एव दुःखी भवतीत्याह—'दर्शितभय' इति। धातरि=प्रजापतावदृष्टे वा दर्शितभयेऽपि=भयं प्रदर्शितवत्यपि धीराणाम्=महासत्त्वानां हृदयबलवतामित्यर्थः, धैर्यध्वंसः=धीरताया विनाशः न भवेत्=नैव भवतीत्यर्थः। तथाहि—शोषितसरसि=शोषितानि शुष्कतां नीतानि सरांसि सरोजलानि येन एवम्भूते निदाघे=ग्रीष्मकाले सिन्धुः=समुद्रस्तु नितरामेव=अत्यन्तमेव उद्धतः उद्भटः महावीचिभिर्विक्षुब्ध एव तिष्ठतीति शेषः। अल्पसत्त्वानामेव भयहेतौ सति त्रासो महासत्त्वास्तु सर्वदैवाक्षुब्धास्तिष्ठन्तीति भावः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। उक्तञ्च—सामान्यं वा विशेषो तदन्येन समर्थ्यते। सत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा। इति। आर्या वृत्तम् ॥११३॥

'यस्ये' ति—यस्य पुरुषस्य विपदि=विपत्तौ प्राप्तायां सत्यां विषादः=दुःखं, न=नास्ति, सम्पदि=सम्पत्तौ हर्षो न, रणे=संग्रामे च भीरुत्वम्=भीरोर्भावोऽर्थात् भयं न, तम्=एतादृशं भुवनत्रयतिलकम्=लोकत्रयेऽपि शिरोमणिम् अर्थात् त्रयाणामपि लोकानामुपरि प्रभुतायोग्यं सुतं=पुत्रम् जननी=माता विरलम्=अल्पं यथास्यात्तथा जनयति=उत्पादयति। एतादृशो महासत्त्वशाली कश्चिद्विरल एव भवतीति भावः॥ वृत्तमुक्तम् ॥११४॥

तथा च।

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥११५॥

अपि च।

अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति।
जतुजाभरणस्येव रूपेणापि हि तस्य किम् ॥११६॥

तदेवं ज्ञात्वा स्वामिना(घ)धैर्यावष्टम्भः कार्यः। न शब्दमात्राद्भेतव्यम्।

उक्तं च।

पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च ॥११७॥

---

"शक्तिवैकल्ये" ति—शक्तेः सामर्थ्यस्य वैकल्येन अभावेन नम्रस्य= अवनतस्य अधः पतितस्य च निःसारत्वात्=दुर्बलत्वात् स्थिराशरहितत्वाच्च लघीयसः=अत्यन्तं लघोर्गौरवहीनस्य शुष्कस्य च मानहीनस्य=स्वत्माऽभिमानरहितस्य, जन्मिनः=जन्तोर्मानवस्य तृणस्य=घासस्य च समा=तुल्या गतिः= अवस्था वर्त्तते इति शेषः। शक्तिहीनो लघुर्जनस्तृणवत्परैर्विदल्यत इति भावः। श्लेषानुप्राणितो दीपकालङ्कारः। लक्षणमुक्तं प्राक् ॥११५॥

"अन्ये"ति—यः कश्चित् अन्यप्रतापम्=अन्यस्य शत्रोः प्रताप= तेज आसाद्य=प्राप्य अर्थात् शत्रुप्रतापाक्रान्तः सन् दृढत्वम्=दृढता शूरता मित्यर्थः न गच्छति=नैव प्राप्नोति शत्रोराक्रमणकाले स्वशौर्यं न प्रदर्शयति, जतुजाभरणस्येव=लाक्षानिर्मितभूषणस्येव तस्य रूपेण=आकारेण किं? न किमपि मिति भावः।

शूरः पुमान् परप्रतापावस्कन्दनेनापि न पराभावं प्राप्नोति, अशूरस्तु ...भरणमिव ताप प्राप्य सहसैव पराभूयते इति भावः। उपमालङ्कारः ॥११६॥

(घ) धैर्यावष्टम्भ=वीरताया आश्रयणम्।

"पूर्वमेवे"ति। एतत् मेदसा=वसया पूर्ण=भरितम् इति मया

पिङ्गलक आह—कथमेतत्। सोऽब्रवीत्—

कथा २।

कश्चिद्गोमायुर्नाम शृगालः(क)क्षुत्क्षामकण्ठ इतस्ततः परिभ्रम्वेन सैन्यद्वयसङ्ग्रामभूमिमपश्यत्। तस्यां च दुन्दुभेः पतितस्य वायुवशाद्वल्लीशाखाग्रैर्हन्यमानस्य शब्दमशृणोत्। अथ क्षुभितहृदयश्चिन्तयामास—'अहो, विनष्टोऽस्मि। तद्यावन्नास्य प्रोच्चारितशब्दस्य दृष्टिगोचरे गच्छामि, तावदन्यतो व्रजामि। अथवा नैतद्युज्यते सहसैव पितृपैतामहं वनं त्यक्तुम्।

भये वा यदि वा हर्षे सम्प्राप्ते यो विमर्शयेत्।
कृत्यं न कुरुते वेगान्न स सन्तापमाप्नुयात्॥११८॥

तत्तावज्जानामि कस्यायं शब्दः।' धैर्यमालम्ब्य विमर्शयन्यावन्मन्दं मन्दं गच्छति तावद्दुन्दुभिमपश्यत्। स च तं परिज्ञाय समीपं गत्वा स्वयमेव कौतुकादताडयत्। भूयश्च हर्षादचिन्तयत्-अहो, चिरादेतदस्माकं महद्भोजनमापतितम्। तन्नूनं

पूर्वमेव ज्ञातं=निश्चितम्। (ततोऽनन्तरम्) अनुप्रविश्य=अन्तः प्रविश्य विज्ञातं=दृष्टं (यदा तदा) यावत् चर्म च दारु च=सर्वांशेनैव निःसारमित्यर्थः। "यावत्तावच्च साकल्ये" इत्यमरः॥११७॥

(क)क्षुत्क्षामकण्ठः=क्षुधा क्षामः शुष्कः कण्ठो गलो यस्य सः। तस्याम्=सङ्ग्रामभूमौ दुन्दुभेः=ढक्कायाः सकाशात् पतितस्य=स्खलितस्य। वायुवशात्=वायोः सञ्चारात्। वल्लीशाखाग्रैः—वल्लीनां लतानां शाखायाः प्रतानस्य अग्रभागैः। हन्यमानस्य=ताड्यमानस्य। क्षुभितहृदयः=सचिन्त इत्यर्थः। पितृपैतामहम्=पितृपितामहेभ्य आगतमिति 'पितृपैतामहम्'। "तत आगतः" इत्यण् उत्तरपदवृद्धिश्च कृतेति स्वयं ज्ञेयम्। पितृपितामहक्रमेण प्राप्तमित्यर्थः।

"भये वा" इति। भये=भयहेतौ यदि वा=अथवा हर्षे=हर्षहेतौ सम्प्राप्ते=उपस्थिते यो विमर्शयेत्=विचारयेत् वेगात्=सम्भ्रमात् कृत्यं=कार्यं न कुरुते सः सन्तापम्=खेदं नाप्नुयात्=नैव प्राप्नोतीत्यर्थः। विचार्यैव कार्यं

(ख)प्रभूतमांसमेदोसृग्भि· परिपूरितं भविष्यति। ततः परुषचर्मा-वगुण्ठितं तत्कथमपि विदार्यैकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्ट । परं चर्मविदारणतो(ग)दंष्ट्राभङ्गः समजनि। अथ निराशीभूतस्तद्दारुशेपमवलोक्य श्लोकमेनमपठत्—पूर्वमेव मया ज्ञातम्' इति। ततो न शब्दमात्राद्भेतव्यम्। पिङ्गलक आह— भोः, पश्यायं मम सर्वोऽपि परिग्रहो(घ)भयव्याकुलित-मनाः पलायितुमिच्छति। तत्कथमहं धैर्यावष्टम्भं करोमि।' सेऽब्रवीत्-'स्वामिन् नैपामेष दोषः । यतः स्वामिसदृशा एव भवन्ति भृत्याः। उक्तं च—

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥११६॥

(ङ तत्पौरुपावष्टम्भं कृत्वा त्वं तावदत्रैव प्रतिपालय यावदहमेत-च्छब्दस्वरूपं ज्ञात्वागच्छामि । ततः पश्चाद्यथोचितं कार्यम्'।

---

कर्त्तव्यमिति भावः ॥११८॥

(ख) प्रभूतमासमेदोऽसृग्भि =प्रभूतै प्रचुरै मांसै पलैः मेदोभिर्वसाभिः असृग्भिः रक्तैश्च। परुषचर्मावगुण्ठितम्=कठोरचर्मणा आच्छादितम्। (ग)दंष्ट्राभङ्ग.=दाढाभङ्ग·। निराशीभूत =मासाशाहीन । दारुशेपम्=काष्ठमात्रा-वशेषम्। (घ)भयव्याकुलितमना =भयेन=भयकारणेन व्याकुलितं त्रस्त मनो यस्य स इत्यर्थ. । धैर्यावष्टम्भम्=वीरताया आश्रयम्, परिग्रह·=परिवारोऽमात्यादिरित्यर्थ ।

'अश्व" इति। अश्व =घोटको वाजी। शस्त्रम्=अस्त्रम्, शास्त्रम्=-।दिप्रणीतः स्मृतिग्रन्थ । वीणा=तन्त्री, वाणी=वाक्यम्, नर =पुरुषो त्यादि·, नारी=स्त्री चेत्येते सर्वे पुरुषविशेषम्=कञ्चन पुरुषं प्राप्ता सन्तो ऽयोग्याः हीना. भवन्ति, योग्या·=तत्तत्कार्यसाधने योग्याश्च भवन्तीत्यन्वय.। अर्थात् विशिष्ट बुद्धिमन्तं देशकालविदम्प्राप्ता श्चेद्योग्या, तद्भिन्न प्राप्ताश्चेद-योग्या जायन्ते ॥११६॥

(ङ) पौरुपावष्टम्भम्=सत्त्ववारणम्, पराक्रमावलम्बनमित्यर्थः। प्रतिपालय=

इति। पिङ्गलक आह—किं तत्र भवान्गन्तुमुत्सहते । स आह—किं स्वाम्यादेशात्सुभृत्यस्य कृत्याकृत्यमस्ति । उक्तञ्च

स्वाम्यादेशात्सुभृत्यस्य न भीः सञ्जायते क्वचित् ।
प्रविशेन्मुखमाहेय दुस्तरं वा महार्णवम् ॥१२०॥

तथा च—

स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च ।
मन्यते न स सन्धार्यो भूभुजा भूतिमिच्छता ॥१२१॥

**पिङ्गलक** आह-भद्र, यद्येवं तद्गच्छ । शिवास्ते पन्थानः सन्तु इति । **दमनकोऽपि तं** प्रणम्य सञ्जीवकशब्दानुसारी प्रतस्थे । अथ **दमनके गते** भयव्याकुलमना· पिङ्गलकश्चिन्तया· मास-अहो न शोभनं कृतं मया, यत्तस्य विश्वासं गत्वात्मा-

---

प्रतीकृत्य । स्वाम्यदेशात्=प्रभोरादेश प्राप्य स्थितस्येति शेष:; अत्र ल्यप्लोपे पञ्चमी । 'हर्म्यात् प्रेक्षते' इत्यादिवत् । सुभृत्यस्य=स्वामिभक्तस्य सेवकस्ये-त्यर्थः । कृत्याकृत्यम्=कार्याकार्यम् । स्वामिभक्ता नरा· प्रभोराज्ञामेव पालयन्ति तत्र कर्त्तव्याऽकर्त्तव्यं न विवेचयन्ति, अयमेव तेषा परो धर्म इति भाव । उक्तञ्च धर्मशास्त्रकारैरिति शेष ।

"**स्वाम्यादेशादि**" ति । स्वाम्यादेशात्=स्वामिनः प्रभो-रादेशादाज्ञया वर्तमानस्य सुभृत्यस्य=शोभनस्य सेवकस्य सेवाधर्म जानानस्य क्वचिदपि भी· = भीतिर्न सञ्जायते, स भृत्यः आहेयम् = अहेः सर्पस्य सम्बन्धि मुख = वदन प्रविशेत् वा = अथवा दुस्तरम् = तरीतुमशक्यं महार्णवम् = महासागरं प्रविशेत् । आज्ञाकारी भृत्यः सर्वमनाया-सेनैव साधयतीति भाव ॥१२०॥

"**स्वाम्यादिष्ट**" इति । यः भृत्यः स्वाम्यादिष्ट = स्वामिना प्रभुणा आदिष्ट आज्ञप्त समम् = स्वशक्तिसाध्यं विषमम् = स्वशक्त्यसाध्यं वा मन्यते = आलोचयते अर्थात् स्वाम्युक्तं पालनीयमेवेति मत्वा समासम कार्यं साधयितु न प्रवर्तते, भूतिम् = ऐश्वर्यम् इच्छता = कामयमानेन भूभुजा = भूपालेन स भृत्य न सन्धार्य = नैव रक्षणीय , किन्त्वारादेव परिहर्त्तव्यः ॥१२१॥

भिप्रायो निवेदित । कदाचिद्दमनकोऽ(क) यमुभयवेतनो भूत्वा ममोपरि दुष्टबुद्धिः स्याद्भ्रष्टाधिकारत्वात् । उक्तञ्च—

ये भवन्ति महीपस्य सम्मानितविमानिताः ।
यतन्ते तस्य नाशाय कुलीना अपि सर्वदा ॥१२२॥

(ख)तत्तावदस्य चिकीर्षितं वेत्तुमन्यत्स्थानान्तरं(ग)गत्वा प्रतिपालयामि।कदाचिद्दमनकस्तमादाय मां घ व्यापादयितुमिच्छति। उक्तञ्च—

न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि ।
विश्वस्तास्त्वेव वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥१२३॥
बृहस्पतेरपि प्राज्ञो न विश्वासे व्रजेन्नरः ।

---

(क)उभयवेतन =उभयस्मात् वेतनं=यस्य स 'उभयवेतनः" उत्कोचहारी अर्थात् य. स्वामिन स्वामिशत्रोश्च वेतनं गृह्णाति स तादृश. "रिशवतखोर " इति भाषायाम् । दुष्टबुद्धि मया तिरस्कृतत्वाद् वैरनिष्कासनार्थं ममानिष्टकारीत्यर्थ । भ्रष्टाधिकारत्वात्=च्युतामात्यपदवीत्वात् ।

'ये"इति। ये जना. महीपस्य=राज्ञ सम्मानितविमानिताः=पूर्वं सम्मानिता पश्चात् विमानिता=हृताधिकारा भवन्ति ते कुलीना =सत्कुलोत्पन्ना अपि तस्य राज्ञो नाशाय सर्वदा यतन्ते=सोद्योगा वर्त्तन्ते ॥ १२२ ॥

(ख)अस्य=दमनकस्य । चिकीर्षितम्=कर्त्तुमिष्टम्=वेत्तुम्=ज्ञातुम् 'वेदितु'मिति साधु ।

(ग) प्रतिपालयामि=प्रतीक्षा करोमि । अस्यागमनमिति शेष । तम्=सत्त्वं यतोऽहं भीत इत्यर्थ । (घ) व्यापादयितुम्=हन्तुम् ।

" न वध्यन्त " इति । दुर्बला =क्षीणसामर्थ्या अपि जना [illegible] .=( शत्रौ ) विश्वासमनापन्नाश्चेत् बलिभि =शक्तिशालिभिरपि न [illegible]ध्यन्ते=नैव हन्यन्ते, तु=किन्तु बलवन्तः=शक्तिमन्तोऽपि चेद् विश्वस्ता तदा ) दुर्बलै =क्षीणशक्तिभिरपि व[illegible]ध्यन्ते । तस्माच्छत्रोर्विश्वासो न कर्त्तव्य इति भावः ॥ १२३ ॥

य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥१२४॥
शपथैः संधितस्यापि न विश्वासे व्रजेद्रिपोः ।
राज्यलाभोद्यतो वृत्रः शक्रेण शपथैर्हतः ॥ १२५ ॥
न विश्वासं विना शत्रुर्देवानामपि सिद्ध्यति ।
विश्वासात् त्रिदशेन्द्रेण दितेर्गर्भो विदारित· १२६ ॥

एवं संप्रधार्य स्थानान्तरं गत्वा दमनकमार्गमवलोकयन्नेकाकी तस्थौ । दमनकोऽपि सञ्जीवकसकाशं गत्वा वृषभोऽयमिति परिज्ञाय हृष्टमना व्यचिन्तयत्—अहो शोभनमापतितम् ।

---

सर्वत्रैवाऽविश्वस्तेन भाव्यमित्याह—"बृहस्पते" रिति । प्राज्ञः=धीमान् पुरुष· य आत्मन.=स्वस्य - वृद्धिम्=ऐश्वर्यम् , आयुष्यम्=जीवनं, सुखानि=सुखतत्साधनानि इच्छेत्=इच्छतीत्यर्थः, सः बृहस्पते =देवगुरोरपि शमस्वभावस्य विश्वासे=विश्वासविषये न व्रजेत्= न वर्त्तेत । इन्द्रियादिकामिभिः कस्यापि विश्वासो न कर्तव्यः, विकृतस्य तु कदापि नेति भावः ॥१२४॥

शत्रुस्तु नैव निश्वसनीय इत्याह–"शपथैरि' ति । शपथैः दिव्यवचोभि· सन्धितस्य—कृतसन्धेरपि शत्रो =द्विषो विश्वासे नैव व्रजेत् । यतः राज्यलाभोद्यत =राज्यलाभे स्वर्गप्राप्त्याम् उद्यतः वृत्र· =वृत्रासुरः शक्रेण=इन्द्रेण शपथैर्हत =शपथवाक्यैर्विश्वास्यैव विनाशित इत्यर्थः ॥१२५॥

उक्तमेवार्थमनाचष्टे— 'ने" ति । देवानाम् = स्वभावसिद्धैश्वर्याणामपि अमराणा शत्रु =वैरी विश्वास विना न सिद्ध्यति = नैव वशता याति इतरेषान्तु कैव कथेति भावः । त्रिदशेन्द्रेण = देवानामधिपतिना इन्द्रेण विश्वासात = विश्वासं दत्त्वैव दिते =दैत्यमातु गर्भः=भ्रूण विदारितः=छेदित दितिर्हि दैत्याना माता, कश्यपस्य पत्नी देवानाञ्च विमाताऽऽसीत् , तस्याः कुक्षिस्थो गर्भ इन्द्रेण खण्डितो येन मरुता देवानामुत्पत्तिरभूत् । एकदा पराजितपुत्रा दितिरिन्द्रजेतारं पुत्र कामयमाना कश्यपोपदिष्ट पयोव्रतमनुतस्थौ तत्र रध्रं गवेषयन् इन्द्रस्तस्यास्तपश्चर्या खण्डयित्वा सुप्ता तामालोक्य छलेन तस्या गर्भ प्रविश्य एकोनपञ्चाशता खण्डैस्त विदादार, तेच मरुन्नामानो देवा अभूवन्निति पौराणिकी कथाऽत्रानुसन्धेया ॥ १२६ ॥

अनेनैतस्य संधिविग्रहद्वारेण मम पिङ्गलको वश्यो भविष्यतीति। उक्तं च—

न कौलीन्यान्न सौहार्दान्नृपो वाक्ये प्रवर्तते।
मन्त्रिणां यावदभ्येति व्यसनं शोकमेव च ॥१२७॥
सदैवापद्गतो राजा भोग्यो भवति मन्त्रिणाम्।
अत एव हि वाञ्छन्ति मन्त्रिणः सापदं नृपम् ॥१२८॥
यथा नेच्छति नीरोगः कदाचित्सुचिकित्सकम्।
तथापद्रहितो राजा सचिवं नाभिवाञ्छति ॥ १२९ ॥

एव विचिन्तयन्पिङ्गलकाभिमुखः प्रतस्थे। पिङ्गलकोऽपि तमायान्तं प्रेक्ष्य स्वाकारं रक्षन्यथापूर्वमवस्थितः। दमनकोऽपि पिङ्गलकसकाशं गत्वा प्रणम्योपविष्टः। पिङ्गलक आह—किं दृष्टं भवता तत्सत्त्वम्? । दमनक आह—दृष्टं स्वामिप्रसादात्। पिङ्गलक आह—अपि सत्यम्। दमनक आह—किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते। उक्तञ्च।

---

सम्प्रधार्य = निश्चित्य। हृष्टमनाः = प्रसन्नचेताः। वश्यः = अधीनः। "ने"ति। नृपः = राजा यावत् व्यसनम् = विपत्तिम्, शोकम् = इष्टवस्तुनाशजनिता चिन्ताञ्च न अभ्येति – नैव प्राप्नोति तावत्कालपर्यन्त कौलीन्यात् = सत्कुलोत्पत्तिमात्रात् न, तथा—सौहार्दात् = सुहृद्भावात् न = नैव मन्त्रिणा वाक्ये = वचने प्रवर्त्तते मान्त्रिवशो भपतीत्यर्थः ॥ १२७ ॥

"सदैवे"ति। आपद्गतः = विपद्ग्रस्तो राजा मान्त्रिणा सदैव भोग्यो भवति, यथा यथा मान्त्रिण कामयन्ते तथा तथा तदधीनता गच्छतीत्यर्थः। मान्त्रिणो नृपं = राजानं सापदम् = आपद्युक्तमेव वाञ्छान्ति॥१२८॥

"यथे"ति--यथा नीरोगाः = रोगहीनो नरः कदाचिदपि सुचिकित्सकम् धन्वन्तरिसममपि वैद्यं द्रष्टुमिति शेषः। न इच्छति, तथा आपद्रहितः = विपत्तिशून्यो राजा सचिव=मन्त्रिण नाभिवाञ्छति=नैव कामयते। प्रयोजनाभावादितिभाव.। मन्त्री सदैव राजानं सप्रयोजनमेव रक्षयेदिति व्यङ्ग्यम् १२९

अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् ।
देवानाञ्च विनश्येत स द्रुतं सुमहानपि ॥१३०॥

तथा च ।

सर्वदेवमयो राजा मनुना संप्रकीर्तितः ।
तस्मात्तं देववत्पश्येन्न व्यलीकेन कर्हिचित् ॥१३१॥
सर्वदेवमयस्यापि विशेषो नृपतेरयम् ।
शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥१३२॥

**पिङ्गलक आह—सत्यं दृष्टं भविष्यति भवता । न दीनोपरि महान्तः कुप्यन्तीति न त्वं तेन निपातितः । यतः**

---

'अपी'ति—यो मनुष्यः भूभुजाम्=राज्ञां तथा देवानाञ्च पुरः=अग्रे स्वल्पमपिदपि असत्यं=मृषा वदति=कथयति सः सुमहानपि=सुसमृद्धोऽपि द्रुतं=शीघ्रं विनश्येत्=विध्वस्तो भवेदित्यर्थः ॥ १३० ॥

"सर्वे"ति। मनुना=आदिपुरुषेण धर्मशास्त्रप्रणेत्रा, राजा सर्वदेवमयः=सकलामरस्वरूपः सम्प्रकीर्त्तितः=सम्यक् कथितः। तस्मात्, कारणात् तम्=राजानं देववत्=देवमिव पश्येत्=आदरयेदित्यर्थः, कर्हिचित्—कदाचिदपि व्यलीकेन=विपरीतभावेन न=नैव पश्येत्। मनूक्तिस्तु मनुस्मृतौ सप्तमेऽध्याये इत्थं द्रष्टव्या—

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वती ॥
यस्मादेषा सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ इति ॥ १३१ ॥

**सर्वदेवमयस्येति**—सर्वदेवमयस्यापि=मनूक्तेन्द्रादिलोकपालस्वरूपस्यापि नृपतेः=राज्ञः अयं विशेषः=देवसकाशादाधिक्यं बोध्यम्, किं तदित्याह—शुभेति। नृपात्=राज्ञः सकाशादित्यर्थः सद्यः=शीघ्रमेव शुभाशुभफलम्=कर्मणां सुखदुःखप्राप्तिरूपं फलं भवतीति शेषः देवात्=इन्द्रादिदेवात्तु भवान्तरे=अन्यस्मिन् जन्मनि शुभाशुभफलमित्यनुषङ्गो बोध्यः ।

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
स्वभाव एवोन्नतचेतसामयं
महान्महत्स्वेव करोति विक्रमम् ॥१३३॥

अपि च ।

गण्डस्थलेषु मदवारिषु बद्धराग-
मत्तभ्रमद्भ्रमरपादतलाहतोऽपि ।
कोपं न गच्छति नितान्तबलोऽपि नाग-
स्तुल्ये बले तु बलवान्परिकोपमेति ॥१३४॥

---

राज्ञः कोपप्रसादयोः सद्य फलं, दैवस्य तु जन्मान्तरे इति द्वयोः प्रभेद इति भावः ॥ १३२ ॥

कुप्यन्ति=क्रोधं कुर्वन्ति ।

"**तृणानी**"ति । प्रभञ्जनः=समीरणः मृदूनि=कोमलानि तथा सर्वतः= सर्वप्रकारेण नीचैः प्रणतानि=नम्रीभूतानि=तृणानि शष्पाणि न=नैव उन्मीलयति=उत्खातयति । एतदर्थान्तरन्यासेन स्पष्टीकरोति-"स्वभाव"इति । तथाहि—उन्नतचेतसाम्=उन्नतं महत् विशालं चेतो हृदयं येषां तेषां महाशयानामयं स्वभाव एव (यदल्पे वस्तुनि विक्रमस्याप्रदर्शनं नाम) यतो महान्=बलवान् महत्सु=बलवत्स्वेव विक्रमं=बलं करोति प्रदर्शयतीत्यर्थः । वंशस्थं वृत्तम् ॥ १३३ ॥

"**गण्डस्थलेष्वि**"ति—गण्डस्थलेषु=कपोलपालीषु मदवारिषु= मदजलेषु, बद्धो रागः प्रीतिर्येन एवम्भूतो यो मत्त०=मत्तः दानवारिपानेन उन्मादं गतो भ्रमरः तस्य पादतलेन आहतस्ताडितः तथा नितान्तबलः=महाबलोऽपि नागो=हस्ती कोपं=क्रोधं न=नैव गच्छति ( यतः ) बलवान्=शक्तिशाली तुल्ये=समाने बले सत्येव परिकोपम्=महाकोपम् एति=गच्छति । बलवन्तः स्वसदृशे बलिन्येव सामर्थ्यं प्रदर्शयन्ति न लघाविति भावः । अर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ॥ १३४ ॥

दमनक आह—अस्त्वेवं स महात्मा, वयं (क) कृपणा, तथापि स्वामी यदि कथयति ततो(ख) भृत्यत्वे नियोजयामि। पिङ्गलक आह सोच्छ्वासम्—किं भवाञ्शक्नोत्येवं कर्तुम्। दमनक आह—किमसाध्यं बुद्धेरस्ति। उक्तञ्च—

न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः।
कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम्॥१३५॥

[illegible] आह—यद्येव तर्ह्य (ग)मात्यपदेऽध्यारोपितस्त्वम्। अद्यप्रभृति सत्वरं [illegible] निग्रहादिकं त्वयैव कार्यमिति निश्चय। अथ दमनकः स्वामी पिङ्गलकस्य(ङ) साक्षेपं तमिदमाह—एह्येहीतो दुष्टवृषभ! [illegible] इति। तच्छ्रु[illegible] ति। किं निःशङ्को भूत्वा मुहुर्मुहुर्नर्दसि [illegible] आह—[illegible] ऽब्रवीत्—भद्र! कोऽयं पिङ्गलकः? दमन[illegible] च)स्वामिन [illegible] कमपि न जानासि। तत् क्षणं प्रतिपालय। फलेनैव ज्ञास्यसि। [illegible] सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा सिंहस्तिष्ठति। तच्छ्रुत्वा(छ) गतायुषमिवात्मानं मन्यमानः सञ्जीवकः परं विषा-

---

(क) कृपणा=दीना। (ख) भृत्यत्वे=दासभावे, नियोजयामि=नियुक्तं करोमि। असाध्यम् अशक्यम्, बुद्धेः=मतेः।

"न" इति। यत् (कार्यं) यथा बुद्ध्या प्रसाधितं=निष्पादितं संसिद्धिम्=साफल्यम् अभ्येति=प्राप्नोति तत् (तथा) शस्त्रैः= धनुरादिभिः न, नागेन्द्रैः=मत्तैर्गजैः न, हयैः=वाजिभिः न, पदातिभिः= पत्तिभिः न संसिद्धिमभ्येति। बुद्धिरेव सर्वत्र कार्यसाधने श्रेष्ठ उपाय इति भावः॥ १३५॥

(ग) अमात्यपदे=मन्त्रिपदव्याम्। अध्यारोपितः=नियोजितः। (घ) प्रसाद-निग्रहादिकम्=प्रसादोऽनुग्रहः, निग्रहः=निरोधः। तत्प्रभृति प्रजानामिति शेषः॥

(ङ) साक्षेपम्=आक्षेपः तिरस्कारः तेन सह यथा स्यात्तथेति क्रियाविशेषणमिदम्। आकारयति=आह्वयति। (च) निःशङ्कः=निर्भयः। नर्दसि= अव्यक्तनादमर्थात् स्वजातिशब्दं हुम्भारवं करोषि। (छ) गतायुषम्=मृतमिव।

दमगमत् । आह च —(ज)भद्र, भवान्साधुसमाचारो वचनपटुश्च दृश्यते । तद्यदि मामवश्यं तत्र नयसि तदभयप्रदानेन स्वामिनः सकाशात्प्रसादः कारयितव्यः । दमनक आह— भोः सत्यमभिहितं भवता । नीतिरेषा । यतः—

पर्यन्तो लभ्यते भूमे समुद्रस्य गिरेरपि ।
न कथञ्चिन्महीपस्य चित्तान्तः केनचित्क्वचित् ॥१३६॥

तत्त्वमत्रैव तिष्ठ यावदहं तं(क)समये दृष्ट्वा ततः पश्चात्त्वामानयामि इति । तथानुष्ठिते दमनकः पिङ्गलकसका[illegible]देमाह— स्वामिन् । न तत्प्राकृतं सत्त्वम् । स हि [illegible] —महेश्वरस्य वाहनभूतो वृषभ इति । [illegible] इदमूचे [illegible]श्वरेण परितुष्टेन कालिन्दीप[illegible](ग)शष्पाग्राणि भक्षयितुं समादिष्टः । किं बहुना ? [illegible]दत्तं भगवता क्रीडार्थं वनमिदम् । पिङ्गलक आह [illegible]यम्–सत्यं ज्ञातं मयाधुना । न (घ) देवताप्रसादं विना [illegible]भोजिनो(ङ)व्यालाकीर्णे एवंविधे वने निःशङ्का नदन्तो भ्रम-

---

(ज) भद्र = हे साधो ! साधुसमाचार = योग्यव्यवहार । वचनपटु = वाक्यप्रयोगचतुरो वाग्मीति यावत् । अभयप्रदानेन = अभयवाक्यं दत्वेत्यर्थ । प्रसाद = अनुग्रह ।

"पर्यन्त" इति । भूमे = पृथिव्याः, समुद्रस्य सागरस्य, गिरे = पर्वतस्य च पर्यन्तः = प्रान्तभागोऽन्तिमा सीमा लभ्यते = प्राप्यते जनैरिति शेष किन्तु केनचित् = केनाऽपि जनेन क्वचित् = कुत्रापि महीपस्य = राज्ञ चित्तान्तः = सीमा अर्थान्मनोवर्त्यभिप्रायः कथञ्चित् = केनापि प्रकारेण न इत्यनुषङ्ग ॥१३६॥

( )समये = प्रभुसमीपम्प्रति नयनयोग्ये काले अथवा समये = अभयसङ्केते
(ख) महेश्वरस्य = महादेवस्य । वाहनभूतः = कालिन्दीपरिसरे = यमुने(ग)शष्पाग्राणि = बालतृणानामङ्कुरान् । समादिष्ट = आज्ञप्त ।
(घ) देवताप्रसादम् = देवताया अनुग्रहम् । (ङ) व्यालाकीर्णे = श्वापदैरावृते ।

न्ति। ततस्त्वया किमभिहितम्। दमनक आह—स्वामिन्, एतदभिहितं मया यदेतद्वनं चण्डिकावाहनभूतस्य मत्स्वामिनः पिङ्गलकनाम्नः सिंहस्य विषयीभूतम्। तद्भवानभ्यागतः प्रियोऽतिथिः। तत्तस्य सकाशं गत्वा भ्रातृस्नेहेनैकत्र भक्षणपानविहरणक्रियाभिरेकस्थानाश्रयेण कालो नेय इति। ततस्तेनापि सर्वमेतत्प्रतिपन्नम्। उक्तं च सहर्षम्—स्वामिनः सकाशादभयदक्षिणा दापयितव्या इति। तदत्र स्वामी प्रमाणम्। तच्छ्रुत्वा पिङ्गलक आह—साधु सुमते साधु। मन्त्रिश्रोत्रिय! साधु। मम हृदयेन सह संमन्त्र्य भवतेदमभिहितम्। तद्दत्ता मया तस्याभयदक्षिणा। परं सोऽपि मदर्थेऽभयदक्षिणां याचयित्वा द्रुततरमानीयताम्' इति। अथ साधु चेदमुच्यते—

अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः।
मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम्॥१३७॥

तथा च।

मन्त्रिणां भिन्नसंधाने भिषजां सान्निपातिके।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः॥१३८॥

---

"चण्डिके" ति—चण्डिकाया भवान्या वाहनभूतस्य=यानभूतस्य। विषयीभूतम्=अधिकारेणाक्रान्तम्। भ्रातृस्नेहेन=भ्रातृभावेन। भक्षणादिभि. एकस्थानाश्रयेण=एकस्थानमाश्रित्येत्यर्थ। नेय=गमनीयः। अतिथि.=प्राघुणिक। मन्त्रिश्रोत्रिय=मन्त्रिषु पण्डित, मुख्यपदाधिकारयोग्येत्यर्थ। अथ=पक्षान्तरे। इदम्=वक्ष्यमाणं वचनम्।

"अन्तःसारै" रिति। अन्त.सारै=अन्तर्गतमन्त्रणासारवद्भि अन्तर्दृढैश्च, अकुटिलै=वक्रताहीनै. अधूर्तैश्च अच्छिद्रैः=निर्दोषै रन्ध्रशून्यैश्च सुपरीक्षितै=साध्वसाध्विधुर्वेति कृतपरीक्षै सम्यक्तोलितैश्च, मन्त्रिभि=अमात्यै, सुस्तम्भै=गृहस्थूणाभि मन्दिरमिव=गृहमिव राज्यं धार्यते=पाल्यते रक्ष्यते चेति श्लेषानुप्राणितोपमालङ्कार॥१३७॥

"मन्त्रिणा" मिति। भिन्नसन्धाने=भिन्नस्य भेदं (पृथग्भाव)

दमनकोऽपि तं प्रणम्य सञ्जीवकसकाशं प्रस्थित सहर्षम-चिन्तयत्— अहो, प्रसादसम्मुखो नः स्वामी(ङ)वचनवशगश्च संवृत्तः। तन्नास्ति धन्यतरो मम। उक्तञ्च—

अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम्।
अमृतं राजसम्मानममृतं क्षीरभोजनम् ॥१३९॥

अथ सञ्जीवकसकाशमासाद्य सप्रश्रयमुवाच—भो मित्र! प्रार्थितोऽसौ मया भवदर्थे स्वाम्यभयप्रदानम्। (क) तन्निश्रब्धं गम्यतामिति। परं त्वया राजप्रसादमासाद्य मया सह (ख) समय-धर्मेण वर्तितव्यम्। न (ग) गर्वमासाद्य स्वप्रभुतया विचरणीयम्। अहमपि तव संकेतेन सर्वां राज्यधुरममात्यपदवीमाश्रित्यो-द्धरिष्यामि। एवं कृते द्वयोरप्यावयो (घ) राज्यलक्ष्मीर्भोग्या भविष्यति।

---

प्राप्तस्य (शत्रो) सन्धानं मेलनं यत्र तादृशे कर्मणि, मन्त्रिणाम् तथा सान्नि पातिके = त्रिदोषजे विकारे कर्मणि=चिकित्साव्यापारे भिषजाम् = चिकित्सकाना प्रज्ञा = बुद्धि व्यज्यते = प्रकटीभवति, स्वस्थे = सुखिनि नीरोगे च-( जने राजादौ ) को वा न पण्डितो भवति, किन्तु सर्वोऽपि पण्डित गण्यते ॥ सन्धिप्रभृतौ मन्त्रिणा, सान्निपातिके च वैद्याना परीक्षावसर इति भाव ॥१३८॥

(ङ)वचनवशग = मम वागधीन , संवृत्त = जात । धन्यतर = अतिशयेन धन्य ।

'अमृत" मिति । शिशिरे = शीतकाले वह्नि = अग्नि अमृतम् = [illegible] इत्यर्थ. । प्रियदर्शनम् = इष्टस्य वस्तुन साक्षात्कार अमृतम्, [illegible] । [illegible] = राज्ञ समादरोऽपि अमृतम्, क्षीरभोजनम् = पायसभोजन-पि अमृतम्। अत्र सर्वत्रामृतशब्देन सुखसाधनमुच्यते ॥१३९॥

(क) निश्रब्धम्=सविश्वासम्। (ख) समयधर्मेण=सङ्केतविशेषेण। (ग) गर्वम्=अहङ्कारम्। स्वप्रभुतया=स्वातन्त्र्येण। (घ) राज्यलक्ष्मी =राज्यैश्वर्यम्।

आखेटकस्य धर्मेण विभवाः स्युर्वशे नृणाम्।
नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव ॥१४०॥

तथा च।

यो न पूजयते गर्वादुत्तमाधममध्यमान्।
भूपसम्मानमान्योऽपि भ्रश्यते दन्तिलो यथा ॥१४१॥

सञ्जीवक आह—कथमेतत्। सोऽब्रवीत्—

## कथा ३

अस्त्यत्र धरातले वर्धमानं नाम नगरम्। तत्र दन्तिलो नाम (क) नानाभाण्डपतिः सकलपुरनायकः प्रतिवसति स्म। तेन पुरकार्यं नृपकार्यं च कुर्वता तुष्टिं नीतास्तत्पुरवासिनो लोका नृपतिश्च। किं बहुना। न कोऽपि तादृक्चतुरो दृष्टो नापि श्रुतो वेति। अथवा साधु चेदमुच्यते—

---

"आखेटकस्ये" ति। आखेटकस्य = मृगयाया, धर्मेण = न्यायेन व्यवहारेण वा विभवा = सम्पत्तयो नृणां = मनुष्याणां वशे = सामर्थ्ये स्यु = मनुष्यवशतां यान्तीत्यर्थ। तथाच—अत्र = संसारे एक मृगानिव = पशूनिव नृप्रजा = मनुष्यरूपा प्रजा प्रेरयति = स्वेष्टसिद्ध्यै तस्मिन् २ कार्ये नियोजयति, अन्यस्तु हन्ति = नाशयति। यथा कश्चित् कुक्कुरादिना आखेटकं कुर्वाणो वन्यान् पशून् हन्ति कुक्कुरादींश्च पालयति एवमेव त्वमपि मद्योगेन पिङ्गलकं वशीकृत्य राज्यकार्यं मदधीनं कुरु अहञ्च तेन सर्वाः प्रजाः वशीकृत्य बहुधनं सञ्चेष्यामि तेनावयोर्द्वयोरपीष्टसिद्धिर्भविष्यति, कालश्च सुखेन निर्यास्यतीति भाव ॥१४०॥

"य" इति। गर्वात् = अहङ्कारात् उत्तमाधममध्यमान् न पूजयते = यथोचितं नैव सत्करोति स भूपसम्मानमान्य = राज्ञा कृतेनादरेण सत्कृतोऽपि दन्तिलो यथा = दन्तिल इव भ्रश्यते = स्वाधिकारात्प्रच्युतो भवति ॥१४१॥

(क) नानाभाण्डपति = प्रचुरधनस्वामी, नृपस्य कोषाध्यक्ष इत्यर्थः। पुरकार्यम् = नगरकार्यम्, नृपकार्यम् = राजकार्यं कोषरक्षणादिरूपम्।

नरपतिहितकर्ता द्वेष्यतां याति लोके
जनपदहितकर्ता त्यज्यते पार्थिवेन्द्रैः ।
इति महति विरोधे वर्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥ १४२ ॥

अथैवं गच्छति काले दन्तिलस्य कदाचिद्विवाहः संप्रवृत्तः । तत्र तेन सर्वे पुरनिवासिनो राजसन्निधिलोकाश्च सम्मानपुरःसरमामन्त्र्य भोजिता वस्त्रादिभिः सत्कृताश्च । ततो विवाहानन्तरं राजा सान्तःपुरः स्वगृहमानीयाभ्यर्चितः । अथ तस्य नृपतेर्गृहसम्मार्जनकर्ता गोरम्भो नाम राजसेवको गृहायातोऽपि तेनानुचितस्थान उपविष्टोऽवज्ञयार्धचन्द्रं दत्त्वा निःसारितः, सोऽपि ततः प्रभृति निःश्वसन्नपमानान्न रात्रावप्यधिशेते । कथं मया तस्य भाण्डपते राजप्रसादहानिः कर्तव्या' इति चिन्तयन्नास्ते । पुनश्चाचिन्तयत्

'नरपती'ति–नरपतेः राज्ञः हितकर्त्ता इष्टसाधकः लोके द्वेष्यताम्=शत्रुतां याति=प्राप्नोति, जनपदहितकर्त्ता=जनपदस्य देशस्य प्रियतासम्पादकः पार्थिवेन्द्रैः=नरेन्द्रैः त्यज्यते=अधिकारात्प्रच्याव्यते दण्ड्यते वा इति=अनेन प्रकारेण समाने=तुल्ये महति=अनल्पे विरोधे=बाध्यबाधकभावे वर्त्तमाने=विद्यमाने सति नृपतिजनपदानाम्=नृपतेर्भूपतेः जनपदानां जनपदवर्त्तिनां प्रजाजनानां कार्यकर्त्ता=उभयपक्षसाधकः दुर्लभः=विरलो भवतीति शेषः । राज्ञो हितपक्षेऽवश्यं प्रजाद्वेषः, प्रजाहितपक्षे च राजविद्वेषोऽप्यवश्यम्भावी । तत्र द्वयोः कार्ययोः परस्परं विरुद्धयोः सतोरपि य उभयपक्षं वशीकृत्य स्वेष्टमपि साधयेत् तादृशो विरल एव कश्चिल्लोकोत्तरप्रज्ञाशालीति भावः ॥ १४२ ॥

पुरवासिनः=पौरा जनाः । राजसन्निधिलोकाः=राजपार्श्ववर्त्तिनोऽमात्यप्रभृतयः । सम्मानपुरःसरम्=सादरम् । सान्तःपुरम्=सावरोधम् । अभ्यर्चितः=सत्कृतः ।

नृपतेः=राज्ञः । गृहसम्मार्जनकर्त्ता=गृहे बहुकरीकर्मणि विनियुक्तः । अवज्ञया=तिरस्कारेण । अर्धचन्द्रम्=गलहस्तम् । निःश्वसन्=दुःखेन जीवन्नित्यर्थः । राजप्रसादहानिः=राजानुग्रहपरिभ्रंशः यथा तस्मिन् राजाऽनुग्रहं

अथवा किमनेन वृथा शरीरशोषणेन। न किंचिन्मया तस्याप-कर्तुं शक्यमिति। अथवा साध्विदमुच्यते—

योह्यपकर्तुमशक्तः कुप्यति किमसौ नरोऽत्र निर्लज्जः।
उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम् ॥१४३

अथ कदाचित्प्रत्यूषे योगनिद्रां गतस्य राज्ञः शय्यान्ते मार्जनं कुर्वन्निदमाह—'अहो, दन्तिलस्य महद्दृप्तत्वं यद्राजमहिषीमालिङ्गति'। तच्छ्रुत्वा राजा ससंभ्रममुत्थाय तमुवाच—भो भो गोरम्भ, सत्यमेतत्, यत्त्वया जल्पितम्। किं देवी दन्तिलेन समालिङ्गिता' इति। गोरम्भ प्राह—देव, रात्रिजागरणेन द्यूतासक्तस्य मे बलान्निद्रा समायाता। तन्न वेद्मि किं मयाभिहितम्।' राजा सेर्ष्यं स्वगतम्—'एष तावदस्मद्गृहेऽप्रतिहतगतिः तथा दन्तिलोऽपि। तत्कदाचिदनेन देवी समालिङ्ग्यमाना दृष्टा भविष्यति। तेनेदमभिहितम्। उक्तञ्च

यद्वाञ्छति दिवा मर्त्यो वीक्षते वा करोति वा।
तत्स्वप्नेऽपि तदभ्यासाद्ब्रूते वाथ करोति वा॥ १४४ ॥

---

परित्यज्य कोपमाचरेदित्याशयः। शरीरशोषणेन = चिन्तयेत्यर्थः।

"य" इति। यो नरः अपकर्तुम् = परस्य अपकारं कर्तुमनिष्टमापादयितुम् अशक्तः = असमर्थः सन् कुप्यति = क्रोधमाचरति अत्र = विषये असौ निर्लज्जः विगतव्रीडः किं नरः = मनुष्यपदवाच्योभवितुमर्हति किम्?। हि=तथाहि—उत्पतितः = उच्छलितोऽपि चणकः भ्राष्ट्रकं भङ्क्तुम् = आमर्दयितुं त्रोटयितुं किं शक्तः समर्थोऽस्ति? यथा क्षुद्रश्चणक उत्प्लुतः सन् भ्राष्ट्रभञ्जनेऽसमर्थस्तथा दुर्बलः क्रुद्धोऽपि परानिष्टकरणेऽसमर्थ इति भावः॥ आर्यावृत्तम् ॥१४३॥

योगनिद्राम् = सुषुप्तिम्। शय्यान्ते = शय्यायाः समीपे। मार्जनम् = भूमिशोधनम्। दृप्तत्वम् = औद्धत्यम्। राजमहिषीम् = देवीपदवाच्यां पट्टाभिषिक्तां राज्ञः स्त्रियम्। ससम्भ्रमम् = ससत्त्वरम्। द्यूतासक्तस्य = द्यूतक्रीडायां रतस्य।

"यदि"ति। मर्त्यो मरणधर्मा मनुष्यः दिवा=दिवसे यद् वाञ्छति =

शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम् ।
सुगूढमपि तज्ज्ञेयं स्वप्नवाक्यात्तथा मदात् ॥ १४५ ॥

अथवा स्त्रीणां विषये कोऽत्र संदेहः ।

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमा ।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ १४६ ॥

अन्यच्च ।

एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षर
वीक्षन्तेऽन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचना ।
दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया
केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ॥१४७॥

---

कामयते, वीक्षते = पश्यति, करोति अनुतिष्ठति वा, तदभ्यासात् = तस्यैव संस्कारविशेषात् स्वप्नेऽपि = "करणेषूपसंहृतेषु जागरितसंस्कारज: प्रत्यय: सविषय: स्वप्न" इत्युक्तलक्षणायां स्वप्नावस्थायामपि तत् = तदेव ब्रूते = कथयति, वा = अथवा करोति ॥१४४॥

'शुभ'मिति । शुभम् = यदि वा पापम्, यत्=यदेव नृणां=मनुष्याणां हृदि मनसि संस्थितम्=सम्यङ्निहितमस्तीति शेषः, तत् सुगूढम्=नितान्तं गुप्तमपि स्वप्नवाक्यात्=स्वप्नकालिकोक्तेः मदात्=सुरापानादिजनितादवस्थाविशेषाद्वा ज्ञेयं भवति ॥ १४५ ॥

"जल्पन्ती"ति – प्रकरणात् "स्त्रिय" इति कर्तृपदं लभ्यम् । स्त्रियः अन्येन=परेण पुंसा सार्धम्=सह जल्पन्ति=व्यक्तं वदन्ति, सविभ्रमा=सविलासाः सत्योऽन्यम्=अपरं जनं पश्यन्ति=निरीक्षन्ते, अन्यमेव हृद्गतम्=मनसि वर्तमानं चिन्तयन्ति = स्मरन्ति, नामेति प्रसिद्धम् योषिताम् = स्त्रीणां कः प्रियः? न कोऽपीत्यर्थः ॥१४६॥

उक्तमेवार्थं प्रकारान्तरेणाचष्टे--"एकेने"ति । स्मितपाटलाधररुचः = स्मितपाटलेव विकसत्पाटलापुष्पमिव अधरस्य रुक् कान्तिर्यासां ताः एकेन= केनापि पुरुषेण अनल्पाक्षरम्=अनल्पं बहु अक्षरं यस्यां क्रियायां तद्यथास्यात्तथा

तथा च ।

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ १४८ ॥
रहो नास्ति क्षणो नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ १४९ ॥
यो मोहान्मन्यते मूढो रक्तेयं मम कामिनी ।
स तस्या वशगो नित्यं भवेत्क्रीडाशकुन्तवत् १५०

---

जल्पन्ति=निगदन्ति. तथा—स्फुटन्ती विकाशमाना या कुमुदिनी नीलोत्पलिनी तद्वत् फुल्लानि विकसितानि उल्लसन्ति शोभमानानि लोचनानि यासां तास्तादृश्य. इतोऽन्यम् = स्ववार्त्ताविलासविषयात्पुरुषाद्भिन्न वीक्षन्ते = सादरं पश्यन्ति। तथा—दूरमत्यन्तमुदारं विशालं चरित्रं यस्य स चासौ चित्रोऽनेक प्रकारो विभव ऐश्वर्यं यस्य स तमन्यं धिया = मनसा ध्यायन्ति = चिन्तयन्ति । अतः वामभ्रुवाम् = योषाणां केनेव = केन वा पुरुषेण सह, परमार्थतः = यथार्थत अर्थवत् = सानुरागं प्रेमाऽस्ति, न केनापि सहेति भावः । शार्दूलविक्रीडितम् ॥१४७॥

"नाग्नि"रिति । अग्निः=वह्निः काष्ठानाम्=समिधा न तृप्यति=तृप्तो भवति किन्तु समिधामाधाने उत्तरोत्तर ज्वलत्येव, महोदधि=सागर आपगानाम्=नदीनां न तृप्यति, अन्तको यम सर्वभूतानां=सर्वेषां जीवानां न तृप्यति, वामलोचना=नारी पुंसाम्= पुरुषाणां न तृप्यति । अत्र काष्ठानामित्यादौ सर्वत्र सम्बन्धविवक्षया षष्ठी । काष्ठै, आपगाभि सर्वभूतै, पुंभिरिति विवक्षितोऽर्थः । १४८ ॥

"रह"इति । रह=एकान्तता नास्ति क्षण= अवसरो नास्ति, प्रार्थयिता=स्वाभीष्ट. नर मनुष्यो नास्ति एतत्सर्वं यस्मान्न सुलभ, तेन,=हेतुना हे ! नारद ! नारीणा=स्त्रीणां सतीत्वम्=पातिव्रत्यम् उपजायते=सम्पद्यते । अभीष्टकान्तस्थानादिप्राप्त्यभाव एव स्त्रीणां सतीत्वे बीजं, वस्तुत एवैता वामा इति भाव ॥ १४९ ॥

"य"इति । मम इय कामिनी=प्रिया ( मयि ) रक्ता अनुरागवती वर्त्तत

तासां वाक्यानि कृत्यानि स्वल्पानि सुगुरूण्यपि ।
करोति य कृतैर्लोके लघुत्वं याति सर्वतः ॥ १५१ ॥
स्त्रियं च यः प्रार्थयते संनिकर्षं च गच्छति ।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ॥ १५२ ॥
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादा· स्त्रियस्तिष्ठन्ति सर्वदा ॥ १५३ ॥
नासां कश्चिदगम्योऽस्ति नासां च वयसि स्थिति ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ १५४ ॥

इति शेषः इति यो मूढो=मूर्खो मोहात्=अज्ञानान्मन्यते=अभिमानं धत्ते सः=मूढ पुरुष क्रीडाशकुन्तवत्=गृहपालितशुकादिपक्षीवत् नित्यम्=सदैव तस्या वशगोऽधीनो भवेत् । स्त्रीषु प्रीतिविश्वासो न कर्त्तव्य इति भाव ॥१५०॥

"तासा"मिति । य =यो नर तासाम्=स्त्रीणा वाक्यानि=वच प्रयोगान्, कृत्यानि=कार्याणि स्वल्पानि=अल्पमात्राणि सुगुरूणि अपि महान्त्यपि वा करोति विधत्ते स कृतै =नैरेतै स्वल्पैर्महद्भिर्वा कृतै साद्भि लोके=जगति सर्वत = सर्वप्रकारेण लघुत्व=लाघवमपूज्यतामित्यर्थ याति=प्राप्नोति । स्त्र्युक्तानि सर्वाणि नानुष्ठेयानीति भाव ।

"करोति यः कृती लोके"इति पाठे तु लोके=जगति य कृती=चतुरोऽपि नर इति व्याख्येयम् ॥ १५१ ॥

"स्त्रिय"मिति । यश्च पुरुष स्त्रिय प्रार्थयते=कामयते, यश्च सन्निकर्षम्=सन्निधिं गच्छति समीपस्थो भवतीत्यर्थ । ईषत्=किञ्चिदपि सेवा शुश्रूषा कुरुते, योषित =नार्यस्तमेव वाञ्छन्ति=कामयन्ते । अलौकिकमासा चापल्यमिति भाव ॥ १५२ ॥

"अनर्थित्वादि"ति । मनुष्याणा=पुरुषाणा अनर्थित्वात्=याचकत्वाभावात् ( प्राय स्त्रीणामेव याचकत्वादिति भाव ) परिजनस्य=परिवारवर्गस्य भयाच्च भीतिकारणादपि सर्वदा=सर्वस्मिन्नपि काले अमर्यादा =मर्यादाशून्या ( अपि ) स्त्रिय मर्यादायाम्=पातिव्रत्यादिन्याय्ये मार्गे तिष्ठन्ति, अन्यथा तु शक्यमासा मर्यादापालनमिति भाव ॥ १५३ ॥

"नासामि"ति आसाम्=नारीणा कश्चित् सुरूपो वा कुरूपो वा पतिर्नि

वाऽपतितो वा यो वा कोऽपि वा पुरुष अगम्य =अभोग्य नास्ति, किञ्च-आसा-वयसि=यौवनेऽयौवने वाऽऽयुषि स्थितिरास्था नास्ति अर्थात् अयं तरुणोऽयमतरुण इत्यादिविचारो नास्ति, विरूपम्=दुर्वर्णं रूपवन्तम्=सुरूपं वा "पुमान् इति एव"=पुरुषोऽयं भोगसमर्थ इत्याकारयैव बुद्ध्या भुञ्जते=रमयन्ति ॥१५४॥

रक्तो हि जायते भोग्यो नारीणां शाटको यथा ।
घृष्यते यो दशालम्बी नितम्बे विनिवेशितः ॥ १५५ ॥

"रक्त" इति । रक्त =अनुरागी पुरुष , अन्यत्र लोहितवर्ण शाटको यथा=धौतवस्त्रमिव, नारीणा भोग्यो जायते हि=इति निश्चितमेतत् । य रक्त - दशालम्बी=उत्कृष्टावस्थावान्, अन्यत्र वस्त्रप्रान्तभागेन लम्बमान , नितम्बे=स्त्रिय कटिप्रदेशे विनिवेशित =आरोपित ( धृत ) सन् घृष्यते=घर्षणमापाद्यते, नरोऽपि रक्त =स्त्रीभिर्नितम्बैर्घृष्यते । श्लेषानुप्राणितोपमा । "पञ्चाग्नितम्ब स्त्रीकट्या" इत्यमर ॥ १५५ ॥

अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा ।
अबलाभिर्बलाद्रक्त पादमूले निपात्यते ॥ १५६ ॥

एवं स राजा बहुविधं विलप्य (क)तत्प्रभृति दन्तिलस्य (ख)प्रसादपराङ्मुखः सञ्जात । किं बहुना ? राजद्वारप्रवेशोऽपि तस्य निवारितः । दन्तिलोऽप्यकस्मादेव प्रसादपराङ्मुखमवनिपतिमवलोक्य चिन्तयामास—अहो साधु चेदमुच्यते—

"अलक्तक" इति । अबलाभि =स्त्रीभि रक्त =रक्तवर्णः अलक्तक =यावको यथा बलान्निष्पीड्य=निश्च्योत्य पादमूले=पादतले निपात्यते=क्षिप्यते तथा रक्त =अनुरागी आसक्त पुरुषोऽपि निष्पीड्य=नितान्तमालिङ्ग्य पादमूले=अङ्घ्रितले निपात्यते=भोगार्थं सन्निपात्यते । अलक्तवद्रक्त पुरुषमपि नार्यश्चरणानत कुर्वन्तीतिभाव । पूर्ववदलङ्कार ॥ १५६ ॥

(क)तत्प्रभृति=तदारभ्य । (ख)प्रसादपराङ्मुख =त्यक्तानुग्रहदृष्टि ।

कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तङ्गताः
स्त्रीभि कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ।

कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥१५७॥

"क" इति । को जन अर्थान्=पुत्रमित्रकलत्रधनादिपदार्थान् प्राप्य=उपादाय न गर्वित =साहङ्कारो न जात अपि तु सर्व एव गर्वितो भवतीत्यर्थ, कस्य विषयिण =संसारव्यवहारे खचितचित्तस्य धनिनो वा आपद =विपत्तय अस्तङ्गता ,=विलीना सर्वेऽपि सांसारिका प्रायो विपद्ग्रस्ता भवन्तीत्यर्थ । भुवि=लोके स्त्रीभिः=नारीभि कस्य मनो न खण्डितम्=कामपीडाक्रान्तं न कृतमिति,-किन्तु सर्वस्यैव कृतमित्यर्थ विश्वामित्रादीना महातपस्विनामपि स्त्रीवशतादर्शना-दिति भावः । को जनो राज्ञा=भूपतीना प्रियः=इष्ट नकोऽपीत्यर्थ । नामेति सम्भावनायाम् । को जन. कालस्य=मृत्योर्न गोचरान्तरगत =विषयभाव न प्राप्त, सर्वेऽपि कालकवलताङ्गताः यान्ति चेत्यर्थ । क. अर्थी=याचनाप-रायण पुरुष गौरवं=सम्मान गत =प्राप्तः न कोऽपीत्यर्थ, याचनाया मान-हानिरवश्यम्भाविनीति भाव । को वा पुमान्=समर्थोऽपि जन दुर्जनवा-गुरासु=दुर्जनाना दुष्टाना धूर्ताना जनाना वागुरासु छलजालेषु पतित =निरुद्धः सन् क्षेमेण=कल्याणेन निर्विघ्नमिति यावत् यात =निर्गतः न कोपीत्यर्थः । दुर्जनाना छलविद्या पण्डितानपि मोहयतीति भाव । शार्दूलविक्रीडित वृत्तम् ॥ १५७ ॥ तथा च ।

काके शौचं द्यूतकारे च सत्यं
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः ।
क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता
राजा मित्रं केन दृष्टं श्रुतं वा ॥१५८॥

अपर मयास्य भूपतेरथवान्यस्यापि कस्यचिद्राजसम्बन्धिन स्वप्नेऽपि नानिष्टं कृतम् । तत्किमेतत्पराङ्मुखो मां प्रति भूपति .. । एवं तं दन्तिल कदाचिद्राजद्वारे (क) विष्कम्भित विलोक्य सम्मार्जनकर्ता गोरम्भो विहस्य द्वारपालानिदमूचे — भो ! भो ! द्वारपालाः, ! (ख) राजप्रसादाधिष्ठितोऽयं दन्तिलः स्वयं (ग) निग्रहानुग्रहकर्ता च । तदनेन निवारितेन यथाहं तथा यूगमप्य (घ)

र्धचन्द्रभाजिनो भविष्यथ । तच्छ्रुत्वा दन्तिलश्चिन्तयामास नूनमिदमस्य गोरम्भस्य चेष्टितम्। अथवा साध्विदमुच्यते-

"काके" इति। काके=वायसे मलभुजि शौचम्=पवित्रता, द्यूतकारे=दुरोदरे सत्यम्=यथार्थभाषित्वम्, सर्पे=भुजङ्गे विषधरे क्षान्तिः=क्षमा, स्त्रीषु=कामिनीषु कामोपशान्ति =मदनदमनम्, क्लीबे=नपुंसके जने धैर्यम्=चापल्याभाव, मद्यपे=सुरापे जने, तत्त्वचिन्ता=तत्त्वस्य परमार्थस्य मोक्षादेः पदार्थस्य तत्साधनाना वा चिन्ता ध्यानम्, राजा=भूपतिः मित्रं=सुहृत्, एतत्सर्वं केन=पुंसा दृष्टम्=प्रत्यक्षीकृतं श्रुतम्=आगमप्रमाणतो वा ज्ञातम्, न केनापीत्यर्थ । सर्वमुक्त काकशौचादिकमसम्भवीति भाव । "ननमयययुतेय मालिनी भोगिलोकै" रिति लक्षणान्मालिनी वृत्तम् । व्याख्यातञ्चैतदस्माभिर्वृत्तरत्नाकरटीकाया रत्नप्रभायाम् ॥ १५८ ॥

(क) विष्कम्भितम्=प्रतिबन्धितम् । "विष्कम्भो योगभेदे स्याद्विस्तारे प्रतिबन्धयो" रिति मेदिनी। (ख) राजप्रसादाधिष्ठित =राज्ञा प्रसादेनाऽधिकृत । (ग) निग्रहानुग्रहकर्त्ता=निग्रहेऽनुग्रहे च स्वतन्त्र । (घ) अर्धचन्द्रभाजिन =गलहस्तिता । निवारितेन=प्रतिरुद्धेन। चेष्टितम्=कार्यम् ।

अकुलीनोऽपिमूर्खोऽपि भूपालं योऽत्र सेवते।
अपि सम्मानहीनोऽपि स सर्वत्र प्रपूज्यते ॥१५९॥

"अकुलीन' इति। य =य कोऽपि पुरुष अत्र=लोके भूपालम्=राजान सेवते=आश्रयते स अकुलीन =अनुच्चकुलप्रसूतोऽपि, मूर्खोऽपि=मूढोऽपि सम्मानहीन =सत्काररहितोऽपि सर्वत्र=देशे काले च प्रपूज्यते = सत्क्रियते लोकैरिति शेष ॥१५९॥

अपि कापुरुषो भीरु स्याच्चेन्नृपतिसेवक ।
तथापि न पराभूतिं जनादाप्नोति मानव ॥१६०॥

एव स बहुविधं (ङ) विलप्य विलक्षमनाः सोद्वेगो गतप्रभाव स्वगृहं गत्वा निशामुखे गोरम्भमाहूय वस्त्रयुगलेन सम्मान्येदमुवाच--'भद्र ! मया न तदा त्वं रागवशान्निःसारितः। यतस्त्वं ब्राह्मणानामग्रतोऽनुचितस्थाने समुपविष्टो दृष्ट इत्यपमानितः।

तत्क्षम्यताम् । सोऽपि स्वर्गराज्योपमं तद्वस्त्रयुगलमासाद्य परं परितोषं गत्वा तमुवाच- भोः श्रेष्ठिन् ! क्षान्तं मया ते तत् । तदस्य सम्मानस्य कृते पश्य मे बुद्धिप्रभावं राजप्रसादञ्च । एवमुक्त्वा सपरितोषं निष्क्रान्तः ।

"अपी" ति । चेदः=यदि नृपतिसेवकः=राजभृत्यः स कापुरुषः=नीचोऽपि, अथवा भीरुः=कातरोऽपि स्यात् तथापि असौ मानवः जनात्=लोकात् पराभूतिम् पराभवं न=नैव आप्नोति । राजभृत्यात्सर्वे बिभ्यतीति भावः ॥१६०॥

विलक्ष्य=वितर्कनं कृत्वा । विलक्षमना=सव्रीडः सोद्वेगः=सत्रासः । गतप्रभावः=प्रभावशून्यः । निशामुखे=प्रदोषकाले । आहूय=आकार्य । सम्मान्य=आदरयित्वा । रागवशात्=मात्सर्यहेतोः "रागस्तु मात्सर्ये" इति मेदिनी ।

साधु चेदमुच्यते—

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् ।
अहो सुसदृशी चेष्टा तुलायष्टेः खलस्य च ॥१६१॥

ततश्चान्येद्युः स गोरम्भो राजकुले गत्वा योगनिद्रां गतस्य भूपतेः संमार्जनक्रियां कुर्वन्निदमाह—अहो (१) अविवेकोऽस्मद्भूपते, यत्पुरीषोत्सर्गमाचरंश्चिर्भटीभक्षणं करोति । तच्छ्रुत्वा राजा सविस्मयं तमुवाच-रे रे गोरम्भ ! किं (क) मप्रस्तुतं लपसि । गृहकर्मकरं मत्वा त्वां न व्यापादयामि । किं त्वया कदाचिदहमेवंविधं कर्म समाचरन्दृष्टः । सोऽब्रवीत्—देव ! द्यूतासक्तस्य रात्रिजागरणेन सम्मार्जनं कुर्वाणस्य मम बलान्निद्रा समायाता । तयाधिष्ठितेन मया किंचिज्जल्पितम्, तन्न वेद्मि । तत्प्रसादं करोतु स्वामी निद्रापरवशस्य इति । एवं श्रुत्वा राजा चिन्तितवान्—जन्मान्तरे (२) पुरीषोत्सर्गं कुर्वता कदापि (३) चिर्भटी न भक्षिता तद्यथायं व्यतिकरोऽसम्भाव्यो ममानेन मूढेन व्याहृतः, तथा दन्तिलस्यापीति निश्चयः । तन्मया न युक्तं कृतं यत्स वराकः सम्मानेन वियोजितः । न तादृक्पुरुषाणामेवंविधं चेष्टितं सम्भाव्यते । तदभावेन राजकृत्यानि पौरकृत्यानि च

सर्वाणि शिथिलतां व्रजन्ति । एवमनेकधा विमृश्य दन्तिलं समाहूय निजाङ्गवस्त्राभरणादिभि संयोज्य स्वाधिकारे नियोजयामास। अतोऽहं ब्रवीमि—'यो न पूजयते गर्वात्' इति ॥ सञ्जीवक आह—भद्र ! एवमेवैतत् । यद्भवताभिहितं तदेव मया कर्तव्यम्' इति । एवमभिहिते दमनकस्तमादाय पिङ्गलकसकाशमगमत् । आह च—देव ! एष मयानीतः स सञ्जीवक । अधुना देवः प्रमाणम् । सञ्जीवकोऽपि तं सादरं प्रणम्याग्रतः सविनयं स्थितः। पिङ्गलकोऽपि तस्य (ड) पीनायतककुद्मतो नखकुलिशालङ्कृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच—अपि शिवं भवतः ? कुतस्त्वमस्मिन्वने विजने समायातोऽसि। तेनाप्यात्मवृत्तान्तः कथितः। यथा वर्धमानेन सह वियोगः सञ्जातस्तथा सर्वं निवेदितम्। तच्छ्रुत्वा पिङ्गलकः सादरतरं तमुवाच—वयस्य न भेतव्यम् । मद्भुजपञ्जरपरिरक्षितेन यथेच्छं त्वयाधुना वर्तितव्यम्। अन्यच्च नित्यं मत्समीपवर्तिना भाव्यम्। यतः कारणाद्बह्वपायं रौद्रसत्त्वनिषेवितं वनं गुरूणामपि सत्त्वानामसेव्यम्, कुतः शष्पभोजिनाम् । एवमुक्त्वा सकलमृगपरिवृतो यमुनाकच्छमवतीर्योदकग्रहणं कृत्वा स्वेच्छया तदेव वनं प्रविष्टः। ततश्च करटकदमनकनिक्षिप्तराज्यभारः सञ्जीवकेन सह सुभाषितगोष्ठीमनुभवन्नास्ते ।

"स्तोकेने" ति। "अहो" इत्याश्चर्येऽव्ययम्। तुलायष्टेः=सुवर्णादिगुरुत्वनिरूपको धटापरपर्यायो द्रव्यविशेषस्तुला तस्या यष्टिर्दण्ड शिखरशलाकेति यावत् तस्याः, खलस्य=दुर्जनस्य च चेष्टा=क्रिया वृत्तिर्व्यवहार इति यावत् सुसदृशी=तुल्यैव । तथाहि—स्तोकेन=अल्पेन उन्नतिम्=ऊर्ध्वगमनम् अहङ्कारञ्च, स्तोकेन=अल्पेनैव अधोगतिम्=अवनतिं दर्पभ्रंशञ्च आयाति प्राप्नोति। अत्रार्थश्लेषालङ्कारः स्तोकादिपदाना परिवृत्तिसहत्वात् ॥१६१॥

(१) (क)अप्रस्तुतम्=अप्रकृतम्। अविवेक =अज्ञानम्। (२) पुरीषोत्सर्गम्=मलत्यागम्।(३)चिर्भटिका=फलविशेष । व्यतिकर =व्यसनम् ।

(ङ) **पीनायते**—पीना स्थूला आयता दीर्घा या ककुत् स्कन्धस्थो मांसपिण्डविशेषः सोऽस्यास्तीति तादृशस्तस्य। नखकुलिशालङ्कृतम्=नखा करजा एव कुलिश वज्रं तेनालङ्कृतम्, पाणिं=करम्। मद्भुजपञ्जरपरिरक्षितेन=मम भुजा बाहुरेव पञ्जरस्तेन परितो रक्षितेन पालितेन। मत्समीपवर्तिना=मत्सन्निधिमता। बह्वपायम्=बहुविघ्नम्। **रौद्रेति**-रौद्राणि भयङ्कराणि यानि सत्त्वानि श्वापदादीनि तैर्निषेवितमध्युषितम्।

गुरूणाम्=महताम्। शष्पभोजिनाम्=घासखादिनाम्। यमुनाकच्छम्=कालिन्दीतीरम्।

सुभाषितगोष्ठीम्=सुभाषिताना गोष्ठी सभाम्। "गोष्ठीसभासमितिसमदः" इत्यमरः।

**अथवा साध्विदमुच्यते—**

**यदृच्छयाप्युपनतं सकृतसज्जनसङ्गतम्।**
**भवत्यजरमत्यन्तं नाभ्यासक्रममीक्षते ॥१६२॥**

**सञ्जीवकेनाप्यनेकशास्त्रावगाहनादुत्पन्नबुद्धिप्रागल्भ्येन स्तोकैरहोभिर्मूढमतिः पिङ्गलको धीमांस्तथा कृतो यथारण्यधर्माद्वियोज्यग्राम्यधर्मेषु नियोजितः। किं बहुना प्रत्यहं पिङ्गलकसञ्जीवकावेवं केवलं रहसि मन्त्रयतः। शेषः सर्वोऽपि मृगजनो दूरीभूतस्तिष्ठति। करटकदमनकावपि प्रवेशं न लभेते। अन्यच्च सिंहपराक्रमाभावात्सर्वोऽपि मृगजनस्तौ च शृगालौ क्षुधाव्याधिबाधिता एकां दिशमाश्रित्य स्थिताः। उक्तं च—**

**यदृच्छेति**। यदृच्छया=अकस्मात् दैववशात् उपनतम्=प्राप्त सकृदपि=एकवारमपि सज्जनसङ्गतम्=साधुसङ्गः अत्यन्तम् अतिमात्रम्, अजरम्=[illegible] भवति, अभ्यासक्रमम्=पुनरावृत्तिम्। न ईक्षते=नैवापेक्षते। सकृदपि [illegible] महान्तमुपकार जनयतीति भाव ॥१६२॥

**अनेकशास्त्रावगाहनात्**=अनेकेषां बहूना शास्त्राणामवगाहनात्पर्यालोचनात्, उत्पन्नं जात यद् बुद्धेर्धियः प्रागल्भ्य चातुर्यं यस्य तादृशेन। स्तोकै=

अल्पै , अहोभि =दिनैः । धामान=बुद्धिमान् । आरण्यधर्मात्=पशुस्वभावात् ग्राम्यधर्मेषु=ग्रामवासिनामाचारेष्वित्यर्थः ।

**फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम् ।**
**सन्त्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥१६३॥**

"**फलहीनम्**" इति । अण्डजा =पक्षिण फलहीनम्=फलशून्यं शुष्क=नीरस वृक्षमिव भृत्या =सेवका कुलीनम्=सत्कुलोत्पन्नमपि उन्नतम्=ऐश्वर्य-सम्पन्नमपि फलहीनम्=सेवाफलदानरहितं (सेवा गृहीत्वाऽपि यो भृत्येभ्यो भृत्ति न ददाति तम्) नृप सन्त्यज्य=विहाय अन्यत्र गच्छन्ति राजान्तरमाश्रयन्त इत्यर्थः । उपमा ॥१६३॥ **तथा च ।**

**अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः ।**
**वृत्तिभङ्गान्महीपालं त्यजन्त्येव हि सेवकाः ॥१६४॥**

**अपीति**—संमानयुक्ताः=कृतादरा अपि कुलीनाः=उत्तमवंशजाता अपि भक्तितत्पराः=सेवापरायाणा अपि सेवका =भृत्याः वृत्तिभङ्गात्=वृत्तेर्जीविकायाः भङ्गात् विनाशाद्धेतो महीपालम्=राजानं त्यजन्त्येव=जहत्यवेति निश्चितोऽर्थः । "हि" निश्चये ॥१६४॥

**अन्यच्च ।**

**कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः ।**
**कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥१६५॥**

**तथा न केवलं सेवका इत्थंभूता यावत्समस्तमप्येतज्जगत्परस्परं भक्षणार्थं सामादिभिरुपायैस्तिष्ठति । तद्यथा—**

**कालेति** । यो भूपति वृत्तेः=वेतनादिजीविकायाः कालातिक्रमणम्=समयोल्लङ्घनं न कुर्वीत अर्थात् यथाकालमेव वृत्ति दद्यात् तम्=नृपं भर्त्सिताः=तिरस्कृताः । अपि सेवका =भृत्याः कदाचिदपि न मुञ्चन्ति=नैव परित्यजन्ति । राज्ञा सेवकेभ्यो नियते समयेऽवश्यमेव वेतनादिक देयमिति भावः ॥१६५॥

सामादिभिः=सामदानभेददण्डाख्यैः । उपायै =सिद्धिसाधनैः ।

**देशानामुपरि क्ष्माभृदातुराणां चिकित्सकाः ।**
**वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥१६६॥**

प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् ।
गणिकाः कामिनां चैव सर्वलोकस्य शिल्पिनः ॥१६७॥
सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम् ।
उपजीवन्ति शक्त्या हि जलजा जलदानिव ॥१६८॥

"देशाना" मिति । क्ष्माभृत्=राजा देशानाम्=जनपदानाम्, चिकित्सकाः=भिषजः आतुराणाम्=रोगिणाम्, वणिज =पण्यविक्रेतारः ग्राहकाणाम्, पण्डिताः=बुद्धिमन्तः मूर्खाणा=मूढानाम्, तथा चौराः=तस्कराः प्रमादिनाम्=अवधानदानशून्यानाम्, भिक्षुकाः=याचका', गृहमेधिनाम्=गृहस्थानाम, गणिका =वेश्याः कामिनाम्=कामुकाना, शिल्पिनां=कारवः सर्वलोकस्य उपरि अर्थात् उक्तान्सर्वान् लक्ष्यीकृत्य सामादिसज्जितैः=सामदानादिभेदैः कल्पितैः पाशैः=जालै चातुर्यविशेषैः दिवानिशं=रात्रिन्दिवं प्रतीक्षन्ते=केन केनोपायेनाऽयं वश्य स्यादित्यालोचयन्ते, हि=तथाहि जलजाः=जलोत्पन्ना व्रीहिप्रभृतयो जलदान्=मेघान् इव शक्तान्=उपजीवनसमर्थान् उपजीवन्ति=उपजीव्य आश्रित्य तिष्ठन्ति जीविकार्थिनो जना इति शेष । त्रिभिर्विशेषकम् । उपमालङ्कार ॥१६६–१६८॥

अथवा साध्विदमुच्यते—

सर्पाणां च खलानां च परद्रव्यापहारिणाम् ।
अभिप्राया न सिद्ध्यन्ति तेनेदं वर्तते जगत् ॥१६९॥

"सर्पाणा" मिति । सर्पाणा=भुजङ्गाना, परद्रव्यापहारिणाम्=परकीयवस्त्वपहरणकर्त्तृणा खलाना=दुष्टानाञ्च अभिप्रायाः=मनोरथा न सिद्ध्यन्ति=लोकानामनिष्टहेतुकत्वान्नैव फलिता भवन्ति तेन=हेतुना इद जगद् वर्त्तते अर्थात् सुरक्षित तिष्ठति, अन्यथा सर्वमेव तं क्षणेन नाशित स्यादिति ।व ॥ १६९ ॥

अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्तः फणी
तं च क्रौञ्चरिपोः शिखी गिरिसुता-सिंहोऽपि नागाशनम् ।
इत्थं यत्र परिग्रहस्य घटना शम्भोरपि स्याद् गृहे
तत्रान्यस्य कथं न भावि जगतो यस्मात्स्वरूपं हि तत् ॥१७०॥

ततः स्वामिप्रसादरहितौ (१) क्षुत्क्षामकण्ठौ परस्परं करटकदमनकौ मन्त्रयेते। तत्र दमनको ब्रूते—आर्य करटक! आवां तावदप्रधानतां गतौ। एष पिङ्गलकः सञ्जीवकानुरक्तः (२) स्वव्यापारपराङ्मुखः सञ्जातः। सर्वोऽपि परिजनो गतः। तत्किं क्रियते। करटक आह—यद्यपि त्वदीयवचनं न करोति तथापि स्वामी स्वदोषनाशाय वाच्यः। उक्तं च—

'अत्तु" मिति। शाम्भवः=शम्भोरयं शाम्भवः—शम्भुसम्बन्धिक फणी क्षुधार्तः=क्षुधया पीडितः सन् गणपते=विघ्नेश्वरस्य आखुम् वाहनभूतं मूषकम् अत्तुम्=खादितुं वाञ्छति=कामयते, तञ्च=शाम्भवं फणिनं क्रौञ्चरिपो=कुमारस्य (कुमार॰ क्रौञ्चदारण इत्यमरः) शिखी=वाहनभूतो मयूरोऽत्तुं वाञ्छति, गिरिसुतासिंह=गिरिसुतायाः हिमालयपुत्र्याः पार्वत्या वाहनं सिंहोऽपि नागाशनम्=मयूरमत्तुं वाञ्छति, इत्थम्=अनेन प्रकारेण यत्र=यस्यां वृत्तौ विषये शम्भोर्महादेवस्यापि गृहे परिग्रहस्य=परिवारस्याऽनुचरवर्गस्येति यावत् घटना=दशाविशेष परस्परावस्कन्दनरूपो व्यापारः स्यात्, तत्र=तस्मिन् विषये अन्यस्य (गृहे) कथं न भावि अपितु अवश्य भविष्यति। सर्वस्य संसारिणो गृहस्यावश्यम्भाविनीयं घटनेति भावः। यस्मात् कारणात् हि=निश्चयेन तत्=वृत्तिविषये परस्परावस्कन्दनरूपं जगतः=संसारस्य स्वरूपं=स्वभाव इत्यर्थः। स्वभावस्याऽवर्जनीयत्वात्परस्परोपजीव्योपजीवकत्वमेवेति भावः। शाम्भव इत्यत्र "तस्येदम्" (४।३।१२०) इत्यण्। शार्दूलविक्रीडितम् ॥१७०॥

(१) क्षुत्क्षामकण्ठौ=क्षुधा शुष्ककण्ठौ बुभुक्षया पीडितावित्यर्थः। (२) स्वव्यापारपराङ्मुखः=स्वकार्यविमुखः।

अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥१७१॥

"अशृण्वन्" इति। पृथिवीपतिः=राजा अशृण्वन् अपि=श्रोतुमनिच्छन्नपि मन्त्रिभिः=अमात्यैः स्वदोषनाशाय=स्वकर्तव्यस्य परिपालनाय बोद्धव्यः=सूचनीयः। यथा स्वदोषनाशाय विदुरेण=महामन्त्रिणा विदुराख्येन अम्बिका-

सुत =धृतराष्ट्रः बोद्धव्य =हितवचन वाचयितव्य आसीदिति शेपः ॥ १७१ ॥

तथा च ।

मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छत. ।
उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगा. ॥१७२॥

त्वयैव शष्पभोजी स्वामिनः सकाशमानीत. । तत्स्वहस्तेनाङ्गाराः कर्षिताः । दमनक आह—सत्यमेतत् । ममायं दोषः, न स्वामिनः । उक्तं च—

मदोन्मत्तस्येति—उन्मार्गम्=कापथ विपर्ययञ्च गच्छतः=अनुसरत मदोन्मत्तस्य=मदोद्धतस्य भूपस्य=राज कुञ्जरस्य=गजस्य च समीपगाः=समीपवर्त्तिनः महामात्रा =हस्तिपकाः महामात्याश्च वाच्यताम्=निन्दनीयता यान्ति । तस्मादवश्यं हस्तिपकैर्गजा मन्त्रिभिश्च राजानोऽमार्गान्निरोद्धव्या इति भावः । "महामात्र समृद्धे त्वऽमात्ये हस्तिपकाधिपे" इति मेदिनी ॥१७२॥

अङ्गाराः=ज्वलदुल्मुका. । कर्षिता =आत्ता गृहीता इति यावत् । लोकोक्तिरियम् ।

जम्बुको हुडुयुद्धेन वयं चापाढभूतिना ।
दन्तिका परकार्येण त्रयो दोषाः स्वयङ्कृताः ॥१७३॥

करटक आह—कथमेतत् । सोऽब्रवीत्—

जम्बुक" इति । जम्बुक =कोऽपि शृगाल हुडुयुद्धेन=मेषसङ्ग्रामेण हत इति शेष । आषाढभूतिना=तन्नामकेन प्रतारकविशेषेण द्विज =कश्चित् परिव्राजको विप्रः प्रतारित इति शेष । दूतिका=दूती परकार्येण हतेति शेष त्रयोदोषा येन येन दोषेण यस्य यस्य विपत्ति ते दोषाः स्वयम्=आत्मनैव कृताः तैरिति शेष ॥१७३॥

## कथा ४

अस्ति कस्मिंश्चिद्विविक्तप्रदेशे मठायतनम् । तत्र देवशर्मा नाम परिव्राजकः प्रतिवसति स्म । तस्यानेकसाधुजनदत्तसूक्ष्मवस्त्रविक्रयवशात्कालेन महती वित्तमात्रा सञ्जाता । तत. स न

कस्यचिद्विश्वसिति। नक्तन्दिनं कक्षान्तरात्ता मात्रां न मुञ्चति। अथवा साधुचेदमुच्यते—

अर्थानामर्जने दुःखमर्जितानां च रक्षणे।
आये दुःखं व्यये दुःखं धिगर्थाः कष्टसंश्रयाः॥१७४॥

अथाषाढभूतिर्नाम (१) परवित्तापहारी धूर्तस्तामर्थमात्रां तस्य कक्षान्तरगतां लक्षयित्वा व्यचिन्तयत्—कथं मयास्येयमर्थमात्रा हर्तव्या इति। तदत्र मठे तावद्दृढशिलासञ्चयवशाद्भित्तिभेदो न भवति उच्चैस्तरत्वाच्च द्वारे प्रवेशो न स्यात्। तदेनं मायावचनैर्विश्वास्याहं छात्रतां व्रजामि येन स विश्वस्तः कदाचिद्विश्वासमेति। उक्तं च—

अनेकसाधुनेति—अनेकैर्बहुभिः साधुजनैः दत्तानामर्पितानां सूक्ष्माणां तनूनां वस्त्राणां वाससां विक्रयवशात् विक्रयणाद्धेतोरित्यर्थः।

वित्तमात्रा=धनराशिरित्यर्थ नक्तन्दिवम्=रात्रिन्दिवम् । कक्षान्तरात्=बाहुनिम्नदेशस्य मध्यादित्यर्थ । "अर्थना" मिति-अर्थाना=धनानाम् अर्जने=राशीकरणे दुःखम्=कष्टम्, अर्जितानाम्=उपार्जिताञ्च रक्षणे=स्थापने दुःखम्, आये=आनयने व्यये=विनियोगे च दुःखम्, अतोऽर्था कष्टसंश्रयाः=क्लेशप्रदा, तान् धिगित्यर्थ ॥ १७४ ॥

(१) परवित्तापहारी=तस्कर । दृढेति-दृढ =काठिनो य शिलाना प्रस्तराणा सञ्चय राशि तद्वशात्। भित्तिभेद =सन्धिना कुड्यच्छेद । मायावचनै = छलितप्रयोगै ।

निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः।
नाविदग्धः प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः॥१७५॥

एवं निश्चित्य तस्यान्तिकमुपगम्य "ॐ नमः शिवाय" इति प्रोच्चार्य साष्टाङ्गं प्रणम्य च सप्रश्रयमुवाच—'भगवन्! असारः संसारोऽयम्, गिरिनदीवेगोपमं यौवनम्, तृणाग्निसमं जीवितम्, शरदभ्रच्छायासदृशा भोगाः, स्वप्नसदृशो मित्रपुत्रकलत्रभृत्यवर्गसम्बन्धः एवं मया सम्यक्परिज्ञातम्। तत्किं कुर्वतो

मे संसारसमुद्रोत्तरणं भविष्यति। तच्छ्रुत्वा देवशर्मा सादरमाह--वत्स! धन्योऽसि यत्प्रथमे वयस्येवं विरक्तिभावः।

"निस्पृह" इति। निस्पृह=अर्थानामर्जने या तृष्णा सा स्पृहा तया रहित पुरुष निस्पृहो वितृष्ण इति यावत्, न अधिकारी स्यात्=अर्थात् अर्थादीनामधिकारवान्न भवेत्। अर्थार्जने तत्प्रयत्नवता पुरुषेण स्पृहा कर्त्तव्येति भाव। अकामी=न कामी अकामी य कामपरवशो नास्ति स मण्डनप्रिय=भूषणप्रियो न स्यात्, य भूषणाना प्रिय स सर्वथा भोगलम्पटो भवतीति भाव। अविदग्ध=मूढ प्रियम्=हितं न ब्रूयात्=नैव कथयेत्। विदग्ध एव प्रियभाषी भवतीति भाव। स्पष्टवक्ता=य स्पष्टं स्फुटं वक्ति स्पष्टभाषी स वञ्चक=प्रतारको न स्यात्=नैव भवतीत्यर्थ ॥१७५॥

असारः=तुच्छ। तृणाग्नि=कक्षवह्नि क्षणभङ्गुरमित्यर्थ। शरदिति-शरदि या अभ्रच्छाया मेघच्छाया तत्सदृशा भोगा=भोगसाधनानि कलत्रादीनि।

उक्तं च—

पूर्वे वयसि यः शान्तः स शान्त इति मे मतिः।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥१७६॥

"पूर्वे" इति। पूर्वे=प्रथमे वयसि=अर्थात् यौवन य=पुरुष शान्त=जितेन्द्रिय स शान्त=स एव शमपर इति मे=मम मति=निश्चय, धातुषु=शरीरधारणहेतुभूतेषु रसरक्तादिषु क्षीयमाणे=वयस आधिक्यात् क्षयं यात्सुकस्य=पुरुषस्य शम=वैराग्यं न जायते। क्षीणधातु सर्वोऽपि जन शमी भवितुमर्हतीति भाव। १७६॥

आदौ चित्ते ततः काये सतां सम्पद्यते जरा।
असतां तु पुनः काये नैव चित्ते कदाचन ॥१७७॥

यच्च मां संसारसागरोत्तरणोपायं पृच्छसि तच्छ्रूयताम्—

"आदा" विति—सताम्=साधूना महात्मना जरा=वृद्धावस्था जीर्णिः आदौ प्रथमं चित्ते=मनसि, तत=पश्चात् काये=शरीरे सम्पद्यते=

भवति अर्थात् सतां जरावस्थायाः पूर्वमेव चित्ते विरागः समुत्पद्यते, असताम्=दुर्जनानां पुनः काये=शरीरे जरा भवति चित्ते मनसि तु कदाचन=कदापि न जायते । दुर्जनाः कदापि विषयेभ्यो विरक्ता न सञ्जायन्त इत्याशयः । १७७ ॥

**शूद्रो वा यदि वान्योऽपि चण्डालोऽपि जटाधरः ।**
**दीक्षितः शिवमन्त्रेण स भस्माङ्गी शिवो भवेत् ॥१७८॥**

"शूद्र" इति । शूद्रः=चतुर्थो वर्णः एकजातिः, अन्योऽपि=शूद्रभिन्नोऽपि निकृष्टजातिरन्त्यजः यदि वा चण्डालः=अन्त्यजादपि निकृष्टः जनो यदि शिवमन्त्रेण="ॐ नमः शिवाय" इति महादेवमन्त्रेण दीक्षितः=संस्कारं प्राप्तः सन् जटाधरः=जटाधारी, भस्माङ्गी=कृतभस्मलेपो भवेदिति शेषः तदा स शिवो भवेत्=शिवरूप एव स्यात् ॥ अलौकिकं श्रद्धैकसमधिगम्यशिवमन्त्रस्य प्रभाव इति भावः ॥ १७८ ॥

**षडक्षरेण मन्त्रेण पुष्पमेकमपि स्वयम् ।**
**लिङ्गस्य मूर्ध्नि यो दद्यान्न स भूयोऽभिजायते ॥१७९॥**

**तच्छ्रुत्वाऽऽषाढभूतिस्तत्पादौ गृहीत्वा सप्रश्रयमिदमाह-भगवन् ! तर्हि दीक्षया मेऽनुग्रहं कुरु । देवशर्मा आह-वत्स ! अनुग्रहं ते करिष्यामि । परन्तु रात्रौ त्वया मठमध्ये न प्रवेष्टव्यम् । यत्कारणं निःसङ्गता यतीनां प्रशस्यते तव च ममापि च ।**

"षडक्षरेण" इति । यो जनः स्वयम्=आत्मनैव नतु भृत्यादिद्वारा षडक्षरेण="ॐ नमः शिवाय" इति मन्त्रेण एकमपि पुष्पं लिङ्गस्य=महादेवप्रतीकभूतस्य शिवलिङ्गस्य मूर्ध्नि=मस्तके दद्यात्=अर्पयेत् स भूयः=पुनः नाभिजायते=जन्मान्तरं न प्राप्नोति, मुक्तो भवतीत्यर्थः ॥१७९॥

यत्कारणम्=यस्माद्धेतोरित्यर्थः ।

**उक्तं च—**

**दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालना-**
**द्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।**

मैत्री चाप्रणयात्समृद्धिरनयात्स्नेहः प्रवासाश्रयात्--
स्त्री गर्वादनवेक्षणादपि कृषिस्त्यागात्प्रमादाद्धनम् ॥१८०॥

तत्त्वया व्रतग्रहणानन्तरं मठद्वारे तृणकुटीरके शयितव्यमिति। स आह—भगवन्! भवदादेशः प्रमाणम्। परत्र हि तेन मे प्रयोजनम्। अथ कृतशयनसमयं देवशर्मानुग्रहं कृत्वा शास्त्रोक्त-विधिना शिष्यतामनयत्। सोऽपि हस्तपादावमर्दनादिपरिच-र्यया तं परितोषमनयत्। पुनस्तथापि मुनिः कक्षान्तरान्मात्रां न मुञ्चति। अथैवं गच्छति काल आषाढभूतिश्चिन्तयामास— अहो! न कथं चिदेष मे विश्वासमागच्छति तत्किं दिवापि शस्त्रेण मारयामि, किं वा विषं प्रयच्छामि, किं वा पशुधर्मेण व्यापादयामि-इति। एवं चिन्तयतस्तस्य देवशर्मणोऽपि शिष्य-पुत्रः कश्चिद् ग्रामादामन्त्रणार्थं समायातः। प्राह च—भगवन्! पवित्रारोपणकृते मम गृहमागम्यताम् इति। तच्छ्रुत्वा देवशर्मा-षाढभूतिना सह प्रहृष्टमनाः प्रस्थितः। अथैवं तस्य गच्छतोऽग्रे काचिन्नदी समायाता। तां दृष्ट्वा मात्रां कक्षान्तरादवतार्य कन्थामध्ये सुगुप्तां निधाय स्नात्वा देवार्चनं विधाय तदनन्तर-माषाढभूतिमिदमाह—भो आषाढभूते! यावदहं पुरीषोत्सर्गं कृत्वा समागच्छामि तावदेषा कन्था योगेश्वरस्य सावधान-तया रक्षणीया। इत्युक्त्वा गतः। आषाढभूतिरपि तस्मिन्नद-र्शनीभूते मात्रामदाय सत्वरं प्रस्थितः। देवशर्मापि छात्रगुणा-नुरञ्जितमनाः सुविश्वस्तो यावदुपविष्टस्तिष्ठति तावत्सुवर्णरोम-देहयूथमध्ये हुडुयुद्धमपश्यत्। अथ रोषवशाद् हुडुयुगलस्य [illegible] कृत्वा भूयोऽपि समुपेत्य ललाटपट्टाभ्यां प्रहरतो [illegible]रि रुधिरं पतति। तच्च जम्बूको जिह्वालौल्येन रंगभूमिं प्रवि-[illegible]। देवशर्मापि तदालोक्य व्यचिन्तयत्—अहो, मन्दमतिरयं जम्बूकः। यदि कथमप्यनयोः सङ्घट्टे पतिष्यति तन्नूनं मृत्युमवाप्स्यतीति वितर्कयामि। क्षणान्तरे च तथैव

रक्तास्वादनलौल्यान्मध्ये प्रविष्टस्तयोः शिरः सम्पाते पतितो मृतश्च शृगालः । देवशर्मापि तं शोचमानो नात्मानमुद्दिश्य शनैः शनैः प्रस्थितो यावदाषाढभूतिं न पश्यति तत औत्सुक्येन शौचं विधाय यावत्कन्थामालोकयति तावत्तां न पश्यति । ततश्च "हा हा मुषितोऽस्मि" इति जल्पन्पृथिवीतले मूर्च्छितो निपपात । ततः क्षणाच्चेतनां लब्ध्वा भूयोऽपि समुत्थाय फूत्कर्तुमारब्धः—भो आषाढभूते ! क्व मां वञ्चयित्वा गतोऽसि तद्देहि मे प्रतिवचनम् । एवं बहु विलप्य तस्य पदपद्धतिमन्वेषयञ्छनैः शनैः प्रस्थितः । अथैवं गच्छन्सायन्तनसमये कञ्चिद्ग्राममाससाद । अथ तस्माद्ग्रामात्कश्चित्कौलिकः सभार्यो मद्यपानकृते समीपवर्तिनि नगरे प्रस्थितः । देवशर्मापि तमालोक्य प्रोवाच—भो भद्र ! वयं सूर्योढा अतिथयस्तवान्तिकं प्राप्ताः । न कमप्यत्र ग्रामे जानीमः । तद्गृह्यतामतिथिधर्मः ।

विनाश इति प्रत्यक्षसिद्धमेतत्। अनवेक्षणात्=स्वयं पर्यालोचनाभावात् कृषि= क्षेत्रकार्यं, धनं त्यागात्=अपात्रे दानात् बहुव्ययाद्वा अथवा प्रमादात्=अनवधानात् अत्रानेकेषां कर्तृकारकाणां विनश्यन्तीत्येकक्रियाभिसम्बन्धाद्दीपकम् ॥ शार्दूलविक्रीडितम् ॥१८०॥

**मठेति**—"मठ छात्रादिनिलय" इत्यमर ।

**तृणेति**—तृणानां कुटीरके कक्षनिर्मिते अल्पे कुटीर इत्यर्थ । **हस्तेति**—हस्तपादादीनां यदवमर्दनं संवाहनं तद्रूपया परिचर्यया सेवया । पवित्रारोहणकृते=यज्ञोपवीतसंस्कारार्थम् । योगेश्वरस्य=सिद्धस्य छात्रस्याषाढभूतेर्गुणै सेवाकरणादिभिरनुरञ्जित । योगिन हुडुयुद्धम=मेषयुद्धम् । मन्दमति =अविवेकी । संघट्टे=संबाधे ।

तयो =मेषयो । शिर सम्पातैः=शिरसो सङ्घाते ।

फूत्कर्तुम=आह्वातुम् । तस्य=आषाढभूते । पदपद्धतिम=पदयोश्चिह्नम । कौलिक'=तन्तुवाय' । अधमजातिर्वा ।

सूर्योढा =सूर्यास्तमनकाले ये प्राप्नुवन्ति ते, अतिथय =प्राघुणिका । अतिथिधर्म =आतिथ्यम ।

उक्तं च—

**सम्प्राप्तो योऽतिथिः सायं सूर्योढो गृहमेधिनाम् ।**
**पूजया तस्य देवत्वं प्रयान्ति गृहमेधिनः ॥ १८१ ॥**

अतिथिसेवाया फलमाह—'**सम्प्राप्त**" इति । य सूर्योढोऽतिथि सायं=सायकाले गृहमेधिना=गृहस्थाना भवन इति शेष । सम्प्राप्त =उपतिष्ठते, गृहमेधिन गृहिण तस्य पूजया=परिचर्यया देवत्वम=देवभाव प्राप्नुवन्ति=लभन्ते । अतिथिसेवका स्वर्गभाजोभवन्तीत्याशय ॥१८१॥

तथा च ।

**तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।**
**सतामेतानि हर्म्येषु नोच्छिद्यन्ते कदाचन ॥ १८२ ॥**

"**तृणानी**"ति—तृणानि=आसनत्वेन परिकल्पितानि तृणानि घास निशेषा , भूमि =अर्थात् तृणाभावे उपवेशार्थं भूतलम, उदकम=पानीयम,

स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः।
पादशौचेन पितरः अर्घाच्छम्भुस्तथातिथेः ॥१८३॥

कौलिकोऽपि तच्छ्रुत्वा भार्यामाह—प्रिये! गच्छ त्वमतिथिमादाय गृहं प्रति। पादशौचभोजनशयनादिभिः सत्कृत्य त्वं तत्रैव तिष्ठ। अहं तव कृते (१) प्रभूतं मद्यमानेष्यामि। एवमुक्त्वा प्रस्थितः। सापि भार्या (२) पुंश्चली तमादाय (३) प्रहसितवदना देवदत्तं मनसि ध्यायन्ती गृहं प्रति प्रतस्थे। अथवा साधु चेदमुच्यते—

दुर्दिवसे घनतिमिरे दुःसञ्चरासु नगरवीथीषु।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥१८४॥

---

चतुर्थी सूनृता=सत्या मधुरा च वाक्=वाणी इतरेषामभावे वागेवेत्यर्थः। एतानि=तृणादीनि सताम्=सज्जनानां हर्म्येषु=भवनेषु कदाचन=कदापि नोच्छिद्यन्ते=न विप्लवं यान्ति।

निर्धना अप्येतैरुपायैः सौकर्येणातिथिसेवां कर्तुं पारयन्ते तस्मादवश्यमतिथिरभ्यर्चनीय इति भावः ॥१८२॥

"स्वागतेने"ति—अतिथेः=स्वागतेन वाचा शुभागमनप्रकटनेन अग्नयः=गार्हपत्यादयः तृप्ता भवन्तीति शेषः। आसनेन=आसनार्पणेन शतक्रतुः=इन्द्रः तृप्तो भवति, पादशौचेन=चरणप्रक्षालनेन पितरः=पितृदेवता अग्निष्वात्तादयः तृप्ता भवन्ति, तथा=अर्घात्=अर्घदानकर्मणा शम्भुः=महादेवस्तृप्तो भवति। "अतिथे"रिति सर्वत्र सम्बध्यते ॥१८३॥

(१) प्रभूतम्=प्रचुरम्, मद्य=सुराम्। (२) पुंश्चली=कुलटा इत्वरी व्यभिचारिणीति यावत्। (३) प्रहसितवदना=विकसितमुखी। देवदत्तम्=देवदत्तनामानं स्वजारम्।

"दुर्दिवस" इति। दुर्दिवसे=मेघच्छन्नेऽह्नि, घनतिमिरे=घने निबिडे तिमिरेऽन्धकारे, दुःसञ्चरासु=चरितुमशक्यासु अत्यन्तं निबिडासु दिवाप्यन्धकारोपेतासु च नगरवीथिषु=पत्तनमार्गेषु, पत्युः=स्वस्वामिनि विदेशगमने=

तथा च—

पर्यङ्केष्वास्तरणं पतिमनुकूलं मनोहरं शयनम् ।
तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतलुब्धाः ॥१८५॥
केलिं प्रदहति लज्जा शृङ्गारोऽस्थीनि चटवः कटवः ।
बन्धकयाः परितोषो न किञ्चिदिष्टं भवेत्पत्यौ ॥१८६॥
कुलपतनं जनगर्हां बन्धनमपि जीवितव्यसन्देहम् ।
अङ्गीकरोति कुलटा सततं परपुरुषसंसक्ता ॥१८७॥

---

परदेशयाने, जघनचपलाया =परपुंसा अत्यन्तं रमणार्थिन्या , परमसुगम= महानानन्दो भवतीत्यर्थ । आर्या ॥१८४॥

"पर्यङ्केष्वि"ति—चौर्यरतलुब्धा'=चौर्येण गुप्तरीत्या रते पुरुषोपभोगे लुब्धा लम्पटा कामिन्य =कुलटा योषा पर्यङ्केषु=पल्यङ्केषु आस्तरणम्= कुथाद्याच्छादनवस्त्रं, अनुकूलम्=स्वायत्तमपि पतिम् , मनोहरम्=हृद्य शयन= शय्या तृणमिव लघु=तुच्छं मन्यन्ते । व्यभिचारिण्य सर्वं गृहसुख परित्यज्य जारमेव भुञ्जत इति भाव ॥१८५॥

'केलि"मिति—बन्धक्या =व्यभिचारिण्या पत्यौ=पतिसमीपे लज्जा= व्रीडा, केलिम्=सुरतक्रीडा प्रदहति=विनाशयति अर्थात् बन्धकी स्वपत्या सह सुरतकाले ऽनल्पा लज्जा प्रदर्शयति । सङ्कोचं विहाय तं न रमयतीति भावः । शृङ्गार =पत्यर्थं क्रियमाणो मण्डनादि पतिकर्तृको वा सुरतभोग अस्थीनि=कीकसानि प्रदहति, पत्या रममाणा नैव सन्तोषमाप्नोतीतिभाव । चाटव =पत्यु प्रियवचनानि कटव =कठोरा हृदयोद्वेजका भवन्तीति शेष । एव बन्धक्या पत्यौ परितोष =प्रसन्नता किञ्चित्=अल्पमात्रमपि इष्ट=हितं प्रियं न भवेत्=नैव भवतीत्यर्थ । आर्या ॥१८६॥

"कुलपतन"मिति—परपुरुषसंयुक्ता=पतिभिन्ने पुरुषे संसक्ता कुलटा= बन्धकी सतत=निरन्तर मवश्यमेवेत्यर्थ कुलपतनम्=वंशकलङ्कम , जनगर्हाम= जनाना लोकाना गर्हा निन्दा, बन्धनम्=गृहे बन्धन राजतो वा कारागार, तथा जीवितव्यसन्देहमपि=जीवनस्य संशयञ्च अङ्गीकरोति=स्वीकरोति । व्यभि- चारिणीना स्वकुलभ्रंशादिभयं किमपि न भवतीति भाव ॥१८७॥

देवशर्मणे (१) गतास्तरणां

तत्कथं गच्छामि। तद्गत्वा ब्रूहि तं भद्र! यावदहं स्वसखी (२) त्वया सह समागमः। नापिती प्राह गच्छामि तावत्त्वया मद्-

उक्तं च— अभिधाय (५) शृङ्गारविधि

विषमस्थस्वादुफलग्रहण ति तावत्तद्भर्ता संमुखो मदविह्-

उष्ट्राणामिव तेषां मं लन्गृहीतमद्यभाण्डः समभ्येति। तं

यथा— (६) व्याघुट्य स्वगृहं प्रविश्य मुक्तशृङ्गारवेषा यथापूर्वमभवत्। कौलिकोऽपि तां पलायमानां कृताद्भुतशृङ्गारां विलोक्य प्रागेव कर्णपरम्परया तस्याः श्रुतापवादक्षुभितहृदयः स्वाकारं निगूहमानः सदैवास्ते ततश्च तथाविधं चेष्टितमवलोक्य दृष्टप्रत्ययः क्रोधवशगो गृहं प्रविश्य तामुवाच—आः पापे! पुंश्चलि! क्व प्रस्थितासि। सा प्रोवाच—अहं त्वत्सकाशादागता न कुत्रचिदपि निर्गता। तत्कथं मद्यपानवशाद (७) प्रस्तुतं वदसि। अथवा साधु चेदमुच्यते—

वैकल्यं धरणीपातयमथोचितजल्पनम्।
सन्निपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत्॥१८८॥

---

(१) गतास्तरणाम्=आच्छादनरहिताम्। भग्नाम्=त्रुटिताम्, खट्वाम्=शय्याम् (२) आनात्=तस्या श्वसुरगृहात् (३) सम्भाव्य=सम्भाल्य (४) अप्रमत्तेन=प्रमादरहितेन सावधानेनेत्यर्थ। भाव्यम्=स्थेयम्। (५) शृङ्गारविधिम्=कङ्कतिकापट्टिकादिशरीरमण्डनम्,। सम्मुख =पुरोवर्त्ती। गृहीतेति—गृहीतमात्तं मद्यभाण्ड सुरापात्र येन स (६) व्याघुट्य=प्रत्यायात्य। कृतेति—कृतोऽनुष्ठितोद्भुत पुरुषवशीकरणायेत्य शृङ्गारो ययानाताम, कृतविचित्रनेपथ्यामित्यर्थ।

श्रुतेति—श्रुतेन आकर्णितेन अपवादेन क्षुभितं हृदय यस्य सतादृश। स्वाकारम्=निजामाकृति हृदयभाव वा निगूहमान =गोपायन्। दृष्टप्रत्यय = सन्देहरहित। मद्यपानवशात्=सुरापानजन्यमदहेतो। (७) अप्रस्तुतमवाच्यमसङ्गतमिति यावत्।

मद्यदोषमाह—"वैकल्य"मिति। वैकल्यम्=विकलस्य विह्वलस्य भावो

करस्पन्दोऽम्बरत्
वारुणीसङ्गजावस्पतिमनुकूलं मनोहरं शयनम्।
सोऽपि तच्छ्रुत्वा प्रतियन्ते कामिन्यश्चौर्यरतलुब्धाः ॥१८७॥
तामाह—पुंश्चलि! चिरकना शृङ्गारोऽस्थीनि चटवः कटवः।
(१)स्वयं सञ्जातप्रत्ययस्तव यथेन किञ्चिदिष्टं भवेत्पत्यौ ॥१८८॥
धाय (३) लगुडप्रहारैस्तां जर्जरितदेमपि जीवितव्यसन्देहम्।
रुषसंसक्ता ॥१९०॥

दृढबन्धनेन बद्ध्वा सोऽपि मदविह्वलो निद्रावशमगमत्। अत्रान्तरे तस्याः सखी नापिती कौलिकं निद्रावशगतं विज्ञाय तां गत्वेदमाह—सखि! स देवदत्तस्तस्मिन्स्थाने त्वां प्रतीक्षते। तच्छीघ्रमागम्यताम् इति। सा चाह-पश्य ममावस्थाम्।

---

वैकल्य स्वाङ्गानामनियन्त्रणमित्यर्थ। धरणीपातम्=भूमिपतनम्। अयथोचितजल्पनम्=असङ्गत-(परस्परासम्बद्ध) भाषणं प्रलपनमिति यावत्।

एतानि सर्वाणि सन्निपातस्य=त्रिदोषजज्वरादे चिह्नानि=लक्षणानि मद्यं=सुरा, दर्शयेत्=दर्शयतीत्यर्थ। यानि सन्निपातलक्षणानि तान्येव सुरापस्य लक्षणानीत्यहोऽस्य निन्दनीयतेति भाव ॥१८८॥

अन्यदप्याह—"**करस्पन्द**" इति। करस्पन्द=करयो र्हस्तयो स्पन्द कम्पनम्, पक्षे—कराणा किरणाना ह्रासश्च, अम्बरत्याग=वस्त्रपरित्याग पक्षे आकाशात्पतनञ्च, तेजोहानि=बलह्रास ओजोक्षय इत्यर्थ, पक्षे—दीप्तिह्रासश्च, तथा—सरागता=नेत्रादीना शोणितवर्णता पक्षे रक्तवर्णता च, एता सर्वा वारुणीसङ्गजा=वारुण्या सुराया सङ्गाज्जायमाना अवस्था=दशा, पक्षे-वारुणी पश्चिमा दिक् तत्सङ्गजाऽवस्था भानुना=सूर्येणापि अनुभूयते=भुज्यते इतरेषा तु कैव कथेति भाव। सूर्यास्तमनकालीनावस्थासदृशी मद्यपस्यावस्थेति भाव। अत्र श्लेषानुप्राणितोपमालङ्कार ॥१८९॥

(१) स्वयं सञ्जातप्रत्यय=स्वयंकृतसाक्षात्कार इत्यर्थ। (२) निग्रहम्=दण्डम्। (३) लगुडप्रहारै=यष्टिताडनै। जर्जरितदेहाम्=भग्नशरीराम्। (४) स्थूणया=गृहाधारस्तम्भेन।

तत्कथं गच्छामि । तद्गत्वा ब्रूहि तं कामिनं यदस्यां रात्रौ न त्वया सह समागमः । नापिती प्राह सखि ! नायं कुलटाधर्मः । उक्तं च—

विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम् ।
उष्ट्राणामिव तेषां मन्येऽहं शंसितं जन्म ॥१६०॥

तथा च—

सन्दिग्धे परलोके जनापवादे च जगति बहुचित्रे ।
स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः ॥१६१॥

अन्यच्च--

यदि भवति दैवयोगात्पुमान्विरूपोऽपि बन्धकी रहसि ।
न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥१६२॥

---

"विषमस्थे"ति-येषा जीवाना उष्ट्राणामिव=क्रमेलाकानामिव, विषमस्थ=विषमे उन्नतप्रदेशे शाखादौ स्थितं यत् स्वादु=मधुरमिष्टं वा कण्टकादि तस्य ग्रहणे=उपादाने व्यवसाय उद्योगस्तस्य यो निश्चयः दृढः प्रत्ययो "वर्त्तते" इति शेषः तेषामेवाहं जन्म शंसितं=प्रशस्तं श्लाघ्यमिति मन्ये । स्वकार्यसाधने दृढनिश्चयानामेव जीवनं धन्यमिति भावः । आर्या-वृत्तम् । त्वयापि तादृशालौकिकसुरतसुखकरपरपुरुषसमागमलाभो न हातव्य इति व्यज्यते ॥ १६० ॥

"सन्दिग्ध" इति । परलोके=नरकादौ सन्दिग्धे=संशयापन्ने अर्थात् स्वर्गो वा नरकं वाऽस्ति नवेति संशये सति, जगति=संसारे च बहुचित्रे=नानाप्रकारे, जनापवादे=लोकनिन्दाया विद्यमानाया ( लोक-निन्दा सर्वथा न केनाऽपि वारयितुं शक्यते येन वा केन वा सताऽसता दोषेण लोके सर्वस्यैव निन्दा क्रियत एवेति भाव ) तथा पररमणे= परपुरुषोपभोगे स्वाधीने=स्वतन्त्रे सति तारुण्यफलभाज =तारुण्य यौवन तस्य यत् फल परपुरुषेण सह स्वच्छन्दं रमणं तद्भाज स्त्रियस्ता धन्या =सफलजन्मानो भवन्तीति शेष ॥ १६१ ॥

"यदी"ति—यदि दैवयोगात्=विधातृवशात् विरूप =कुत्सितरूप

साब्रवीत्--यद्येवं तर्हि कथय कथं (१) दृढबन्धनबद्धा सती तत्र गच्छामि। (२) संनिहितश्चायं पापात्मा मत्पतिः। नापित्याह-सखि! (३) मदविह्वलोऽयं (४) सूर्यकरस्पृष्टःप्रबोधं यास्यति। तदहं त्वामुन्मोचयामि। मामात्मस्थाने बद्ध्वा द्रुततरं देवदत्तं (५) सम्भाव्यागच्छ। साब्रवीत् -'एवमस्तु" इति। तदनु सा नापिती तां स्वसखीं बन्धनाद्विमोच्य तस्याः स्थाने यथापूर्वमात्मानं बद्ध्वा तां देवदत्तसकाशे (६) सङ्केतस्थानं प्रेषितवती। तथानुष्ठिते कौलिकः कस्मिंश्चित्क्षणे समुत्थाय किञ्चिद्गतकोपो (७) विमदस्तामाह, हे (८) परुषवादिनि,! यद्यद्यप्रभृति गृहान्निष्क्रमणं न करोषि, न च परुषं वदसि, ततस्त्वामुन्मोचयामि। नापित्यपि (९) स्वरभेदभयाद्यावन्न किञ्चिदूचे तावत्सोऽपि भूयो भूयस्तां तदेवाह। अथ सा यावत्प्रत्युत्तरं किमपि न ददौ, तावत्स प्रकुपितस्तीक्ष्णशस्त्रमादाय नासिकामच्छिनत्। आह च--रे पुंश्चलि! तिष्ठेदानीम् न त्वां भूयस्तोषयिष्यामि इति जल्पन्पुनरपि निद्रावशमगमत। देवशर्मापि (११) वित्तनाशात्क्षुत्क्षामकण्ठो नष्ट-

---

पुमान्=पुरुष बन्धकी=कुलटा च रहसि=एकान्ते भवति अर्थात् द्वयोरेकान्ते योगो भवेत्, तदा कृच्छ्रादपि कष्टादपि कदाचिदपीत्यर्थः. सा=कुलटा भद्रं=सुन्दरमपि निजकान्तम्=स्वकीयं पतिं नतु भजति=नैव सेवते। व्यभिचारिणी यथा परपुरुषेण तुष्यति न तथा निजेन पत्येत्याशयः ॥ १६२ ॥

(१) दृढबन्धनबद्धा=दृढेन बन्धनेन रज्ज्वा बद्धा निगडिता। (२) संनिहितः=समीपवर्त्ती। (३) मदविह्वलः=मदेन व्याकुलः। (४) सूर्यकरस्पृष्टः=सूर्यकरैः किरणैः स्पृष्टः, प्रबोधम्=जागरम् (५)। सम्भाव्य=सन्तोष्य। (६) सङ्केतस्थानम्=अभिसारस्थानम्, (७) विमदः=गतमदः। (८) परुषवादिनि=कठोरवादिनि। उन्मोच्य=विगतबन्धना करोमि। (९) स्वरभेदभयात्=स्वरस्य कण्ठध्वनेः भेद विभिन्नता, तस्मादित्यर्थः। (१०) नासिकाम=घोणाम् (११) वित्तनाशात्=धननाशात्। क्षुत्क्षामकण्ठः=बुभुक्षया शुष्कगलः। नष्टनिद्रः=विगत-

निद्रस्तत्सर्वं स्त्रीचरित्रमपश्यत् । सापि कौलिकभार्या यथेच्छया देवदत्तेन सह सुरतसुखमनुभूय कस्मिंश्चित्क्षणे स्वगृहमागत्य तां नापितीमिदमाह—अयि ! शिवं भवत्याः । नायं पापात्मा मम गताया उत्थितः । नापित्याह--शिवं नासिकया विना शेषस्य शरीरस्य । तद्द्रुतं मां मोचय बन्धनाद्यावन्नायं मां पश्यति, येन स्वगृहं गच्छामि । तथानुष्ठिते भूयोऽपि कौलिक उत्थाय तामाह--पुंश्चलि ! किमद्यापि न वदसि । किं भूयोऽप्यतो दुष्टतरं निग्रहं कर्णच्छेदेन करोमि । अथ सा सकोपं साधिक्षेपमिदमाह—धिङ्महामूढ ! को मां महासतीं धर्षयितुं व्यङ्गयितुं वा समर्थः । तच्छृण्वन्तु सर्वेऽपि लोकपालाः ।

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥१६३॥

---

निद्र । शिवम्=भद्रम् । पापात्मा=नीचात्मा, गतायाः=प्रचलितायाः । येन=बन्धनमोचनेन । साधिक्षेपम्=सतिरस्कारम् । धर्षयितुम्=भर्त्सयितुम् । व्यङ्गयितुम्=अङ्गहीनां कर्त्तुम् । विगतमङ्गं यस्याः सा व्यङ्गा तां करोत्याचष्टे वेति व्यङ्गयति, ततः—"तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" ( ३।३।१० ) इति सूत्रेण तुमुन् ।

"आदित्ये"ति—आदित्यचन्द्रौ=आदित्यश्च चन्द्रश्च तौ सूर्याचन्द्रमसौ अनिलो वायुः, द्यौः=आकाशम्, भूमिः=पृथिवी, आपः=जलानि, हृदयम्=मनः, यमः=धर्मराजः, अहः=दिनम्, रात्रिः=निशा उभे सन्ध्ये=प्रातःसायरूपे द्वे सन्ध्ये सन्धिवेले, धर्मः=वेदप्रतिपाद्यः प्रयोजनवदर्थो यागादिः, ( वस्तुतस्तु—प्रकृते यागाद्यधिष्ठातृदेवता ) नरस्य=मनुष्यस्य वृत्तम्=आचरणं जानाति=प्रत्यक्षीकरोति । जानातीत्यस्याः क्रियायाः प्रत्येकं यथायोगमन्वयः । एते आदित्यादयः सर्वे मां सतीं जानन्ति भवांस्तु मूर्खः कथं मां जानीयादित्यर्थः । उपजातिर्वृत्तम् ॥ १६३ ॥

तद्यदि मम सतीत्वमस्ति, मनसापि परपुरुषो नाभिलषितः, ततो देवा भूयोऽपि मे नासिकां तादृग्रूपामक्षतां कुर्वन्तु। अथवा यदि मम चित्ते परपुरुषस्य भ्रान्तिरपि भवति, मां भस्मसान्नयन्तु। एवमुक्त्वा भूयोऽपि तमाह—भो दुरात्मन्! पश्य मे सतीत्वप्रभावेण तादृश्येव नासिका संवृत्ता। अथासावुल्मुकमादाय यावत्पश्यति तावत्तद्रूपां नासिकां च भूतले रक्तप्रवाहं च महान्तमपश्यत्। अथ स विस्मितमनास्तां बन्धनाद्विमुच्य शय्यायामारोप्य च चाटुशतैः पर्यतोषयत्। देवशर्मापि तं सर्ववृत्तान्तमालोक्य विस्मितमना इदमाह—

शम्बरस्य च या माया या माया नमुचेरपि।
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः॥१६४॥
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि।
अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः॥१६५॥
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः।
स्त्रीबुद्ध्या न विशेष्येत तस्माद्रक्ष्याः कथं हि ताः॥१६६॥

---

सतीत्वम्=पतिव्रतात्वम्। अक्षताम्=व्रणशून्याम्। उल्मुकम्=ज्वलदर्धकाष्ठम्, रक्तप्रवाहम्=रुधिरधाराम्। विस्मितमना =चकितः। चाटुशतैः=असङ्ख्यैः प्रियवचोभिः। स्त्रीणां माया वर्णयितुमाह—"**शम्बरस्येति**" शम्बरस्य=तदाख्यस्यासुरस्य,या =यावत्य माया =छलानि,याश्च माया नमुचेरपि, दैत्यस्य एवं बले =दैत्यराजस्य, कुम्भीनसेश्च, कुम्भीनस्या राक्षस्या पुत्रस्य लवणस्य ता सर्वा माया योषित =नार्यो विदु =जानन्तीत्यर्थ : ॥ १६४॥

"**हसन्त**" मिति। एताः=नार्यो कालयोगतः=कालयोगेन अर्थात् ।क॰ ॅ हसन्तम्=हास्यरसोपेतं पुरुषं प्रहसान्ति=प्रतिहसन्तीत्यर्थ । एव न्तं=विलपन्तं प्ररुदान्ति=स्वयं रुदत्यो भवन्त्यो रोदयन्तीत्यर्थ । । य =यः प्रीतिं न करोति तं विरक्त सन्तं प्रियवाक्यैः=प्रियैर्मधुरैर्वचोभिः ॒न्ति=वशीकुर्वन्ति सर्वोऽपि नारीमायावशीभूत इति भाव ॥ १६५ ॥

"**उशना**" इति। उशना =शुक्रो दैत्यगुरुः यच्छास्त्र वेद=जानाति

अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम् ।
इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ॥१६७॥

अन्यत्राप्युक्तम्—

नाति-प्रसङ्गः प्रमदासु कार्यो
नेच्छेद्बलं स्त्रीषु विवर्द्धमानम् ।
अतिप्रसक्तैः पुरुषैर्यतस्ताः
क्रीडन्ति काकैरिव लूनपक्षैः ॥ १६८ ॥

सुमुखेन वदन्ति वल्गुना
प्रहरन्त्येव शितेन चेतसा ।
मधु तिष्ठति वाचि योषितां
हृदये हालहलं महद्विषम् ॥ १६९ ॥

---

यच्च बृहस्पतिः=देवगुरु शास्त्र वेद, तत् शातं स्त्रीबुद्ध्या=नारीबुद्धिमभिलक्ष्य न विशिष्येत=नैव विशिष्टं भवेत् नातिशय्येतेत्यर्थः । हि=निश्चयेन तस्माद्धेतोः ता=नार्य कथ=केन प्रकारेण रक्ष्याः=प्रतिरोद्धव्याः । न कथमपीति-भाव ।॥ १६६ ॥

"अनृत" मिति—या =नार्यः अनृतम्=असत्यं सत्यमित्याहुः=कथ-यन्ति तथा—सत्यञ्चापि=यथार्थमपि वस्तु अनृतं=मिथ्यैवेत्याहुः ताः= एवम्भूता मायिन्य , इह=लोके धीरैः=धीमद्भिरपि पुरुषै कथं=केन प्रकारेण सरक्ष्याः=प्रतिपाल्याः स्युः । नैव रक्षार्हा इति भाव ॥१६७ ॥

"नातिप्रसङ्ग" इति । यतः=यस्मात् कारणात् ता =प्रमदा लून-पक्षै =लूना छिन्ना पक्षा येषा तैरेवम्भूतै काकैरिव=वायसैरिव अतिप्रसक्तै.= अत्यन्तानुरागिभि पुरुषै साधनभूतैः क्रीडन्ति, रमन्ते अतो हतो प्रमदासु= योषासु अतिप्रसङ्गः=अत्यन्तमासक्ति , न कार्य =नैव विधेयः, तथा स्त्रीषु=विवर्ध-मानं=विशेषेण वृद्धिमच्छत् बलम्=तेज प्रभावमपि न इच्छेत्=न कामयेत् ,प्राज्ञ इति शेषः । स्त्रिया नाति विश्वास्या , नापि बहुप्रीत्या शिरासि निवेश्या इति भाव । उपमालङ्कारः ॥१६८ ॥

"सुमुखेने' ति—वल्गुना= सुमनोहरेण सुमुखेन=मुग्धेनास्येन

अतएव निपीयतेऽधरो
हृदयं मुष्टिभिरेव ताड्यते।
पुरुषैः सुखलेशवञ्चितै-
र्मधुलुब्धैः कमलं यथालिभिः॥ २०० ॥

अपि च—

आवर्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम्।
दुर्ग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं
स्त्रीयन्त्रं केन लोके विषमसृतयुतं धर्मनाशाय सृष्टम्॥२०१॥

---

वदन्ति=वार्त्ता कुर्वन्ति, शितेन=तीव्रेण चेतसा=हृदयेन प्रहरन्ति=आसक्तं पुरुषमन्तर्मर्मणि ताडयन्तीत्यर्थ। तथाहि योषिताम्=स्त्रीणा वाचि=वाण्या मधु=क्षौद्र क्षौद्रवत्प्रियत्वमित्यर्थ, तिष्ठति=वर्त्तते, हृदये (तु) हालहल=हालहल-सञ्ज्ञकं महत्=भयङ्कर विष तिष्ठतीत्यन्वय, उक्तेऽर्थे उपपत्तिमाह-'अत एवेति। अत एव=उक्तोपपत्तेरेव हेतोः पुरुषै=कामिभिर्नरै अधर=स्त्रीणा निम्नौष्ठ निपीयते=सादरं चूष्यते, हृदय (तु) मुष्टिभिरेव ताड्यते=कुचमर्दनादिनोपहन्यते। कथम्भूतैः पुरुषै —सुखलेशवञ्चितै:=सुखलेशेन=विषयेन्द्रियसम्प्रयोगजनितेन सुखाभासेन वञ्चितै प्रतारितै योषिता विविधकपटव्यवहारेणोद्वेजितैरिति यावत् तथा मधुलुब्धै=वैषयिकमधुरास्वादलोलुपै। कै किमिव=मधुलब्धै=मकरन्दलालसैः अलिभिः=भ्रमरैः कमलं यथा=अरविन्दमिवेत्यर्थः।

अत्र श्लोकद्वये "सुन्दरी" वृत्तम्,। "अयुजोर्यदि सौ युजो. सभरा गौ यदि सुन्दरी तदा" इति तल्लक्षणात्॥ २०० ॥

"आवर्त्त" इति। लोके=अस्मिन् संसारे, केन=प्रजापतिना अमृतयुतम्=मिश्रितं विष विषमिव स्त्रीयन्त्रम्=नारीरूपं यन्त्रं धर्मनाशाय=धर्मविनाशाय सृष्टं=रचितं तन्न जानेऽहमिति शेषः। कथम्भूत स्त्रीयन्त्रम्—संशयाना=सन्देहानाम् आवर्त्त=अम्भसा भ्रमः, तथा अविनयभवनम्=अविनयस्य असभ्यताया दुर्नीतेर्वा भवनं=निकेतनम्, तथा—साहसानाम्=

व्याकीर्णकेशरकरालमुखा मृगेन्द्रा
नागाश्च भूरिमदराजिविराजमानाः ।
मेधाविनश्च पुरुषाः समरेषु शूराः
स्त्रीसन्निधौ परमकापुरुषा भवन्ति ॥ २०४ ॥

कुर्वन्ति तावत्प्रथमं प्रियाणि
यावन्न जानन्ति नरं प्रसक्तम् ।
ज्ञात्वा च तं मन्मथपाशबद्धं
ग्रस्तामिषं मीनमिवोद्धरन्ति २०५ ॥

---

हसन्ति कदाचित् रुदन्ति=विलपन्ति परम्=अन्यं जनं विश्वासयन्ति नतु तस्मिन् स्वयं विश्वसन्ति=विश्वासमुपयन्ति तस्माद्धेतो कुलशीलवता=सत्कुलोत्पन्नेन सदाचारवता नरेण=पुरुषेण नार्य =स्त्रिय श्मशानघटिका =श्मशानस्था प्रेतघटिका इव सदैव वर्जनीया =परित्याज्या । "श्मशानवटिका" इति पाठे तु श्मशानस्था वटतरव इवेत्यर्थो बोध्य ॥ वसन्ततिलकं वृत्तम् ॥२०३॥

"व्याकीर्णे"ति—व्याकीर्णै=इतस्ततो विसृतवै केशरैर्ग्रीवास्थवाले. करालानि भयङ्कराणि मुखानि येषा ते मृगेन्द्रा =सिंहा , तथा—भूरि=प्रचुरो यो मदो दानवारि तस्य राज्या प्रवाहेन विराजमाना शोभा धारयन्तः अथवा—भूरिभि प्रचुराभिर्मदराजिभिर्दानधाराभिर्विराजमाना , नागा = हस्तिन तथा—मेधाविन =धारणावती या बुद्धिस्तद्वन्त वैज्ञानिका ,पुरुषा = नराश्च तथा ये समरेषु=सङ्ग्रामेषु शूरा =महाभटा सन्तीति शेष , एते सर्वे दुर्दान्ता अपि स्त्रीसन्निधौ=स्त्रिय· समीपे परमकापुरुषाः=अतिमात्रं कातराः —ीणबला क्षीणमतयश्च भवन्ति=जायन्ते ।

येभ्यो दुर्दान्तेभ्य. सर्वेऽपि भयमाप्नुवन्ति तेऽपि कामिनीसन्निधिमासाद्य 'क्षय सञ्जायन्त इत्यहो विधातुर्वैचित्रीति भाव ॥२०४॥

"कुर्वन्ती"ति—अत्र "स्त्रिय" इति पदमध्याहार्यम् । स्त्रिय प्रथमं —यावत्कालपर्यन्तं नरं=पुरुषं प्रसक्तम्=अत्यन्तानुरागिणं न जानन्ति= बुध्यन्ते, तावत्=तावत्कालपर्यन्तं प्रियाणि=प्रीतियुतान् आलापादिव्यव-

समुद्रवीचीव चलस्वभावाः
सन्ध्याभ्ररेखेव मुहूर्तरागाः।
स्त्रियः कृतार्थाः पुरुषं निरर्थं
निष्पीडितालक्तकवत्त्यजन्ति ॥२०६॥
अनृतं साहसं माया मूर्खत्वमतिलोभता।
अशौचं निर्दयत्वं च स्त्रीणां दोषाः स्वभावजाः ॥२०७॥

---

हारान् कुर्वन्ति अर्थात् मधुरमधुरैर्वचोभिर्नरं रञ्जयन्ति, तत =तदनन्तरं तं=नरं मन्मथपाशबद्धम्=मन्मथ कामस्तस्य पाशो वागुरा तेन बद्धं निगडितं ज्ञात्वा=निश्चित्य ग्रस्तामिषम्=ग्रस्त निगलितं आमिषं वडिशबद्धं मासं येन तं तादृशं मीनम्=मत्स्यमिव उद्धरन्ति=स्वप्रीतिविषयात्परित्यजन्ति यथा वडिशबद्धं मीनं दृष्ट्वा मत्स्यजीविनस्ततो मासखण्डमपि छिन्दन्ति तद्वत् स्त्रियोऽपि प्रीतिं प्रत्यावर्त्तयन्ति, पूर्ववत् प्रीति नाचरन्तीति भाव। इन्द्रवज्रावृत्तम्—"स्यादिन्द्रवज्रा यदि तौ जगौ ग" इति तल्लक्षणात् ॥२०५॥

"समुद्रे"ति—समुद्रवीची=समुद्रस्य लहरीव चलस्वभावा =चलोऽस्थिर स्वभाव प्रकृतिर्यासा ता सन्ध्याभ्ररेखा=सन्ध्याकालीनं यदभ्रं मेघ तस्य रेखा लेखेव मुहूर्त्तरागा =मुहूर्त्तं घटिकाद्वयमात्रं रागो लौहित्यं प्रीतिश्च यासा ता. एवम्भूता स्त्रिय =नार्य कृतार्था =कृत सिद्ध अर्थ प्रयोजनं यासा ता सिद्धस्वमनोरथा, निरर्थम्=धनरहित पुरुषं नरम्, निष्पीडितं=निश्च्योतितं यदलक्तकं यावकरस तद्वत् त्यजन्ति=परतो हरन्ति न तस्मिन् प्रीतिमाचरन्ती भाव। अत्र "सन्ध्या" पदेन क्षणादेव तासा रागहानिर्ध्वनित। अयं भाव—यथा ऽलक्तकस्य सारमादाय निस्सारभाग प्रक्षिप्यते तद्वत् स्त्रियो धनिकेभ्य नरेभ्यो धनं यौवनञ्चाच्छिद्य तान् परिहरन्ति। उपमालङ्कार। उपजातिवृत्तम् ॥२०६॥

"अनृत"मिति। अनृतम्=मिथ्याभाषणम्, साहसम्=अविमृश्यकारित्वम्, माया=कपटव्यवहार, मूर्खत्वम्=जाड्यम्, अतिलोभता=अत्यन्त लोलुपता, अशौचम्=अपवित्रता, निर्दयत्वं=कठोरता एते स्त्रीणा स्वभावजा = स्वाभाविका दोषाः सन्तीति शेषः ॥२०७॥

संमोहयन्ति मदयन्ति विडम्वयन्ति।
निर्भर्त्सयंन्ति रमयन्ति विषादयन्ति।
एताः प्रविश्य सरलं हृदयं नराणां
किं वा नु वामनयना न समाचरन्ति ॥२०८॥
अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः।
गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥ २०९ ॥

एवं चिन्तयतस्तस्य परिव्राजकस्य सा निशा महता कृच्छ्रेणातिचक्राम। सा च दूतिका छिन्ननासिका स्वगृहं गत्वा चिन्तयामास--किमिदानीं कर्तव्यम्। कथमेतन्महच्छिद्रं स्थगयितव्यम्। अथ तस्या एवं विचिन्तयन्त्या भर्ता

---

"सम्मोहयन्ती"ति--एता=वामनयना=सुनयना अथवा--वाम कामो नयने साक्षात्कारे यासां ता कटाक्षेण पुरुषान् मोहयन्त्य यद्वा--प्रतिकूलदृष्टय नराणां=मनुष्याणां सरलम्=कपटशून्यं हृदयं=मन प्रविश्य इति प्रश्ने किं वा=किं किमित्यर्थ न समाचरन्ति=न कुर्वन्ति, सर्वमपि कुर्वन्तीत्यर्थ। तथाहि-सम्मोहयन्ति=सम्यक् मुग्धं कुर्वन्ति, मदयन्ति=उन्मत्त कुर्वन्ति विडम्वयन्ति=वञ्चयन्ति (अर्थात् निजचातुर्यवशात् सर्वमपि हरन्ति) निर्भर्त्सयन्ति=तिरस्कुर्वन्ति, रमयन्ति=सुरतादिना प्रीणयन्ति, विषादयन्ति=विषादिनं कुर्वन्ति क्षोभयन्तीत्यर्थ। वसन्ततिलकं वृत्तम्। क्रियादीपकमलङ्कार ॥२०८॥

"अन्तरि"ति--एता=नार्य अन्तर्विषमया--हृदयप्रदेशे विषप्रचुरा, वहिश्च=वाह्यप्रदेशे ऽर्थात् शरीरादौ एव मनोहरा=हृदयहारिलावण्ययुता वचसैव मनोरमा इत्यर्थ। एवमेता योषितो नार्य गुञ्जाफलसमाकारा=गुञ्जाफले रक्तिकाफले समस्तुल्य आकारो यासां तास्तथाविधा सत्य. केन निर्मिता=रचिता। गुञ्जाफलं हि वहिरेव रम्यमन्तस्तु विषवद्भक्षित मव्यापादयतीति प्रसिद्धि ॥२०९॥

कृच्छ्रेण=कष्टेन। अतिचक्राम=निर्जगाम। छिन्ननासिका=तथोक्ता। छिद्रम्=नासारन्ध्रम्। स्थगयितव्यम्=प्रावरणीयम्।

कार्यवशाद्राजकुले पर्युषितः प्रत्यूषे च स्वगृहमभ्युपेत्य द्वारदेशस्थो विविधपौरकृत्योत्सुकतया तामाह--भद्रे! शीघ्रमानीयतां क्षुरभाण्डं येन क्षौरकर्मकरणाय गच्छामि। सापि छिन्ननासिका गृहमध्यस्थितैव कार्यकरणापेक्षया क्षुरभाण्डात्क्षुरमेकं समाकृष्य तस्याभिमुखं प्रेषयामास। नापितोऽप्युत्सुकतया तमेकं क्षुरमवलोक्य कोपाविष्टः संस्तदभिमुखमेव तं क्षुरं प्राहिणोत्। एतस्मिन्नन्तरे सा दुष्टोर्ध्ववाहू विधाय फूत्कर्तुमना गृहान्निश्चक्राम। अहो! पापेनानेन मम सदाचारवर्तिन्याः पश्यत नासिकाच्छेदो विहितः। तत्परित्रायतां परित्रायताम्। अत्रान्तरे राजपुरुषाः समभ्येत्य तं नापितं लगुडप्रहारैर्जर्जरीकृत्य दृढबन्धनैर्बद्ध्वा तया छिन्ननासिकया सह धर्माधिकरणस्थानं नीत्वा सभ्यानूचुः—शृण्वन्तु भवन्तः सभासदः, अनेन नापितेनापराधं विना स्त्रीरत्नमेतद्व्यङ्गितम्। तदस्य यद्युज्यते तत्क्रियताम्—इत्यभिहिते सभ्या ऊचुः—रे नापित! किमर्थं त्वया भार्या व्यङ्गिता। किमनया परपुरुषोऽभिलषित, उतस्वित्प्राणद्रोहः कृतः, किंवा चौर्यकर्माचरितम्। तत्कथ्यतामस्या अपराधः। नापितोऽपि प्रहारपीडिततनुर्वक्तुं न शशाक। अथ तं तूष्णीम्भूतं दृष्ट्वा पुनः सभ्या ऊचु—अहो! सत्यमेतद्राजपुरुषाणां वचः। पापात्मायम्। अनेनेयं निर्दोषा वराकी दूषिता। उक्तं च—

भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतिततेजाः।
भवति हि पापं कृत्वा स्वकर्मसन्त्रासितः पुरुषः ॥२१०॥

---

पर्युषित =निशायां स्थित। क्षुरभाण्डम्=क्षौरकर्मार्थं क्षुरादिशस्त्रस्थापनाय पिटिकाविशेष। ऊर्ध्ववाहु =ऊर्ध्वभुज। फूत्कर्तुमनाः=आक्रन्दनेन जनानाह्वातुकामा। व्यङ्गितम्=अङ्गहीनं कृतम्। व्यङ्गिता=छिन्ननासा कृतेत्यर्थ। उतस्वित्=अथवा। प्रहारेति–प्रहारैराताडै पीडिता तनु शरीरं यस्य स इत्यर्थ। वराकी=तपा
"भिन्ने"ति--"हि" निश्चये। पापं=अनर्थं कृत्वा=विधाय ९५

तथा च--

आयाति स्खलितैः पादैर्मुखवैवर्ण्यसंयुतः ।
ललाटस्वेदभाग्भूरि गद्गदं भाषते वचः ॥२११॥
अधोदृष्टिर्वदेत्कृत्वा पापं प्राप्तः सभां नरः ।
तस्माद्यत्नात्परिज्ञेयश्चिह्नैरेतैर्विचक्षणैः ॥२१२॥

अन्यच्च-

प्रसन्नवदनो हृष्टः स्पष्टवाक्यः सरोषदृक् ।
सभायां वक्ति सामर्षं सावष्टम्भो नरः शुचिः ॥२१३॥

---

स्वेन पापेन कर्मणा सन्त्रासितः=सम्भीतः सन् पुरुषः भिन्नस्वरमुखवर्णः=भिन्नं विकारं प्राप्तः स्वरः कण्ठध्वनिः मुखवर्णः=मुखस्य गौरश्यामतादि-रूपो निसर्गसिद्धो वर्णो रूपं च यस्य स तादृशः, तथा—शङ्कितदृष्टिः=शङ्किता विस्मयं प्राप्ता दृष्टिर्यस्य सः, तथा—समुत्पतिततेजाः=समुत्पतितं निर्गतं विनष्टं तेजः प्रभावो यस्य स तादृशो भवतीति निश्चितमेतत् । आर्यावृत्तम् ॥२१०॥

"आयाति" इति । अत्र "पापात्मा" इत्यध्याहार्यम् । पापात्मा (कृतपापः) पुरुषः स्खलितैः=त्वरद्भिः कम्पमानैरित्यर्थः पादैः=चरणैरुपलक्षितः आयाति=आगच्छति । तथा—मुखे आस्ये वैवर्ण्यं विकृतो वर्णो यस्य स तादृशः सन् ललाटे=मस्तके स्वेदं भजत इति ललाट-स्वेदभाक् स्विन्नमस्तकः भूरि=बहु गद्गदम्=अस्पष्टार्थं वचः=वाक्यं भाषते=कथयति ॥ २११ ॥

"अधोदृष्टि"रिति—पापं कृत्वा सभां=परिषदं प्राप्तो नरः अधो-दृष्टिः=कृताऽधोमुखः सन् वदेत्=कथयति पृष्टः सन्नसम्बद्धं वक्तीत्यर्थः । "भवेत्" इति पाठे अधोदृष्टिर्भवति उत्तरप्रदानेऽसमर्थो जायत इत्यर्थो बोध्यः । तस्मात् विचक्षणैः=निर्णयाविकारचतुरैः पुरुषैः एतैरुक्तैश्चिह्नैः=[illegible] यत्नात्=महतोऽवधानात् परिज्ञेयः=पापात्मा नरो ज्ञातव्यः । [illegible] कथनेन कदाचिन्महाधूर्ता उक्तानि लक्षणानि अपलप्यापि स्वशुद्धिं प्रकटयन्तीति बोधितम् ॥ २१२ ॥

पापिनः परिचेयलक्षणान्युक्त्वाऽकृतपापस्य चिह्नमाह—"प्रसन्नवदन"

तदेष (१) दुष्टचरित्रलक्षणो दृश्यते. (२) स्त्रीधर्षणाद्वध्य इति । तच्छूलायामारोप्यतामिति । अथ वध्यस्थाने नीयमानं तमवलोक्य देवशर्मा तान् (३) धर्माधिकृतान्गत्वा प्रोवाच – भो ! भो ! अन्यायेनैष वराको वध्यते नापितः । साधुसमाचार एषः । तच्छ्रूयतां मे वाक्यम्—"जम्बूको हुडयुद्धेन" इति । अथ ते सभ्या ऊचुः-भो भगवन् ! कथमेतत् । ततो देवशर्मा तेषां त्रयाणामपि वृत्तान्तं विस्तरेणाकथयत् । तदाकर्ण्य सुविस्मितमनसस्ते नापितं विमोच्य मिथः प्रोचुः—अहो !

अवध्यो ब्राह्मणो बालः स्त्री तपस्वी च रोगभाक् ।
विहिता व्यङ्गिता तेषामपराधे महत्यपि ॥ २१४ ॥

तदस्या नासिकाच्छेदः (क) स्वकर्मणा हि संवृत्तः । ततो (ख) राजनिग्रहस्तु कर्णच्छेदः कार्यः । तथानुष्ठिते देवशर्मा वित्तनाशलसमुद्भूतशोकरहितः पुनरपि स्वकीयमठायतनं जगाम ।

---

इति । शुचिः=शुद्धो नरः प्रसन्नः=विकसितं वदनं मुखं यस्य सः हृष्टः=प्रसन्नान्तरात्मा निर्भय इत्यर्थः स्पष्टवाक्यः=स्पष्टानि वाक्यानि वाक्यवर्त्तीन्यक्षराणि यस्य सः, सरोषदृक्=क्रोधपूर्णदृष्टिः सावष्टम्भः=अवष्टम्भेन गर्वेण स्वपवित्रतालक्षणेन सह वर्त्तमानः सभायाम्=धर्माधिकरणपरिषदि सामर्षम्=सकोपं यथा स्यात्तथा वक्ति=भाषते । निर्भयः सन् स्वशुद्धतापक्षं समर्थयत इत्यर्थः ॥२१३॥

(१) दुष्टचरित्रलक्षणः=पापचिह्नः (२) स्त्रीधर्षणात्=स्त्रियो नासाच्छेदरूपावमाननात् । वध्यः=घात्यः (३) धर्माधिकृतान्=न्यायालयाध्यक्षान् प्राड्विवाकप्रमुखान् ।

"अवध्य" इति । महत्यपि अपराधे=दोषे ब्राह्मणः, बालः=अप्राप्तयौवनः, स्त्री, तपस्वी, रोगभाक्=रुजा पीडितः, अवध्यः=नैव हन्तव्यः, परन्तु तेषां व्यङ्गिता विकलाङ्गता विहिता शास्त्रेणेति शेषः । अर्थात् येनकेनाप्यवयवेन एषां विच्छेदः कर्तव्य इति शास्त्रस्य विधानम् ॥२१४॥

(क) स्वकर्मणा=निजापराधेन, (ख) राजनिग्रहः राजदण्डः ।

अतोऽहं ब्रवीमि-"जम्बूको हुडुयुद्धेन" इति ॥ करटक आह-एवंविधे (ग) व्यतिकरे किं कर्तव्यमावयोः । दमनकोऽब्रवीत् एवंविधेऽपि समये मम बुद्धिस्फुरणं भविष्यति, येन सञ्जीवकं प्रभोर्विश्लेषयिष्यामि । उक्तं च यतः—

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतः सृष्टा हन्ति राष्ट्रं सनायकम् ॥ २१५ ॥

तदहं (४) मायाप्रपञ्चेन गुप्तमाश्रित्य तं स्फोटयिष्यामि । करटक आह—भद्र ! यदि कथमपि तव मायाप्रवेशं पिङ्गलको ज्ञास्यति, सञ्जीवको वा तदा नूनं विघात एव । सोऽब्रवीत्—तात ! नैवं वद । (८) गूढबुद्धिभिरापत्काले विधुरेऽपि दैवे बुद्धिः प्रयोक्तव्या । नोद्यमस्त्याज्यः । कदाचिद् (९) घुणाक्षरन्यायेन बुद्धेः (१०) साम्राज्यं भवति । उक्तं च—

---

( ग ) व्यतिकरे=व्यसने । प्रभोः=स्वामिनः पिङ्गलकात् । विश्लेषयिष्यामि=विभेदयिष्यामि ।

"एक"मिति । धनुष्मता=धनुर्धारिणा मुक्त=लक्ष्यवेधाय निक्षिप्त प्रेरित इषु=बाण एकं लक्ष्यं हन्यात्=भिन्यात् न वा हन्यात्=अथवा हन्तुं न शक्नुयात् लक्ष्यच्युतेरपि सम्भवादितिभावः । बुद्धिमत=नीतिज्ञस्य सृष्टा=प्रयुक्ता बुद्धि=मतिस्तु सनायकम्=स्वामिसहितमेव राष्ट्रम्=सकल राज्यतन्त्रं हन्ति=विनाशयति, अन्यबलाद्बुद्धिबलमेवोत्तममिति तात्पर्यम । अत्रेषोरपेक्षया बुद्धिबलस्याधिक्यप्रदर्शनरूपो व्यतिरेकालङ्कार "उपमानाद् यदन्यस्य व्यतिरेक स एव स" इति लक्षणात् ॥२१५॥

(४) मायाप्रपञ्चेन=कपटनीतिविस्तारेण । (५) स्फोटयिष्यामि=वियोजयिष्यामि । (६) मायाप्रवेशम्=छलाचरणम् । (७) विघात=विपद् । (८) गूढबुद्धिभि=कूटमतिभि । विधुरे=प्रतिकूले । उद्यमः=पुरुषकार । (९) घुणाक्षरन्यायेन=घुण काष्ठकीट तेन कृतमक्षरं तस्य न्यायो दृष्टान्त । स्वभावत एव काष्ठभक्षणेन भक्षिते काष्ठे कदाचित्स्वयमेव तत्राक्षराकार सम्पद्यते, सोऽयं दैवयोग 'घुणाक्षरन्याय" पदेनाऽभिधीयते । (१०) साम्राज्यं=प्रभुत्वम ।

त्याज्यं न धैर्यं विधुरेऽपि दैवे
धैर्यात्कदाचित्स्थितिमाप्नुयात्सः ।
याते समुद्रेऽपि हि पोतभङ्गे
सांयात्रिका वाञ्छति कर्म एव ॥२१६॥

तथा च—

उद्योगिनं सततमत्र समेति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ २१७ ॥

तदेवं ज्ञात्वा सुगूढबुद्धिप्रभावेण यथा तौ द्वावपि न ज्ञास्यतः, तथा मिथो वियोजयिष्यामि । उक्तं च—

---

"त्याज्य"मिति । दैवे=विधौ विधुरे=प्रतिकूलेऽपि धैर्य=धीरता न त्याज्य=नैव हातव्यम्, यत कदाचित् धैर्यात् हेतो स =प्रातिकूलदैव पुमान् स्थितिम्=इष्टमाश्रयं लभेत=प्राप्नुयात् । हि=तथा ह्ययं योग्योऽर्थः, समुद्रे=सागरे पोतभङ्गे=नौकाया विध्वंसे जातेऽपि=सम्पन्नेऽपि सायात्रिक =पोतवणिक् कर्म= स्वकीयं वाणिज्यमेव वाञ्छति, धैर्यमवलम्ब्य पुनरपि तदेव कर्म करोति नतु स्वव्यवसायाच्चलचित्तो भवतीति भाव । अत्र विशेषेण सामान्यसमर्थनरूपो ऽर्थान्तरन्यास । तदुक्तं काव्यप्रकाशे—

सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।
यत्र सोऽर्थान्तरन्यास साधर्म्येणेतरेण वा ॥ इति २१६ ॥

"उद्योगिन मिति । अत्र=संसारे लक्ष्मी =श्री सततम्=निरन्तरम् उद्योगिनम्=उद्यमवन्त जनं समेति=प्राप्नोति दैव (हि) दैव मिति=दैवमेव सर्वस्याश्रयो नान्यद् इति कापुरुषा =उद्योगहीना कुत्सिता. पुरुषा वदन्ति=कथयन्ति हीति निश्चितमेतत्, अतो दैवम्=दिष्टवादं निहत्य=परित्यज्य आत्मशक्त्या=स्वसामर्थ्येन पौरुषम्=पुरुषार्थं कुरु=आश्रयस्व, यत्ने=पुरुषार्थे ( उद्योगे ) यदि न सिद्ध्यति कार्यमितिशेष तदा अत्र=यत्ने को दोष =का नु भूलोऽपि विचारणीयमिति शेष । अथवा—यत्ने कृते यदि

सुप्रयुक्तस्य दम्भस्य ब्रह्माप्यन्तं न गच्छति।
कौलिको विष्णुरूपेण राजकन्यां निषेवते ॥२१८॥

करटक आह—कथमेतत्। सोऽब्रवीत्—

कथा ५

कस्मिंश्चिद(१)धिष्ठाने कौलिकरथकारौ मित्रे प्रतिवसतः स्म। तत्र च तौ बाल्यात्प्रभृति सहचारिणौ परस्परमतीव स्नेहपरौ सदैकस्थानविहारिणौ कालं नयतः। अथ कदाचित्तत्राधिष्ठाने कस्मिंश्चिद्देवायतने यात्रामहोत्सवः संवृत्तः। तत्र च (२) नटनर्तकचारणसङ्कुले नानादेशागतजनावृते तौ सहचरौ भ्रमन्तौ काञ्चिद्राजकन्यां (३) करेणुकारूढां सर्वलक्षणसनाथां (४) कञ्चुकिवर्षधरपरिवारितां देवतादर्शनार्थं समा-

---

सिद्ध्यति तदा अत्र=यत्ने को दोषः=कश्चित् प्रतिबन्धो वा कार्यसामग्र्या पूर्णताया अभावो वास्तीति विज्ञातव्यं, कथमन्यथा कार्यं न सिद्ध्येदिति भावः। वसन्ततिलकम् ॥२१७॥

"**सुप्रयुक्तस्ये**"ति। सुप्रयुक्तस्य=सम्यक् प्रयोजितस्य दम्भस्य=कपटस्य, ब्रह्मा=प्रजापतिरपि अन्तम्=अवसानं न गच्छति=नैव ज्ञातुं प्रभवतीत्यर्थः। तथाहि—कौलिकः=कश्चित्तन्तुवायः विष्णुरूपेण=कपटद्वारा विष्णुरूपधारणेन राजकन्याम्=राजपुत्रीं निषेवते=रमते। "कौलिकस्तन्तुवाये स्यात् कुलमार्गप्रवर्त्तके। शिवे तथा कुलाचारे पापगे ब्रह्मवियपि" इति शब्दार्थचिन्तामण्यादयः ॥२१८॥

**रथकारः**=माहिष्यात् करण्या जातः सङ्करजातीयः। "रथकारस्तु माहिष्यात्करण्या यस्य सम्भवः" इत्यमरः।

(१) अधिष्ठाने=नगरे ग्रामे वा। (२) "**नटेति**"—नटाश्च नर्तकाश्च ...श्च तैः सङ्कुले सङ्कीर्णे। तत्र नटाः=शैलूषाः। चारणाः=कुशीलवाः। करेणुकारूढाम्=करेणुका हस्तिनी तामारुह्य समायाताम्। **सर्वेति**-...णैः सुन्दरस्त्रीचिह्नैः सनाथा युक्ताम्। (४) **कञ्चुकीति**—कञ्चु...नः=अन्तःपुरचरा वृद्धाः, वर्षवराः=क्लीबाः तैः परिवारिताः=परिवेष्टिताम्।

यातां दृष्टवन्तौ। अथासौ कौलिकस्तां दृष्ट्वा (१) विषार्दित इव दुष्टग्रहगृहीत इव कामशरैर्हन्यमानः सहसा भूतले निपपात। अथ तं तदवस्थमवलोक्य रथकारस्तद्दुःखदुःखित आप्तपुरुषैस्तं समुत्क्षिप्य स्वगृहमानाययत्। तत्र च (२) विविधैः शीतोपचारैश्चिकित्सकोपदिष्टैर्मन्त्रवादिभिरुपचर्यमाणश्चिरात्कथञ्चित्सचेतनो बभूव। ततो रथकारेण पृष्टः—भो! मित्र! किमेवं त्वमकस्माद्विचेतनः सञ्जातः। तत्कथ्यतामात्मस्वरूपम्। स आह—वयस्य! यद्येवं तच्छृणु मे रहस्यं येन सर्वामात्मवेदनां ते वदामि, यदि त्वं मां सुहृदं मन्यसे? ततः (३) काष्ठप्रदानेन प्रसादः क्रियताम्। क्षम्यतां यद्वा किञ्चित्प्रणयातिरेकादयुक्तं तव मयानुष्ठितम्। सोऽपि तदाकर्ण्य बाष्पपिहितनयनः सगद्गदमुवाच—वयस्य! यत्किञ्चिद्दुःखकारणं तद्वद। येन प्रतीकारः क्रियते यदि शक्यते कर्तुम्। उक्तं च—

औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम्।
असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम् ॥२१६॥

---

(१) विषार्दित=विषपीडित इव। दुष्टेन शन्यादिना ग्रहेण गृहीत इव अथवा—दुष्टेन ग्रहेण नक्रादिग्राहेण गृहीत इव। कामशरैः=मन्मथबाणैः। (२) विविधैः=नानाप्रकारैः। शीतोपचारैः=शीतलजलपानादिक्रियाभिः। चिकित्सकोपदिष्टैः=भिषग्जनैः। मन्त्रवादिभिः=भूतप्रेतविद्या जानद्भिः। उपचर्यमाणः=सेव्यमानः। सचेतनः=लब्धसञ्ज्ञः। (३) काष्ठप्रदानेन=चिताकरणेन। प्रणयातिरेकात्=प्रेमप्राचुर्यात्। बाष्पेति-बाष्पेण नेत्रजलेन पिहिते आवृते नयने नेत्रे यस्य सः विलपन्नित्यर्थः।

"औषधार्थे"ति। अत्र=अस्मिन् लोके=भुवने यद् वस्तु ब्रह्माण्डस्य=जगतः मध्यगम्=अन्तर्गतं जगति लभ्यमित्यर्थः तत् वस्तु, औषधं=भेषजम्, अर्थः=धनं सुमन्त्रः=शोभनो मन्त्रप्रयोगः तेषां तथा महात्मनाम्=

तदेषां चतुर्णां यदि साध्यं भविष्यति तदाहं साधयिष्यामि । कौलिक आह—वयस्य ! एतेषामन्येषामपि सहस्राणामुपायानामसाध्यं तन्मे दुःखम् । तस्मान्मम मरणे मा कालक्षेपं कुरु । रथकार आह—भो मित्र ! यद्यप्यसाध्यं तथापि निवेदय येनाहमपि तदसाध्यं मत्वा त्वया सह वह्नौ प्रविशामि । न क्षणमपि त्वद्वियोगं सहिष्ये । एष मे निश्चयः । कौलिक आह—वयस्य ! यासौ राजकन्या करेणुकारूढा तत्रोत्सवे दृष्टा, तस्या दर्शनान्तरे(१) मकरध्वजेन ममेयमवस्था विहिता । तन्न शक्नोमि तद्वेदनां सोढुम् । तथा चोक्तम्—

मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
तस्याः पयोधरयुगे रतखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
स्वप्स्ये कदा क्षणमवाप्य तदीयसङ्गम् ॥ २२० ॥

---

मनस्विना बुद्धेश्च असाध्यं नास्ति किन्तु साध्यमेव । बुद्धिमद्भिरुपधादिना सर्वमपीष्टं साधयितुं शक्यत इति भावः ॥ २१६ ॥

(१) मकरध्वजेन=कामेन । वेदनाम्=पीडाम् । सोढुम्=मर्षयितुम् ।

"मत्तेभे"ति—अहम् तदीयसङ्गम्=तस्या राजकन्याया सङ्गमम् अवाप्य=आसाद्य रतखेदखिन्न=रतं सुरतं तस्य खेदेन श्रमेण खिन्न क्लमं प्राप्तः सन्, मत्तेभस्य=मत्तहस्तिना यौ कुम्भौ तयोर्य परिणाह= विशालता सोऽस्यास्तीति तादृशे, तथा—कुङ्कुमार्द्रे=कुङ्कुमेन केसरेण कुङ्कुमरचितगन्धलेपेन आर्द्रे=क्लिन्ने शीतले सौरभवति चेन्यर्गं ... भूते पयोधरयुगे=स्तनद्वन्द्वे, वक्षः=उरःस्थलं निधाय=स्थापयित्वा, ... मध्यवर्ती=भुजावेव पञ्जर तस्य मध्यभागे विनिविष्ट अर्थात् ... सन् क्षणं स्वप्स्ये=शेष्ये निद्रां भजिष्य इति यावत् । अत्र "स्वप्स्ये" इत्यात्मनेपदं चिन्त्यम् ॥ वसन्ततिलकावृत्तम् ॥ २२० ॥

तथा च-

रागी विम्बाधरोऽसौ स्तनकलशयुगं यौवनारूढगर्वं
 नीचा नाभिः प्रकृत्या कुटिलकमलकं स्वल्पकं चापि मध्यम् ।
कुर्वन्त्वेतानि नाम प्रसभमिह मनश्चिन्तितान्याशु खेदं
 यन्मां तस्याः कपोलौ दहत इति मुहुः स्वच्छकौ तन्न युक्तम् २२१

रथकारोऽप्येवं सकामं तद्वचनमाकर्ण्य सस्मितमिदमाह—वयस्य ! यद्येवं तर्हि दिष्ट्या सिद्धं नः प्रयोजनम् । तदद्यैव तया सह समागमः क्रियताम् ! इति कौलिक आह—वयस्य ! यत्र कन्यान्तःपुरे वायुं मुक्त्वा नान्यस्य प्रवेशोऽस्ति तत्र (१) रक्षापुरुषाधिष्ठिते कथं मम तया सह समागमः । तत्किं

---

"रागी"ति । तस्या =राजकन्याया विम्बाधरः=विम्बफलतुल्योधरो रागी=रक्तवर्ण एतेन मात्सर्यं व्यज्यते. स्तनकलशयुगम्=स्तनावेव कलशौ कुम्भौ तयोर्युग कुचकुम्भयुगलमित्यर्थ यौवनारूढगर्वम्=यौवनं तारुण्यं तेन आरूढः प्राप्तो गर्व औद्धत्यमुन्नतिरिति यावत् तत्तादृशं तारुण्येन उन्नतियुगित्यर्थ एतेन दर्पवत्त्व ध्वन्यते, नाभि नीचा=निम्ना शुभं लक्षणमिद सामुद्रोक्तं नारीणाम्. एतेन नीचस्वभावत्व ध्वनितम्, अलकम्=चूर्णकुन्तल प्रकृत्या=स्वभावत कुटिलकम्=वक्रं भङ्गिविशेषवत्त्वात्सुन्दरतद्भिमत्, एतेन कुटिलस्वभावत्व व्यक्तीकृतम्, मध्यमपि=कटिप्रदेशोऽपि स्वल्पकम्=क्षीण कृशमिति यावत्, एतेन अल्पबुद्धिमत्त्वं सूचितम्. एतानि मनश्चिन्तितानि=मनसालोचितानि सन्ति आशु=क्षिप्रमेव प्रसभम्=बलात् इह=मयि खेद=कष्टं कुर्वन्तु=जयन्तु नामेति सम्भावनायाम् । एते हि रागवत्तादिदोषोपेता, तादृशाश्च लोके खेदकारिणो भवन्तीति व्यज्यते । किन्तु-स्वच्छकौ=शुभ्रौ कपोलौ=गण्डौ यन्मा मुहु =वार वारं दहत =सन्तापवन्तं कुरुतस्तन्न युक्त नैवोचितम् । निर्मलस्य परखेदकारित्वमयुक्तमिति भावः ॥ २२१ ॥

(१) रक्षापुरुषा =द्वारपालप्रभृतयस्तैरधिष्ठिते सुरक्षिते ।

मामसत्यवचनेन (१) विडम्बयसि। रथकार आह—मित्र ! पश्य मे बुद्धिबलम्। एवमभिधाय तत्क्षणात् (२) कीलसञ्चारिणं वैनतेयं बाहुयुगलं वायुजवृक्षदारुणा शङ्खचक्रगदापद्मान्वितं सकिरीटकौस्तुभमघटयत्। ततस्तस्मिन्कौलिकं समारोप्य विष्णुचिह्नितं कृत्वा कीलसञ्चरणविज्ञानं च दर्शयित्वा प्रोवाच-वयस्य ! अनेन विष्णुरूपेण गत्वा कन्यान्तःपुरे (३) निशीथे तां राजकन्यामेकाकिनीं सप्तभूमिकप्रासादप्रान्तगतां मुग्धस्वभावां त्वां वासुदेवं मन्यमानां स्वकीयमिथ्यावक्रोक्तिभी रञ्जयित्वा (४) वात्स्यायनोक्तविधिना भज। कौलिकोऽपि तदाकर्ण्य (५) तथारूपस्तत्र गत्वा तामाह—राजपुत्रि ! सुप्ता किं वा जागर्षि। अहं तव कृते समुद्रात्सानुरागो लक्ष्मीं विहायैवागतः। तत्क्रियतां मया सह समागम इति। सापि गरुडारूढं चतुर्भुजं सायुधं कौस्तुभोपेतमवलोक्य सविस्मया शयनादुत्थाय

---

(१) विडम्बयसि=प्रतारयसि। (२) कीलसञ्चारिणम्=शङ्कुना चलनयोग्यम्, वैनतेयम्=विनताया अपत्यं गरुडम्। स्त्रीभ्योढक्। वायुजेति-वायुजो वृक्षविशेषस्तस्य दारु काष्ठं तेनेत्यर्थः। एतेन सञ्चरणयोग्यता व्यज्यते। शङ्खचक्रगदापद्मैरन्वितं, किरीटं मुकुटं, कौस्तुभो मणिविशेष ताभ्यां सहितम्, अघटयत्=अरचयत् विष्णुचिह्नितम्=विष्णोर्लक्ष्मीपते शङ्खादिचिह्नधारिणम्। कीलेति-कीलस्य सञ्चरणं सञ्चालनं तस्य विज्ञानं चातुरीप्रकार मित्यर्थः। (३) निशीथे=अर्धरात्रे। एकाकिनीम्=एकलाम्। सप्तेति-सप्त भूमय उपर्युपरि स्थिता यस्य स तादृशश्चासौ प्रसादो हर्म्यं तत्र अर्थात् सप्तमतले [illegible]जभवने गता स्थिताम्, मुग्धस्वभावाम्=बहुविवेकाऽक्षमाम्। वासुदेवम=[illegible]म्। स्वकीयेति-स्वकीया स्वयं कल्पिता या मिथ्यावक्रोक्तय असत्या[illegible]नि तै कपटवचनैरित्यर्थः।

(४) वात्स्यायनोक्तविधिना=वात्स्यायनेन उक्तः प्रतिपादितो यो वि[illegible]कार, तेन, भज=रमस्वेत्यर्थः॥ (५) तथारूप=विष्णुस्वरूपः।

प्रोवाच—भगवन्! अहं मानुषी (१) कीटिकाऽशुचिः। भगवां-स्त्रैलोक्यपावनो वन्दनीयश्च। तत्कथमेतद्युज्यते। कौलिक आह—सुभगे! सत्यमभिहितं भवत्या। परं किन्तु राधा नाम मे भार्या गोपकुलप्रसूता प्रथममासीत्, सा त्वमत्रावतीर्णा। तेनाहमत्रायातः इत्युक्ता सा प्राह—भगवन्! यद्येवं तन्मे तातं प्रार्थय। सोऽप्यविकल्पं मां तुभ्यं प्रयच्छति। कौलिक आह—सुभगे! नाहं दर्शनपथं मानुषाणां गच्छामि। किं पुन-रालापकरणम्। त्वं (२) गान्धर्वेण विवाहेनात्मानं प्रयच्छ। नो चेच्छापं दत्वा सान्वयं ते पितरं भस्मसात्करिष्यामि-इति। एवमभिधाय गरुडादवतीर्य सव्ये पाणौ गृहीत्वा तां सभयां सलज्जां वेपमानां शय्यायामनयत्। ततश्च रात्रिशेषं यावद्वा-त्स्यायनोक्तविधिना निषेव्य प्रत्यूषे स्वगृहमलक्षितो जगाम। एवं तस्य तां नित्यं सेवमानस्य कालो याति। अथ कदाचि-त्कञ्चुकिनस्तस्या अधरोष्ठप्रवालखण्डनं दृष्ट्वा मिथः प्रोचुः—

---

(१) कीटिका=कीटिकाजन्तुवदतितुच्छेत्यर्थ। अशुचि=अपवित्रा। त्रैलो-क्यपावन=त्रिभुवनपूतिकर युज्यते=अर्हति। तातम्=पितरम्। अविकल्पम्=विकल्प संशयः तद्रहितं यथा तथा क्रिया विशेषणम्। (२) गान्धर्वेण=परस्परप्रीतिनिमित्तकविवाहविशेषेण। उक्तञ्च-**मनुना**—

इच्छयाऽन्योन्यसंयोग कन्यायाश्च वरस्य च।
गान्धर्व सतु विज्ञेयो मैथुन्य कामसम्भव॥ इति।

आत्मानं प्रयच्छ=स्वभोगं देहीत्यर्थ। सान्वयम्=वंशसहितम्। नोचेत=अन्यथा।

सान्वयम्=वंशसहितम्। भस्मसात्करिष्यामि=धक्ष्यामीत्यर्थ। सव्ये=वामे। पाणौ=करे। वेपमानम्=कम्पं कुर्वतीम्। निषेव्य=रन्त्वा। **अधरेति**—अधरोष्ट एव प्रवाल किशलयस्तस्य खण्डनं चूषणेन सक्षतम्। मिथ=अन्योन्यम्।

अहो ! पश्यतास्या राजकन्यायाः पुरुषोपभुक्ताया इव शरीरावयवा (१) विभाव्यन्ते । तत्कथमयं सुरक्षितेऽप्यस्मिन्गृह एवंविधो व्यवहारः । तद्राज्ञे निवेदयामः । निश्चित्य सर्वे समेत्य राजानं प्रोचुः—देव ! वयं न विद्मः । परं सुरक्षितेऽपि कन्यान्तःपुरे कश्चित्प्रविशति । तद्देवः प्रमाणमिति । तच्छ्रुत्वा राजातीव व्याकुलितचित्तो व्यचिन्तयत्—

पुत्रीति जाता महतीह चिन्ता
कस्मै प्रदेयेति महान्वितर्कः ।
दत्त्वा सुखं प्राप्स्यति वा न वेति
कन्यापितृत्वं खलु नाम कष्टम् ॥ २२२ ॥

नद्यश्च नार्यश्च सदृक्प्रभावा-
स्तुल्यानि कूलानि कुलानि तासाम् ।
तोयैश्च दोषैश्च निपातयन्ति
नद्यो हि कूलानि कुलानि नार्यः ॥ २२३ ॥

---

(१) विभाव्यन्ते=प्रतीयन्ते । प्रमाणम्=उचितप्रबन्धे स्वतन्त्र इत्यर्थ ।

"**पुत्री**"ति—इह=लोके पुत्री=सुता जाता=उत्पन्ना इति महती=विशाला बलवतीत्यर्थ चिन्ता=चित्तस्य ध्यानात्मको वृत्तिविशेष, तामेवाह—कस्मै योग्याय वराय प्रदेया=दातव्या इति=एवंरूपो महान=प्रबल वितर्क =विचारणा । दत्ता सती सुखं=सातं प्राप्स्यति=लप्स्यते वा न वा=अथवा न प्राप्स्यति इत्यपि महान् वितर्क इति पूर्वेण सम्बन्ध , अतो हेतो कन्यापितृत्वम्=कन्याजनकत्वं कष्टं=दु खं खलु=निश्चितम् , । नामेति सम्भावनायाम्॥ कन्याजनक कन्याविषये निरन्तरमेव क्लेशभाग्भवतीति भाव । इन्द्र-

व ... ॥२२२॥

"**नद्य**" इति । नद्य =सरित नार्य =योषा सदृक्प्रभावा =सदृक् तुल्य.
.व स्वभावविशेषः स्थितिर्वा यासा ता एवम्भूता सन्तीति शेष ।
... टे-तुल्यानीति । आसाम्=नदीना नारीणाञ्च कूलानि=तटानि कुलानि=वंशाश्च तुल्यानि=समान्येव । हि=तथाहीत्ययं निश्चितोऽर्थ यत् नद्य =सरित.

तथा च-

जननीमनो हरति जातवती
परिवर्धते सह शुचा सुहृदाम् ।
परसात्कृतापि कुरुते मलिनं
दुरतिक्रमा दुहितरो विपदः ॥ २२४ ॥

एवं बहुविधं विचिन्त्य (१) देवी रहःस्थां प्रोवाच--देवि ! ज्ञायतां किमेते कञ्चुकिनो वदन्ति । तस्य कृतान्तः कुपितो येनैतदेवं क्रियते । देव्यपि तदाकर्ण्य व्याकुलीभूता सत्वरं कन्यान्तःपुरे गत्वा तां खण्डिताधरां (२) नखविलिखितशरीरावयवां दुहितरमपश्यत् । आह च-आः पापे ! कुलकलङ्ककारिणि ! किमेवं (३) शीलखण्डनं कृतम् । कोऽयं कृतान्तावलोकितस्त्वत्सकाशम-

---

तोये=जले. कूलानि=तटानि निपातयन्ति=भञ्जयन्ति नार्यश्च दोषै=कलङ्कै कुलानि निपातयन्ति=अध कुर्वन्तीत्यर्थ । "हि अवधारणेऽव्ययम् ॥ इन्द्रवज्रावृत्तम् ॥२२३॥

"जननी"ति—कन्या जातवती=उत्पन्ना सती, जनन्याः मातुर्मनो हृदयं हरति, एना योग्याय वराय दास्यामीति व्याकुलीकरोति, तथा सुहृदाम्=बन्धूना शुचा=शोकेन सह परिवर्धते=वृद्धि याति, यतो यतो वर्धते ततस्ततस्तद्विवाहादौ प्रचुरधनव्ययकरणचिन्ताऽपि बन्धूनामेधत एवेति भाव । परसात्कृताऽपि=परस्मै दत्ताऽपि मलिनं कुरुते=बन्धुजनं मलीनहृदयं करोति कदाचिदस्या सुखं स्याद्वा नवेति चिन्तातुरं जनयतीति भाव , दुहितर =पुत्र्य विपद =विपत्तय =पुत्रीरूपा आपदो दुरतिक्रमा =दुर्लङ्घनीया भवन्तीतिशेष । अन्या विपदं कथञ्चित्तरेदपि नर कन्यारूपान्तु तरीतुं नैवशक्नोतीति तात्पर्यम् । प्रमिताक्षरा वृत्तम्—"प्रमिताक्षरा सजससैरुदिता" इति तल्लक्षणात् ॥२२४॥

(१) देवीम्=राज्ञीम् । रह स्थाम्=एकान्ते वर्त्तमानाम् । कृतान्त.=यमः । खण्डिताधराम्=क्षताधरोष्ठीम् । (२) नखेति—नखै करजै विलिखिताः क्षुण्णाः शरीरावयवा यस्या सा ताम् । (३) शीलखण्डनम्=कन्यात्वभञ्जनरूपमाचारभ्रष्टीकरणम् । कृतान्तावलोकित =यमेन वीक्षित आसन्नमृत्युरित्यर्थ ।

भ्येति । तत्कथ्यतां ममाग्रे सत्यमिति (१) कोपाटोपविशङ्कटं वदन्त्यां मातरि राजपुत्री भयलज्जाननतानना प्रोवाच—अम्ब ! साक्षान्नारायणः प्रत्यहं गरुडारूढो निशि समायाति । चेद-सत्यं मम वाक्यम्, तत्स्वचक्षुषा विलोकयतु (क) निगूढतरा निशीथे भगवन्तं रमाकान्तम् । तच्छ्रुत्वा सापि प्रहसितव-दना पुलकाङ्कितसर्वाङ्गी सत्वरं गत्वा राजानमूचे—देव ! दिष्ट्या वर्धसे । नित्यमेव निशीथे भगवान्नारायणः कन्यकापार्श्वेऽ-भ्येति । तेन गान्धर्वविवाहेन सा विवाहिता । तदद्य त्वया मया च रात्रौ वातायनगताभ्यां निशीथे द्रष्टव्यः, यतो न स मानुषैः सहालापं करोति । तच्छ्रुत्वा हर्षितस्य राज्ञस्तद्दिनं वर्षशतप्रायमिव कथञ्चिज्जगाम । ततस्तु रात्रौ निभृतो भूत्वा राज्ञीसहितो राजा वातायनस्थो गगनासक्तदृष्टिर्यावत्तिष्ठति, तावत्तस्मिन्समये गरुडारूढं तं शङ्खचक्रगदापद्महस्तं यथोक्त-चिह्नाङ्कितं व्योम्नोऽवतरन्तं नारायणमपश्यत् । ततः सुधा-पूरप्लावितमिवात्मानं मन्यमानस्तामुवाच—प्रिये ! नास्त्यन्यो धन्यतरो लोके मत्तस्त्वत्तश्च यत्प्रसूतिं नारायणो भजते ।

---

(१) "कोपाटोपे"ति—कोपस्य क्रोधस्य आटोपोऽहङ्कारो वेगो वा तेन विशङ्कटं कठोरं क्रोधनिष्ठुरमित्यर्थः । भयेति—भयेन त्रासेन लज्जया त्रपया च आनतमवनम्रमाननं यस्मिन् कर्मणि तद्यथा तथेति क्रियाविशेषणम् । (क) निगूढतरा=अत्यन्तं प्रच्छन्ना । रमाकान्तम्=लक्ष्मीनाथम् । प्रहसितेति—प्रहसितं वदनं मुखं यस्याः सा । पुलकेति—पुलकेन रोमाञ्चेन अङ्कितानि व्याप्तानि सर्वाणि अङ्गानि यस्याः सा । गान्धर्वविवाहेन=मनकेन ·न्येनोद्वाहेन । दिष्ट्या=हर्षसूचकमिदमव्ययम् । वर्द्धसे=ऐश्वर्यं प्राप्तोऽसि । ·नाय · शतवर्षसदृशमुत्कण्ठावशादित्यर्थः । निभृत=प्रच्छन्न । ·यनस्थ=गवाक्षस्थः । गगनासक्तदृष्टि=गगने आकाशे सक्ता लग्ना दृष्टिः । व्योम्न=आकाशात् । सुधेति—सुधाया अमृतस्य पूरेण प्रवाहेण ·वितं व्याप्तमिव । प्रसूतिम्=पुत्रीम् ।

तत्सिद्धाः सर्वेऽस्माकं मनोरथाः । अधुना जामातृप्रभावेण सकलामपि वसुमतीं वश्यां करिष्यामि । एवं निश्चित्य सर्वैः (१) सीमाधिपैः सह मर्यादाव्यतिक्रममकरोत् । ते च तं मर्यादाव्यतिक्रमेण वर्तमानमालोक्य सर्वे समेत्य तेन सह विग्रहं चक्रुः । अत्रान्तरे स राजा देवीमुखेन तां दुहितरमुवाच-पुत्रि ! त्वयि दुहितरि वर्तमानायां नारायणे भगवति जामातरि स्थिते तत्किमेवं युज्यते यत्सर्वे पार्थिवा मया सह विग्रहं कुर्वन्ति । तत्सम्बोध्योऽद्य त्वया निजभर्ता, यथा मम शत्रून्व्यापादयति । ततस्तया स कौलिको रात्रौ सविनयमभिहितः-'भगवन् ! त्वयि जामातरि स्थिते मम तातो यच्छत्रुभिः परिभूयते तन्न युक्तम् । तत्प्रसादं कृत्वा सर्वांस्ताञ्शत्रून्व्यापादय । कौलिक आह-सुभगे ! कियन्मात्रास्त्वेते तव पितुः शत्रवः । तद्विश्वस्ता भव । क्षणेनापि सुदर्शनचक्रेण सर्वांस्तिलशः खण्डयिष्यामि । अथ गच्छता कालेन सर्वदेशं शत्रुभिरुद्वास्य स राजा प्राकारशेषः कृतः । तथापि वासुदेवरूपधरं कौलिकमजानन्राजा नित्यमेव विशेषतः कर्पूरागुरुकस्तूरिकादिपरिमलविशेषान्नानाप्रकारवस्त्रपुष्पभक्ष्यपेयांश्च प्रेषयन्दुहितृमुखेन तमूचे—भगवन् ! प्रभाते नूनं (२) स्थानभङ्गो भविष्यति । यतो (३) यवसेन्धनक्षयः सञ्जातस्तथा सर्वोऽपि जनः प्रहारैर्जर्जरितदेहः संवृत्तो योद्धुमक्षमः प्रचुरो मृतश्च ।

---

(१) सीमाधिपैः स्वस्वसीमापतिभिर्नृपैः । मर्यादायाः सीमाया व्यतिक्रमम् उल्लङ्घनं सीमोत्क्रमणमिति यावत् । विग्रहम्=सङ्ग्रामम् । सम्बोध्य=सम्यक् ज्ञापनीयः । परिभूयते=तिरस्क्रियते । प्रसादम्=कृपाम् । कियन्मात्राः=अल्पमात्रा इत्यर्थः । उद्वास्य=उच्छिद्य । प्राकारशेषः=प्राचीरमात्रशेषः । (२) स्थानभङ्गः=स्थानस्य वासस्थानस्य भङ्गः प्रच्युतिः । (३) यवसेति—यवसानां घासानां इन्धनानां काष्ठानाञ्च क्षयो विनाशः । तृणकाष्ठादिकमपि शत्रुभिरधिकृतमेवं घासादीनां सैनिकानाञ्चाऽभावान्निवासस्थानत्याग एवास्माकमित्याशयः ।

तदेवं ज्ञात्वाऽत्र काले यदुचितं भवति तद्विधेयम् इति । तच्छ्रुत्वा कौलिकोऽप्यचिन्तयत्—स्थानभङ्गे जाते ममानया सह वियोगो भविष्यति । तस्माद्गरुडमारुह्य सायुधमात्मानमाकाशे दर्शयामि । कदाचिन्मां वासुदेवं मन्यमानास्ते साशङ्का राज्ञो योद्धृभिर्हन्यन्ते । उक्तं च—

निर्विषेणापि सर्पेण कर्तव्या महती फणा ।
विषं भवतु मा भूयात्फणाटोपो भयङ्करः ॥ २२५ ॥

अथ यदि मम स्थानार्थमुद्यतस्य मृत्युर्भविष्यति तदपि सुन्दरतरम्

उक्तं च—

गवामर्थे ब्राह्मणार्थे स्वाम्यर्थे स्त्रीकृतेऽथवा ।
स्थानार्थे यस्त्यजेत्प्राणांस्तस्य लोकाः सनातनाः ॥२२६॥

चन्द्रे मण्डलसंस्थे विगृह्यते राहुणा दिनाधीशः ।
शरणागतेन सार्धं विपदपि तेजस्विनां श्लाघ्या ॥२२७॥

---

"**निर्विषेणापी**"ति—निर्विषेण=विषरहितेनापि सर्पेण महती=विस्तृता फणा कर्त्तव्या, विषं=गरलं भवतु वा=अथवा मा भूयात् फणाटोप =फणाडम्बरस्तु भयङ्कर =भयजनको भवत्येवेति शेषः। फणाविस्तारं दृष्ट्वा लोकास्त्रस्यन्त पलायन्त एवेति भाव. ॥२२५॥

"**गवा**"मिति—गवामर्थे=गोरक्षार्थे, ब्राह्मणार्थे=ब्राह्मणरक्षार्थे, स्वाम्यर्थे=स्वामिरक्षार्थे, अथवा स्त्रीकृते=स्त्रीनिमित्तं स्त्रीरक्षार्थं वा, स्थानार्थे=देशरक्षार्थं वा य प्राणान् त्यजेत् तस्य सनातना =क्षयशून्या लोका =स्वर्गा भवन्तीति शेष ॥२२६॥

"**चन्द्र**" मिति—चन्द्रे=शशिनि मण्डलसंस्थे=सौरमण्डलवर्त्तिनि सति [illegible]त् यदा सूर्याचन्द्रमसावेकस्मिन्मण्डले भवतोऽमावस्यायामित्याशय तदा [illegible] =सूर्यो राहुणा निगृह्यते=ग्रस्यते तदा सूर्यग्रहणं भवतीति भावः। तात्पर्यार्थस्तु—राहुभयात् चन्द्रे शरणार्थं सूर्यमण्डलं प्रविष्टे सति त शरणप्राप्तं रक्षितुकाम सूर्योऽपि राहुणा सह युध्यते, एव—शरणागतेन सार्धं तेज-

एवं निश्चित्य प्रत्यूषे दन्तधावनं कृत्वा तां प्रोवाच—सुभगे । समस्तैः शत्रुभिर्हतैरन्नं पानं चास्वादयिष्यामि । किं बहुना, त्वयापि सह सङ्गमं ततः करिष्यामि । परं वाच्यस्त्वयात्मपिता यत्प्रभाते प्रभूतेन सैन्येन सह नगरान्निष्क्रम्य योद्धव्यम् । अहं चाकाशस्थित एव सर्वांस्तान्निस्तेजसः करिष्यामि । पश्चात्सुखेन भवता हन्तव्याः । यदि पुनरहं तान्स्वयमेव (१) सूदयामि तत्तेषां पापात्मनां (२) वैकुण्ठीया गतिः स्यात् । तस्मात्ते तथा कर्तव्या यथा पलायन्तो हन्यमानाः स्वर्गं न गच्छन्ति । सापि तदाकर्ण्य पितुः समीपं गत्वा सर्वं वृत्तान्तं न्यवेदयत् । राजापि तस्या वाक्यं श्रद्दधानः प्रत्यूषे समुत्थाय (३) सुसंनद्धसैन्यो युद्धार्थं (४) निश्चक्राम कौलिकोऽपि मरणे कृतनिश्चयश्चापपाणिर्गगनगतिर्गरुडारूढो युद्धाय प्रस्थितः । अत्रान्तरे भगवता नारायणेनातीतानागतवर्तमानवेदिना स्मृतमात्रो वैनतेयः सम्प्राप्तो विहस्य प्रोक्तः—भो गरुत्मन् ! जानासि त्वं यन्मम रूपेण कौलिको दारुमयगरुडे समारूढो राजकन्यां कामयते । सोऽब्रवीत्—देव सर्वं ज्ञायते तच्चेष्टितम् । तत्किं कुर्मः साम्प्रतम् । श्रीभगवानाह अद्य कौलिको मरणे कृतनिश्चयो विहितनियमो युद्धार्थं विनिर्गतः । स नूनं प्रधानक्षत्रियशराहतो निधनमेष्यति । तस्मिन्हते सर्वो जनो वदिष्यति यत्प्रभूतक्षत्रियैर्मिलित्वा

---

स्विनाम्=तेज शालिना महता विपदपि=विपत्तिरपि श्लाघ्या=प्रशस्या भवति । शरणागतस्य रक्षणमवश्यकर्त्तव्यमिति भाव ॥२२७॥

(१) सूदयामि=विध्वंसयामि । (२) वैकुण्ठीया=विकुण्ठलोकसम्बन्धिनी । गतिः= प्राप्ति ।

(३) सुसन्नद्धसैन्य =सुसज्जितसैन्य । सैन्य बलम् । (४) निश्चक्राम= निर्ययौ । गगनगति =आकाशगमन । अत्रान्तरे=अस्मिन्नवसरे । **अतीतेति**— त्रिकालज्ञेन भगवता विष्णुनेत्यर्थ ।

वासुदेवो गरुडश्च निपातितः। ततः परं लोकोऽयमावयो: पूजां न करिष्यति। ततस्त्वं द्रुततरं तत्र दारुमयगरुडे (१) सङ्क्रमणं कुरु। अहमपि कौलिकशरीरे प्रवेशं करिष्यामि। येन स शत्रून्व्यापादयति। ततश्च शत्रुवधादावयो(२)र्माहात्म्य वृद्धिः स्यात्। अथ गरुडे तथेति प्रतिपन्ने श्रीभगवान्नारायण-स्तच्छरीरे सङ्क्रमणमकरोत्। ततो भगवन्माहात्म्येन गगनस्थ: स कौलिकः शङ्खचक्रगदाचापचिह्नितः क्षणादेव लीलयेव समस्तानपि प्रधानक्षत्रियान्निस्तेजसश्चकार। ततस्तेन राज्ञा स्वसैन्यपरिवृतेन सङ्ग्रामे जिता निहताश्च ते सर्वेऽपि शत्रव:। जातश्च लोकमध्ये प्रवादो यथानेन विष्णुजामातृप्रभावेण सर्वे शत्रवो निहिता इति। कौलिकोऽपि तान्हतान्दृष्ट्वा (३)प्रमुदितमना गगनादवतीर्णः यावत्, तावद्राजामात्यपौरलो कास्तं नगरवास्तव्यं कौलिकं पश्यन्ति। ततः पृष्टः किमेतत् इति। ततः सोऽपि मूलादारभ्य सर्वं प्राग्वृत्तान्तं न्यवेदयत्। ततश्च कौलिकसाहसानुरञ्जितमनसा शत्रुवधाद (४) वाप्ततेजसा राज्ञा स राजकन्या सकलजनप्रत्यक्षं विवाहविधिना तस्मै समर्पिता, देशश्च प्रदत्तः। कौलिकोऽपि तया सार्धं पञ्चप्रकारं जीवलोकसारं विषयसुखमनुभवन्कालं निनाय। अतस्त्व-च्यते—"सुप्रयुक्तस्य दम्भस्य" इति॥ तच्छ्रुत्वा करटक आह— भद्र! अस्त्येवम्। परं तथापि महन्मे भयम्। यतो बुद्धि-मान्सञ्जीवको रौद्रश्च सिंहः। यद्यपि ते बुद्धिप्रागल्भ्यं तथापि त्वं पिङ्गलकात्तं वियोजयितुमसमर्थ एव। दमनक आह— तः! असमर्थोऽपि समर्थ एव। उक्तं च—

(१) सङ्क्रमणम्=अधिष्ठानम्। (२) माहात्म्यवृद्धि =महिमप्रचार। नगरवास्तव्यम्=नगरवासिनम्। पृष्टः=लोकैरितिशेष। (३) प्रमुदितमना =प्रसन्नहृदय। (४) अवाप्ततेजसा=अवाप्तेन प्राप्तेन तेजसा प्रभावेण। देश =राज्यम्। रौद्र =भयङ्कर। बुद्धिप्रागल्भ्यम=मतिवैभवम।

उपायेन हि यत्कुर्यात्तन्न शक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः॥ २२८॥

करटक आह—कथमेतत्। सोऽब्रवीत्—

## कथा ६।

अस्ति कस्मिंश्चित्प्रदेशे महान्न्यग्रोधपादपः। तत्र वायसदम्पती प्रतिवसतः स्म। अथ तयोः प्रसवकाले वृक्षविवरान्निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ निर्वेदादन्यवृक्षमूलनिवासिनं प्रियसुहृदं शृगालं गत्वोचतुः—भद्र! किमेवंविधे सञ्जात आवयोः कर्तव्यं भवति। एवं तावद्दुष्टात्मा कृष्णसर्पो वृक्षविवरान्निर्गत्यावयोर्बालकान्भक्षयति। तत्कथ्यतां तद्रक्षार्थं कश्चिदुपायः।

यस्य क्षेत्रं नदीतीरे भार्या च परसङ्गता।
ससर्पे च गृहे वासः कथं स्यात्तस्य निर्वृतिः॥ २२९॥

अन्यच्च—

सर्पयुक्ते गृहे वासो मृत्युरेव न संशयः।
यद्ग्रामान्ते वसेत्सर्पस्तस्य स्यात्प्राणसंशयः॥ २३०॥

---

"उपायेने"ति—उपायेन=बुद्धिप्रभावरूपेण साधनेन यत् कुर्यात्=कर्तुं शक्यमित्यर्थ तत् पराक्रमैः बलैः कर्तुं न शक्यम्, काक्या=वायस्या कनकसूत्रेण=सूक्ष्मसुवर्णमयकण्ठभूषणेन उपायरूपेण कृष्णसर्पः निपातितः=हत इत्यर्थ ॥२२८॥

न्यग्रोधपादप=वटवृक्षः। वृक्षविवरात्=तरुकोटरात्। "यस्ये"ति—यस्य नदीतीरे=सरित्तटे=क्षेत्रं=गृहं वर्त्तत इति शेषः। भार्या च परसङ्गता=परपुरुषरता, ससर्पे=सर्पसहिते गृहे वासश्च स्यात् तस्य निर्वृति=सुखं कथं स्यात् न कथमपीति भावः ॥२२९॥

"सर्पयुक्त" इति। सर्पयुक्ते=भुजङ्गवति गृहे वास मृत्युरेव=मरणहेतोः सर्पस्य विद्यमानत्वादित्यर्थ न संशयः=अत्र संशयो नास्तीतिशेषः। यद्ग्रा-

अस्माकमपि तत्र स्थितानां प्रतिदिनं प्राणसंशयः। स आह-नात्र विषये स्वल्पोऽपि विषादः कार्यः। नूनं स लुब्धो नोपायमन्तरेण वध्यः स्यात्।

उपायेन जयो यादृग्रिपोस्तादृङ्न हेतिभिः।
उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते॥ २३१॥

तथा च-

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान्।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटग्रहात्॥ २३२॥

तावूचतुः—कथमेतत्। सोऽब्रवीत्-

## कथा ७।

अस्ति कस्मिंश्चिद्वनप्रदेशे(१)नानाजलचरसनाथं महत्सरः। तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान्व्या-

---

मान्ते=यस्य ग्रामस्य अन्ते सीमाया सर्पो वसेत् तस्य=तस्यापि प्राणसंशय स्यात् ॥२३०॥

"उपायेने"ति—उपायेन=युक्तिप्रयुक्तेन मार्गेण यादृक्=यादृशो यथा वा रिपोः=शत्रोर्जयः=स्ववशीकरणं, हेतिभि=अस्त्रै तादृक्=तथाविधो जयो न भवितुमर्हतीत्यर्थः। उपायज्ञः उपायं=कालानुसारिसाधनप्रकारं जानातीति उपायज्ञो जनः अल्पकायोऽपि=क्षुद्रशरीरोपि अर्थात् बलहीनोऽपि शूरैः=बलवद्भिः शत्रुभिः न=नैव परिभूयते=तिरस्क्रियते ॥२३१॥

"भक्षयित्वे"ति—कश्चिद् बकः=बलाका मत्स्यादी पक्षिविशेषः उत्तमाधममध्यमान् बहून् मत्स्यान्=मीनान् भक्षयित्वा=खादित्वा अति लौल्यात्=अत्यन्तं चापल्यात् (अतिलोभवशादित्यत्र तात्पर्यम्) कर्कटग्रहात्=कर्कटस्य कुलीरकस्य जलजन्तुविशेषस्य ग्रहात्=ग्रहं कृत्वा, ल्यब्लोपे पञ्चमी, मृतः=पञ्चत्वं गतः तेनैव कुलीरकेण मारित इत्यर्थ ॥ २३२ ॥

(१)"नाने"ति-नानाजलचरैः=अनेकविधैर्जलजन्तुभिः,सनाथ=सहितम्। अनेकविध जलजीवभरितमित्यर्थः।

पादयितुमसमर्थः। ततश्च (२)क्षुत्क्षामकण्ठः सरस्तीर उपविष्टो मुक्ताफलप्रकरसदृशैरश्रुप्रवाहैर्धरातलमभिषिञ्चन्रुरोद । एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरमिदमूचे-माम! किमद्य त्वया नाहारावृत्तिरनुष्ठीयते। केवलमश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते। स आह-वत्स! सत्यमुपलक्षितं भवता । मया हि मत्स्यादनं प्रति परमवैराग्यतया साम्प्रतं प्रायोपवेशनं कृतम्, तेनाहं समीपगतानपि मत्स्यान्न भक्षयामि । कुलीरकस्तच्छ्रुत्वा प्राह-माम! किं तद्वैराग्यकारणम्। स प्राह-वत्स! अहमस्मिन्सरसि जातो वृद्धिङ्गतश्च । तन्मयैतच्छ्रुतं यद्द्वादशवार्षिक्यनावृष्टिः सम्पत्स्यते लग्ना। कुलीरक आह-कस्मात्तच्छ्रुतम् । वक आह-दैवज्ञमुखात्। एषः शनैश्चरो हि (क) रोहिणीशकटं भित्त्वा भौमं शुक्रं च प्रयास्यति। उक्तं च वराहमिहिरेण-

यदि भिन्ते सूर्यसुतो रोहिण्याः शकटमिह लोके।
द्वादश वर्षाणि तदा नहि वर्षति वासवो भूमौ ॥ २३२ ॥

---

(२) व्यापादयितुम्=हन्तुम् । क्षुत्क्षामकण्ठ क्षुधया बुभुक्षया क्षाम. कृश कण्ठो गलो यस्य स ।

मुक्तेति-मुक्ताफलाना मौक्तिकाना प्रकार समूह तत्सदृशै अश्रुप्रवाहै।धरातलम्=भूमिभागम्।अभिषिञ्चन्=आर्द्रीकुर्वन्।रुरोद=विललाप।माम=मातुल। आहारवृत्ति =प्राणयात्रा। अनुष्ठीयते=क्रियते।सनिःश्वासेन=ऊर्ध्वोच्छ्वासं मुञ्चतेत्यर्थः।

उपलक्षितम्=ज्ञातम्। प्रायोपवेशनम्=निहारव्रतम्, अनशनमिति यावत्। द्वादशवार्षिकी=द्वादशवर्षव्यापिना। लग्ना=निरन्तरा । दैवज्ञो ज्योतिर्विद्।

शनैश्चर =शनिग्रहः। (क) रोहिणीशकटम्=रोहिणीनामकनक्षत्रस्य शकटाकारं चतुस्तारात्मकं स्थानविशेषम् । भौमम्=मङ्गलम् । शुक्रम्=शुक्राख्यग्रहम्। प्रयास्यति=संयोग विधास्यति । रोहिणीनक्षत्रान्मङ्गले शुक्रे च शनैश्चरस्य गमने अनावृष्टिर्भवतीति शास्त्रकाराणा सिद्धान्तः।

"यदी"ति—सूर्यपुत्र.=शनिनामको ग्रहः यदि रोहिण्या शकटं

प्राजापत्ये शकटे भिन्ने कृत्वैव पातकं वसुधा।
भस्मास्थिशकलकीर्णा कापालिकमिव व्रतं धत्ते ॥ २३४ ॥

तथा च।

रोहिणीशकटमर्कनन्दन-
श्चेद्भिनत्ति रुधिरोऽथवा शशी।
किं वदामि तदनिष्टसागरे
सर्वलोकमुपयाति सङ्क्षयः ॥ २३५ ॥

रोहिणीशकटमध्यसंस्थिते
चन्द्रमस्यशरणीकृता जनाः।
क्वापि यान्ति शिशुपाचिताशनाः
सूर्यतप्तभिदुराम्बुपायिनः ॥ २३६ ॥

---

पूर्वोक्तं, भिन्ते=भित्त्वा याति तदा वासवः=इन्द्र (मेघः) इह लोके=जगति भूमौ=पृथिव्याम् द्वादशवर्षाणि नहि वर्षति। आर्या० ॥ २३३ ॥

"प्राजापत्य" इति। प्राजापत्ये=प्रजापतिदेवताके शकटे=रोहिणीशकटे (रोहिण्याः प्रजापतिर्देवः) भिन्ने=शनिनेतिशेषः वसुधा=भूमिः भस्मास्थिशकलकीर्णा=भस्मभिः भूतिभिः अर्थात् प्राणिदेहोत्थैः, अस्थिशकलैः=अस्थ्ना कीकसाना शकलै खण्डैश्च मृताना दाहादिकर्माभावादितिभाव, कीर्णा=व्याप्ता सती कापालिकम्=कापालिकसम्बन्धिव्रतं=नियमविशेष धत्ते इव=धारयतीवेत्युत्प्रेक्षा। कापालिका भस्मास्थिधारणात्मकं व्रत कुर्वन्तीति लोकशास्त्रप्रसिद्धिः। अनावृष्टौ जायमानाया शस्याद्यभावेन विनाहारं प्राणिनः पञ्चत्वं यास्यन्तीति भाव.। आर्यावृत्तम् ॥ २३४ ॥

"रोहिणी"ति—अर्कनन्दन =शनैश्चर चेत्=यदि रोहिणीशकटं भिनत्ति=तत्स्थानम्प्रति याति तदा मही=पृथिवी रुधिरौघभाक्=रक्तप्रवाहवती जायत इति शेष।किं वदामि=इतोऽधिकं किं भणामि यत् तदनिष्टसागरे=तस्मिन अनिष्टरूपे समुद्रे सङ्क्षय'=प्रलय सर्वलोकमुपयाति=प्राणिमात्रस्य मरणं भवतीत्यर्थ।"रान्नराविह रथोद्धता लगौ" इति लक्षणाद् रथोद्धतावृत्तम्॥२३५॥

"रोहणीति"—चन्द्रमसि=चन्द्रे रोहिणीशकटमध्यसंस्थिते=रोहिणी-

तदेतत्सरः स्वल्पतोयं वर्तते। शीघ्रं शोषं यास्यति। अस्मिञ्शुष्के यैः सहाहं वृद्धिङ्गतः, सदैव क्रीडितश्च, ते सर्वे तोयाभावान्नाशं यास्यन्ति। तत्तेषां वियोगं द्रष्टुमहमसमर्थः। तेनैतत्प्रायोपवेशनं कृतम्। साम्प्रतं सर्वेषां स्वल्पजलाशयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते। केचिच्च मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति। अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति। तेनाहं विशेषाद्रोदिमि यद्बीजशेषमात्रमप्यत्र नोद्धरिष्यति। ततः स तदाकर्ण्यान्येषामपि जलचराणां तत्तस्य वचनं निवेदयामास। अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयस्तमभ्युपेत्य पप्रच्छुः—माम! अस्ति! कश्चिदुपायो येनास्मकं रक्षा भवति। बक आह—'अस्त्यस्य जलाशयस्य नातिदूरे प्रभूतजलसनाथं सरः पद्मिनीखण्डमण्डितं यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेष्यति। तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि। अथ ते तत्र विश्वासमापन्नाः तात! मातुल! भ्रातः! इति ब्रुवाणाः अहं पूर्वमहं पूर्वमिति समन्तात्परितस्थुः। सोऽपि दुष्टाशयः क्रमेण तान्पृष्ठ आरोप्य जलाशयस्य नाति-

---

शक्ट गते सति अशरणीकृतः=निराश्रयीकृता जना =लोका शिशुपाचिताशन = शिशून् स्वबालान् पाचितान् अश्नन्तीत्येवंशील सन्त· स्वशिशुपक्वमासभोजिन इत्यर्थ सूर्यतप्तभिदुराम्बुपायिन =सूर्येण भास्करेण तप्तानि (अत एव) भिदुराणि=विनष्टप्रायाणि यानि अम्बूनि जलानि तानि पिबन्तीति तादृश. क्वापि यान्ति=म्रियन्त इत्यर्थः। वृत्तं पूर्वोक्तम् ॥२३६॥

स्वल्पतोयम्=क्षीणप्रायजलम्।

**भयेति**—भयेन त्रस्तानि मनासि येषा ते। उपाय =रक्षासाधनम्। नातिदूरे=किञ्चिद्दूरे इत्यर्थ। प्रभूतजलसनाथम्=प्रचुरजलोपेतम्। **पद्मिनीति**-पद्मिनीना कमलिनीना खण्डे समूहैर्मण्डित भूषितम्, शोष=शुष्कताम्। परितस्थु =स्थिता अभूवन्।

दूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य तस्यमाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्तासन्देशकैर्मनांसि रञ्जयन्नित्यमेवाहारवृत्तिमकरोत् । अन्यस्मिन्दिने च कुलीरकेणोक्तम् माम ! मया सह ते प्रथमः स्नेहसम्भाषः सञ्जातः । तत्किं मां परित्यज्यान्यान्नयसि । तस्मादद्य मे प्राणत्राणं कुरु । तदाकर्ण्य सोऽपि दुष्टाशयश्चिन्तितवान्—निर्विण्णोऽहं मत्स्यमांसादनेन । तदद्यैनं कुलीरकं (क) व्यञ्जनस्थाने करोमीति विचिन्त्य तं पृष्ठे समारोप्य तां(ख)वध्यशिलामुद्दिश्य प्रस्थितः । कुलीरकोऽपि दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य मत्स्यास्थीनि परिज्ञाय तमपृच्छत्—माम ! कियद्दूरे स जलाशयः । मदीयभारेणातिश्रान्तस्त्वम् । तत्कथय । सोऽपि मन्दधीर्जलचरोऽयमिति मत्वा स्थले न प्रभवतीति सस्मितमिदमाह—कुलीरक ! कुतोऽन्यो जलाशयः । मम प्राणयात्रेयम् । तस्मात्स्मर्यतामात्मनोऽभीष्टदेवता । त्वामप्यस्यां शिलायां निक्षिप्य भक्षयिष्यामि इत्युक्तवति तस्मिन्स्ववदनदंशद्वयेन मृणालनालधवलायां मृदुग्रीवायां गृहीतो मृतश्च । अथ स तां (ग) वकग्रीवां समादाय शनैः शनैस्तज्जलाशयमाससाद । ततः सर्वैरेव जलचरैः पृष्टः—भो ! कुलीरक ! किं निवृत्तस्त्वम् ।

---

मिथ्या=अनृताः । वार्त्ता =वृत्तान्ता । रञ्जयन्=प्रीणयन् । स्नेहसम्भाष = प्रेमालापः । दुष्टाशय =दुर्हृदय । निर्विण्ण =निर्वेदं प्राप्तः विरक्त इत्यर्थः । (क) व्यञ्जनस्थाने=अवदंशस्थाने । (ख) वध्यशिलाम्=यस्याः शिलाया उपरि प्रक्षिप्य वध्यन्ते मत्स्यास्ताम् । अभीष्टदेवता स्मर्यता या तव मरणले जन्मान्तरे साहाय्यं कुर्यादित्यर्थः । स्वेति—स्ववदनस्य मुखस्य दंशदंष्ट्रेति भाव । मृणालनालधवलयाम्=विस नाडीवच्छुभ्रायाम, कोमलामित्यत्र तात्पर्यम् । (ग) वकग्रीवाम्=वकस्य ग्रीवा कन्धराम् ।

स मातुलोऽपि नायातः। तत्किं चिरयति। वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः। एवं तैरभिहिते कुलीरकोऽपि विहस्योवाच—मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः। तन्ममायुः शेषतया तस्य विश्वासघातकस्याभिप्रायं ज्ञात्वा ग्रीवेयमानीता। तदलं सम्भ्रमेण। अधुना सर्वजलचराणां क्षेमं भविष्यति। अतोऽहं ब्रवीमि—"बहून्मत्स्यान्" इति॥ वायस आह—भद्र! तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति। शृगाल आह—गच्छतु भवान्किंचिन्नगरं राजाधिष्ठानम्। तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत्कोटरे प्रक्षिप येन सर्पस्तद्ग्रहणेन वध्यते।

अथ तत्क्षणात्काकः काकी च तदाकर्ण्यात्मेच्छयोत्पतितौ। ततश्च काकी किंचित्सरः प्राप्य यावत्पश्यति, तावत्तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं जलासन्नं न्यस्तकनकसूत्रं मुक्तमुक्ताहारवस्त्राभरणं जलक्रीडां कुरुते। अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे। ततश्च कञ्चुकिनो वर्षधराश्च तन्नीयमानमुपलक्ष्य (१) गृहीतलगुडाः सत्वरमनुययुः। काक्यपि सर्पकोटरे तत्कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता। अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत्कोटरमवलोकयन्ति,

---

सोत्सुकाः=सोत्कण्ठाः। कृतक्षणाः=सावसराः प्रतिपालयन्त इत्यर्थः। मिथ्यावादिना=अनृतभाषिणा। क्षेमम्=कल्याणम्। राजाधिष्ठानम्=राज्ञो गृहम्। कोटरे=वृक्षविले, उत्पतितौ=उड्डीनौ। अन्तःपुरम्=अन्तःपुरस्त्रिय इत्यर्थः। जलासन्नम्=जलस्य समीपम्। अस्य "जलक्रीडां कुरुते" इत्यनेन सम्बन्धः।

न्यस्तेति—न्यस्तं स्थापितं कनकसूत्रं सुवर्णसूत्रं येन तथाभूतम्, अन्तःपुरस्य विशेषणमिदम्। मुक्तेति—मुक्तानि अङ्गेभ्य उन्मुच्य स्थापितानि मुक्ताहारवस्त्राभरणानि येन तत् तथोक्तम्। (१) गृहीतलगुडा =

तावत्कृष्णसर्पः प्रसारितभोगस्तिष्ठति ॥ ततस्तं लगुडप्रहारेण हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः। वायसदम्पती अपि ततः परं सुखेन वसतः। अतोऽहं ब्रवीमि—"उपायेन हि यत्कुर्यात्" इति ॥ तन्न किंचिदिह बुद्धिमतामसाध्यमस्ति। उक्तं च—

यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥२३७॥

करकट आह—कथमेतत्। स आह—

कथा ८

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म। अथासौ (क) वीर्यातिरेकान्नित्यमेवानेकान्मृगशशकादीन्व्यापादयन्नोपरराम। अथान्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयोमिलित्वा तमभ्युपेत्य प्रोचुः—स्वामिन्! किमनेन सकलमृगवधेन नित्यमेव, यतस्तवैकेनापि मृगेण तृप्तिर्भवति तत्क्रियतामस्माभिः सह (ख) समयधर्मः। अद्य प्रभृति तवात्रोपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति। एवं कृते तव तावत्प्राणयात्रा क्लेशं विनापि भविष्यति, अस्माकं च पुनः

---

दण्डपाणय.। कृष्णसर्पः=कालनागः। प्रसारितभोग=प्रसारितो विस्तारितो भोगः शरीरं फणो वा येन सः।

"यस्ये"ति—यस्य=जनस्य बुद्धिः=मति तस्य=तस्यैव बलम्, निर्बुद्धे=बुद्धिशून्यस्य कुतोबलम् मति हीनस्य नैव बलमुपकारि भवतीति भावः। मदोन्मत्त=मदोद्धत' सिंह शशकेन अल्पबलेनापि जन्तुना निपातित=बुद्धिबलेनैव हत इत्यर्थ इति त्वं पश्य=पर्यालोचय इति वाक्यार्थस्य कर्मता ॥ २३७ ॥

(क) वीर्यातिरेकात्=बलाधिक्यात्। नित्यम्=प्रतिदिनम्, व्यापादयन्=मारयन्। न उपरराम=विरामं न भेजे। (ख) समयधर्म=संकेत इत्यर्थ। जातिक्रमेण=जातिक्रममादत्येत्यर्थ। मृग=पशु। भक्षणार्थम्=तवाहारार्थम्।

सर्वोच्छेदनं न स्यात् । तदेष(क)राजधर्मोऽनुष्ठीयताम् । उक्तं च—

शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् ।
रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥२३८॥
विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च ।
प्रयच्छति फलं भूमिररणीव हुताशनम् ॥२३९॥
प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्धनम् ।
पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥२४०॥

---

सर्वोच्छेदनम्=सर्वविनाशः । (क) राजधर्म=राज्ञाकृतः सङ्केत.

"शनै"रिति—य.प्राज्ञ=धीमान् राजा यथाबलम्=बलमनुसृत्य राज्यं रसायनमिव=जीवनवर्धकौषधविशेषमिव शनै शनै=क्रमशः उपभुङ्क्ते=सेवते सः परमाम्=अत्यधिका पुष्टि=राज्यदार्ढ्यं पक्षान्तरे शरीरस्य पोषं व्रजेत्=प्राप्नुयात् ।

अयमाशय—रोगिणोऽग्निबलं वीक्ष्य क्रमशो मात्रावर्धनेन दीयमानं रसायनं महतीं शरीरपुष्टिं जनयति तद्वत् प्रजातोऽल्पमल्पं करं गृहीत्वा क्रियमाणं राज्यमपि राज्ञः स्थिरशासकत्वं सम्पादयते अतो भवता सहसैवास्माकमवसादो न विधेय । ॥ २३८ ॥

"विधिने"ति—रूक्षा=शुष्का अर्थात् कठोराऽपि भूमि=पृथिवी मन्त्रयुक्तेन=उचितयुक्तिसहितेन विधिना=प्रकारेण उपायेनेति यावत् मथिता=विलोडिता सती (हलेनाकृष्टेत्यर्थः) अरणी=अग्निमन्थः हुताशनं वह्निमिव फलं=राज्योपभोगहेतुभूतं धान्यादि प्रयच्छति=ददाति ॥२३९॥

"प्रजाना"मिति—प्रजाना पालनं नृपस्येति शेष शस्यं=प्रशंसनीयम्भवति इहलोके इति शेष । स्वर्गकोशस्य=स्वर्ग एव कोशो धनं तस्य वर्धनं=वृद्धिकरं परलोक इति शेष । पीडनं=पीडाप्रदानमर्थात् प्रजाया एव धर्मनाशाय=धर्मस्य ध्वंसाय भवति तथा पापाय, अयशसे=अपकीर्त्यै च स्थितम्=नियतमेवेति विज्ञेयमित्याशय । तस्मात्त्वमिदं वृथा प्रजापीडनरूपं पाप जहीहीति भाव ॥ २४० ॥

गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः ।
पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥२४१॥
अजामिव प्रजां मोहाद्यो हन्यात्पृथिवीपतिः ।
तस्यैका जायते तृप्तिर्न द्वितीया कथञ्चन ॥२४२॥
फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥२४३॥
नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि ।
आन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥२४४॥

---

"**गोपालेने**"ति--गोपालेन=गा पृथिवीं धेनुश्च पालयतीति गोपालो राजा गोपश्च तेन प्रजाधेनो=प्रजैव धेनु तस्या' सकाशात् वित्तदुग्धम्=वित्त धनमेव दुग्धं पयः शनै शनै ग्राह्यम् । कस्मादुपायाद्धेतोरित्याह-पालनात्=भयादिभ्यो रक्षणात्, पोषणात्=अन्नयवप्रदानादिना पुष्टि-करणाच्च । तस्मात् भूपो न्याय्याम्=न्यायादनपेता युक्तियुक्ता वृत्तिं प्रजा-पालनरूपव्यवहारं समाश्रयेत्=कुर्यादित्यर्थः ॥ २४१ ॥

"**अजामिवे**"ति-यः पृथिवीपतिः=नृप मोहात्=अविवेकात् प्रजामजामिव वर्करीमिव हन्यात्=(घातयेत्) ध्वंसयेत् अपराधाभावे सतीति शेष तस्य=राज्ञ हिंसारसवत एका=एकप्रकारैव तृप्तिः=तात्कालिकी हिंसोत्पन्ना मासाशनमात्रसाध्या जायते, कथञ्चन=कथमपि द्वितीया=अपरा=दुग्धग्रहणादिजन्या धनादिलाभजन्या च न जायते इत्यर्थ. ॥ २४२ ॥

"**फलार्थी**" ति—फलार्थी=राज्योपभोगरूपफलकाम नृपति=राजा यत्नमास्थित=सयत्न सन् दानमानादितोयेन=धनदानमानसत्काररूपादि जलेन लोकान्=प्रजाजनान् पालयेत्=रक्षयेत् । कान् क इव मालाकार इ...नि-यथा मालाकार सयुक्ति जलादिप्रदानेन वृक्षाङ्कुरान् ...यते तद्वत् राजापि दानमानाद्युपायै प्रजा वर्धयेत् नतु क्रूरतया ध्वंसये-...ति भाव ॥ २४३ ॥

"**नृपदीप**"इति । नृपोदीप इवेति—"**उपमितं** व्याघ्रादिभि सामा-

यथा गौर्दुह्यते काले पाल्यते च तथा प्रजाः ।
सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥२४५॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥२४६॥
हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्महीपतेः ॥२४७॥

---

न्याप्रयोगे" ( २ । १ । ५६ ) इत्यनेनोपमितसमास दीपतुल्यो नृप इत्यर्थ आन्तरस्थै=आत्मनि विद्यमानै दीपगर्भस्थितैश्च शुभ्रै=श्वेतै निर्मलैश्च गुणै=दयादाक्षिण्यादिभि. वर्तिभिश्च प्रजाभ्य धनस्नेहम्=धनं स्नेह इव तं तैल-सदृशं धनमित्यर्थ, संहरन्नपि=शोषं नयन्नपि केनचित् जनेन नैव लक्ष्यते=धनं गृह्णन्नैव प्रतीयते ।

अयमाशय —यथा दीपस्तैलवर्तिकया क्रमश. तैलमाददानो न केनाप्यालोच्यते तथा भूपालोऽपि स्वगुणेन प्रजासकाशात्करमाकर्षयन्न केनापि लक्ष्यते ॥ २४४ ॥

"**यथे**"ति–यथा=येन प्रकारेण गौ=धेनुः काले पाल्यते= समये समये यवसादिप्रदानेन रक्ष्यते ( पुन काले ) पुनश्च दुह्यते दोहन-कर्मणि व्यापार्यते अर्थात् ततो दुग्धं गृह्यते लोकैरितिशेष यथा वा लता=वल्ली सिच्यते=पानीयेन प्रपूर्यते पश्चात् पुष्पफलप्रदा=पुष्पाणि फलानि च प्रददातीति पुष्पफलप्रदा सती चीयते च=अर्थात् तत पुष्पाणि फलानि चावचीयन्ते तथा=तद्वत् [राज्ञा] प्रजा पाल्यन्ते, समये सति दुह्यन्ते. सिच्यन्ते चीयन्ते चेति वेदितव्यम् ॥२४५॥

**यथेति**—यथा सूक्ष्मो बीजाङ्कुर प्रयत्नेन=जलकण्टकवाटादियो-जनने अभिरक्षितः=अभित समन्ततो रक्षित सन् काले=स्वावसरे फलप्रदो भवेत् तद्वत् सुरक्षितः=सम्यक् पालितो लोक प्रजारूप ( राज्ञ-कृते) फलप्रदो भवेदित्यर्थ ॥ २४६ ॥

एव रक्षिताभ्य प्रजाभ्या राज्ञो बहु लब्धुं शक्यते इत्याह–"**हिरण्येति**"

लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः।
लोकानां सङ्क्षयाच्चैव क्षयं यान्ति न संशयः ॥२४८॥

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह—अहो सत्यमभिहितं भवद्भिः। परं यदि ममोपविष्टस्यात्र नित्यमेव नैकः (क) श्वापदः समागमिष्यति, तन्नूनं सर्वानपि भक्षयिष्यामि। अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजस्तत्रैव वने निर्भयाः पर्यटन्ति। एकश्च प्रतिदिनं क्रमेण याति। वृद्धो वा, वैराग्ययुक्तो वा, शोकग्रस्तो वा, पुत्रकलत्रनाशभीतो वा तेषां मध्यात्तस्य भोजनार्थं मध्याह्नसमय उपतिष्ठते।

अथ कदाचिज्जातिक्रमाच्छशकस्या(ख)वसरः समायातः। स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य वधोपायं चिन्तयन्वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद्गच्छति तावन्मार्गे गच्छता कूपः संदृष्टः। यावत्(१)कूपोपरि याति तावत्कूपमध्य आत्मनः प्रतिविम्बं ददर्श। दृष्ट्वा च तेन हृदये चिन्तितम्—

---

हिरण्यधान्यरत्नानि=हिरण्यं सुवर्णं, धान्यं=व्रीह्यादि, रत्नं=मणिमाणिक्यादि तानि, विविधानि=नानाप्रकाराणि यानानि=वाहनानि अश्वादीनि तथा अन्यदपि यत्किञ्चिदावश्यकं दधिदुग्धादि धनादि वा तत् सर्वं महीपते प्रजाभ्य एव स्यात्=लभ्येतेत्यर्थः। ततश्च राज्ञः प्रजापालनात्मको धर्मोऽत्यावश्यक इति भावः ॥ २४७ ॥

"लोके"—लोकाना प्रजानामनुग्रहकर्त्तार हितकारिणो नरेश्वरा=राजानो वर्द्धन्ते=वृद्धिभाजो भवन्ति, लोकाना सङ्क्षयात्=नाशात् क्षय=। यान्ति=प्राप्नुवन्ति, न संशय=अत्र सन्देहो नास्तीत्यर्थ। प्रजा एव राजेति भाव.।

(क) श्वापद.=प्राणिविशेष.। (ख) अवसरः=समयः।

(ग) तस्य=भासुरकस्य, वधोपायम्=मृत्युप्रकारम्।

कूपोपरि याति=कूपे दृष्टिं पातयति। प्रतिविम्बम्=छायाविशेषम्।

यद्भव्य उपायोऽस्ति । अहं भासुरकं प्रकोप्य स्वबुद्ध्यास्मिन्कूपे पातयिष्यामि । अथासौ दिनशेषे भासुरकसमीपं प्राप्तः । सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्कणी परिलेलिहद्यचिन्तयत्—अहो ! प्रातराहाराय निःसत्त्वं वनं मया कर्तव्यम् । एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा प्रणम्य तस्याग्रे स्थितः । अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह—रे ! शशकाधम ! एकतस्तावत्त्वं लघुः प्राप्तोऽपरतो वेलातिक्रमेण । तदस्मादपराधात्त्वां निपात्य प्रातः सकलान्यपि मृगकुलान्युच्छेदयिष्यामि । अथ शशकः सविनयं प्रोवाच--स्वामिन् ! नापराधो मम, न च सत्त्वानाम् । तच्छ्रूयतां कारणम् । सिंह आह—सत्वरं निवेदय यावन्मम दंष्ट्रान्तर्गतो न भवान्भविष्यति इति । शशक आह--स्वामिन् ! समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः । ततश्चाहमागच्छन्नन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्याभिहितः—रे ! क्व प्रस्थिता यूयम् । अभीष्टदेवतां स्मरत । ततो मयाभिहितं—वयं स्वामिनो भासुरकसिंहस्य सकाशं आहारार्थं समयधर्मेण गच्छामः । ततस्तेनाभिहितम्—यद्येवं तर्हि मदीयमेतद्वनम् । मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्तितव्यम् । चौररूपी स भासुरकः । अथ यदि सोऽत्र राजा, ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ । येन यः कश्चिदावयोर्मध्यात्प-

---

भव्य =उत्तमः । सृक्कणी=ओष्ठ प्रान्तभागौ । परिलेलिहत्=पुन पुनरास्वादयत् । **नाभ्यस्ताच्छतुः** (पा. ७ । १ । ७८) इति शतुर्नुमभाव । नि सत्त्वम्= निर्जीवम् ।

लघु =क्षुद्रकाय । लघुतरस्य=अतिह्रस्वकायस्य प्रस्तावम्=वारम् । विवरात्=विलात् । विश्वासस्थाने=प्रतिभूरूपत्वेनेत्यर्थः । **चतुर** =चतुरशब्दस्य द्वितीयाबहुवचने रूपम् चतु सङ्ख्यानित्यर्थ ।

राक्रमेण राजा भविष्यति स सर्वानेतान्भक्षयिष्यति इति । ततोऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः । एतद्वेलाव्यतिक्रमकारणम् । तदत्र स्वामी प्रमाणम् । तच्छ्रुत्वा भासुरक आह—भद्र ! यद्येवं तत्सत्वरं दर्शय मे तं चौरसिंहम्, येनाहं मृगकोपं तस्योपरि क्षिप्त्वा स्वस्थो भवामि । उक्तं च—

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां न तं कुर्यात्कथञ्चन ॥२४९॥
यत्र न स्यात्फलं भूरि यत्र च स्यात्पराभवः ।
न तत्र मतिमान्युद्धं समुत्पाद्य समाचरेत् ॥२५०॥

शशक आह—स्वामिन् ! सत्यमिदम् । स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः । परं स दुर्गाश्रय । दुर्गान्निष्क्रम्य वयं तेन विष्कम्भिताः । ततो दुर्गस्थो दुःसाध्यो भवति रिपुः । उक्तञ्च—

न गजानां सहस्रेण न लक्षेण वाजिनाम् ।
यत्कृत्यं साध्यते राज्ञां दुर्गेणैकेन सिद्धयति ॥ २५१ ॥

---

"भूमि"रिति—भूमिः=पृथ्वी, मित्रम्=सुहृद् हिरण्यम्=सुवर्णम्, ( तत् ) विग्रहस्य=सङ्ग्रामस्य फलत्रयम्=एतानि त्रीणि फलानीत्यर्थ । यदि एषा मध्ये एकमपि नास्ति तदा कथञ्चनापि तं= विग्रहं न कुर्यात्=नैवाचरेत् निष्फलत्वादिति भाव ॥२४९॥

'यत्रे'ति—यत्र=युद्धे भूरि=प्रचुरं फलं न स्यात् यत्र च फलापेक्षया पराभव.=पराजय एव स्यात् तत्र=विषये मतिमान= धीमान् लाभालाभविवेकनिपुण पुरुष समुत्पाद्य=पारस्परिकप्रभावैरमु युद्धं न समाचरेत्=नैव कुर्यात् ॥ २५० ॥

भूस्वामिहेतोः=पृथिव्या स्वाम्यर्थम्, परिभवात्=तिरस्कारात । दुर्गाश्रय =दुर्गान्तर्वर्ती । विष्कम्भिताः=प्रतिरुद्धा । दुःसाध्या = अजेया. ।

"ने"ति—गजाना=करिणा सहस्रेण यत् कृत्यं=कार्यं न, तथा

शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः ।
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः ॥ २५२ ॥
पुरा गुरोः समादेशाद्धिरण्यकशिपोर्भयात् ।
शक्रेण विहितं दुर्गं प्रभावाद्विश्वकर्मणः ॥ २५३ ॥
तेनापि च वरो दत्तो यस्य दुर्गं स भूपतिः ।
विजयी स्यात्ततो भूमौ दुर्गाणि स्युः सहस्रशः ॥ २५४ ॥
दंष्ट्राविरहितो नागो मदहीनो यथा गजः ।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ २५५ ॥

तच्छ्रुत्वा भासुरक आह—भद्र ! दुर्गस्थमपि दर्शय तं चौरसिंहं येन व्यापादयामि । उक्तं च—

---

वाजिनाम्=अश्वाना लक्षेण च न साध्यते=साधयितु न शक्यते तत् कार्यं राज्ञामेकेन दुर्गेण सिध्यति ॥२५१ ॥

"**शत**' मिति—एकोऽपि प्रकारस्थः=दुर्गकोटमाश्रित धनुर्धर = धानुष्क शतं=शतसङ्ख्याक योद्धृजनं सन्धत्ते=योधयति तस्मात् नीति शास्त्रविचक्षणा =नीतिशास्त्रनिपुण दुर्ग प्रशंसन्ति=उत्तमं मन्यन्ते इत्यर्थ ॥ २५२ ॥

"**पुरा**"इति । पुरा=पूर्वस्मिन् समये हिरण्यकशिपोर्नाम्नो दैत्यस्य भयात् शक्रेण=इन्द्रेण गुरोः=बृहस्पतेः समादेशात्=निदेशात् विश्व कर्मण =एतन्नाम्नो देवशिल्पिनः प्रभावात्=सामर्थ्यात् चातुर्याद्धेतो दुर्ग विहितम्=रचितम् ॥ २५३ ॥

"**तेनेति**"ति—तेनापि—शक्रेणापि च वर =आशीर्वादरूपो दत्तो भूपतिभ्य इति शेषः यस्य = राज्ञो दुर्ग (वर्त्तते) स भूपती राजा विजयी= जयवान् स्यात् तत =तदनन्तरं भूमौ=पृथिव्या सहस्रशः=असङ्ख्या तानि दुर्गाणि=स्यु =जातानीत्यर्थः ॥ २५४ ॥

"**दंष्ट्रे**"ति—दंष्ट्राविरहित =विषदन्तशून्यो नाग =सर्पः यथा च मदहीन =दानवारिरहितो गजः=हस्ती सर्वेषा गारुडिकहस्तिपक—

जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत् ।
महाबलोपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ २५६ ॥

तथा च—

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ २५७ ॥

अपि च-

उपेक्षितः क्षीणबलोऽपि शत्रुः
प्रमाददोषात्पुरुषैर्मदान्धैः ।
साध्योऽपि भूत्वा प्रथमं ततोऽसा-
वसाध्यतां व्याधिरिव प्रयाति ॥ २५८ ॥

---

प्रभृतीन् विहायान्येषामपि वश्योऽधीनो जायते तथा=तद्वत् दुर्गहीनोनृपोपिऽ शत्रुवश्यो जायते इति सारार्थः ॥ २५५ ॥

"जातमात्र" मिति—यः=पुमान् जातमात्रम्=उत्पन्नमात्रम् शत्रु रोगञ्च प्रशमं=क्षीणं न नयेत्=नैव कुर्यात् स महाबलोऽपि=अतिशूर, संहननाढ्योपि च सन् तेनैव शत्रुणा रोगेण च वृद्धिं प्राप्य=वर्त्तमानेनेति शेष हन्यते=विनाश्यते ॥ २५६ ॥

"उत्तिष्ठमान"स्त्विति—किञ्च पथ्यं हितं आरोग्यञ्च इच्छता=काम यमानेन पुंसेति शेष उत्तिष्ठमान.=वर्धमानः पर=शत्रु न उपेक्ष्य=नैवो पेक्षणार्हः, हि=यतः शिष्टै.=साधुभिः नयशास्त्रनिपुणै वर्त्स्यन्तौ=वृद्धिं यास्यन्तौ, आमय=रोगः, सच शत्रुश्च द्वावप्येतौ समौ=तुल्यौ आम्नातौ= कथितौ । यथाऽल्पस्यापि रोगस्योपेक्षाऽहितकारिणी तथा शत्रोरपीति भाव ॥ २५७ ॥

"उपेक्षित" इति । मदान्धै=गर्वितैः पुरुषै=पुम्भिः प्रमाददोषात ॰ ॰ ॰ ॰ दोषात् उपेक्षितः=कृतोपेक्ष शत्रु क्षीणबलोऽपि=प्रथम वशीकारार्होऽपि भूत्वा तत=उपेक्षोत्तरम् असौ=शत्रुः व्याधिरिव रोग इव असाध्यताम्=प्रतीकारानर्हता, प्रयाति=गच्छति ॥ २५८ ॥

आत्मनः शक्तिमुद्वीक्ष्य मानोत्साहं च यो व्रजेत् ।
बहून्हन्ति स एकोऽपि क्षत्रियान्भार्गवो यथा ॥ २५९ ॥

शशक आह—अस्त्येतत् । तथापि बलवान्स मया दृष्टः तन्न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम् । उक्तं च—

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ २६० ॥
यो बलात्प्रोन्नतं याति निहन्तुं सबलोऽप्यरिम् ।
विमदः स निवर्तेत शीर्णदन्तो गजो यथा ॥ २६१ ॥

भासुरक आह—भो ! किं तवानेन (क) व्यापारेण । दर्शय मे तं दुर्गस्थमपि । अथ शशक आह—यद्येवं तर्ह्यागच्छतु स्वामी । एवमुक्त्वाग्रे व्यवस्थितः । ततश्च तेनागच्छता यः कूपो दृष्टोऽभूत्तमेव कूपमासाद्य भासुरकमाह—स्वामिन् ! कस्ते

---

"आत्मन" इति । य आत्मनः=स्वस्य शक्तिं=सामर्थ्यं उद्वीक्ष्य=पर्यालोच्य मानोत्साहम्=मानरक्षणार्थमुद्योग व्रजेत्=प्राप्नुयात् स एकोऽपि भार्गवो यथा, क्षत्रियान् परशुराम इव बहून्=अनेकान् शत्रून् हन्ति=व्यापादयते । अत्रोपमा ॥ २५९ ॥

'अविदित्वे' ति—आत्मनः=स्वस्य परस्य=शत्रोश्च शक्तिम्=सामर्थ्यम् अविदित्वा=अज्ञात्वा समुत्सुक=जयोत्कण्ठावान् अभिमुख=शत्रोरभिमुख सन् गच्छन् वह्नौ=अग्नौ पतङ्गवत्=शलभावत् नाशम्=विध्वंसं याति=प्राप्नोति । स्वबलेन सह शत्रोर्बलं तोलयित्वैव युद्धार्थं गन्तव्यमिति भाव ॥ २६० ॥

"य" इति । य पुमान् राजादि सबलोऽपि=सेनाद्युपकरणोपेतोऽपि बलात् प्रोन्नतम्=स्वापेक्षया बलोद्धतं रिपुम्=शत्रुं निहन्तुम्=घातयितुं याति नः विमद=विगर्वःसन् शीर्णदन्त=भग्नदन्त गजो यथा=हस्तीव निवर्त्तेत=जयमप्राप्यैव पलायत इति भाव ॥ २६१ ॥

(क) व्यापारेण=मन्त्रणारपेण ।

(१)प्रतापं सोढुं समर्थः। त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्व दुर्गम्। तदागच्छ येन दर्शयामि' इति। भासुरक आह—दर्शय मे दुर्गम्। तदनु दर्शितस्तेन कूपः। ततः सोऽपि मूर्खः सिंहः कूपमध्य (२) आत्मप्रतिविम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच। ततः प्रतिशब्देन कूपमध्याद्द्विगुणतरो नाद समुत्थितः। अथ तेन तं शत्रुं मत्वात्मानं, तस्योपरि प्रक्षिप्य प्राणाः परित्यक्ताः। शशकोऽपि हृष्टमनाः सर्वमृगानानन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म। अतोऽहं ब्रवीमि—"यस्य बुद्धिर्बलं तस्य" इति॥ तद्यदि भवान्कथयति, तत्तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेण मैत्रीभेदं करोमि। करटक आह—भद्र! यद्येवं तर्हि गच्छ। (३) शिवास्ते पन्थानः सन्तु। यथाभिप्रेतमनुष्ठीयताम्।

अथ दमनकः सञ्जीवकवियुक्तं पिङ्गलकमवलोक्य तत्रान्तरे प्रणम्याग्रे समुपविष्टः। पिङ्गलकोऽपि तमाह—भद्र! किं चिराद्दृष्टः। दमनक आह—न किंचिद्देवपादानामस्माभिः प्रयोजनम्, तेनाहं नागच्छामि। तथापि राजप्रयोजनविनाशमवलोक्य सन्दह्यमानहृदयो व्याकुलतया स्वयमेवाभ्यागतो वक्तुम्। उक्तं च-

प्रियं वा यदि वा द्वेष्यं शुभं वा यदि वाऽशुभम्।
अपृष्टोऽपि हितं वदयेद्यस्य नेच्छेत्पराभवम्॥ २८२॥

---

(१)प्रतापम्=तेज। (२) आत्मप्रतिविम्बम्=आत्मन प्रतिच्छायम्। प्रतिशब्देन=प्रतिध्वनिना। (३) शिवा =भद्रपदा ते=तव। पन्थान =मार्गा। मार्गे ते विघ्नो माभूदित्याशी। सञ्जीवकवियुक्तम्=सञ्जीवकविहीनम्। तत्रान्तरे=तस्मिन्नवसरे। राजप्रयोजनविनाशम्=राजकार्यध्वंसम्।

"प्रिय"मिति। य यस्य=यस्य कस्यापि स्वामिनो मित्रस्य वा पराभवम्=तिरस्कार पराजयं वा नेच्छेत्=नैव कामयते स अपृष्टोऽपि अजिज्ञासितोऽपि तस्य राजादे प्रियं वा=इष्टं वा, यदि वा द्वेष्यम्=अनिष्टं,

अथ तस्य साभिप्रायं वचनमाकर्ण्य पिङ्गलक आह—किं वक्तुमना भवान्। तत्कथ्यतां यत्कथनीयमस्ति। स प्राह—देव! संजीवको युष्मत्पादानामुपरि* द्रोहबुद्धिरिति। विश्वासगतस्य मम विजन इदमाह—भो! दमनक! दृष्टा मयास्य पिङ्गलकस्य (१) सारासारता। तदहमेनं हत्वा सकलमृगाधिपत्यं (२) त्वत्साचिव्यपदवीसमन्वितं करिष्यामि। पिङ्गलकोऽपि तद्वज्रसारप्रहारसदृशं दारुणं वचः समाकर्ण्य मोहमुपगतो न किञ्चिदप्युक्तवान्। दमनकोऽपि तस्य तमाकारमालोक्य चिन्तितवान्—अयं तावत्सञ्जीवकनिबद्धरागः, तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यति इति। उक्तं च—

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यते ॥२६३॥

---

शुभं वा यदि वा ऽशुभं स्यात्स्वोक्तं (तथापि) हितम्=भावि हितरूपं वदेत्=कथयेदेवेत्यर्थः। 'वद' धातुर्दैवादिकः। विधिलिङि रूपम् ॥२६२॥

*द्रोहबुद्धिः=अनिष्टचिन्तकः। विश्वासगतस्य=विश्वस्तस्य (१) सारासारता=बलाऽबलभावः। (२) त्वत्साचिव्येति—तव साचिव्यपदवी अमात्याधिकारः तत्समन्वितं=तत्सहितमित्यर्थः। तद्वज्रेति—वज्रेण अशनिना सारः कठिनो यः प्रहारः आघातः तत्सदृशं तत्तुल्यमित्यर्थः।

सञ्जीवकेति—सञ्जीवके निबद्धो दृढो रागः प्रेमा यस्य सः। एकमिति—यदा भूमिपतिः=राजा एकं सचिवम्=अमात्यं राज्ये=राष्ट्रे प्रमाणं=सकलकार्याऽकार्यव्यवस्थापने स्वतन्त्रं करोति=अर्थादेकस्मिन्नेवामात्ये सर्वराज्यभारं स्थापयति तदा मोहात्=प्रमादात् तं=मन्त्रिणं मदः=गर्वः श्रयते=प्राप्तो भवति अर्थात् अहमेव सर्वेषामुपरि सर्वाधिकारवानित्येव गर्वपूर्णो जायते। सच सचिवः मदात्=तद्रूपात् गर्वात् दास्येन=दासभावेन निर्विद्यते=निर्वेदं प्राप्नोति, अहं सर्वस्य स्वामी सन्नपि अस्य राज्ञो दासो-

तत्किमत्र युक्तम् इति । पिङ्गलकोऽपि चेतनां समासाद्य कथमपि तमाह—संजीवकस्तावत्प्राणसमो भृत्यः । स कथं ममोपरि द्रोहबुद्धिं करोति । दमनक आह—देव ! भृत्यो भृत्य (a) इत्यनैकान्तिकमेतत् । उक्तं च—

उक्तं च—

न सोऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम् ।
अशक्ता एव सर्वत्र नरेन्द्रं पर्युपासते ॥ २६४ ॥

पिङ्गलक आह—भद्र ! तथापि मम तस्योपरि (b) चित्तवृत्तिर्न विकृतिं याति । अथवा साध्विदमुच्यते—

अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ॥ २६५ ॥

---

ऽस्मीति स्वावज्ञा भावयतीत्यर्थ । निर्विण्णस्य=निर्वेदं प्राप्तस्य तस्य सचिवस्य हृदये=मनसि स्वतन्त्रस्पृहा=स्वाधीनताया इच्छा पद=स्थान करोति, कथमहं सर्वथा स्वतन्त्रः स्यामितीच्छायुक्तो भवतीति भाव , तत =स्वातन्त्र्यस्पृहया स नृपते =राज्ञ प्राणेषु=जीवनविषये अभिद्रुह्यते=द्रोहमाचरति, राज्ञो विनाशाय यतत इत्यर्थ । वस्तुतस्तु "प्राणानभिद्रुह्यते" इति युक्त पाठ "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" "क्रुधद्रुहोरुपसृष्टयो कर्म" (१।४।३२) इति कर्मसञ्ज्ञाविधानात् । अथवास्तु विवक्षाधीना सप्तमी । अत्रात्मनेपदं चिन्त्यमित्येके ॥२६३॥

(a) अनैकान्तिकम्=अनियतम् ।

**नेति**—यो राज्ञा श्रियं=सम्पत्तिं, न कामयते=नैव वाञ्छति सः=तादृशः पुरुषो नास्ति सर्वोऽपि जनो राज्य श्रिया कामनावानित्यर्थ यत सर्वत्र=देशे काले च अशक्ता =असमर्थाः निर्धना दुर्बला एव नरेन्द्र= राजान पर्युपासते= सेवन्त इत्यर्थः ॥ २६४ ॥

(b) चित्तवृत्ति =मन सङ्कल्पः । विकृतिम्=विकारम् ।

**अनेकेति**—यः प्रियः=प्रीतिपात्रं (सः) व्यलीकानि=अहितानि कुर्वन्नपि=विद्यमानोऽपि प्रिय. एव=स्वाभाविकप्रेमास्पदमेव । एतदेव दृष्टान्तेनोपपादयति—अनेकदोषदुष्टेऽपि=अनेकैर्दोषैराक्रान्तोऽपि कायः=देह कस्य

दमनक आह—अत एवायं दोषः । उक्तं च—

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥ २६६ ॥

अपरं केन गुणविशेषेण स्वामी सञ्जीवकं निर्गुणकमपि निकटे धारयति । अथ देव ! यद्येवं चिन्तयसि (c) महाकायोऽयम् । अनेन रिपून्व्यापादयिष्यामि । तदस्मान्न सिध्यति, यतोऽयं (d) शष्पभोजी । देवपादानां पुनः शत्रवो मांसाशिनः । तद्रिपुसाधनमस्य साहाय्येन न भवति । तस्मादेनं (e) दूषयित्वा हन्यताम् इति । पिङ्गलक आह—

उक्तो भवति यः पूर्वं गुणवानिति संसदि ।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥ २६७ ॥

अन्यच्च--मयास्य तव वचनेनाभयप्रदानं दत्तम् । तत्कथं

---

(जनस्य) न वल्लभ =प्रियो न भवति सर्वस्यैव प्रियो भवतीति भावः ॥२६५॥

यस्मिन्निति—पार्थिव =राजा यस्मिन्नेव भृत्ये अधिकम्=अत्यन्तं चक्षुरारोपयति=प्रिया दृष्टि निपातयते स॰ अकुलीन =नीच कुलीनः=उत्तमो वा स्यात् सः= स एव श्रिय =राज्यसम्पत्ते॰ भाजनं=पात्रं भवतीति शेषः, राजानुग्रहपात्रमेव श्रिया पात्रं स्यादिति भावः ॥ २६६ ॥

( c ) महाकाय =बृहच्छरीर । ( d ) शष्पभोजी=तृणादी । ( e ) अपराधिनं कृत्वा ।

उक्त इति । य =य कोऽपि मानव संसदि=सभाया गुणवान्=अयं साधुगुणैः सम्पन्न इत्युक्त कथितो भवति, प्रतिज्ञाभङ्गभीरुणा=प्रतिज्ञाया पूर्वं गुणकथनवाक्यस्य यो भङ्गस्त्रुटिः ततो भीरुणा=मिथ्यावादित्वभगवतेत्यर्थ तस्य=गुणित्वेनोक्तस्य दोषः=अपराधो न वक्तव्य –नैव कथनीय अर्थात् अय निर्गुण इति पुनर्न गदनीय , एव कृते सति वक्तुर्वचासि कोऽपि विश्वास न करोतीति भावः ॥२६७॥

अभयप्रदानम्=त्वा न हनिष्यामीति वचनदानम् ।

स्वयमेव (ख) व्यापादयामि। सर्वथा सञ्जीवकोऽयं सुहृदस्माकम्। न तं प्रति कश्चिन्मन्युरिति। उक्तं च—

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्॥ २६८॥

आदौ न वा प्रणयिनां प्रणयो विधेयो
दत्तोऽथवा प्रतिदिनं परिपोषणीयः।
उत्क्षिप्य यत्क्षिपति तत्प्रकरोति लज्जां
भूमौ स्थितस्य पतनाद्भयमेव नास्ति॥ २६९॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते॥ २७०॥

---

(ख) व्यापादयामि=हन्मि। मन्युः=क्रोध। उक्तञ्च—प्रजापतिना देवान् प्रतीत्यर्थ।

"इत" इति। स दैत्य=तारकासुर इतः=मत्त प्राप्तश्री=प्राप्ता श्रीस्त्रैलोक्यराज्यं येन स तादृश अतो हेतो इत एव=मत्त एव क्षयं=विनाशं न अर्हति। तथाहि—विषवृक्ष अपि स्वयमात्मना छेत्तुम्=विध्वंसयितुम् असाम्प्रतम्=नैव योग्यो भवति। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमर। अत्र प्राप्तश्रियो दैत्यस्य मत्त एव विनाशानर्हता, स्वत संवर्धितविषवृक्षस्य छेदानर्हता चेत्यनयोर्द्वयोर्बिम्बप्रतिबिम्बभावापन्नत्वाद् दृष्टान्तालङ्कारः। एतद्विषये बहुवक्तव्यमस्माभि स्थलान्तरे प्रोक्तम्॥२६८॥

आदाविति—आदौ प्रथममेव प्रणयिनाम्=प्रेमभाजा प्रणय=प्रीतिर्नविधेय=नैव कर्तव्य, अथवा=यदि दत्त=प्रणय प्रीतिकरे समर्पित (तर्हि) प्रतिदिनम्=प्रतिवासरमुत्तरोत्तरं परिपोषणीय=पुष्टिना नेतव्यो वर्द्धनीय इत्यर्थ। उत्क्षिप्य=उत्थाप्य यत् क्षिपति=पुनरध पातयति तत् लज्जाम्= [illegible] प्रकरोति=प्रकर्षेण वितत्ते, परन्तु भूमौ=पृथिव्या स्थितस्य जनस्य [illegible] =पाताद् भयमेव नास्ति। ऐश्वर्यं दत्त्वा पश्चादध पातनापेक्षया प्रथम- [illegible] ऐश्वर्यस्य [illegible] प्रदानमेव श्रेष्ठमिति भाव॥२६९॥

उपकारिष्विति। य=योजन उपकारिषु=उपकारपरायणेषु साधु= श्रेष्ठव्यवहारकर तस्य साधुत्वे=सद्व्यवहारकर्तृत्वे को गुण अर्थात् न उप

तद्द्रोहबुद्धेरपि मयास्य न विरुद्धमाचरणीयम्। दमनक आह–स्वामिन्! नैष राजधर्मो यद्द्रोहबुद्धिरपि क्षम्यते। उक्तं च––

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम्।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ २७१ ॥

अपरं त्वयास्य सखित्वात्सर्वोऽपि राजधर्मः परित्यक्तः। (ग) राजधर्माभावात्सर्वोऽपि परिजनो (घ) विरक्तिं गतः। यः सञ्जीवकः शष्पभोजी, भवान्मांसादः, तव प्रकृतयश्च। यत्तवा (ङ) वध्यव्यवसायबाह्यं कुतस्तासां मांसाशनम्। (च) यद्रहितास्तास्त्वां त्यक्त्वा यास्यन्ति। ततोऽपि त्वं विनष्ट एव। अस्य सङ्गत्या पुनस्ते न कदाचिदाखेटके मतिर्भविष्यति। उक्तं च––

यादृशैः सेव्यते भृत्यैर्यादृशांश्चोपसेवते।
कदाचिन्नात्र संदेहस्तादृग्भवति पूरुषः॥ २७२ ॥

---

कार ? (न कोऽपीत्यर्थ ) यो जन अपकारिषु=अपकारकर्त्तृषु साधु =उपकारपर स एव सद्भि =महापुरुषै साधुरुच्यते ॥२७०॥

"तुल्यार्थं"मिति। य तुल्यार्थम्=तुल्योऽर्थ प्रयोजनं यस्य स तुल्यार्थस्त राज्यग्रहेणेच्छुकमिति भाव, तुल्यसामर्थ्यम्=समबलम् मर्मज्ञम्=रन्ध्रज्ञम्, व्यवसायिनम्=उद्यमिनम् तथा अर्धराज्यहरम्=राजगुणयोगेन राज्यार्धभागिनमिव वर्त्तमानं भृत्यं न हन्यात्=नैव घातयेत् स (स्वयमेव) तेन भृत्येन हन्यते=वध्यते ॥२७१॥

(ग) राजधर्म =दण्डादिक। (घ) विरक्तिम्=स्वाऽधिकारपालने औदासीन्यम्। (ङ) अवध्यव्यवसायात्=अवध्यव्यवसायोऽसिंहाचार तस्माद् बाह्यो बहिर्भूतस्तमित्यर्थ। (च) यद्रहिता =येन मांसेन रहिता शून्या। ता = प्रकृतयोऽमात्यादयो भृत्या। त्वा त्यक्त्वा यास्यन्ति=अन्य राजानमाश्रयिष्यन्ते। त्वं विनष्ट इति––एव प्रकृतिविनाशे राजविनाशोऽवश्यम्भावीत्यर्थ ॥ तासाम्=मांसभोजिप्रकृतीनाम् ॥ प्रकृतयोऽमात्यप्रभृतिवर्ग। अस्य=सञ्जीवकस्य। सङ्गत्या=संसर्गकरणेन। ते=तव। आखेटके=मृगयायाम्।

यादृशैरिति। यादृशै =यादृग्गुणकैः भृत्यै =अनुचरै सेव्यते=

तथा च ।

सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥ २७३ ॥

तथा च—

असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥ २७४ ॥

अतएव सन्तो नीचसङ्गं वर्जयन्ति । उक्तं च—

---

राजादि' स्वामीतिशेष यादृशाश्च जनान् राजा उपसेवते=आश्रयते, अत्र कदाचिदपि न सन्देह=संशयो नास्ति, यत्—पूरुष=राजादि तादृक्= तादृग्गुणवान् तत् सदृशस्वभावो भवती त्यर्थ. ॥२७२॥

**सन्तप्तायसीति**—सन्तप्ते सम्यक् तप्ते अयसि लौहे संस्थितस्य= पतितस्य पयस=पानीयस्य नामापि=नाममात्रमपि न ज्ञायते=नैवावुध्यते अत्र नामपदं रूपोपलक्षकं पयसो रूपमात्रमपि ( किञ्चिद्रूपमपि ) ज्ञातुं न शक्यते, द्रागेव तस्य शोषादिति भाव । तदेव जलं नलिनीपत्रस्थितं=कम- लिनीदलपतितं मुक्ताकारतया=मौक्तिकरूपेण राजते=शोभते भाती त्यर्थ । स्वातौ=स्वातिनामके नक्षत्रे तत्=पय सागरशुक्तिमध्यपतित=सागरे समुद्रे या शुक्तिर्मुक्तास्फोट तस्य कुक्षिपतितमभ्यन्तरभागनिविष्ट मौक्तिकं= मुक्ता जायते=भवति–( एवं दृश्यमाने ) संवासत=एकत्रावस्थानात् संस- र्गहेतोरित्यर्थ. प्रायेण=बाहुल्येन **अधम०**=अधमो निकृष्ट, मध्यम= निकृष्टोत्तमयोरन्तरालवर्ती, उत्तम=मुख्य गुण जायते, संसर्ग एवैतादृश- रिवर्तनहेतु तिभाव । शार्दूलविक्रीडितम् ॥ २७३ ॥

**"असता"मिति**—असता=दुर्जनाना सङ्गदोषेण=मिलनात्मकेन पेण साधव=महात्मनोऽपि विक्रियाम्=विकारं साधुतावस्थाया निगर्त न्ति=प्राप्नुवन्ति । तथाहि–भीष्म=शान्तनव दुर्योधनप्रसङ्गेन=दुर्योधन- सम्बन्धेन गोहरणे=उत्तरगृहे गवा हरणे गत=प्रवृत्त ॥२७४॥

न ह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः ।
मत्कुणस्य च दोषेण हता मन्दविसर्पिणी ॥ २७५ ॥

पिङ्गलक आह— कथमेतत् । सोऽब्रवीत्—

## कथा ६ ।

अस्ति कस्यचिन्महीपतेः कस्मिंश्चित्स्थाने मनोरमं शयनस्थानम् । तत्र (क) शुक्लतरपटयुगलमध्यसंस्थिता मन्दविसर्पिणी नाम श्वेता यूका प्रतिवसति स्म । सा च तस्य (ख) महीपते रक्तमास्वादयन्ती सुखेन कालं (ग) नयमाना तिष्ठति । (घ) अन्येद्युश्च तत्र शयने क्वचिद्भ्राम्यन्नग्निमुखो नाम मत्कुणः समायातः । अथ तं दृष्ट्वा सा विषण्णवदना प्रोवाच—भो ! अग्निमुख ! कुतस्त्वमत्रानुचितस्थाने समायातः । तद्यावन्न कश्चिद्वेत्ति तावच्छीघ्रं गम्यताम् इति । स आह—भगवति ! गृहागतस्यासाधोरपि नैतद्युज्यते वक्तुम् । उक्तं च—

एह्यागच्छ समाश्वसासनमिदं कस्माच्चिराद् दृश्यसे
का वार्ता न्वतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात् ।
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्तैर्लघुः स्वर्गदः ॥ २७६ ॥

---

"नही ति—अविज्ञातशीलस्य=न विज्ञातमधिगतं शीलं स्वभावो यस्य तस्या ज्ञातचरित्रस्य जनस्येति शेष, प्रतिश्रयः=आश्रयो वासो वा नहि=नैव प्रदातव्य =देय । तथाहि—मत्कुणस्य=खट्वामलस्य रुधिरपायिनो जन्तुविशेषस्य दोषेण=अपराधेन मन्दविसर्पिणी=एतन्नाम्ना यूका=लिक्षाख्यजन्तुभेदस्य योत्तरावस्था सा "यूका" पदेनोच्यते । हता=मारिता ॥ २७५ ॥

(क) शुक्लतरेति—शुक्लतरमतिश्वेत यत्पटयुगलं वस्त्रद्वन्द्वं तस्य मध्ये संस्थिता । (ख) महीपते रक्तम्=राज्ञोरुधिरम् । (ग) नयमाना= गमयन्ती । (घ) अन्येद्युः=अपरस्मिन्दिवसे । निपातनात्साधुः ।

"एही"ति-एहि आगच्छ, समाश्वस=आश्वस्तो भव चिरेणेत्यर्थ,

अपरं मयानेकमानुषाणामनेकविधानि रुधिराण्यास्वादिता-न्याहारदोषात्, (घ) कटुतिक्तकषायाम्लरसास्वादानि न च मया कदाचिन्मधुररक्तं समास्वादितम्। तद्यदि त्वं प्रसादं करोषि, तदस्य (ङ) नृपतेर्विविधव्यञ्जनान्नपानचोष्यलेह्य-स्वाद्वाहारवशादस्य शरीरे यन्मिष्टं रक्तं सञ्जातम्, तदास्वाद नेन सौख्यं सम्पादयामि जिह्वायाः इति। उक्तं च—

रङ्कस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम्।
तन्मात्रं च स्मृतं सारं यदर्थं यतते जनः॥ २७७॥

---

इदमासनं गृहाणेतिशेषः, कस्माद्धेतो चिरात् दृश्यसे=विलोक्यसे, का वार्त्ता=प्रवृत्तिः का दशास्ति तवेत्यर्थ, नु=निश्चयेन अतिदुर्बलोऽसि= अत्यन्तं क्षीणतनुरसि संवृत्त, ते=तव दर्शनात्=विलोकनात् प्रीतोऽस्मि= अहं प्रसन्नोऽस्मि, एवम्=उक्तप्रकारेण नीचजनेऽपि=अन्त्यजादावपि गृहं प्राप्तेऽऽभ्यागते सति सताम्=साधूना सर्वदा युज्यते=अनुष्ठेयं भवति अयम्=उक्तरूपः प्रश्नः आसनादिप्रदानात्मक स्मार्त्तैः स्मृतिकारै निर्गदित= कथित' गृहमेधिनाम्=गृहस्थाना धर्म लघु=क्षिप्रमेव स्वर्गद =स्वर्गप्रदोऽस्ति। गृहागतस्य कृते एवविध सत्कारोऽवश्यविधातव्य इति भाव, शार्दूलवि-क्रीडितम्। अत्र "समाश्वस" इत्यय प्रयोग' कथं साधुर्यावता "रुदादिभ्य सार्वधातुके" (७।२।७६) इत्यनेन वलादेः सार्वधातुकस्य इटि सति "समा-श्वसिहि" इति प्रयोगेण भाव्यम् । प्रमाद एवा यमित्येके। परंतु-आग-मशास्त्रस्याऽनित्यत्वमाश्रित्य समादधते॥ २७६॥

(घ) कटुतिक्तेति—कटुतिक्ताम्लरसस्वादो येषा तानि। (ङ) [illegible]वि[illegible]नि नानाप्रकाराणि यानि व्यञ्जनानि तद्विशिष्टं यदन्नपानं तथा [illegible] लेह्य स्वादुश्चासावाहारोऽभ्यवहरणं तद्वशात् तद्वेतोः।

'रङ्कस्ये'ति। रङ्कस्य=निर्धनस्य कृपणस्य वा, वा=अथवा नृपतेः=राज्ञो [illegible]जिह्वासौख्य[illegible]=रसनास्वादजनिना तृप्तिः समम्=तुल्यमेव स्मृतम=कथितम्, [illegible] लोक यदर्थम्=यत्कृते यतते=प्रयत्नं विधत्ते तन्मात्रम=तावन्मात्र तद्- [illegible] वा (जगति) सारम्=उत्कृष्टं स्मृतम्। कटु मधुरं तिक्त रसद्वारा [illegible]

यद्येवं न भवल्लोके कर्म जिह्वाप्रतुष्टिदम्।
तन्न भृत्यो भवेत्कश्चित्कस्यचिद्वशगोऽथवा॥ २७८॥
यदसत्यं वदेन्मर्त्यो यद्वाऽसेव्यं च सेवते।
यद्गच्छति विदेशं च तत्सर्वमुदरार्थतः॥२७९॥

तन्मया (क) गृहागतेन बुभुक्षया पीड्यमानेन त्वत्सकाशाद्भोजनमर्थनीयम्, तन्न त्वयैकाकिन्यास्य भूपते रक्तभोजनं कर्तुं युज्यते। तच्छ्रुत्वा मन्दविसर्पिण्याह—भो मत्कुण! अहमस्य नृपतेर्निद्रावशं गतस्य रक्तमास्वादयामि। पुनस्त्वमग्निमुखश्चपलश्च। तद्यदि मया सह रक्तपानं करोषि तत्तिष्ठ। अभीष्टतरं रक्तमास्वादय। सोऽब्रवीत्-भगवति! एवं करिष्यामि। यावत्त्वं नास्वादयासि प्रथमं नृपरक्तम् तावन्मम (ख) देव-

णामे समामेव तृप्तिं जनयति, यद्यपीदमेव तथ्यमाभाति तथापि रसनातुष्टिरेव भिन्नभिन्नरुचिहेतु साररूपतया च भाति सैव च मया सम्पाद्येति भाव॥ २७७॥

उक्तमर्थमुपपादयति "यदी"ति द्वाभ्याम्-यदि लोके=जगति जिह्वाप्रतुष्टिदम्=जिह्वाया रसनाया. प्रकर्षेण या तुष्टिः प्रसन्नता तस्या अर्थात् रसनासन्तोषहेतुभूतं कर्म न=नैव भवेत्=स्यात्, तत्=तदा कश्चित्=कोऽपि प्राणी कस्यचित्=कस्याप्यन्यस्य राजादेः किङ्कर=दासोऽधीनो वा न भवेत्। सर्वोऽपि जन्तुर्जिह्वातोषायैव परस्य वशता गतो वर्त्तत इति भाव॥ २७८॥

"यदि"ति-मर्त्य=मनुष्यः यत् असत्यं=मिथ्या वदेत्=वदति यद्वा असेव्यं=सेवा नर्ह नीचं जनमपि सेवते=भजते यच्च विदेशम्=परदेश गच्छति तत्सर्वम् उदरार्थत=उदरपोषणार्थमेव भवतीत्यर्थ। अन्यथाऽसत्यादिकं कथमपि नाश्रयेदिति भाव॥ २७९॥

(क) गृहागतेनगृह प्राप्तेन। "द्वितीयाश्रितातीत"-(२।१।२४) इत्यनेन द्वितीयातत्पुरुष। बुभुक्षया=भोक्तुमिच्छया क्षुधयेत्यर्थः। अर्थनीयम्=याचनीयम्। (ख) देवगुरुकृतः=देवगुरोः सम्बन्धी अर्थात् देवान् गुरुं

गुरुकृतः शपथः स्यात् यदि तदास्वादयामि। एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः। अथासौ मत्कुणो (ग) जिह्वालौल्यप्रकृष्टौत्सुक्याज्जाग्रतमपि तं महीपतिमदशत्। अथवा साध्विदमुच्यते—

स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ २८० ॥
यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्तुमन्यथा ॥ २८१ ॥

अथासौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेवोत्थितः—अहो! ज्ञायतामत्र (घ) प्रच्छादनपटे मत्कुणो यूका वा नूनं तिष्ठति, येनाहं दष्टः इति। अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्मदृष्ट्या (ङ) वीक्षाञ्चक्रुः। अत्रान्तरे स मत्कुणश्चापल्यात्खट्वान्तं

---

श्चोद्दिश्य कृत। (ग) जिह्वा लौल्येति—जिह्वाया रसनाया लौल्य चापल्यं तस्मात् यत् प्रकृष्टं महत् औत्सुक्यमुत्कण्ठा तस्मादित्यर्थ।

"स्वभाव" इति। उपदेशेन=शिक्षया स्वभावः=प्राक्तनः संस्कारः प्रकृतिपदवाच्य अन्यथाकर्त्तुम्=परिणमयितुं न शक्यते=(परावर्त्तयितुं) योग्यो न भवति। तथाचात्र दृष्टान्त—"सुतप्त" मिति—पानीयं=जलं सुतप्तं=सम्यगग्निना तापितमुष्णीकृतमपि पुन शीतताम्=शैत्य गच्छति=भजते "शीतस्पर्शवत्य आपः" इत्युक्ते शीतला हि प्रकृतिरपामिति यत र्थ ॥ २८० ॥

"यदि" इति। यदि=चेत् वह्नि=अग्नि शीतल=शीतस्पर्शः, शीतांशु=चन्द्रमाः दहनात्मक=वह्निस्वरूप अर्थात् उष्णप्रकृति स्यात् त। ि—अत्र=इह लोके मर्त्यानां=मरणधर्माणा स्वभावः=प्रकृतिः अन्यथा कर्त्तुं न शक्यते ॥ २८१ ॥

(घ) प्रच्छादनपटे=आस्तरणवाससि। (ङ) वीक्षाञ्चक्रु= पर्यालोचिरे।

प्रविष्टः। सा मन्दविसर्पिण्यपि वस्त्रसंध्यन्तर्गता तैर्दष्टा, व्यापादिता च। अतोऽहं ब्रवीमि—"न ह्यविज्ञातशीलस्य" इति एवं ज्ञात्वा त्वयैष वध्यः। नो चेत्त्वां व्यापादयिष्यति। उक्तं च—

त्यक्ताश्चाभ्यन्तरा येन बाह्याश्चाभ्यन्तरीकृताः।
स एव मृत्युमाप्नोति यथा राजा ककुद्द्रुमः॥ २८२॥

पिङ्गलक आह—कथमेतत्। सोऽब्रवीत्—

## कथा १०।

कस्मिंश्चिद्वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसतिस्म। स कदाचित् (क) क्षुधाविष्टो जिह्वालौल्यान्नगरान्तरे प्रविष्टः। अथ तं (ख) नगरवासिनः सारमेया अवलोक्य सर्वतः शब्दायमानाः परिधाव्य तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः। सोऽपि तैर्भक्ष्यमाणः प्राणभयात्प्रत्यासन्नरजकगृहं प्रविष्टः। तत्र च नीलीरसपरिपूर्णमहाभाण्डं सज्जीकृतमासीत्। तत्र सारमेयैराक्रान्तो भाण्डमध्ये पतितः। अथ यावन्निष्क्रान्त-

---

त्यक्ताश्चेति—येन=पुरुषेण आभ्यन्तरा=अन्तरङ्गभूता भृत्या त्यक्ता बाह्याश्च=बहिरङ्गभूता जना आभ्यन्तरीकृताः अन्तरङ्गभावं प्रापिताः स पुरुषः मृत्युम्=मरणमेव आप्नोति=प्राप्नोति। अत्र दृष्टान्तः—यथेति। यथा ककुद्द्रुमो राजा॥२८२॥

(क) क्षुधाविष्टः=बुभुक्षितः। (ख) नगरवासिनः पौराः सारमेयाः= कुक्कुराः। शब्दायमानाः=शब्दं कुर्वाणाः "शब्दवैरकलहा—(३।१।१७) इति क्यङि शानचि रूपम्। परिधाव्य=पलाय्य। तीक्ष्णदंष्ट्राग्रैः=कठोरैर्दन्तानां पुरोभागैः। भक्षितुम्=दष्टुम्।

प्रत्यासन्नेति—प्रत्यासन्नं समीपवर्ति यद्रजकगृहं वाससां रञ्जकस्य भवनम्। नीलीति—नीलया रसेन परितः पूर्णं भरितं महाभाण्डं मटिकाख्यम्। सज्जीकृतम्=प्रस्तुतम्

स्तावन्नीलीवर्णः (ग) सञ्जातः। तत्रापरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टदिशं जग्मुः। चण्डरवोऽपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे। न च नीलवर्णेन कदाचि (घ) न्निजरङ्गस्त्यज्यते। उक्तं च—

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च।
एको ग्रहस्तु मीनानां नीलीमद्यपयोर्यथा॥ २८३॥

अथ तं (ङ) हरगलगरलतमालसमप्रभमपूर्वं सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयोऽरण्यनिवासिनो भयव्याकुलचित्ताः समन्तात्पलायनक्रियां कुर्वन्ति। कथयन्ति च--न ज्ञायतेऽस्य कीदृग्विचेष्टितं पौरुषं च। तद्दूरतरं गच्छामः। उक्तं च--

---

(ग) नीलीवर्ण =नील्या वर्णो रागइव वर्णो यस्य स। (घ) निजरङ्गः=स्ववर्णः। नीलीवर्णः परिपक्वो भवति शोधनेनापि नापसार्यते इति भाव।

**वज्रलेपस्येति**--वज्रलेपस्य=आमतिन्दुकफलादिना साधितस्य प्रलेप द्रव्यस्य, मूर्खस्य=मूढस्य, नारीणाम्=स्त्रीणाम्, कर्कटस्य=कुलीरकस्य, मीनानाम्=मत्स्यानाम्, यथा=येन प्रकारेण ग्रह =ग्रहणम्, आग्रह सङ्कल्पश्च एक =एव यथा नीलीमद्यपयोरपीतिशेषः अर्थात् नीलवर्णस्य मद्यपस्य=सुरापस्यापि ग्रहस्तद्वदेव। "तु" एवधारणे।

**अत्रायमाशय**--वज्रलेपेन लिप्तस्य पदार्थस्य, कर्कटमीनयोश्च रसनाागेन यद् ग्रहणं ततो मुक्तिर्दुष्करा तथैव नीलवर्णस्य सङ्गेऽपि विमोक्तो[illegible]। एवमेव--मूर्खनार्योः, मद्यपस्य च सङ्कल्पोऽप्यनिवारणीय.॥ २८३॥

(ङ) हरो महादेवः तस्य गले कण्ठे यद् गरलं कालकूटं, तमालो वृक्षविशेष तयो समा प्रभा यस्य स तथाभूतस्तमित्यर्थः। द्वीपी=चित्राख्यो व्याघ्र।

न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् ।
न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः ॥ २८४ ॥

चण्डरवोऽपि तान्भयव्याकुलितान्विज्ञायेदमाह—भो ! भोः ! श्वापदाः ! किं यूयं मां दृष्ट्वैव (च) संत्रस्ता व्रजथ । तन्न भेतव्यम् । अहं ब्रह्मणाद्य स्वयमेव सृष्ट्वाभिहितः—यच्छ्वापदानां मध्ये कश्चिद्राजा नास्ति । तत्त्वं मयाद्यसर्वश्वापदप्रभुत्वेऽभिषिक्तः ककुद्द्रुमाभिधः । ततो गत्वा क्षितितले तान्सर्वान्परिपालय इति । ततोऽहमत्रागतः । तन्मम छत्रच्छायायां सर्वैरेव श्वापदैर्वर्तितव्यम् । अहं ककुद्द्रुमो नाम राजा त्रैलोक्येऽपि संजातः । तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः स्वामिन् ! प्रभो ! समादिश इति वदन्त स्तं (छ) परिवव्रुः । अथ तेन सिंहस्यामात्यपदवी प्रदत्ता । व्याघ्रस्य शय्यापालत्वम् । द्वीपिनस्ताम्बूलाधिकारः । वृकस्य द्वारपालकत्वम् । ये चात्मीयाः शृगालास्तैः सहालापमात्रमपि न करोति । शृगालाः सर्वे(क)ऽप्यर्धचन्द्रं दत्वा निःसारिताः । एवं तस्य राज्यक्रियायां वर्तमानस्य ते सिंहादयो मृगान्व्यापाद्य तत्पुरतः प्रक्षिपन्ति । सोऽपि प्रभुधर्मेण सर्वेषां तान्प्रविभज्य प्रयच्छति । एवं गच्छति काले कदाचित्तेन सभागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलोऽश्रावि । तं शब्दं श्रुत्वा (ख) पुलकिततनुरानन्दाश्रुपरिपूर्णनयन उत्थाय तार-

---

नेति—प्राज्ञः=बुद्धिमान् पुरुष यदि आत्मनः=स्वस्य श्रियम्=कल्याणम् इच्छेत्=कामयेत्, तदा-यस्य चेष्टितम्=आचरणविशेषं न, कुलम्=वंशं न, पराक्रमम्=बलं न, विद्यात्=जानीयात् तस्य न विश्वसेत्=तदुपरि विश्वासं न कुर्यादित्यर्थः । सम्बन्धविवक्षया षष्ठी ॥ २८४ ॥

(च) सन्त्रस्ता=भीताः । (छ) परिवव्रुः=परिवारितवन्तः ।

(क) अर्धचन्द्रं=गलहस्तम् । (ख) पुलकिततनुः=पुलकिता रोमाञ्चिता

स्वरेण विरोतुमारब्धवान्। अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य शृगालोऽयमिति मत्वा सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः-भोः! (ग) वाहिता वयमनेन क्षुद्रशृगालेन। तद्वध्यताम्' इति। सोऽपि तदाकर्ण्य पलायितुमिच्छंस्तत्र स्थान एव सिंहादिभिः खण्डशः कृतो मृतश्च। अतोऽहं ब्रवीमि—"त्यक्ताश्चाभ्यन्तरा येन" इति॥ तदाकर्ण्य पिङ्गलक आह—भो! दमनक! कः प्रत्ययोऽत्र विषये यत्स ममोपरि दुष्टबुद्धिः। स आह—'यदद्य ममाग्रे तेन निश्चयः कृतो यत्प्रभाते पिङ्गलकं वधिष्यामि, तदत्रैव प्रत्ययः। प्रभाते (घ) ऽवसरवेलायामारक्तमुखनयनः स्फुरिताधरो दिशोऽवलोकयन्ननुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्या विलोकयिष्यति। एवं ज्ञात्वा यदुचितं तत्कर्तव्यम् इति कथयित्वा सञ्जीवकसकाशं गतस्तं प्रणम्योपविष्टः। सञ्जीवकोऽपि सोद्वेगाकारं मन्दगत्या समायान्तं तमुद्दिश्य सादरतरमुवाच—भो! मित्र! स्वागतम्। चिराद् दृष्टोऽसि। अपि शिवं भवतः। तत्कथय येनादेयमपि तुभ्यं गृहागताय प्रयच्छामि। उक्तं च—

ते धन्यास्ते विवेकज्ञास्ते सभ्या इह भूतले।
आगच्छन्ति गृहे येषां कार्यार्थं सुहृदो जनाः॥ २८५॥

दमनक आह—भोः! कथं शिवं सेवकजनस्य।

---

तनुर्यस्य सा, आनन्देति—आनन्दाश्रुभिः परिपूर्णे भरिते नयने यस्य स। तारस्वरेण=उच्चस्वरेण। विरोतुम्=शब्दं कर्तुम्। सलज्जम्=सव्रीडम्। (ग) वाहिताः=भृत्यत्वेन कर्मकारिताः। (घ) अवसरवेलायाम्=मन्त्रमोचितसमये। आरक्तमुखनयन=समन्ताद्रक्तंमुखनयनं यस्य सः स्फुरिताधर=चलन्निम्नौष्ठः।

"ते" इति। सुहृदो जना=मित्राणि येषां गृहे=भवने आगच्छन्ति=समायान्ति, ते इह भूतले धन्या=पुण्यवन्त ते विवेकज्ञाः=कार्याकार्यकुशलाः, ते सभ्याः=साधव सन्तीति सरलोऽर्थः॥ २८५॥

सम्पत्तयः परायत्ताः सदा चित्तमनिर्वृतम् ।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥२८६॥

तथा च ।

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥२८७॥
तावज्जन्मातिदुःखाय ततो दुर्गतता सदा ।
तत्रापि सेवया वृत्तिरहो दुःखपरम्परा ॥२८८॥
जीवन्तोऽपि मृताः पञ्च श्रूयन्ते किल भारते ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥२८९॥

---

**"सम्पत्तय"** इति। ये जना राजसेवकाः=भूपतिभृत्याः तेषां सम्पत्तयः=सम्पदः श्रियो धनानीति यावत् परायत्ताः=पराधीनाः (तेषां) चित्तम्=अन्तःकरणम् सदा=सर्वस्मिन् काले अनिर्वृतम्=असुखमस्ति। (तेषाञ्च) स्वजीवितेऽपि=स्वस्य जीवने ऽपि अविश्वासः=प्रत्ययाभावः। भृत्यानां जीवनं कदापि सुसुखं न भवतीति भावः ॥ २८६ ॥

**"सेवये"ति**—सेवया=स्वामिसेवनेन धनमिच्छद्भिः=धनं कामयमानैः सेवकैः=भृत्यैः यत् कृतम्=अनुष्ठितं तत्त्वम् पश्य=आलोचय, यत् शरीरस्य देहस्य स्वातन्त्र्यम्=स्वच्छन्दत्वं (विद्यते) मूढैः=मूर्खैः तदपि हारितम्=विनाशितम्। पराधीनता दुःखप्रदैवेति भावः ॥ २८७ ॥

दुःखपरम्परोक्त्या सेवावृत्तिं निन्दयते **तावदिति**—तावत्=प्रथमं जन्म=शरीरधारणमेव अतिदुःखाय=अत्यन्तं दुःखाय भवतीति शेषः, वस्तुतस्तु जन्मैव दुःखं **"तेन जन्मनात्यन्तं** विमुक्तश्चरती"ति न्यायभाष्योक्तेः। ततः=जन्मनापेक्षया सदा=सदैव दुर्गतता=दारिद्र्यं, तत्रापि=तादृशदारिद्र्येऽपि सेवया वृत्तिः=दास्यभावेन वर्तनं जीविका (अपि दुःखम्) अहो=खेदे दुःखपरम्परा=एषा दुःखधारा कष्टपरम्परा (वर्तते) ॥२८८॥

**"जीवन्त"** इति। "किल" इति निश्चितं प्रसिद्धं वा। किन्तदित्याह—भारते=वेदव्यासप्रणीते महाभारताख्ये ग्रन्थे जीवन्तोऽपि=प्राणान् धारयन्तोऽपि पञ्च=पञ्चसङ्ख्याकाः एते जनाः मृताः=शवीभूताः (एव) श्रूयन्ते।

नाश्नाति स्वेच्छयौत्सुक्याद्विनिद्रो न प्रबुध्यते ।
न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥२९०॥
सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितम् ।
स्वच्छन्दं चरति श्वात्र सेवकः परशासनात् ॥२९१॥
भूशय्या ब्रह्मचर्यं च कृशत्वं लघुभोजनम् ।
सेवकस्य यतेर्यद्वद्विशेषः पापधर्मजः ॥२९२॥

---

के ते इत्याकाङ्क्षायामाह—दरिद्र =निर्धन ,व्याधित =रोगी,मूर्ख =मूढ ,प्रवासी= विदेशनिवासी, नित्यसेवक =सदाभृत्य =चिरसेवक इति यावत् ॥२८९॥

सदा परतन्त्रस्य जीवनं गर्हितमेवेत्याह—"**नाश्नाति**"—इति । औत्सुक्यात्=औत्कण्ठ्यात् स्वेच्छया न अश्नाति=नैव भुङ्क्ते, विनिद्र =गत-निद्र =सन् न प्रबुध्यते=नैव जागर्ति, अर्थात् गाढनिद्राप्राप्त्युत्तरं नैव जागर्त्ति, किन्तु प्रभोराज्ञाचिन्तया निशायामपि त्यक्तनिद्रो भवति, तथा निशङ्कम्=शङ्का-रहितं यथा तथा वच =वाक्यं न ब्रूते=नैव वदति, एवम्भूत (सदैव परवश ) सेवक =भृत्योऽपि अत्र=लोके जीवति=जीवति किम् ? नैवं जीवतीत्यर्थ । एतादृशपरायत्तजीवनापेक्षया मरणमेव श्रेय इति भावः ॥२२०॥

"**सेवा**" इति । यै =जनै सेवा श्ववृत्ति =कुक्कुरवृत्ति आख्याता= कथिता तै. मिथ्या प्रजल्पितम्=मृषैव भाषितम् । यत अत्र=जगति श्वा= कुक्कुर स्वच्छन्दं=स्वतन्त्रं यथा स्यात्तथा चरति=पर्यटति सेवक =भृत्यस्तु परशासनात्=परस्य राजादेः शासनादाज्ञया चरतीति सेवकस्य परतन्त्रता-जन्यं दुःखमनिवार्यमिति, कुक्कुरादपि सेवको नीच इति च तात्पर्यम् ॥२११॥

"**भूशय्येति**"—यते =सन्न्यासिनो यद्वत् भूशय्या=भुवि मृत्तिकाया शयनम्, ब्रह्मचर्यञ्च=तथा स्रक्चन्दनपुष्पमालाद्युपभोगाद्यभाव , कृशत्वम्= तपस्याजनितेन क्लेशेन क्षीणतनुत्वम्, तथा—लघुभोजनम्=लघु अल्पं क्षुद्र यत् किञ्चनोपनतं प्राशनमस्तीति शेषः तद्वत् सेवकस्य=दासस्याप्यस्ति विशेष = केवलं भृत्ययत्योर्विशेष =वैधर्म्यन्तु पापधर्मजः=पापकर्माश्रित एवेत्यर्थ । यैर्भूशय्यादिभिः कर्मभिर्यते पुण्योत्पत्ति दासस्य तु तैरेव पापोत्पत्तिरित्यहो महत्कष्टं सेवकत्वमिति भाव ॥२९२॥

शीतातपादिकष्टानि सहते यानि सेवकः।
धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते ॥२६३॥
मृदुनापि सुवृत्तेन सुमिष्टेनापि हारिणा।
मोदकेनापि किं तेन निष्पत्तिर्यस्य सेवया ॥२६४॥

सञ्जीवक आह—अथ भवान्किं वक्तुमनाः। सोऽब्रवीत्—मित्र! सचिवानां मन्त्रभेदं कर्तुं न युज्यते। उक्तं च—

यो मन्त्रं स्वामिनो भिन्द्यात्साचिव्ये सन्नियोजितः।
स हत्वा नृपकार्यं तत्स्वयं च नरकं व्रजेत् ॥२६५॥
येन यस्य कृतो भेदः सचिवेन महीपतेः।
तेनाशस्त्रवधस्तस्य कृत इत्याह नारदः ॥२६६॥

---

**शीतातपेति**—सेवको यानि शीतातपादिकष्टानि=शैत्योष्णतादिद्वन्द्वानि सहते यद्यसौ धर्मात्=पुण्यकर्मतो न मुच्यते=नैव हीयते अर्थात् तानि सहमानो धर्मार्थे यतेत तदा धनाय तानि अल्पानि=न्यूनानि सहते। धर्मं सेवमानस्य सेवापेक्षयाऽल्पेनैव तु खेन धनप्राप्तिर्भवितुमर्हतीति भावः ॥२६३॥

**मृदुनेति**—यस्य मोदकस्य सेवया निष्पत्ति=प्राप्तिस्तेन मोदकेन=लड्डुकेन किम्? किम्फलमस्ति न किञ्चिदपीति भाव। कथम्भूतेन मोदकेन—मृदुना=कोमलेन सुवृत्तेन=सम्यक्वर्तुलेन, सुमिष्टेन=सुमधुरेण, तथा हारिणा=दर्शनमात्रेणैव मन प्रसत्तिकरेण॥ (येन केनापि प्रकारेण) यथाकथञ्चित्प्राप्तेन शाकादिनोदरपूर्त्तिः श्रेष्ठा नतु सेवया लब्धमोदकादिमधुरभोजनद्वाराजीवनं वरमितिभाव ॥२६४॥

**"य"** इति। य=यः कोऽपि मानव साचिव्ये=मन्त्रिपदे सन्नियोजित=सुप्रतिष्ठित स्वामिन=राज्ञो मन्त्रम्=मन्त्रणा गुप्त विचारमिति यावत् भिन्द्यात्=स्फोटयेत् परान् प्रति प्रकाशयेदित्यर्थ, स=सेवकः तत्=प्रस्तुतं रह स्थितं नृपकार्यं=राज्ञो निश्चितं हत्वा=नाशयित्वा स्वयञ्च=स्वयन्तु नरकं=निरयं, व्रजेत्=गच्छेत्। राजमन्त्रभेदकस्य भृत्यस्य नरकप्राप्तिरिति भाव ॥२६५॥

**"येन"** इति। येन सचिवेन=मन्त्रिणा यस्य महीपतेः=राज्ञः भेदः=मन्त्रभेद कृत तेन अशस्त्रवध=शस्त्रं विनैव राज्ञो वध कृत इति नारद=

तथापि मया तव स्नेहपाशबद्धेन मन्त्रभेदः कृतः। यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टश्च। उक्तं च--

विश्रम्भाद्यस्य यो मृत्युमवाप्नोति कथञ्चन।
तस्य हत्या तदुत्था सा प्राहेदं वचनं मनुः ॥२६७॥

तत्तवोपरि पिङ्गलकोऽयं दुष्टबुद्धिः। कथितं चाद्यानेन मत्पुरत (क) श्चतुष्कर्णतया--यत्प्रभाते सञ्जीवकं हत्वा समस्तमृगपरिवारं चिरात्तृप्तिं नेष्यामि। ततः स मयोक्तः--स्वामिन्,! न युक्तमिदं यन्मित्रद्रोहेण (ख) जीवनं क्रियते। उक्तं च--

अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति।
तदर्हेण विचीर्णेन न कथञ्चित्सुहृद्द्रुह ॥२६८॥

ततस्तेनाहं (क) सामर्षेणोक्तः--भो दुष्टबुद्धे! सञ्जीवकस्तावच्छष्पभोजी, वयं मांसाशिनः, तदस्माकं स्वाभाविकं वैरम्, इति कथं रिपुरुपेक्ष्यते। तस्मात्सामादिभिरुपायैर्हन्यते। न च हते तस्मिन्दोषः स्यात्। उक्तं च--

---

नारदो नाम महर्षिः आह=आचष्टे ॥२६६॥

**विश्रम्भादिति**—यस्य विश्रम्भात्=विश्वासात् य कथञ्चन=केनाऽपि प्रकारेण मृत्युम्=मरणं अवाप्नोति तस्य विश्वस्तस्य हत्या=सा हत्या तदुत्था=विश्वास्यजनकृतैवेतीदं वचनं मनुर्नाम महर्षिराह ॥२६७॥

(क) चतुष्कर्णतया="षट्कर्णो भिद्यते मन्त्र" इति वचनात् यत्र द्वयोरेव मन्त्रणा भवति तत् चतुष्कर्णत्वमित्युच्यते ॥ (ख) जीवनम्=प्राणयात्रा।

**अपीति**—ब्रह्मवधम्=ब्रह्महत्यामपि कृत्वा तदर्हेण=तदुचितेन विचीर्णेन=अनुष्ठितेन प्रायश्चित्तेन=धर्मशास्त्राद्युक्तकर्मविशेषेण चतुर्विंशतिवार्षिकेण द्वादशवार्षिकेण वा शुध्यति=शुद्धो भवति, सुहृद्द्रुह=मित्रद्रुहस्तु न कथञ्चन=कथमपि शुद्धिर्नास्तीत्यर्थ। ब्रह्मवधादपि मित्रद्रोहो महाननर्थकर इति भाव ॥२६८॥

(क) सामर्षेण=अमर्ष क्रोध तेन सह वर्त्तत इति सामर्ष मक्रोध तेनेत्यर्थ। उपेक्ष्यते=उपेक्षाविषयीक्रियते परित्यज्यत इत्यर्थः।

दत्त्वापि कन्यकां वैरी निहन्तव्यो विपश्चिता ।
अन्योपायैरशक्यो यो हते दोषो न विद्यते ॥२६६॥
कृत्याकृत्यं न मन्येत क्षत्रियो युधि संगतः ।
प्रसुप्तो द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः ॥३००॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमिहागतः । साम्प्रतं मे नास्ति विश्वासघातकदोषः । मया सुगुप्तमन्त्रस्तव निवेदितः । अथ यत्ते प्रतिभाति तत्कुरुष्व इति । अथ सञ्जीवकस्तस्य (ख) तद्वज्रपातदारुणवचनं श्रुत्वा मोहमुपागतः । अथ चेतनां लब्ध्वा सवैराग्यमिदमाह—भो साध्विदमुच्यते—

दुर्जनगम्या नार्यः प्रायेणास्नेहवान्भवति राजा ।
कृपणानुसारि च धनं मेघो गिरिदुर्गवर्षी च ॥३०१॥

---

"दत्त्वा" इति । य वैरी=शत्रु अन्योपायै=उपायान्तरै अशक्य= असाध्य स विदुषा=विपश्चिता पण्डितेन कन्याकाम्=सुता दत्त्वा अपि निहन्तव्यः=मारणीय, हते=हिंसिते सति तस्मिन् दोषो न विद्यते । येन केनाप्युपायेन कृता शत्रुहत्या नैव दोषाय भवतीति भाव ॥२६६॥

"कृत्याकृत्य" मिति—युधि=सङ्ग्रामे सङ्गतः=अवतीर्ण क्षत्रियः कृत्याकृत्ये=कार्याकार्य न मन्येत=नैव विचारयेत् । एतदेव दर्शयति—पुरा=पूर्वस्मिन् काले द्रोणपुत्रेण=अश्वत्थाम्ना प्रसुप्त=निद्राक्रान्त धृष्टद्युम्न. हत= घातितः ॥३००॥

(ख) वज्रपातदारुणम्=अशनिपातवत्कठोरम् । मोहनविवे मूर्च्छां वा । चेतनाम्=सञ्ज्ञाम् ।

"दुर्जने" ति—नार्य=स्त्रिय प्रायेण दुर्जनगम्याः=दुर्जनाना गम्या उपभोग्या भवन्तीति शेष, राजा
क्वापि स्निह्यति ) धनं=वस्तु कृपणानुसारि=कृपण
सारि भवति मेघ=वारिदः गिरिदुर्गवर्षी=च
वर्षणस्वभाव इत्यर्थ । वृत्तमार्या ॥३०१॥

अहं हि संमतो राज्ञो य एवं मन्यते कुधीः ।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः ॥३०२॥
वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम् ।
वरं व्याधिर्मनुष्याणां नाधिकारेण सम्पदः ॥३०३॥

तदयुक्तं मया कृतं यदनेन सह मैत्री विहिता । उक्तं च—

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥३०४॥

तथा च—

मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरङ्गैः ।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम् ॥३०५॥

---

"अह" मिति । "हि" निश्चयेन अहं राज्ञ सम्मत =प्रीतिपात्रमस्मि, एवमनेन प्रकारेण य कुधी =दुर्बुद्धि मन्यते=अभिमानं धत्ते, सः जन विषाणपरिवर्जित =शृङ्गरहित बलीवर्दः=वृषभो विज्ञेयः । राज्ञो कोपि प्रीतिपात्रं न भवतीति भाव ॥ ३०२ ॥

"वरम्" इति । मनुष्याणा वनं=अरण्यं वरम्=मनाक्प्रियम्, भारवाहनेन प्राणधारणं वरम्, व्याधि =रोगोऽपि वरम्, परन्तु— अधिकारेण= सेवादिव्यापारेण सम्पदः=श्रियो न वरम्=नैव श्रेष्ठम् । सेवावृत्तिर्नितान्तं गर्हणीयेति भाव ॥ ३०३ ॥

"ययो" रिति । ययोः=जनयो वित्तं=धनं समं=तुल्यं ययो कुलं सममेव=तुल्यमेव तयोरेव मैत्री=सौहार्दं विवाह =यौन सम्बन्धश्च युज्यते इति शेष , पुष्टविपुष्टयो =पुष्टो धनी, विपुष्टो निर्धन तयोर्मैत्री विवाहश्च नतु=नैव युज्येयाताम् इति शेष· ॥ ३०४ ॥

"मृगा" इति । मृगा =हरिणा मृगै =हरिणै =स्वजातीयै , गावः गोभि , तुरगा =अश्वा· तुरङ्गै =अश्वै , मूर्खा =मूढाः मूर्खै =मूढै , सुधिय·=बुद्धिमन्त , सुधीभि =बुद्धिमद्भि सङ्गम्=सम्बन्धम् अनुव्रजन्ति=

तद्यदि गत्वा तं प्रसादयामि, तथापि न प्रसादं यास्यति। उक्तं च—

निमित्त मुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रशाम्यति।
अकारण द्वेषपरो हि यो भवे-
त्कथं नरस्तं परितोषयिष्यति ॥ ३०६ ॥

अहो! साधु चेदमुच्यते—

भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी ॥ ३०७ ॥

---

कुर्वन्तीत्यर्थः, यत —समानशीलव्यसनेषु=तुल्यशीलेषु तुल्यदुःखेषु च जनेषु सख्यम्=मित्रता साधु युज्यत इतिशेषः ॥ ३०५ ॥

अतिदुर्जनस्य परितोषे न किञ्चदपि साधनमित्याह—"**निमित्तम्**" इति। "हि" निश्चये। यः=कोपिजन निमित्तम्=हेतुम्, उद्दिश्य=अनुगम्य प्रकुप्यति=प्रकोपमेति, स=जनः तस्य=निमितस्य अपगमे=विनाशे सति ध्रुवम्=निश्चितमेव प्रशाम्यति=शान्तो भवति विगतकोपो जायते इत्यर्थः। योहि=यस्तु अकारणद्वेषपरः=हेतु विनैव वैरी भवेत्=स्यात् नरः=अन्यो मनुष्यः, तम्=अकारणवैरिणं कथं=केन प्रकारेण परितोषयिष्यति=प्रसन्नयिष्यति, न केनाप्युपायेनेति भावः। वंशस्थं वृत्तम्। लक्षणमुक्तं प्राक् ॥ ३०६ ॥

राजसेवातिकठिनेत्याह—"**भक्ताना**"मिति। भक्तानाम्=अनुरागिणाम्। उपकारिणाम्=उपकारकरणस्वभावाना, परहितव्या०=परेषां हितं परहित तत्र यो व्यापारश्चेष्टाविशेषः तेन युक्तः आत्मा मनः शरीरं वा येषां तेषां, स्वभावत एव परेष्टसाधने व्यग्रमनसामित्यर्थः, सेवासंव्यव०= सेवाया य संव्यवहारः सम्यगनुष्ठानं, तस्य तत्त्वं यथार्थ प्रकार, तस्य तत्र वा विदुषां पण्डितानाम् अर्थात् सेवाज्ञाने निर्भ्रान्तमनसाम्, तथा—

तथा च—

भावस्निग्धैरुपकृतमपि द्वेष्यतां याति लोके
साक्षादन्यैरपकृतमपि प्रीतये चोपयाति।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ ३०८॥

तत्परिज्ञातं मया यत्प्रसादमसहमानैः समीपवर्तिभिरेष पिङ्गलकः प्रकोपितः। तेनायं ममादोषस्याप्येवं वदति। उक्तं च—

प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः।
सपत्न्य इव संक्रुद्धाः सपत्न्याः सुकृतैरपि॥ ३०९॥

---

द्रोहच्यु०=विश्वासस्य परानिष्टकरणं द्रोहः तस्मात् च्युता स्खलिता तेषा द्रोहविमुखानामपि सेवकानाम् (इति प्रकरणलभ्यम्) स्खलितान्तरेषु=अस्थिरस्वभावेषु प्रभुषु व्यापत्ति=आपदा तु नियता=अवश्यम्भाविनी, सिद्धि=लाभस्तु भवेद्वा नवा भवेत् तस्मात्=कारणात् अम्बुपतेरिव=समुद्रस्येव अवनीपतेः=राज्ञो सेवा, सदा=सर्वदैव आशङ्किनी=आशङ्काजनिका त्रासप्रदेत्यर्थः। यथा समुद्रसेवया मणिमाणिक्यादिलाभे सन्देहः मृत्युरवश्यम्भावी, एवमेव राज्ञ सेवयाऽपि अनर्थलाभोऽप्रवर्त्ती धनादिलाभस्तु भाग्येनैवेति भावः॥ ३०७॥

सेवाधर्मस्य गहनत्वमाह—"**भावस्निग्धै**"रिति। भावस्निग्धैः=भावेन प्रीत्या स्निग्धैः हितकरैः उपकृतमपि=कृतोपकारमपि लोके=संसारे द्वेष्यताम्=वैरिता याति=प्राप्नोति, अन्यैः=अपरैः स्नेहशून्यैर्जनैः साक्षात्=प्रकटम् अपकृतमपि=जनितापकारमपि प्रीतये=प्रसन्नतायै उपयाति=प्रसन्नता प्राप्नोतीत्यर्थ, इत्थम्=अनेन प्रकारेण नैकभावाश्रयाणाम्=उच्चावचाऽस्थिराभिप्रायवता नृपतिमनसाम्=राज्ञा हृदयाना दुर्ग्राह्यत्वात्=ज्ञातुमशक्यत्वात् सेवाधर्मः=भृत्यभाव परमगहनः=अत्यन्तदुर्गम्य, योगिनाम्=समाधिभाजामपि अगम्य=ज्ञातुमशक्यः, इतरेषा साधारणमनुष्याणान्तु दुर्गम्य इति कैव कथेति भाव। राज्ञामिष्टेऽनिष्टबुद्धि अनिष्टश्चेष्टबुद्धिरिति तत्त्वम् मन्दाक्रान्ताच्छन्दः॥३०८॥

"**प्रभो**"रिति। इह=लोके सेवकाः=भृत्याः, अन्यस्य स्वभिन्नस्य

भवति चैवं यद्गुणवत्सु समीपवर्तिषु गुणहीनानां न प्रसादो भवति । उक्तं च—

गुणवत्तरपात्रेण च्छाद्यन्ते गुणिनां गुणाः ।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति, ॥ ३१० ॥

दमनक आह—भो मित्र ! यद्येवं तन्नास्ति ते भयम् । प्रकोपितोऽपि स दुर्जनैस्तव ( क ) वचनरचनया प्रसादं यास्यति । स आह—भोः ! न युक्तमुक्तं भवता । ( ख ) लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते । उपायान्तरं विधाय ते नूनं घ्नन्ति । उक्तं च—

वहवः पण्डिताः क्षुद्रा सर्वे मायोपजीविनः ।
कुर्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा ॥ ३११ ॥

दमनक आह—कथमेतत् । सोऽब्रवीत्—

---

भृत्यस्य प्रभो प्रसादम्=राज्ञ पारितोषिकादिकं न=नैव सहन्ति=सोढु समर्था न भवन्ति । अत्रोपमानमाह—सुकृतै=स्वाचारितैरपि सङ्क्रुद्धा=क्रोधमुपेता सपत्न्यः=एकपतिका स्त्रिय, सपत्न्य=अन्यस्या ( पत्यु· ) प्रसादमिव । "सह" धातो परस्मैपदं चिन्त्यम् । अथवा—"**परस्मैपद**मिच्छन्ति आत्मनेपदिना क्वचित्" इत्यादिकविकल्पद्रुमादिग्रन्थानुरोधात्समाधेयम् ॥ ३०६ ॥

"**गुणवत्तरे**"ति । गुणवत्तरेण=अत्यन्तं गुणशालिना जनेन गुणिनाम्=न्यूनगुणवता जनाना गुणा छाद्यन्ते=तिरस्क्रियन्ते । तथाहि—दीपशिखाकान्ति=दीपज्वालायाः शोभा रात्रौ=निशाया भवति, भानौ=सूर्ये उदिते सति तु न=नैव भवतीत्यर्थ ।

(क) वचनरचनया=वाचा परिपाटया ।

(ख) लघूनाम्=अल्पसङ्ख्याकानाम् । अल्पकायाना वा ।

"**वहव**" इति—वहव=अनेके पण्डिताः=महाशया ( भवन्तु ) क्षुद्रा=तुच्छहृदया वा (सन्तु) सर्वे=एते सर्वेऽपि मायोपजीविनः=मायया कपटेन संसारयात्रा वहन्तः ( कपटिन ) सन्तीति शेष । ( ते एते) यथा

## कथा ११ ।

कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म। तस्य चानुचरा अन्ये (क) द्वीपिवायसगोमायवः सन्ति। अथ कदाचित्तैरितस्ततो भ्रमद्भिः (ख) सार्थभ्रष्टः क्रथनको नामोष्ट्रो दृष्टः। अथ सिंह आह—अहो! (ग) अपूर्वमिदं सत्त्वम्। तज्ज्ञायतां किमेतदारण्यकं ग्राम्यं वा इति। तच्छ्रुत्वा वायस आह—भो स्वामिन्! ग्राम्योऽयमुष्ट्रनामा जीवविशेषस्तव भोज्यः। तद्व्यापाद्यताम्। सिंह आह—नाहं गृहमागतं हन्मि। उक्तं च—

गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम्।
यो हन्यात्तस्य पापं स्याच्छतब्राह्मणघातजम् ॥ ३१२ ॥

तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां येनास्यागमनकारणं पृच्छामि। अथासौ सर्वैरपि विश्वास्याभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः प्रणम्योपविष्टश्च। ततस्तस्य पृच्छतस्तेनात्मवृत्तान्तः सार्थभ्रंशसमुद्भवो निवेदितः। ततः सिंहेनोक्तम्—

---

काकादय =वायसादयो मिलिता उष्ट्रे=क्रमेलके अकृत्यम्=करणायोग्यम्, कृत्यम्=करणयोग्यं वा कुर्यु =कुर्वन्तीत्यर्थः। धूर्ताः सर्वमपि कर्त्तुं शक्नुवन्तीति भाव ॥ ३११ ॥

(क) **द्वीपीति**—तत्र द्वीपी=शार्दूल । वायस =काक । गोमायु =शृगाल, एतेषा द्वन्द्व । (ख) सार्थभ्रष्ट =यूथविच्युत । (ग) अपूर्वम्=यत् प्रथमं कदापि न दृष्टम्, आश्चर्यकरमित्याशयः। सत्त्वम्=जन्तु ।

"**गृहे**" इति । य विश्वस्तम्=विश्वासमापन्नम्, अकुतोभयम्=ना कुतोऽपि भयं यस्य स तम्, मयूरव्यंसकादित्वात्समास । सर्वथा शङ्का-ंत।मित्यर्थ, एवम्भूतं गृहे प्राप्तं शत्रुमपि हन्यात्=घातयेत्, तस्य पुरुषस्य ।त०=शतसङ्ख्याकब्राह्मणस्य यो घातो मारणं तस्मात् जातमुत्पन्नं पापं स्यात्,=पाप्मा भवेत् ॥३१२॥

भोः! क्रथनक! मा त्वं ग्रामं गत्वा भूयोऽपि (घ) भारोद्वहनकष्टभागी भूयाः। तदत्रैवारण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन्मया सह सदैव वस। सोऽपि तथा इत्युक्त्वा तेषां मध्ये विचरन्नकुतोऽपि भयामिति सुखेनास्ते। तथान्येद्युर्मदोत्कटस्य महागजेनारण्यचारिणा सह युद्धमवभत्। ततस्तस्य दन्तमुशलप्रहारैर्व्यथा सञ्जाता। व्यथितः कथमपि प्राणैर्न वियुक्तः। अथ शरीरासामर्थ्यान्न कुत्रचित्पदमपि चलितुं शक्नोति। तेऽपि सर्वे काकादयोऽप्रभुत्वेन क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान्सिंहः प्राह—भोः! (ङ) अन्विष्यतां कुत्रचित्किंचित्सत्त्वं येनाहमेतामपि दशां प्राप्तस्तद्धत्वा युष्मद्भोजनं सम्पादयामि। अथ ते चत्वारोऽपि भ्रमितुमारब्धा यावन्न किंचित्सत्त्वं पश्यन्ति तावद्वायसश्शृगालौ परस्परं मन्त्रयतः। शृगाल आह-भो वायस! किं प्रभूतभ्रान्तेन। अयमस्माकं प्रभोः क्रथनको विश्वस्तास्तिष्ठति। तदेनं हत्वा प्राणयात्रां कुर्मः। वायस आह—युक्तमुक्तं भवता। परं स्वामिना तस्याभयप्रदानं दत्तमास्ते न वध्योऽयमिति। शृगाल आह-भो वायस! अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी वधं करिष्यति। तत्तिष्ठन्तु भवन्तोऽत्रैव, यावदहं गृहं गत्वा प्रभोराज्ञां गृहीत्वा चागच्छामि। एवमभिधाय (क) सिंहमुद्दिश्य प्रस्थितः। अथसिंहमासाद्येदमाह—स्वामिन्! समस्तं वनं भ्रान्त्वा वयमागताः। न किंचित्सत्त्वमासादितम्। तत्किं कुर्मो वयम्। सम्प्रति वयं बुभुक्षया पदमेकमपि प्रचालितुं न शक्नुमः। देवोऽपि (ख) पथ्याशी वर्तते। तद्यदि देवादेशो भवति (ग) तत्क्रथनकपि-

---

(घ) भारेति—भारस्य ग्रन्थेर्यद् उद्वहनमुत्थापनं तस्य यत्कष्ट दु खं तद्भागी भोक्ता भूया इति सम्बन्धः। (ङ) अन्विष्यताम्=गवेष्यताम्।

(क) सत्वरम्=शीघ्रम्। प्रस्थितः=प्रचलित। (ख) पथ्याशी=बुभुक्षित इति विवक्षितोऽर्थः। (ग) क्रथनकपिशितेन=क्रथनकस्य मासेन। पथ्यक्रिया=आहारः। दारुणम्=कठोरम्।

शितेनाद्य पथ्यक्रिया क्रियते। अथ सिंहस्तस्य तद्दारुणं वचनमाकर्ण्य सकोपमिदमाह--धिक्पापाधम! यद्येवं भूयोऽपि वदसि, ततस्त्वां तत्क्षणमेव वधिष्यामि। यतो मया तस्याभयं प्रदत्तम् तत्कथं व्यापादयामि। उक्तं च--

न गोप्रदानं न महीप्रदानं
न चान्नदानं हि तथा प्रधानम्।
यथा वदन्तीह बुधाः प्रधानं
सर्वप्रदानेष्वभयप्रदानम् ॥ २१३ ॥

तच्छ्रुत्वा शृगाल आह-स्वामिन्! यद्यभयप्रदानं दत्त्वा वधः क्रियते तदैष दोषो भवति। पुनर्यदि देवपादानां भक्त्या स आत्मनो जीवितव्यं प्रयच्छति तन्न दोषः। ततो यदि स स्वयमेवात्मानं वधाय नियोजयति तद्वध्यः। अन्यथास्माकं मध्यादेकतमो वध्य इति। यतो देवपादाः (ग) पथ्याशिनः (घ) क्षुन्निरोधादन्त्यां दशां यास्यन्ति। तत्किमेतैः प्राणैरस्माकं ये स्वाम्यर्थे न यास्यन्ति। अपरं पश्चादप्यस्माभिर्वह्निप्रवेशः कार्यः, यदि स्वामिपादानां किंचिदनिष्टं भविष्यति। उक्तं च-

---

"न" इति इह-लोके, बुधा=विवेकिनो धर्मशास्त्रकुशला यथा सर्वप्रदानेषु=सर्वेषु स्वर्णादिदानेषु अभयप्रदानम्=प्राणरक्षायै वचनदानं प्रधानम्=मुख्यं वदन्ति=कथयन्ति तथा-गोप्रदानम्=गवा दानं न, महीप्रदानम्=मह्याः पृथिव्या दानं न, न च अन्नदानम्=अन्नस्य अदनीयस्य [illegible] प्रधानं=मुख्यं न वदन्तीति सम्बन्धः, हि=इति निश्चितमे-। उपजाति ॥ २१३ ॥

(ग) पथ्याशिन =हितमेध्याशिनः।

(घ) क्षुन्निरोधात्=क्षुधाया बुभुक्षाया निरोधात् अवरोधकरणात् भोजनसमये नस्याङकरणात् अन्त्याम्=चरमाम्। दशाम्=अवस्थाम्।

यस्मिन्कुले यः पुरुषः प्रधानः
स सर्वयत्नैः परिरक्षणीयः ।
तस्मिन्विनष्टे कुलसारभूते
न नाभिपङ्के ह्यरयो वहन्ति ॥ ३१४ ॥

तदाकर्ण्य मदोत्कट आह—यद्येवं तत्कुरुष्व यद्रोचते । तच्छ्रुत्वा स सत्वरं गत्वा तानाह-भोः ! स्वामिनो महत्यवस्था वर्तते । तत्किं (घ) पर्यटितेन । तेन विना कोऽत्रास्मान्रक्षयिष्यति । तद्गत्वा तस्य (ङ) क्षुद्रोगात्परलोकं प्रस्थितस्यात्मशरीरदानं कुर्मः, येन स्वामिप्रसादस्यानृणतां गच्छामः । उक्तं च—

आपदं प्राप्नुयात्स्वामी यस्य भृत्यस्य पश्यतः ।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत् ॥ ३१५ ॥

---

"यस्मिन्" इति । यस्मिन् कुले=वंशे य. पुरुष प्रधान=सर्वतोऽधिको भवेदिति शेष स सर्वयत्नै=सर्वैरपि प्रयत्नैरुद्योगै, परिरक्षणीय=परित सर्वत (पतन्तीभ्यो विपत्तिभ्य )रक्षणीय पालयितव्य । कुलसारभूते=कुलस्य वंशस्य सङ्घस्य वा सारभूते स्थिराशस्वरूपे तस्मिन् विनष्टे=नाशङ्गते सति अभिपङ्के=पराभवे एवम्मुख्यपुरुषनाशरूपे पराभवे प्राप्ते सति अरय=शत्रव न वहन्ति=तत्कुल नैव आक्रम्य वर्तन्त इति न अपितु पराभवन्त्येव । तस्मान्मुख्यपुरुषरक्षणं कलिना धर्म इति भाव । उपजाति ॥ ३१४ ॥

(घ) पर्यटितेन=भ्रमणेन । (ङ) क्षुद्रोगात्=क्षुत् क्षुधैव रोग प्राणपीडाकरत्वात् ।

"आपद"मिति । पश्यत=स्वामिनो मृत्युदशामालोकयत यस्य भृत्यस्य=सेवकस्य प्राणेषु विद्यमानेषु=जीवनभूतेषु असुषु सत्सु ( यस्मिन्भृत्ये जीवति सतीत्यर्थ ) स्वामी=आपदम्=विपत्ति प्राप्नुयात्=विपन्नो भवेदित्यर्थ, स भृत्यो नरकं=निरयं व्रजेत् । स्वप्राणव्ययेनापि भृत्या प्रभुरक्षां कुर्युरिति शास्त्रोक्तो धर्म इति भाव ॥ ३१५ ॥

तदनन्तरं ते सर्वे (क) वाष्पपूरितदृशो मदोत्कटं प्रणम्योपविष्टाः। तान्दृष्ट्वा मदोत्कट आह-भोः! प्राप्तं दृष्टं वा किंचित्सत्त्वम्। अथ तेषां मध्यात्काकः प्रोवाच-स्वामिन्,! वयं तावत्सर्वत्र पर्यटिताः। परं न किंचित्सत्त्वमासादितं दृष्टं वा। तदद्य मां भक्षयित्वा प्राणान्धारयतु स्वामी, येन (ख) देवस्याश्वासनं भवति मम पुनः स्वर्गप्राप्तिरिति। उक्तं च—

स्वाम्यर्थे यस्त्यजेत्प्राणान्भृत्यो भक्तिसमन्वितः।
परं स पदमाप्नोति जरामरणवर्जितम्॥ ३१६॥

तच्छ्रुत्वा शृगाल आह—भोः! (ग) स्वल्पकायो भवान्। तव भक्षणात्स्वामिनस्तावत्प्राणयात्रा न भवति। अपरो दोषश्च तावत्समुत्पद्यते। उक्तं च—

काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्बलम्।
भक्षितेनापि किं तेन तृप्तिर्येन न जायते॥ ३१७॥

---

(क) वाष्पपूरितदृश.=वाष्पेन अस्रेण पूरिता दृशो येषा ते, नयनजलभरितनयना इत्यर्थ। (ख) देवस्य=प्रभोस्तव आश्वासनं=जीवनम्।

"**स्वाम्यर्थे**" इति। यो भृत्य भक्तिसमन्वित =सेवाधर्मपरायण स्वाम्यर्थे=प्रभो कृते प्राणान्=असून् त्यजेत्=जह्यात् अर्थात् स्वजीवनार्पणेन प्रभुं रक्षयेत् स जरामरणवर्जितम्=जरा वार्द्धक्यं, मरणं मृत्यु ताभ्या वर्जित रहितं परम्=सर्वोत्कृष्टं पदं स्थानमर्थात् मोक्षम् आप्नोति=भजेत, असौ जन्ममरणबन्धनपाशमुक्तो भवतीति भाव। ३१६॥

(ग) स्वल्पकायः=स्वल्प क्षुद्र कायो देहो यस्य स तादृश तव भोजनेन स्वामिनो बुभुक्षा नैव निवर्त्तेतेति भाव.। एतदेवोक्तं "**तव भक्षणा**"दित्यादिना।

काकमासभोभने दोषमप्याह-"**अपरो दोष**"श्चेति। न केवल क्षुन्निवृत्तेरभावोऽपि तु—काकमासस्याभक्ष्यत्वात् तदशनेन पापप्राप्तिरपि स्यात्।

"**काकमांस**" मिति। काकमासम्=वायसपललम् तदपि शुनो-

तद्दर्शिता स्वामिभक्तिर्भवता। गतं (घ) चानृण्यं भर्तृपिण्डस्य प्राप्तश्चोभयलोके साधुवादः। तदपसराग्रतः। अहं स्वामिनं विज्ञापयामि। तथानुष्ठिते शृगालः सादरं प्रणम्योपविष्टः—स्वामिन्! मां भक्षयित्वाद्य प्राणयात्रां विधाय ममोभयलोकप्राप्तिं कुरु। उक्तं च—

स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः।
यतस्ततो न दोषोऽस्ति तेषां ग्रहणसम्भवः॥ ३१८॥

अथ तच्छ्रुत्वा द्वीप्याह-भोः साधूक्तं भवता। पुनर्भवानपि स्वल्पकायः स्वजातिश्च। नखायुधत्वादभक्ष्य एव। उक्तं च—

नाभक्ष्यं भक्षयेत्प्राज्ञः प्राणैः कण्ठगतैरपि।
विशेषात्तदपि स्तोकं लोकद्वयविनाशकम्॥ ३१९॥

---

च्छिष्टम्=कुक्कुरेण उच्छेषितम्, (तत्रापि तत्) स्वल्पम्=स्तोकम् तथा-दुर्वलम्=हीनवलं रसधातोरवृद्धिकरत्वात्। ("दुर्लभम्" इति पाठस्तु न सङ्गतार्थ इतिमे भाति परं पाण्डिताः प्रमाणम्) एवम्भूतेन तेन=काकमासेन भक्षितेनापि=प्राशितेनापि किम्=किं स्यात् येन तृप्ति=प्राणाना सन्तोष एव न जायते=न भवति। तस्मात्सर्वथा तद्वर्जनीयमिति भाव॥ ३१७॥

(घ) आनृण्यम्=ऋणराहित्यम्। भर्तृपिण्डस्य=भर्तुः स्वामिन, पिण्डस्य अन्नस्य। उभयलेके=इहलोके परलोके च। साधुवाद= धन्यवादः।

"स्वाम्यायत्ता" इति। यतो हेतोः धनैः=वसुभिः अर्जिता= परिक्रीताः भृत्याना प्राणा=सेवकाना प्राणा सदा=सर्वदैव स्वाम्यायत्ताः= स्वाम्यधीना तत तस्मात् कारणात् तेषाम्=भृत्यप्राणाना ग्रहणसम्भव.= हिंसाजन्य, दोष=पाप्मा नास्ति=न भवेदित्यर्थ॥ ३१८॥

नखायुधत्वात्= नखशस्त्रत्वात्। भक्ष्येषु पञ्चनखेषु नैव शृगालो गृहीत इति भावः। नखित्वाच्च स्वजातित्वम्॥

"नाभक्ष्यम्" इति। प्राज्ञ=बुद्धिमान् कण्ठगतै.=कण्ठप्राप्तैरपि

तद्दर्शितं त्वयात्मनः (ङ) कौलीन्यम् । अथवा साधु चेदमुच्यते-

एतदर्थं कुलीनानां नृपाः कुर्वन्ति सङ्ग्रहम् ।
आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम् ॥ ३२० ॥

तदपसराग्रतः, येनाहं स्वामिनं विज्ञापयामि । तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह-स्वामिन्! क्रियतामद्य मम प्राणैः प्राणयात्रा । दीयतामक्षयो वासः स्वर्गे । मम विस्तार्यतां (क) क्षितितले प्रभूततरं यशः । तन्नात्र विकल्पः कार्यः । उक्तं च -

मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् ।
भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥३२१॥

तच्छ्रुत्वा क्रथनकश्चिन्तयामास—एतैस्तावत्सर्वैरपि शोभनानि

---

प्राणैरुपलक्षित, अभक्ष्यम्=शास्त्रेण भक्षणानर्हमित्युक्तं वस्तु न भक्षयेत्=खादेत् विशेषात्=विशेषस्तु तदपि स्तोकम्=अल्पं क्षुधाया अनिवारक लोकद्वयविनाशकम्=उभयलोकविध्वसकरम्, तृप्तेरभावादिह विनाशक, पापहेतोश्च परलोकविघातकृदित्यर्थ ।

(ङ) कौलीन्यम्=कुलीनता उत्तमवंश्यत्वम् ।

"**एतदर्थम्**" इति । नृपा =राजान , एतदर्थम्=एतस्मै प्रयोजनायैव कुलीनानाम्=अभिजाताना महाकुलोत्पन्नाना जनाना सङ्ग्रहम्=सङ्ग्रं कुर्वन्ति=सम्पादयन्ते यत् ते आदिमध्यावसानेषु=सर्वदैवेत्यर्थ विक्रियाम्=विकारं न गच्छन्ति=नैव प्राप्नुवन्ति । सदा तुल्यवृत्त्यैव वर्त्तन्ते इत्यर्थः ॥ ३२० ॥

(क) क्षितितले=पृथिवीमण्डले । प्रभूततरम्=प्रचुरतरम् । यश = कीर्त्ति । विकल्प =संशय ।

"**मृतानाम्**" इति । स्वामिन =प्रभोः कार्ये=कृत्ये स्वामिकार्यार्थमित्यर्थः, मृतानाम्=पञ्चत्वङ्गताना तथा—अनुवर्त्तिनाम्=आज्ञाकारिणामनुरक्तानामिति यावत् भृत्यानाम्=सेवकाना स्वर्गे=नाकलोके अक्षय =चिरकालस्थायी वास =निवासो भवेत्, धरणीतले=पृथिव्या कीर्त्ति =यशश्च अक्षया प्रकरणयोग्यतया शेषोऽनुसन्धातव्य ॥ ३२१ ॥

वाक्यानि प्रोक्तानि । न चैकोऽपि स्वामिना विनाशितः । तदहमपि (ख) प्राप्तकालं विज्ञापयामि, येन मम वचनमेते त्रयोऽपि (ग) समर्थयन्ति इति निश्चित्य प्रोवाच—भो ! सत्यमुक्तं भवता । परं भवानपि नखायुधः तत्कथं भवन्तं स्वामी भक्षयति । उक्तं च—

मनसापि स्वजात्यानां योऽनिष्टानि प्रचिन्तयेत् ।
भवन्ति तस्य तान्येव इहलोके परत्र च ॥३२२॥

तदपसराग्रतः, येनाहं स्वामिनं विज्ञापयामि । तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच—स्वामिन् ! एते तावदभक्ष्या भवताम् । तन्मम प्राणैः प्राणयात्रा विधीयताम्, येन ममोभयलोकप्राप्तिर्भवति । उक्तं च—

न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः ।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥३२३॥

---

(ख) प्राप्तकालम्=कालोचितम् । (ग) समर्थयन्ति=समर्थमनुमतियोग्यं कुर्वन्ति । समर्थशब्दात् तत्करोति—इति गणसूत्रेण णिच् ।

"मनसेति"—य कोऽपि स्वजात्यानाम्=स्वसमानजातीयानाम् मनसाऽपि=चेतसापि अनिष्टानि=अहितानि प्रचिन्तयेत्=अनुध्यायेत् तस्य=पुरुषस्य कृते तान्येवाऽनिष्टानि इहलोके परत्र च=परलोके च भवन्ति । स्वजातिकस्यानिष्टं कदापि न चिन्तनीयामिति भाव ॥३२२॥

"ने"ति । स्वाम्यर्थे=स्वामिकार्यार्थ प्रोज्झितप्राणाः=प्रोज्झिता परित्यक्ताः प्राणा असवो यै ते सेवकोत्तमा=उत्तमा भृत्या. या गतिं यान्ति=आप्नुवन्ति ता गतिं यज्वान=विधिना ये इष्टवन्तः ते याज्ञिका अपि न यान्ति. योगिन=प्राणायामादिसाधनै चित्तवृत्तिं निरुन्धाना योगिजना अपि ता गतिं न गच्छन्ति=नैव आप्नुवन्तीत्यर्थ । स्वामिकृते परित्यक्तप्राणस्य मुक्तिरेव-भवतीति भाव. । 'यज्वा तु विधिनेष्टवान्" इत्यमर ॥ ३२३ ॥

एवमभिहिते ताभ्यां (घ) शृगालचित्रकाभ्यां (ङ) विदारितोभयकुक्षिः क्रथनकः प्राणानत्याक्षीत्। ततश्च तैः (च) क्षुद्रपण्डितैः सर्वैर्भक्षितः। अतोऽहं ब्रवीमि—"बहवः पण्डिताः क्षुद्राः" इति॥ तद्भद्र! क्षुद्रपरिवारोऽयं ते राजा मया सम्यग्ज्ञातः। सतामसेव्यश्च। उक्तं च—

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते।
यथा गृध्रसमासन्नः कलहंसः समाचरेत्॥३२४॥

तथा च—

गृध्राकारोऽपि सेव्यः स्याद्धंसाकारैः सभासदैः।
हंसाकारोऽपि सन्त्याज्यो गृध्राकारैः स तैर्नृपः॥३२५॥

तन्नूनं ममोपरि केनचिद् दुर्जनेनायं प्रकोपित, तेनैवं वदति। अथवा भवत्येतत्। उक्तं च—

---

(घ) शृगालचित्रकाभ्याम्=जम्बुकद्वीपिभ्याम्। (ङ) विदारिता उभयकुक्षिर्यस्य सः। (च) क्षुद्रपण्डितैः=धूर्तैः।

"अशुद्धे"ति। अशुद्धा=दोषसहिता प्रकृतिः स्वभावो यस्य स तस्मिन्, राज्ञि=नृपे जनता=प्रजा न अनुरज्यते=अनुरक्ता न भवति। यथा गृध्रसमासन्नः=गृध्रैः पक्षिभिः सम्परिवृत कलहंस=कादम्ब पक्षी समाचरेत्=आचरणं कुर्यात् तादृशोऽसौ भवतीत्यर्थः।

अयमाशय—हंसो नाम पक्षी शुद्धोऽपि दुष्टैः पक्षिभि परिवारितो हिंसाशीलत्वात्परैर्न सेव्यते तथा स्वतो निर्मलहृदयोऽपि राजा धूर्तवृत प्रजया न सेवनीयः॥ ३२४॥

गृध्राकारोऽपीति—राजा गृध्राकारोऽपि=गृध्रस्य शवभोजिदुष्टपक्षिविशेषस्याकार इवाकारो यस्य स तादृशोऽपि हंसाकारैः=हंसपक्षिवन्निर्मलैः सभासदैः=अमात्यादिभि सभ्यैः सेव्य स्यात्=आश्रयणीयो भवेत्, तैरेव गृध्राकारैः (परिवारितो) नृपः हंसाकारोऽपि सन्त्याज्य=परिहर्त्तव्य इत्यर्थः।

राजा स्वयंदुष्टप्रकृतिरपि सत्सङ्गेन सुस्वभावो भवति, स्वयन्निर्मलोऽपि दुष्टामात्यादिसङ्गेन दुष्टप्रकृतिर्जायत इति भावः॥ ३२५॥

मृदुना सलिलेन खन्यमाना-
न्यवघृष्यन्ति गिरेरपि स्थलानि ।
उपजापविदां च कर्णजापैः
किमु चेतांसि मृदूनि मानवानाम् ॥ ३२६ ॥
कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ।
क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन ॥ ३२७ ॥

अथवा साध्विदमुच्यते—

पादाहतोऽपि दृढदण्डसमाहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः ।
कोऽप्येष एव पिशुनोग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥ ३२८ ॥

---

(ख) "मृदुने"ति—गिरेः=पर्वतस्यापि स्थलानि=प्रदेशविशेषा मृदुना=कोमलेन सलिलेन=पानीयेन खन्यमानानि=निरन्तरपातेन ताड्यमानानि, अवघृष्यन्ति=घृष्टानि सन्ति क्षयं यान्ति, उपजापवताम्=भेदबुद्ध्युत्पादने कुशलाना कर्णजापै=पिशुनताव्यवहारैः मानवानां=मनुष्याणां मृदूनि चेतांसि=मनांसि खन्यमानानि सन्ति (विकृतानि भवेयुरिति) किमु वक्तव्यम् । यदा नैरन्तर्येण जलप्रपातविधयाकठोर पर्वतस्थलाना विकृतिरवश्यभाव्या तदा निरन्तरदारुणवचनोपजापैर्नराणां चेतास्यपि विकृतिं गच्छेयुरिति नाश्चर्य नवाऽसाध्यमिति भावः । मालभारिणीच्छन्दः ॥ ३२६ ॥

"कर्णविषरो"—कर्णविषेण=विषतुल्येनोपजापेन भग्नः—त्रुटित पूर्वावस्थातो विकृतिं यापित बालिश=अदूरदर्शी लोकः किं किं न करोति अर्थात् उपजप्तुराशयानुरोधेन सर्वमप्यकृत्यं कर्तुमुद्यतो भवति । तदेव दर्शयति–क्षपणकताम्=बौद्धसन्यासित्वमपि धत्ते=अङ्गीकरोति, नरकपालेन मानवशिरोऽस्थ्ना (अत्यन्तापवित्रेण) सुराम्=मद्यमपि पिबति अर्थात् वाममार्गाचार्योपि जायते । सर्वमिदं विकृतचित्तताया एव फलमिति भावः । आर्या ॥ ३२७ ॥

"पादाहतोपी"ति—पादाहत=पादेनाताडितोपि, दृढेन उग्रेण

तथा च—

अहो खलभुजङ्गस्य विपरीतो वधक्रमः ।
कर्णे लगति चैकस्य प्राणैरन्यो वियुज्यते ॥ ३२९ ॥

तदेवं गतेऽपि किं कर्तव्यमित्यहं त्वां सुहृद्भावात्पृच्छामि। दमनक आह—तद्देशान्तरगमनं युज्यते। नैवंविधस्य कुस्वामिनः सेवां विधातुम्। उक्तं च—

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ३३० ॥

सञ्जीवक आह-अस्माकमुपरि स्वामिनि कुपिते गन्तुं न शक्यते, न चान्यत्र गतानामपि (क) निर्वृतिर्भवति। उक्तं च-

---

दण्डेन लगुडेन सम्यगाहतो मारितोऽपि सर्पः यं=नरादिकं दंष्ट्रया=दाढया स्पृशति, तमेव हन्ति=यमलोकातिथिं करोति किलेति निश्चितमेतत् । पिशुनोग्रमनुष्यधर्मः=पिशुन उपजापकश्चासावुग्रो निर्दयो यो मनुष्यस्तस्य धर्मः यत् परम्=अन्यम्, कर्णे=श्रवणे स्पृशति अर्थादन्यस्य कर्णे प्रविशति परम्=अन्यजनं समूलम्=समग्रमेव हन्ति=ध्वंसयति । भुजङ्गादपि खलोऽत्यन्तं क्रूरो भवतीति भावः । वसन्ततिलकं वृत्तम्, लक्षणमुक्तं प्राक् ॥ ३२८ ॥

"अहो" इति । "अहो" इत्याश्चर्यम् खलभुजङ्गस्य=खल एव भुजङ्गः= सर्पः तस्य, वधक्रमः=हननक्रमः विपरीतः=विलक्षण एवेत्यर्थः, यदेकस्य कर्णे लगति=स्पर्शं करोति अन्यः=अपरो जनः प्राणैर्वियुज्यते=मृतो भवतीत्यर्थः। पूर्ववदेव तात्पर्यम् ॥३२९॥

"गुरो"रिति । अवलिप्तस्य=उद्धतस्य कार्याकार्यम्=कर्त्तव्याकर्त्तव्यम् अजानतः=अविज्ञातवतः तथा—उत्पथप्रतिपन्नस्य=कुमार्गगामिनः गुरोरपि= पित्रादेरपि परित्यागः=परिहाणमेव विधीयते=क्रियते इत्यर्थः । एवंविधस्य गुरोस्त्यागे नैव कोऽपि दोष इति भावः ॥३३०॥

(क) निर्वृतिः=सुखम् ।

महतां योऽपराध्येत दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू ताभ्यां हिंसति हिंसकम् ॥ ३३१ ॥

तद्युद्ध मुक्त्वा मे नान्यदस्ति श्रेयस्करम् । उक्तं च-

न तान्हि तीर्थैस्तपसा च लोका-
न्स्वर्गैषिणो दानशतैः सुवृत्तैः ।
क्षणेन यान् यान्ति रणेषु धीराः
प्राणान्समुज्झन्ति हि ये सुशीलाः ॥ ३३२ ॥

मृतैः सम्प्राप्यते स्वर्गो जीवद्भिः कीर्तिरुत्तमा ।
तदुभावपि शूराणां गुणावेतौ सुदुर्लभौ ॥३३३॥

---

"महताम्' इति । य =य कोऽपि पुरुषो महताम्=बलवताम् अपराध्येत=अपराधं कुर्यात् स , अहं दूरस्थोऽस्मि=यस्यापराध. कृतस्तत्सकाशाद्बहुविप्रकृष्टदेशस्थोऽस्मि तेनायं ममापकारकरणे समर्थो नास्तीति न आश्वसेत्=विश्वास न कुर्यात्, यत बुद्धिमत =नीतिकुशलस्य दीर्घौ=लम्बमानौ दूरदेशस्थपदार्थाकर्षणेऽपि समर्थौ बाहू=भुजौ भवत ताभ्या दीर्घाभ्या बाहुभ्या हिंसकम्=अपराधकर्तारम् हिंसति=नाशयतीत्यर्थ । बलवान् नीतिज्ञश्च सर्वमपि जेतु शक्नोतीति भाव ॥३३१॥

"न तानि"ति—ये रणेषु=युद्धेषु धीरा =शूरा प्राणान्=असून् समुज्झन्ति=परित्यजन्ति, ते सुशीला =सदाचारा. उदारप्रकृतय इत्यर्थ. यान् लोकान्=इन्द्रादीना लोकान् यान्ति=प्राप्नुवन्ति, स्वर्गैषिण.=नाकलोकप्राप्तिकामा तीर्थै =वाराणसीप्रभृतिपुण्यक्षेत्रै तपसा=चान्द्रायणव्रतादिना सुवृत्तै =यथाविध्यनुष्ठितैः अर्थात् पात्राऽपात्रादिविचारणापूर्वकं कृतैर्दानशतै =असङ्ख्यातैर्दानै (स्वस्वत्वपरित्यागपूर्वकपरस्वत्वापादनरूपे दानं ददातिपदबोध्य कर्मविशेषस्तै ) तान् लोकान् नहि=नैव यान्तीत्यनुषङ्ग । सङ्ग्रामे कातरभावं वर्जयित्वा कृतप्राणपरित्यागाना शूराणामवश्यं स्वर्गप्राप्तिरिति भाव ॥३३२॥

"मृतै"रिति । मृतैः=सङ्ग्रामे पञ्चत्वङ्गतैः स्वर्ग =नाकलोक सम्प्राप्यते, जीवद्भि =विजय प्राप्य प्राणद्भि सद्भिः उत्तमा कीर्त्तिः=अनुपमं यशः

ललाटदेशे रुधिरं स्रवत्तु
शूरस्य यस्य प्रविशेच्च वक्त्रे।
तत्सोमपानेन समं भवेच्च
सङ्ग्रामयज्ञे विधिवत्प्रदिष्टम् ॥२३४॥

तथा च—

होमार्थैर्विधिवत्प्रदानविधिना सद्विप्रवृन्दार्चनै-
र्यज्ञैर्भूरिसुदक्षिणैः सुविहितैः सम्प्राप्यते यत्फलम्।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुम्भिस्तत्फलमाहवे विनिहतैः सम्प्राप्यते तत्क्षणात् ॥२३५

---

प्राप्यते, तत्=तस्मात्कारणात् एतावुभावपि शूराणां=युद्धभटानां पुरुषाणां विजयप्राप्तिकीर्त्तिलाभरूपौ गुणौ सुदुर्लभौ=शूरताविरहितैः प्राप्तुमशक्या-वित्यर्थः ॥२३३॥

"ललाटदेश" इति। यस्य शूरस्य=युद्धभटस्य नरस्य ललाटदेशे=गोधिप्रदेशे (मस्तके) स्रवत्=निर्गच्छत् रुधिरम्=शोणितं वक्त्रे=मुखप्रदेशे च प्रविशेत्, तत्=रुधिरं सङ्ग्रामयज्ञे=सङ्ग्राम एव यज्ञस्तत्र विधिवत्=यथा-विधि सोमपानेन=सोमात्मकयागे सोमाख्यलतायाः रसपानेन तुल्यम्=समं प्रदिष्टं=कथितं भवेत्=स्यादित्येतत् शास्त्रकारैराम्नातमित्यर्थः ॥२३४॥

"होमार्थै"रिति। पुम्भिः=मनुष्यैः विधिवत्=यथाविधि कृतैः=सङ्ग्रह-रूपेण सम्पादितैः होमार्थैः=होमस्य अर्थाः पदार्थाः होमार्थास्तैर्यज्ञसम्बन्धि-पदार्थैः प्रदानविधिना=प्रकृष्टेन दानरूपेण विधानेन, सद्विप्रवृन्दार्चनैः=सता सदाचारवतां विदुषां विप्रवृन्दानां ब्राह्मणसङ्घानां अर्चनैः पूजनैः तथा—सुविहितैः विधिपूर्वकमनुष्ठितैः भूरिसुदक्षिणैः=बहूत्तमदक्षिणात्मकद्रव्योपेतैः यज्ञैः=ज्योतिष्टोमादिभिर्यागैः, तथा—सत्तीर्थ० सत्सु उत्तमेषु तीर्थेषु आश्रमेषु च वासैः निवासकरणैः होमैः अग्निहोत्रैः नियमैः इन्द्रियाणां बाह्यविषयेभ्यो निरोधनैः, तथा—चान्द्रायणाद्यैः=चान्द्रायणादिव्रतविशेषैः यत् फलं सम्प्रा-प्यते=सम्यक् लभ्यते, तत् फलम् आहवे=युद्धे विनिहतैः=मृतैः तत्क्षणात्=तस्मिन्नेव क्षणे न तु विलम्बेनेत्यर्थः सम्प्राप्यते=लभ्यते। अलौकिकं शूराणां कृते

तदाकर्ण्य दमनकश्चिन्तयामास-'युद्धाय (क) कृतनिश्चयोऽयं दृश्यते दुरात्मा । तद्यदि कदाचित्तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति तन्महाननर्थः सम्पत्स्यते । तदेनं भूयोऽपि (ख) स्वबुद्ध्या प्रबोध्य तथा करोमि यथा देशान्तरगमनं करोति ।' आह च-'भो मित्र ! सम्यगभिहितं भवता । परं किंतु कः स्वामिभृत्ययोः सङ्ग्रामः । उक्तं च—

वलवन्तं रिपुं दृष्ट्वा किलात्मानं प्रकोपयेत् ।
वलवद्भिश्च कर्तव्या शरच्चन्द्रप्रकाशता ॥ २३६ ॥

अन्यच्च—

शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः ।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद्यथा' ॥ २३७ ॥

सञ्जीवक आह—कथमेतत् । सोऽब्रवीत्-

---

सङ्ग्रामयज्ञफलमिति भावः । शार्दूलविक्रीडितम्, लक्षणमुक्तं प्राक् ॥२३५॥

(क) कृतो निश्चयो येन स तमित्यर्थ । (ख) स्वबुद्ध्या=स्वमत्या । प्रबोध्य=बोधयित्वा । स्वामीति=स्वामी च भृत्यश्च स्वामिभृत्यौ तयोः क सङ्ग्रामः, तुल्यवलयोरेव सङ्ग्रामो भवतीति भाव ।

"वलवन्तम् इति । वलवन्तम्=प्रवलं रिपुम्=शत्रुं दृष्ट्वा=पर्यालोच्य किल=निश्चयेन आत्मान प्रकोपयेत्=प्रकर्षेण कुपितं कुर्यात् अर्थात् तम्प्रति स्वकीयं महद्बलं प्रदर्शयेत् । "प्रगोपयेत्" इति पाठे तु—दुर्वलः सन् पुरुष आत्मानं सम्यक् गोपितं कुर्यात् विग्रहस्थाने सन्धिमाश्रयेदित्यर्थ । बलवद्भिः= प्रवलै सद्भिर्जनैः शरच्चन्द्रप्रकाशता=शरत्कालीनचन्द्रवत् स्वात्मप्रकाशता कर्तव्या, सति वले आत्मा नैव गोपनीय किन्तु युद्धेन विजयलाभो विधेय इति भाव ॥२३६॥

"शत्रो"रिति—य पुरुषः शत्रो =वैरिणः विक्रमम्=वलम् अज्ञात्वा= अविज्ञाय वैरमारभते=वैरं करोति, स पराभवम्=तिरस्कारम् आप्नोति=लभते यथा—टिट्टिभात्=टिट्टिभाख्यात् क्षुद्रपक्षिण सकाशात् समुद्रः=सागरः पराभवमवाप्नोदित्यर्थ ॥२३७॥

## कथा १२।

कस्मिंश्चित्समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म। ततो गच्छति काले ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त। अथासन्नप्रसवा सती सा टिट्टिभमूचे-भोः! कान्त! मम प्रसवसमयो वर्तते। तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानम्, येन तत्राहं (क) मण्डकविमोक्षणं करोमि। टिट्टिभः प्राह-भद्रे! रम्योऽयं समुद्रप्रदेशः। तदत्रैव प्रसवः कार्यः। साह-अत्र पूर्णिमादिने (ख) समुद्रवेला चरति। सा मत्तगजेन्द्रानपि (क) समाकर्षति। तद्दूरमन्यत्र किञ्चित्स्थानमन्विष्यताम्। तच्छ्रुत्वा विहस्य टिट्टिभः प्राह—भद्रे! युक्तमुक्तं भवत्या। का (ख) मात्रा समुद्रस्य या मम दूषयिष्यति प्रसूतिम्। किं न श्रुतं भवत्या—

बद्धाम्बरचरमार्गं व्यपगतधूमं सदा महद्भयदम्।
मन्दमतिः कः प्रविशति हुताशनं स्वेच्छया मनुजः॥३३८॥
मत्तेभकुम्भविदलनकृतश्रमं सुप्तमन्तकप्रतिमम्।
यमलोकदर्शनेच्छुः सिंहं बोधयति को नाम॥३३९॥

---

(क) अण्डकविमोक्षणम्=अण्डकाना क्षुद्राणामण्डाना विमोक्षणं=प्रसवमित्यर्थः। (ख) समुद्रवेला=सागरस्य जलोच्छलनमित्यर्थ। (क) समाकर्षति=स्वाधीनीकरोति। (ख) मात्रा=शक्ति बलसम्पत्तिरिति यावत्।

"बद्धाम्बरे"ति—कः मन्दमति=अल्पबुद्धिर्मूर्ख इत्यर्थ मनुज=[illegible] बद्धाम्बरचरमार्गं=बद्धो रोधं नीतोऽम्बरचराणा खेचराणा मार्गो येन स तथाविधं व्योमस्पर्शिज्वालमित्यर्थ, व्यपगतधूमम्=व्यपगतो [illegible]ते धूमो यस्य तादृशं जाज्वल्यमानमिति भाव, अतएव महाभयदम्=[illegible]तिप्रदम् हुताशनम्=वह्निं, स्वेच्छया प्रविशति। न कोऽपि प्रवेष्टुं शक्तो [illegible]। मया साकं विरोधो जाज्वल्यमानवह्नौ प्रवेशतुल्य इति [illegible]र्थ॥३३८॥

"मत्तेभे"ति—को नाम यमलोकदर्शनेच्छु=मृत्युमिच्छन नर

को गत्वा यमसदनं स्वयमन्तकमादिशत्यजातभयः ।
प्राणानपहर मत्तो यदि शक्तिः काचिदस्ति तव ॥३४०॥
प्रालेयलेशमिश्रे मरुति प्राभातिके च वाति जडे ।
गुणदोषज्ञः पुरुषो जलेन कः शीतमपनयति ॥३४१॥

(ग) तस्माद्विश्रब्धात्रैव गर्भं मुञ्च । उक्तं च—

यः पराभवसन्त्रस्तः स्वस्थानं सन्त्यजेन्नरः ।
तेन चेत्पुत्रिणी माता तद्वन्ध्या केन कथ्यते ॥३४२॥

तच्छ्रुत्वा समुद्रश्चिन्तयामास—अहो गर्वः पक्षिकीटस्यास्य । अथवा साध्विदमुच्यत—

---

मत्तेभ०=मत्तानां मदस्राविणामिभानां गजानां ये कुम्भाः मस्तकप्रान्तस्थूलमांसपिण्डभागाः तेषां विदलने विदारणे कृतः सिद्धः श्रमो यस्य तम्, सुप्तम्=कृतनिद्रम् तथा—अन्तिकप्रतिमम्=यमतुल्यम्, सिंहं बोधयति=जागरयति, न कोपीत्यर्थः । तादृशसिंहजागरणसमो मया सह विरोध इति भावः ॥३३९॥

"को गत्वे"ति—को जनः यमसदनम्=यमलोकम् गत्वा=प्राप्य अजातभय=न जातं भयं यस्य स तादृशो निर्भयः सन् स्वयम्=स्वयमेव अन्तकम्=यमं, तव यदि काचित् शक्तिरस्ति तदा मत्तः=मत्सकाशात् ममेत्यर्थः प्राणान् अपहर=मा मारय इति=एवंरूपेण आदिशति=आदेशं करोति, न कोपीत्यनादेशकरणे समर्थोऽस्तीति भाव । मम सन्तानविनाशकारी यमलोकं यास्यतीत्यत्र तात्पर्यम् ॥३४०॥

"प्रालेये"ति—प्रालेयमिश्रे=तुषारसहिते अतएव जडे=अतिमात्रं शीतले प्राभातिके=प्रातःकालीने मरुति=वायौ वाति=सरति सति को गुणदोषज्ञः पुरुषः=विवेकी नर जलेन=पानीयेन शीतं=शैत्यम् अपनयति=दूरीकरोति, न कोपीत्यर्थ तात्पर्यं पूर्ववत् ॥ एषु आर्यावृत्तम् ॥३४१॥

(ग) विश्रब्धा=विश्वासमापन्ना शङ्काहीनेत्यर्थः ।

"य" इति । यो नर पराभवसन्त्रस्त=पराभवात् पराजयात् सन्त्रस्तो भीत सन् स्वस्थानम्=स्वकीयमाश्रमं सन्त्यजेत्=जह्यात् चेत्=यदि तेन=तादृशेन भीरुणा माता पुत्रिणी=पुत्रवती तत्=तदा केन निमित्तेन पुत्रेण वा

उत्क्षिप्य टिट्टिभः पादावास्ते भङ्गभयाद्दिवः ।
स्वचित्तकल्पितो गर्वः कस्य नात्रापि विद्यते ॥३४३॥

तन्मयास्य (घ) प्रमाणं कुतूहलादपि द्रष्टव्यम् । किं ममैषोऽण्डापहारे कृते करिष्यति—इति चिन्तयित्वा स्थितः । अथ प्रसवानन्तरं (ङ) प्राणयात्रार्थं गतायाष्टिट्टिभ्याःसमुद्रो (च) वेलाव्याजेनाण्डान्यपजहार । अथायाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे-भो ! मूर्ख ! कथितमासीन्मया ते यत्समुद्रवेलयाण्डानां विनाशो भविष्यति । तद्दूरतरं व्रजावः । परं मूढतयाहङ्कारमाश्रित्य मम वचनं न करोषि । अथवा साध्विदमुच्यते—

सुहृदां हितकामानां न करोतीह यो वचः ।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥३४४॥

टिट्टिभ आह—कथमेतत् । साब्रवीत्-

---

वन्ध्या=प्रसवशक्तिशून्या कथ्यते=अभिधीयते । कातरनरमातैव वन्ध्या नत्वप्रसवेति भावः ॥३४२॥

"उत्क्षिप्ये"ति । टिट्टिभ =एतन्नामा क्षुद्र. पक्षी दिव =गगनस्य भङ्गभयात्=पातभीतेः पादौ=अङ्घ्री उत्क्षिप्य=उर्ध्वीकृत्य स्वावष्टम्भायेति शेष आस्ते=तिष्ठति, अपिनाम प्रश्ने अत्र=जगति स्वचित्तकल्पित =स्वमनोरथरचित कस्य पुसो गर्वोऽभिमानो न विद्यते, सर्वस्यापि स्वमनोभावितोऽभिमानो भवत्येवेत्यर्थ. । क्षुद्रो जन्तुरनधिकारेऽपि साभिमानो भवतीति भावः ॥३४३॥

(घ) प्रमाणम्=बलमित्यर्थ. । कुतूहलात्=कौतुकात् । अण्डापहारे=डिम्बाना हरणे कृते सतीत्यर्थः ।

(ङ) प्राणयात्रार्थम्=इतस्ततो जीवनार्थ कणानादातुमित्यर्थ । (च) ...=स्वकीयजलोच्छलनच्छलेन । प्रलपन्ती=प्रलापं कुर्वाणा ॥

"सुहृदा"मिति-इह=संसारे यो नरः हितकामाना=हितं चिन्तयता सुहृद्धन्धूनाम् वच =वचनं न करोति=न पालयते, स दुर्बुद्धि =मूर्ख काष्ठात्=दारुखण्डात् भ्रष्ट =पतितः कूर्म इव=कच्छप इव विनश्यति=नाशमुपैति॥३४४॥

## कथा १३

अस्ति कस्मिंश्चिज्जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य च सङ्कटविकटनाम्नी मित्रे हंसजातीये (क) परमस्नेहकोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य तेन सहानेकदेवर्षिमहर्षीणां कथाः कृत्वा (ख) स्तमयवेलायां स्वनीडसंश्रयं कुरुतः। अथ गच्छता कालेनावृष्टिवशात्सरः शनैः शनैः शोषमगमत्। ततस्तद्दुःखदुःखितौ तावूचतुः–भो! मित्र! (ग) जम्बालशेषमेतत्सरः सञ्जातम्। तत्कथं भवान्भविष्यतीति व्याकुलत्वं नो हृदि वर्तते। तच्छ्रुत्वा कम्बुग्रीव आह–भोः! सांप्रतं नास्त्यस्माकं जीवितव्यं जलाभावात्। तथाप्युपायश्चिन्त्यतामिति। उक्तं च–

त्याज्यं न धैर्यं विधुरेऽपि काले
धैर्यात्कदाचिद्गतिमाप्नुयात्सः।
यथा समुद्रेऽपि च पोतभङ्गे
सांयात्रिको वाञ्छति तर्तुमेव ॥ ३४५ ॥

---

(क) परमेति—परमा उत्तमा चासौ स्नेहस्य प्रीते कोटिः काष्ठा ताम्, अत्यन्तप्रीतिमित्यर्थः। (ख) अस्तमयवेलायाम्=प्रदोषे, स्वनीडसंश्रयम्=निजावासम्। (ग) जम्बालशेषम्=कर्दमावशिष्टम् "निषद्वरस्तुजम्बालः पङ्कोऽस्त्री शादकर्दमौ" इत्यमरः।

"त्याज्य"मिति। विधुरे कालेऽपि=वैक्लव्यप्राप्तेऽपि समये धैर्यम्=धीरता, न त्याज्यम्=नैव परिहर्त्तव्यम् मनुष्येणेति शेषः। विपत्तावश्यमेव धैर्यमालम्बनीयमिति भावः। मनुरपि धृतिं धर्ममाचष्टौ—"धृतिः क्षमो दमोऽस्तेय" मित्यादौ। स=विधुरकालेऽपि धैर्यधारी पुरुषः धैर्याद्धेतोः कदाचित् गतिम्=विपत्सन्तरणोपायम् आप्नुयात्=प्राप्तो भवेदित्यर्थः। अत्रैव दृष्टान्तमाह—यथा=येन प्रकारेण समुद्रे=सागरे, पोतभङ्गेऽपि=पोतस्य समुद्रनौकाया व्यसनेऽपि सायात्रिकः=पोतवणिक् तर्तुमेव=समुद्रं पारं कर्तुमेव वाञ्छति=कामयते। स धैर्यं धृत्वा स्वोद्योगेन पारगमनचेष्टामेव करोति न तु स्वसत्त्वं

अपरं च।

मित्रार्थे बान्धवार्थे च बुद्धिमान्यतते सदा।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः॥ ३४६॥

तदानीयतां काचिद् दृढरज्जुर्लघु काष्ठं वा। अन्विष्यतां च (घ) प्रभूतजलसनाथं सरः, येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोस्तत्काष्ठं मया सहितं सङ्गृह्य तत्सरो नयथः। तावूचतुः-भो! मित्र! एवं करिष्यावः। परं भवता (ङ) मौनव्रतेन स्थातव्यम्। नो चेत्तव काष्ठात्पातो भविष्यति। तथानुष्ठिते गच्छता कम्बुग्रीवेण (च) धोभागव्यवस्थितं किञ्चित्पुरमालोकितम्। तत्र ये पौरास्ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः-अहो! चक्राकारं किमपि पक्षिभ्यां नीयते। पश्यत पश्यत। अथ तेषां (छ) कोलाहलमाकर्ण्य कम्बुग्रीव आह—भोः! किमेष कोलाहलः इति वक्तुमना अर्धोक्तिपतितः पौरैः खण्डशः कृतश्च। अतोऽहं ब्रवीमि—"सुहृदां हितकामानाम्" इति॥ तथा च—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति॥ ३४७॥

टिट्टिभ आह—कथमेतत्। साब्रवीत्—

---

परिजहाति तद्वत् विपत्प्राप्तिकालेऽपि निश्चेष्टेन मनुष्येण न भाव्यमिति भाव। उपजाति वृतम्॥३४५॥

"मित्रार्थे" इति। आपत्सु=विपत्तिषु जातासु=उपस्थितास्वपि बुद्धिमान्=धैर्यनिश्चयवान् विवेकी जन=मनुष्यः मित्रार्थे=मित्राणा सुहृदामर्थे (एवं) बान्धवार्थे=मातापित्राद्यर्थे च सदा यतते=आपदुद्धाराय चेष्टते। मनु=आदिमहापुरुषो जगाद=अवोचत्॥३४६॥

(घ) प्रभूतजलसनाथम्=प्रचुरपानीयपूर्णम्। लघु=क्षुद्रम्, काष्ठम्=दारु। मौन व्रतेन=तूष्णीम्भावोपेतेन। (च) अधोभाग=निम्नप्रदेश तत्र व्यवस्थि-। पुरम्=नगरम्। (छ) कोलाहलम्=कलकलशब्दम्। आकर्ण्य=श्रुत्वा। "अनागते"ति—अनागतस्य अनुपस्थितस्य भाविनो विपयस्य

## कथा १४।

कस्मिंश्चिज्जलाशयेऽनागतविधाता प्रत्युत्पन्नमतिर्यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति। अथ कदाचित्तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तम्-यदहो! (१) बहुमत्स्योऽयं ह्रदः। कदाचिदपि नास्माभिरन्वेषितः। तदद्य तावदा (२) हारवृत्तिः सञ्जाता। सन्ध्यासमयश्च संवृत्तः। ततः प्रभातेऽत्रागन्तव्यमिति निश्चयः। अतस्तेषां(३)तत्कुलिशपातोपमं वचः समाकर्ण्याऽनागताविधाता सर्वान्मत्स्यानाहूयेदमूचे—अहो! श्रुतं भवद्भिर्यन्मत्स्यजीविभिरभिहितम्। तद्रात्रावपि गम्यतां किञ्चिन्निकटं सरः। उक्तं च—

अशक्तैर्बलिनः शत्रोः कर्तव्यं प्रपलायनम्।
संश्रितव्योऽथवा दुर्गो नान्या तेषां गतिर्भवेत्॥ ३४८॥

तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य (४)मत्स्यसङ्क्षयं

---

विधाता=प्रतीकारकरणे समर्थ तथा—प्रत्युत्पन्ना तस्मिन्नेवकाले उचिता आपदुद्धरणक्षमा मतिर्यस्य सः एतौ द्वावपि मत्स्यौ सुखमेधेते=सुखं यथा स्यात्तथा वृद्धिं प्राप्नुत। यद्भविष्य=यदेव भविष्यं भाव्यं यस्य स तथोक्तः यद्भाव्यं तद्भाव्यमेव, नैव प्रतीकारः कर्त्तव्य इति भाग्यनिर्भरो यत्ने दरिद्र प्रतीकारविमुख इत्यर्थ विनश्यति=मृत्युं प्राप्नोतीत्यर्थः॥३४७॥

(१) बहवो मत्स्या मीना यत्र स "बहुमत्स्यः"। ह्रद=सरोवर। (२) आहारवृत्ति=प्राणयात्रा। (३) कुलिशपातोपमम्=वज्रपातसदृशम्।

"अशक्तै"रिति—बलिन=बलसम्पन्नात् शत्रो=अरेः सकाशात् अशक्तै=दुर्बलैर्जनै प्रपलायनम्=प्रकर्षेण पलायन धावनं कर्त्तव्यम्=अनुष्ठेयम्। अथवा=पक्षान्तरे दुर्ग=कोट्ट संश्रितव्य=आश्रयणीय। तेषाम्=शत्रुसकाशाद् दुर्बलानाम्, अन्या=उक्तपक्षद्वयभिन्ना गति=उपायो न भवेत्=नैवास्तीत्यर्थ। पक्षद्वयश्च पलायन दुर्गाश्रयणं वा॥३४८॥

(४) मत्स्यसङ्क्षयम्=मत्स्यानां मीनाना विध्वंसम्।

करिष्यन्ति। एतन्मम मनसि वर्तते। तन्न युक्तं साम्प्रतं क्षणमप्यत्रावस्थातुम्। उक्तं च—

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा।
ते न पश्यन्ति विद्वांसो देहभङ्गं कुलक्षयम्॥ ३४९॥

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह—अहो! सत्यमभिहितं भवता। ममाप्यभीष्टमेतत्। तदन्यत्र गम्यताम्—इति। उक्तं च—

परदेशभयाद्भीता बहुमाया नपुंसकाः।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः॥३५०॥

यस्यास्ति सर्वत्र गतिः स कस्मा-
त्स्वदेशरागेण हि याति नाशम्।
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति॥ ३५१॥

---

"**विद्यमाना**" इति—येषां लोकानाम्, अन्यत्रापि=अन्यस्मिन् स्थानेऽपि सुखावहा=सुखोत्पादिका गतिः=उपायः प्रकारो वा विद्यमाना=विद्यतेऽस्तीत्यर्थः, ते विद्वांसः=सुखप्राप्त्युपायं दुःखनिवृत्तिप्रकारञ्च जानन्तः पण्डिताः देहभङ्गम्=स्वशरीरविनाशं कुलक्षयम्=वंशविच्छेदञ्च न पश्यन्ति=नैवालोकयन्ते। "चो"ऽध्याहार्यः॥३४९॥

"**परदेशभया**"दिति—काकाः=वायसाः कापुरुषाः=कातराः निर्धैर्याः, मृगाः=हरिणाश्च एते परदेशभयात्="स्वदेशं विहाय परदेशे कथं वासं करि-ष्यामः" इति परदेशभीतेर्हेतोः अतएव—बहुमायाः=स्वदेशेऽत्यन्तममता-[illegible]था—नपुंसकाः=क्लीबाः स्वदेशे=स्ववास्तव्ये एव निधनम्=मृत्युं यान्ति=[illegible]न्ति। परदेशेऽपि स्वकार्यसाधनक्षमा बुद्धिमन्तः; ततोऽन्ये तु मूढा[illegible]व॥३५०॥

उक्तमेवार्थं द्रढयति—"**यस्ये**"ति। यस्य=पुरुषस्य सर्वत्र गतिः=सर्व-[illegible] प्रदेश एव गमनोपायः अस्ति सः=पुरुषः स्वदेशरागेण=स्वदेशस्य

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच—अहो ! न भवद्भ्यां मन्त्रितं सम्यगेतदिति, यतः किं वाङ्मात्रेणापि तेषां (५)पितृपैतामहिकमेतत्सरस्त्यक्तुं युज्यते यद्यायुःक्षयोऽस्ति तदन्यत्र गतानामपि मृत्युर्भविष्यत्येव। उक्तं च—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ३५२ ॥

---

प्रीत्या कस्मात् नाशं याति=प्राप्नोति "हि" पादपूरणे। अथवा निश्चये। सर्वत्र देशे विदेशे गमनोपायस्य विद्वान् पुरुषः स्वदेशप्रीतिमात्रतया नैवात्मानं विनाशयति, प्रत्युत सर्वत्र सञ्चारं कृत्वा स्वाभीष्टं साधयन् आत्मानं त्रायत एवेति भावः।

उक्तमर्थं समर्थयते—"तातस्य" इति। कापुरुषाः=कातराः जनाः अयम्—(अस्माकं) तातस्य=पितुः कूपः इति ब्रुवाणाः=कथयन्तः सन्तः क्षारम्=सलवणं, जलम्=पानीयं पिबन्ति। इदमस्माकं पितृपरम्परया प्राप्तं, कालवशात्त्यागार्हतायां सत्यामपि तत्स्थानं त्यक्त्वा येऽन्यत्र न यान्ति ते हीनसत्त्वा एव, विशालहृदया उपायविज्ञास्तु नैवंविधा इत्यत्र तात्पर्यम्। वृत्तमुपजातिः ॥३५१॥

(५) पितृपैतामहिकम्=पितृपितामहप्रपितामहपरम्परया सेवितमित्यर्थः।

सुखदुःखादिकं सर्वं दैवायत्तमिति कृत्वा सर्वदा सर्वत्र सर्वथा सन्तुष्टेनैव भाव्यमित्याह—"अरक्षितम्" इति। अरक्षितम्=अपालितमपि वस्तु दैवरक्षितम्=दैवेन दिष्टेन विधात्रा वा पालितमिति चेत्, तदा तिष्ठति=स्थितमेव भवति तद्विनाशने न कोऽपि समर्थ इति भावः।

सुरक्षितम्=शोभनेन प्रयत्नेन पालितं सदपि दैवहतम्=भाग्येन नष्टं चेत्तदा विनश्यति=विच्छिन्नमेव भवति न तु तिष्ठतीत्यर्थः। तथाहि—वने=अरण्ये विसर्जितः=परित्यक्तः अनाथोऽपि=नास्ति नाथः शरणं यस्य स

तदहं न यास्यामि। भवद्भ्यां च यत्प्रतिभाति तत्कर्तव्यम्। अथ तस्य तं निश्चयं ज्ञात्वानागतविधाता प्रत्युत्पन्नमतिश्च निष्क्रान्तौ सह (१) परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिर्जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह तत्सरो(२)निर्मत्स्यतां नीतम्। अतोऽहं ब्रवीमि--"अनागतविधाता च" इति ॥ तच्छ्रुत्वा टिट्टिभ आह--भद्रे! किं मां यद्भविष्यसदृशं सम्भावयसि। तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं स्वचञ्च्वा शोषयामि। टिट्टिभ्याह--अहो! कस्ते समुद्रेण सह विग्रहः। तन्न युक्तमस्योपरि कोपं कर्तुम् उक्तं च--

पुंसामसमर्थानामुपद्रवायात्मनो भवेत्कोपः।
पिठरं ज्वलदतिमात्रं निजपार्श्वानेव दहतितराम् ॥ ३५३ ॥

---

अनाथः=अशरणोपि जनः जीवति=प्राणित्येव, गृहे=स्वनिकेतने कृतप्रयत्नः= कृतोऽनुष्ठितो भैषज्यादिना यत्नो रक्षणोपायो यस्य स तादृशोऽपि विनश्यति= नाशमुपैति। अतः सर्वथैव पुरुषेण स्वभाग्यशय्यामाश्रित्य सुखेन स्थेयमित्याशयः। वंशस्थवृत्तम् ॥३५१॥

(१) परिजनेन=परिवारेण सह।

(२) निर्मत्स्यताम्=मत्स्यशून्यताम्।

"**पुंसाम्**" इति। असमर्थानाम्=हीनबलानां पुंसाम्=पुरुषाणाम्, कोपः=क्रोधः आत्मनः=स्वस्य उपद्रवाय=विध्वंसाय (एव) भवेत्। उक्तमर्थं समर्थयते--"**पिठरम्**" इति। तथाहि--अतिमात्रम्=अत्यन्तं ज्वलत्= अग्नितापमुपगच्छत् पिठरम्=स्थालीपात्रं हण्डिकेत्यर्थः, निजपार्श्वान्=स्वकीयापर्शुकान् अवयवविशेषान्, दहतितराम्=अतिशयेन भस्मीकरोति।

यथा मृत्तिकायाः पात्रं दग्धीभवत् शोणितायते तावता तस्यात्मनमेव [illegible]करोति परस्य तु न किञ्चिदप्यकर्तुं समर्थम्, एवमेव दुर्बलः पुमान् [illegible] कुर्वाणः स्वयमेव दुःखीभवति अन्यस्य तु न किञ्चिदपि विकृतमर्नानि[illegible] फलितम्। असमर्थेन कदापि कोपो न विधेय इत्यत्र तात्पर्यम् ॥३५३॥

तथा च—

अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ ३५४ ॥

टिट्टिभ आह—प्रिये ! मा मैवं वद । येषामुत्साहशक्तिर्भवति ते स्वल्पा अपि गुरून्विक्रमन्ते । उक्तं च—

विशेषात्परिपूर्णस्य याति शत्रोरमर्षणः ।
आभिमुख्यं शशाङ्कस्य यथाद्यापि विधुन्तुदः ॥ ३५५ ॥

तथा च—

प्रमाणादधिकस्यापि गण्डश्याममदच्युतेः ।
पदं मूर्ध्नि समाधत्ते केसरी मत्तदन्तिनः ॥ ३५६ ॥

---

उक्तविषयेऽन्यदपि वक्तुमाह—"**तथा चे**"ति ।

"**अविदित्वे**"ति—आत्मन =स्वस्य, परस्य च=अन्यस्य शत्रोरित्यर्थ शक्तिम्=सामर्थ्यम् अविदित्वा=अज्ञात्वा अनालोच्येति यावत् समुत्सुक = समुत्कण्ठित समुत्तेजित सन् अभिमुख =शत्रुसम्मुखं गच्छन्=प्रस्थितो जन वह्नौ=अनले पतङ्गवत्=क्षुद्रपक्षिविशेषवत् नाशं याति=मृतो भवतीत्यर्थ । स्वबलं विविच्यैव शत्रु पराक्रमणीय इति भाव ॥३५४॥

(१) उत्साहशक्ति =हृदयसत्त्वं धैर्यविशेष इति यावत् । (२) स्वल्पा =क्षुद्रकाया । (३) विक्रमन्ते=(शत्रूणामुपरि) बलवदाक्रमणं कुर्वन्तीत्यर्थ । अत्र कथमात्मनेपदमिति चिन्तनीयम् ।

"**विशेषादि**"ति—अमर्षण =क्रोधन पुरुष विशेषात्=आधिक्येन परिपूर्णस्य सम्पन्नस्य शत्रो =वैरिण आभिमुख्यम्=साम्मुख्य याति । अत्रोपमानमाह—"**शशाङ्कस्ये**"ति—यथा विधुन्तुद =राहु अद्यापि=सम्प्रत्यपि शशाङ्कस्य=चन्द्रस्य (आभिमुख्य याति) इत्यर्थ । दुर्बलाना कृतेऽप्याक्रमणे शूरास्तत्रोदासत एवेति भाव ॥३५५॥

"**प्रमाणादि**"ति—केसरी=सिंह , प्रमाणात्=स्वशरीरपरिमाणात् अधिकस्य=महोन्नतस्य, तथा—गण्डयो कपोलस्थलयो श्यामस्य कृष्णवर्णस्य मदस्य दानवारिण च्युति प्रस्रवणं यस्य स तादृशस्तस्य, मत्तद-

तथा च—

वालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ ३५७ ॥

हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशः
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः ।
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरि-
स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥३५८॥

---

न्तिन =मत्तगजस्यापि मूर्ध्नि=मस्तके, पदम्=अङ्घ्रि समाधत्ते=सम्यगाधान करोति तत्र निजं चरणमर्पयतीत्यर्थ । क्षुद्रकायोऽपि प्राणी महोत्साही चेन्महाकायमपि शत्रुं तिरस्करोति । शत्रो पराभवने हृदयसत्त्वस्यैवापेक्षा शरीरस्याल्पत्वमहत्त्वे त्वकिञ्चित्करे एवेति भाव ॥ ३५६ ॥

अन्यदप्याह—"वालस्ये"ति—वालस्य=शिशो सद्य उदितस्य, रवे =सूर्यस्यापि पादा =किरणा भूभृताम्=पर्वतानामुपरि=मूर्ध्नि पतन्ति।तेजसा=पराक्रमेण सहजातानाम्=सहोत्पन्नाना तेजस्विनामिति यावत् कुत्र=कस्मिन् विषये वय =तारुण्यरूपम् उपयुज्यते=उपकारि भवति । न कुत्राप्युपयुज्यत इत्यर्थ ॥३५७ ॥

"हस्ती"ति—हस्ती=गज स्थूलतर =अतिशयेन स्थूल , स च=हस्ती अङ्कुशवश =अङ्कुशस्य गजताडनलोहदण्डविशेषस्य वशोऽधीन , स अङ्कुश किं हस्तिमात्र =हस्तिप्रमाणोऽस्ति ? नैवास्तीत्यर्थ । दीपे=प्रदीपे प्रज्वलिते=प्रदीप्ते सति तम =अन्धकार प्रणश्यति=विध्वस्तं भवति, किं तम दीपमात्रम्=दीपप्रमाणम् ? नैवेत्यर्थ ।

गिरय =पर्वता वज्रेण=पर्वतापेक्षया क्षुद्रकायेन कुलिशेनापि हता =ताडिता सन्त पतन्ति, किं गिरि वज्रमात्र =वज्रप्रमाण ? नैवेत्यर्थ ।

(एवमेभिर्दृष्टान्तैरेवं निश्चीयते) यद्—यस्य=यस्य कस्यापि पदार्थस्य तेज =प्रतापो राजते=भ्राजते, स एव वलवान्=प्रबलो भवतीति शेष । स्थूलेषु=पृथुकायेषु क प्रत्यय =को विश्वास , न कोऽपीत्यर्थ । सर्वत्र शक्तेरेव माहात्म्यम्, स्थूलादिकं तु परपराजये स्वविजये वा व्यभिचारीति भाव । शार्दूलविक्रीडितम् ॥३५८॥

तदनया(१)चञ्च्वास्य सकलं तोयं शुष्कस्थलतां नयामि। टिट्टिभ्याह—भोः! कान्त! यत्र (२) जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति, तथा (३) सिन्धुश्च, तत्कथं त्वमष्टादशनदीशतैः पूर्यमाणं तं (४) विप्रुपवाहिन्या चञ्च्वा शोषयिष्यसि। तत्किमश्रद्धेयेनोक्तेन। टिट्टिभ आह—प्रिये!

अनिर्वेदः श्रियो मूलं चञ्चूर्मे लोहसंनिभा।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति ॥ ३५९ ॥

दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम्।
जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥ ३६० ॥

---

(१) चञ्च्वा=त्रोट्या। (२) जाह्नवी=गङ्गा। (३) सिन्धु=उक्तनामा महानद सर्वत्र प्रसिद्ध। (४) विप्रुपवाहिन्या=बिन्दुमात्रग्रहणे समर्थया।

"अनिर्वेद" इति—अनिर्वेद=निर्वेद स्वात्मतिरस्कार स्वावज्ञेत्यर्थ न निर्वेदोऽनिर्वेद स्वात्मोत्साहोद्गार। श्रिय=सम्पत्ते मूलम्=निदानम् अस्तीति शेष। मे=मम चञ्चू=त्रोटि लोहसन्निभा=आयसवत् कठिना, अहोरात्राणि=दिनानि रात्रयश्चेत्यर्थ दीर्घाणि=लम्बमानानि सन्ति तेषा सद्य समाप्तिर्नास्तीत्यर्थ, एवं सति पुष्कले कारणे समुद्र=सागर किं न शुष्यति=शोषं न यास्यति, अपि त्ववश्यं शुष्को भविष्यति।

नोद्योगोऽहं कठिनया चञ्च्वाऽवश्यं समुद्रं शोषयिष्यामीति भाव ॥३५९॥

अत्र—"अहोरात्राणि" इति पद चिन्त्यम्।

'दुरधिगम' इति—यावत्=यावत्कालपर्यन्तं पुरुषेण=पौरुषवता नरेण पौरुषम्=उद्योग न कृतम्=नैवाऽनुष्ठितम्, तावत् परभाग=उत्कर्ष उन्नतपदप्राप्तिरित्यर्थ दुरधिगम=दुष्प्राप्य एव। तथाहि—तुलाम्=तुलाख्य राशिविशेषम् अधिरूढ=प्राप्त भास्वान्=सूर्य अपि जलदपटलानि=मेघवृन्दानि जयति=पराभवयति। तुलाया स्थितो भास्करो मेघैर्नाक्रम्यत इति प्रकृतिसिद्धमेतत्।

महानपि पराक्रमेणैव परपराजयं कर्तुं समर्थ अन्यस्य तु कैव कथा, तस्मादिष्टसाधनाय पराक्रमोऽवश्यविधेय इति तात्पर्यम्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। आर्यावृत्तम् ॥३६०॥

टिट्टिभ्याह—यदि त्वयावश्यं समुद्रेण सह (१) विग्रहानुष्ठानं कार्यम् तदन्यानपि विहङ्गमाना (२) हूय सुहृज्जनसहित एवं समाचर। उक्तं च—

बहूनामप्यसाराणां समवायो हि दुर्जयः।
तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बद्ध्यते ॥ ३६१ ॥

तथा च—

चटका काष्ठकूटेन मक्षिका दर्दुरैस्तथा।
महाजनविरोधेन कुञ्जरः प्रलयं गतः ॥ ३६२ ॥

टिट्टिभ आह—कथमेतत्। सा प्राह—

## कथा १५।

कस्मिंश्चिद्वनोद्देशे चटकदम्पती तमालतरुकृतनिलयौ प्रतिवसतः स्म। तयोर्गच्छता कालेन सन्ततिरभवत्। अन्यस्मिन्नहनि प्रमत्तो वनगजः कश्चित्तं तमालवृक्षं (३) घर्मार्तश्छायार्थी समाश्रितः। ततो (४) मदोत्कर्षात्तां तस्य शाखां चटकाश्रितां (५) पुष्कराग्रेणाकृष्य (६) बभञ्ज। तस्या भङ्गेन

---

(१) विग्रहानुष्ठानम्=युद्धकरणम्। (२) आहूय=आकार्य।

"बहूना"मिति—बहूना=अनल्पसङ्ख्यानाम् असाराणाम्=दुर्बलानामपि समवाय=सङ्घट्ट हि=निश्चयेन दुर्जय=जेतुमशक्यो भवति, तथाहि—तृणै=क्षुद्रकायै घासै रज्जु=पाश आवेष्ट्यते=सृज्यते, येन=मद्घीभूतेन तृणेन नाग=गजोऽपि (महाबलो महाकायश्च) बध्यते=पाश्यते। सङ्घे शक्तिरस्तीति भाव ॥३६१॥

उक्तेऽर्थे कथा प्रस्तौति "चटके"ति—चटका काष्ठकूटेन=चटकया सह काष्ठकूटेन एतन्नाम्ना प्रसिद्धेन पक्षिणा सह, तथा—मक्षिका दर्दुरै=मक्षिकया सह दर्दुरै भेकै, एवं महाजनविरोधेन=बहुभि प्राणिभि सह विरुद्धाचरणेन कुञ्जरः=हस्ती प्रलयङ्गत=मृत इत्यर्थ ॥३६२॥

(३) घर्मार्त्त=आतपसन्तप्त। (४) मदोत्कर्षात्=मदातिरेकात्। (५) पुष्कराग्रेण=शुण्डादण्डस्याग्रभागेन। (६) बभञ्ज=त्रोटयामास।

चटकाण्डानि सर्वाणि विशीर्णानि। आयुःशेषतया च चटकौ कथमपि प्राणैर्न वियुक्तौ। अथ चटका स्वाण्डभङ्गाभिभूता प्रलापान्कुर्वाणा न किंचित्सुखमाससाद। अत्रान्तरे तस्यास्तान्प्रलापाञ्छ्रुत्वा काष्ठकूटो नाम पक्षी तस्याः परमसुहृत्तद्दुःखदुःखितोऽभ्येत्य तामुवाच--भगवति! किं वृथा प्रलापेन। उक्तं च—

नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः।
पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः॥२६३॥

तथा च—

अशोच्यानीह भूतानि यो मूढस्तानि शोचति।
स दुःखे लभते दुःखं द्वावनर्थौ निषेवते॥२६४॥

---

"नष्ट मिति। पण्डिता=विवेकिन. नष्टम्=अदर्शनम्प्राप्तं पदार्थजातम्, तथा—मृतम्=प्रेतं बन्ध्वादिकम् (पुत्रादिरूपम्) तथा—अतिक्रान्तम्=अतीतं क्रियादिकम् न अनुशोचन्ति=उक्तत्रितयविषये शोकं न प्रकटीकुर्वन्ति। यत = यस्मात् कारणात् पण्डितानाम्=विदुषा ज्ञानिना मूर्खाणाम्=अज्ञानिनाञ्च अय विशेष=अयमेव भेद स्मृत =उक्त शास्त्रकारैरिति शेष। अत्र भेदो वैधर्म्यम्। उक्तञ्च भगवता गीताशास्त्रे—(२।११)

"गतासूनगतासूंश्च नानुशोचन्ति पण्डिता" इति।

तस्मात्त्वमपि ज्ञानिमार्गमाश्रित्य नष्टसन्तानस्य शोकं माकार्षीरिति भाव॥२६३॥

उक्तमेवार्थं द्रढयति "अशोच्यानि"ति--इह अस्मिँल्लोके (सर्वोऽपि प्राणिवर्ग) प्राणिन अशोच्यानि=शोकानर्हाणि यो मूढ =अविवेकी पुरुष तानि=भूतानि शोचति= दु करोति स=मूर्खो जन दु खे=भूतनाशहेतुके दु खम्=अपरं शोककारणकं (शोकजन्यं) एवं लभमानो मूढ द्वौ अनर्थौ=भूतनाशजन्य

अन्यच्च—

श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ।
तस्मान्न रोदितव्यं हि क्रियाः कार्याश्च शक्तितः ॥३६५॥

चटका प्राह—अस्त्वेतत् । परं दुष्टगजेन (क) मदान्मम सन्तानक्षयः कृतः । तद्यदि मम त्वं सुहृत्सत्यस्तदस्य (ख) गजापसदस्य कोऽपि वधोपायश्चिन्त्यताम्, यस्यानुष्ठानेन मे सन्ततिनाशदुःखमपसरति । उक्तं च—

आपदि येनापकृतं येन च हसितं दशासु विषमासु ।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥३६६॥

---

जन्योऽपरश्चानर्थ इति कृत्वा द्वावनर्थौ निषेवते=भजतेऽनुभवतीत्यर्थ । कदापि शोको न कर्त्तव्य इति भाव ॥३६४॥

मरणोत्तरं बन्धुविषयकशोककरणेन मृतस्यापि भूय कष्टमिति पुराणशास्त्रसम्मतिमप्याह—"श्लेष्माश्रु" इति—यतो हेतो प्रेत =मृतो जन अवश =परतन्त्र सन् बान्धवै =निजपुत्रादिभिर्बन्धुभि मुक्तं परित्यक्तं श्लेष्माश्रु=श्लेष्मा च अश्रवश्च अनयो समाहार. श्लेष्माश्रु (प्रकृते श्लेष्मा नासानिर्यातं सिंघाणम्, अश्रुपदेन नेत्रजलं ज्ञेयम्) भुङ्क्ते=खादति पिबति च तस्मात्=कारणात् हि निश्चयेन न रोदितव्यम्=बन्धुभिर्विलापो न कार्य । किन्तु—(तस्योद्धाराय) शक्तित =निजधनादिसामर्थ्यमनादृत्य क्रिया =प्रेतपिण्डदानादिरूपाणि कर्माणि (और्ध्वदैहिककृत्यमित्यर्थ ) कार्या =अनुष्ठेयानि ॥३६५॥

(क) मदात्=गर्वात् । सन्तानक्षय =सन्ततिनाश । (ख) गजापसदस्य=दुष्टस्य हस्तिन ।

"आपदी"ति—येन=जनेन आपदि=विपत्तौ अपकृतम्=अनिष्टमाचरितम्, येन च विषमासु=अतिभयोत्पादिनीषु दशासु हसितम्=हास्य कृतं दृष्ट्वा समुल्लसितमिति यावत्, तयोरुभयो =द्वयो जनयो अपकृत्य=अपकारं कृत्वा पुनरपि=भूयोऽपि नरम्=मनुष्यं जातम्=उत्पन्नं मन्ये=तर्कयामि । अपकर्त्तुरवश्यमपकारो विधेयोऽन्यथा मनुष्यत्वमेव नष्टं स्यादिति भाव ॥३६६॥

काष्ठकूट आह—भगवति ! सत्यमभिहितं भवत्या । उक्तं च—

स सुहृद्व्यसने यः स्यादन्यजात्युद्भवोऽपि सन् ।
वृद्धौ सर्वोऽपि मित्रं स्यात्सर्वेषामेव देहिनाम् ॥३६७॥
स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् ।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥३६८॥

तत्पश्य मे बुद्धिप्रभावम् । परं ममापि सुहृद्भूता "वीणारवा" नाम मक्षिकास्ति । तत्तामाहूयागच्छामि, येन स दुरात्मा दुष्टगजो वध्यते । अथासौ चटकया सह मक्षिकामासाद्य प्रोवाच—भद्रे ! ममे(क)ष्टेयं चटका केनचिद् दुष्टगजेन पराभूताऽण्डस्फोटनेन । तत्तस्य वधोपायमनुतिष्ठतो मे साहाय्यं कर्तुमर्हसि । मक्षिकाप्याह-भद्र ! किमुच्यतेऽत्र विषये । उक्तं च-

पुनः प्रत्युपकाराय मित्राणां क्रियते प्रियम् ।
यत्पुनर्मित्रमित्रस्य कार्यं मित्रैर्न किं कृतम् ॥३६९॥

---

"स" इति—यः=यो जनः व्यसने=प्राप्तायां विपद्यपि स्यात्=तिष्ठेत् साहाय्यमाचरेदिति यावत्, स अन्यजात्युद्भवोऽपि सन्=जात्यन्तराज्जातोऽपि सन् सुहृद्=मित्रमेवास्ति सर्वोऽपि जनः सर्वेषामेव देहिनाम्=प्राणिनां वृद्धौ=ऐश्वर्ये सति मित्रं स्यात् । यो विपद्यपि साहाय्यकृत् स एव मित्रं नान्य इति भाव ॥३६७॥

उक्तमेवार्थं स्पष्टीकरोति—"स" इति—यो व्यसने स्यात् सः=स एव सुहृद्=मित्रपदयोग्यः, यस्तु भक्तिमान्=आज्ञापालकत्वेन सेवापरायणः स पुत्रः=स एव पुत्रत्वेन व्यवहार्यो नत्वात्मजमात्रः, यो विधेयज्ञः=स्वामिकर्त्तव्यज्ञानवान् स भृत्यः=स एव भृत्यपदेन वक्तव्यः, यत्र निर्वृतिः=आनन्दं सा भार्या=सैव वस्तुतो भार्या भवतीत्यर्थः ॥३६८॥

(क) इष्टा=हितकारिणी ।

"पुनरि"ति—पुनः प्रत्युपकाराय=कृतस्य मित्राणाम्=सुहृदां प्रियम्=हितं क्रियते जनैरिति मित्रस्य मित्रं मित्रमित्रं तस्य प्रियसुहृदः कार्यम्=

सत्यमेतत्। परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति। तमप्याहूय यथोचितं कुर्मः। उक्तं च--

हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः।
कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥३७०॥

अथ ते त्रयोऽपि गत्वा मेघनादस्याग्रे समस्तमपि वृत्तान्तं निवेद्य तस्थुः। अथ स प्रोवाच--(१) कियन्मात्रोऽसौ वराको गजो महाजनस्य कुपितस्याग्रे। तन्मदीयो मन्त्रः कर्तव्यः। मक्षिके! त्वं गत्वा मध्याह्नसमये तस्य मदोद्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु, येन (२) श्रवणसुखलालसो निमीलितनयनो भवति। ततश्च काष्ठकूटचञ्च्वा (३) स्फोटितनयनोऽन्धीभूतस्तृषार्तो मम (४) गर्ततटाश्रितस्य सपरिकरस्य शब्दं श्रुत्वा जलाशयं मत्वा समभ्येति। ततो गर्तमासाद्य पतिष्यति, पञ्चत्वं यास्यति चेति। एवं (५) समवायः कर्तव्यो यथा वैरसाधनं भवति। अथ तथानुष्ठिते स मत्तगजो मक्षिकागेयसुखान्निमीलितनेत्रः (६) काष्ठकूटहतचक्षुर्मध्याह्नसमये भ्राम्यन्मण्डूक-

---

सुहृद्भिर्न कृतम्---अपितु कृतमेव। अयं भाव ---यथा मित्रम्प्रत्युपकर्तुं तदीयकार्यं साध्यते तथा मित्रस्य हिताय मित्रमित्रस्यापि कार्यमवश्यविधेयमिति ॥३६९॥

"हितैरि"ति—हितै =इष्टचिन्तनापरै, साधुसमाचारै =साधु पवित्र समाचारो व्यवहारो येषा तै. सच्चरित्रैरित्यर्थ, शास्त्रज्ञै =गुरुसम्प्रदायपूर्वकं कृतशास्त्राध्ययनै तथा मतिशालिभि =विद्वद्भि पण्डितैर्जनै [illegible]। =विचारिता नया =नीतिव्यापारा कथञ्चित्=केनापि प्रकारेण न [illegible] =विकृता न भवन्तीत्यर्थ ॥३७०॥

(१) कियन्मात्र =अतितुच्छ इत्यर्थ। (२) श्रवणसुखलालस =शब्दश्रवणानन्दसमेहित। (३) स्फोटितनयन =उत्पादितनेत्र। (४) गर्तटाश्रितस्य=खाततीरवर्त्तिन। (५) समवाय =सङ्घ। (६) काष्ठकूटाख्येन पक्षिणा हते चक्षुषी यस्य स।

शब्दानुसारी गच्छन्महान्तं गर्त्तमासाद्य पतितो मृतश्च । अतोऽहं ब्रवीमि—"चटका काष्ठकूटेन" इति ॥ टिट्टिभ आह—भद्रे ! एवं भवतु । सुहृद्वर्गसमुदायेन समुद्रं शोषयिष्यामि इति निश्चित्य बकसारसमयूरादीन्समाहूय प्रोवाच—भोः ! (१) पराभूतोऽहं समुद्रेणाण्डकापहारेण । तच्चिन्त्यतामस्य शोषणोपायः। ते संमन्त्र्य प्रोचुः—अशक्ता वयं समुद्रशोषणे । तत्किं वृथाप्रयासेन । उक्तं च—

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः ।
युद्धार्थं स निवर्तेत शीर्णदन्तो गजो यथा ॥३७१॥

तदस्माकं स्वामी वैनतेयोऽस्ति । तत्तस्मै सर्वमेतत्परिभवस्थानं निवेद्यताम्, येन (२) स्वजातिपरिभवकुपितो (३) वैरानृण्यं गच्छति । अथवात्रावलेपं करिष्यति तथापि नास्ति वो दुःखम् । उक्तं च—

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति ॥३७२॥

---

(१) पराभूत=तिरस्कृत ।

"अबल" इति—योऽबल=निर्बल मदमोहित=प्रमत्त सन् प्रोन्नतम्=उद्धतं बलिनं शत्रुम्=वैरिणं युद्धार्थं याति=तेन सह सङ्ग्रामं कर्त्तुं प्रस्थानं करोति स यथा शीर्णदन्तो गज=भग्नदन्तो हस्तीव निवर्त्तेत=पराभवं प्राप्नुयादित्यर्थ ॥३७१॥

(२) स्वजातिपरिभवकुपित=स्वज्ञातितिरस्कारेण क्रोधं प्राप्त । (३) वैरानृण्यम्—वैरस्य शत्रुताया आनृण्यं परिशोधम् ।

"सुहृदी"ति—निरन्तरचित्ते=निरन्तरमभिन्नं चित्तं हृदयं यस्य स तस्मिन् एकमनस्के, सुहृदि= मित्रे, गुणवति=आज्ञापालनादिगुणयुक्ते भृत्ये= अनुचरे, अनुवर्त्तिनि=अनुरागयुक्ते कलत्रे=भार्यायां, शक्तिसमेते=उत्साहमन्त्रणादिसामर्थ्यवति, स्वामिनि=प्रभौ, दुःखम्=कष्टं **निवेद्य=श्रावयित्वा** = निवृत्तदुःखो भवति जन इति शेष ॥३७२॥

तद्यामो वैनतेयसकाशं यतोऽसावस्माकं स्वामी। त
सर्वे ते पक्षिणो विषण्णवदना बाष्पपूरितदृशो वैनते
मासाद्य करुणस्वरेण फूत्कर्तुमारब्धाः—अहो ! (
ह्मण्यमब्रह्मण्यम्। अधुना सदाचारस्य टिट्टिभस्य भ
सति समुद्रेणाण्डान्यपहृतानि। तत्प्रनष्टमधुना पक्षि
अन्येऽपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते। उक्तं च

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम्।
गतानुगतिको लोको न लोकः पारमार्थिकः॥ ३

तथा च—

चाटुतस्करदुर्वृत्तैस्तथा साहसिकादिभिः।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा॥
प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः।
अधर्मादपि षड्भागो जायते यो न रक्षति॥ ३७५

(१) अब्रह्मण्यम्=अवध्योक्ति, यथाऽस्माकं हत्या न भवे
यतामित्येवं रूपमार्त्तवचनमित्यर्थ। "अब्रह्मण्यमवध्योक्तौ" इत्यम

"एकस्ये"ति—एकस्य=जनस्य गर्हितं=निन्दितं कर्म=कृत्यं
दृष्ट्वा अन्योऽपि=इतरोऽपि (जन गर्हितं) करोति। लोक गता
गताना पथि चलता अनु पश्चाद् गतिर्यस्य स तादृश। लोक. पा
वस्तुतत्त्वविवेचको न=नास्ति। गड्डरिकाप्रवाहपतितो लोको वस्तुवि
निन्दितमपि कृत्यं करोतीति भाव॥ ३७३॥

राज्ञ कृत्यविशेषमाह-"चाटुतस्करदुर्वृत्तैः"=य परस्मै
पाद्य धनं हरत्यसौ "चाटु" रित्युच्यते, तस्करश्चौर, दुर्वृत्तो दुराचार
तस्कराश्च दुर्वृत्ताश्च ते चाटुतस्करदुर्वृत्ता तैं, साहसिकादिभिः=
विचारमकृत्वैव य कार्यं करोत्यसौ "साहसिक" इत्युच्यते, अविमृश्यक
भिर्दुष्टजनै तथा—कूटच्छद्मादिभि=कौटिल्यच्छलप्रयोक्तृभि पी
दु खं प्राप्यमाणा प्रजा रक्ष्या=पालनीया राज्ञेति शेष॥ ३७४

प्रजारक्षकस्य राज्ञ फलमाह—"प्रजाना"मिति—रक्षितु

प्रजापीडनसन्तापात्समुद्भूतो हुताशन ।
राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ ३७६ ॥
राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् ।
राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ ३७७ ॥
फलार्थी पार्थिवो लोकान्पालयेद्यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ ३७८ ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः ।
फलप्रदो भवेत्काले तद्वल्लोकः सुरक्षितः ॥ ३७९ ॥

---

लकस्य राज्ञ प्रजाना धर्मषड्भाग=धर्मस्य षष्ठांश भवति । यो न रक्षति=यश्च नृपति प्रजाया रक्षा न करोति तस्य अधर्माद्=प्रजाकृतात् पापादपि षड्भाग=षष्ठांशो भवति ॥ ३७५ ॥

"प्रजे"ति—प्रजाया पीडनस्य य सन्ताप तस्मात् समुद्भूत=सम्यग्जात हुताशनो वह्नि राज्ञ=नृपते श्रियम्=सम्पत्ति, कुलं=वंशं, प्राणान्=असून् जीवनमित्यर्थ अदग्ध्वा=अविनाश्य न निवर्त्तते= नैव निवृत्तो भवति ॥ ३७६ ॥

"राजे"ति—अबन्धूनाम्=अनाथाना राजा बन्धु=मातृपितृस्थानीय, अचक्षुषाम्=अन्धाना राजैव चक्षु=पथप्रदर्शक इत्यर्थः । सर्वेषा न्यायवर्त्तिनाम्=न्याय्य मार्गमनुसरता राजैव पिता माता चास्ति मातृपितृवद्धितकर इत्यर्थ ॥ ३७७ ॥

"फलार्थी"ति—फलमैहिकं राजधनादिकं पारलौकिकञ्च स्वर्गादिकम् तदर्थी तत्कामनावान् पुरुष पार्थिव=राजा यत्नमास्थित=यत्नोपेत सन् दानमानादितोयेन=दानमानादिरूपेण जलेन मालाकार= मालिक अङ्कुरानिव=बीजाना प्रथमोद्भेदानिव प्रजा पालयेत्=रक्षयेदित्यर्थ ॥ ३७८ ॥

"यथे"ति—यथा सूक्ष्म=अत्यल्पावस्था प्राप्त बीजाङ्कुर प्रयत्नेन= उद्यमेनाभिरक्षित सन् काले=स्वपरिपाकसमये फलप्रद=भवेत् तथा= ( तेनैव प्रकारेण ) तद्वत् सुरक्षित=सुष्ठुपालित लोकोपि राज्ञे फलप्रद स्वसाधको भवतीत्यर्थ ॥ ३७९ ॥

हिरण्यधान्यरत्नानि यानानि विविधानि च ।
तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्नृपस्य तत् ॥ ३८० ॥

अथैवं गरुडः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत्—अहो ! सत्यमुक्तमेतैः पक्षिभिः । तदद्य गत्वा तं समुद्रं शोषयामः । एवं चिन्तयतस्तस्य विष्णुदूतः समागत्याह—भो ! गरुत्मन् ! भगवता नारायणेनाहं तव पार्श्वे प्रेषितः । देवकार्याय भगवानमरावत्यां यास्यतीति । तत्सत्वरमागम्यताम् । तच्छ्रुत्वा गरुडः साभिमानं प्राह—भो ! दूत ! किं मया कुभृत्येन भगवान्करिष्यति । तद्गत्वा तं वद यदन्यो भृत्यो वाहनायास्मत्स्थाने क्रियताम् । मदीयो नमस्कारो वाच्यो भगवतः । उक्तं च—

यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः ।
न हि तस्मात्फलं किंचित्सुकृष्टादूषरादिव ॥ ३८१ ॥

दूत आह—भो ! वैनतेय ! कदाचिदपि भगवन्तं प्रति त्वया नैतदभिहितमीदृक् । तत्कथय किं ते भगवतापमानस्थानं कृतम् । गरुड आह—भगवदाश्रयभूतेन समुद्रेणास्मट्टिट्टिभाण्डान्यपहृतानि । तद्यदि तस्य निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः । तद्द्रुततरं गत्वा

---

'हिरण्ये'ति—हिरण्यं सुवर्णम्, धान्यं व्रीह्यादि, रत्नं सर्वा मणिजातय एतानि सर्वाणि, तथा विविधानि=नानाप्रकाराणि यानानि=अश्वादिवाहनानि तथा अन्यदपि यत् किञ्चित् प्रासादादिकं वस्तु जातं तत् सर्वं नृपस्य प्रजाभ्य स्यात्, प्रजासकाशादेव लभ्येतेत्यर्थ । प्रजात प्राप्तविविधभोग्यपदार्थस्य राज्ञ प्रजापालनं परो धर्म इति भाव ॥ ३८० ॥

"य" इति—य यस्य गुणान् न वेत्ति=नैव जानाति तं पण्डित = विवेकी न सेवेत ("हि" तथाहीति योग्योऽयमर्थ ) हि=निश्चये तस्मात्तादृशात्पुरुषात् किञ्चिदपि फल न भवति, कस्मादिव—सुकृष्टात्=सुष्ठु कृतकर्षणात् ऊपरात्=मरुभूमेरिव ॥ ३८१ ॥

भवता भगवतः समीपे वक्तव्यम् । अथ दूतमुखेन प्रणयकुपितं वैनतेयं विज्ञाय भगवांश्चिन्तयामास—अहो (१) स्थाने कोपो वैनतेयस्य । तत्स्वयमेव गत्वा संमानपुरःसरं तमानयामि । उक्तं च—

भक्तं शक्तं कुलीनं च न भृत्यमपमानयेत् ।
पुत्रवल्लालयेन्नित्यं य इच्छेच्छ्रियमात्मनः ॥ ३८२ ॥

अन्यच्च—

राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति ।
ते तु संमानितास्तस्य प्राणैरप्युपकुर्वते ॥ ३८३ ॥

इत्येवं सम्प्रधार्य (२) रुक्मपुरे वैनतेयसकाशं सत्वरमगमत् । वैनतेयोऽपि गृहागतं भगवन्तमवलोक्य त्रपाधोमुखः प्रणम्योवाच—भगवन् ! त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्याण्डान्यपहृत्य ममापमाननं विहितम् । परं भगवल्लज्जया मया विलम्बितम्, नो चेदेनमहं स्थलान्तरमद्यैव नयामि । यतः स्वामिभयाच्छुनोऽपि प्रहारो न दीयते । उक्तं च—

येन स्याल्लघुता वाथ पीडा चित्ते प्रभोः क्वचित् ।
प्राणत्यागेऽपि तत्कर्म न कुर्यात्कुलसेवकः ॥ ३८४ ॥

---

(१) युक्त इत्यर्थ ।

"भक्त"मिति । य प्रभु =स्वामी आत्मन श्रियमिच्छेत्=स्वस्य सम्पत्ति कामयेत् स भक्तम्=सेवकम्, शक्तम्=शक्तिमन्तम्, कुलीनम्=सद्वंशोत्पन्न भृत्य नापमानयेत्=नावजानीयात्, किन्तु नित्यं=सदैव पुत्रवत्=सुतमिव लालयेत्=प्रतिपालयेत् ॥ ३८२ ॥

"राजे"ति—राजा तुष्टोऽपि=प्रसन्नोऽपि सन् भृत्यानाम्=सेवकानाम्=अर्थमात्रम्=धनमेव प्रयच्छति=ददाति, ते तु=भृत्या सम्मानिता =आदृताः सन्त तस्य=राज्ञ प्राणैरपि उपकुर्वते=उपकारं कुर्वन्ति ॥ ३८३ ॥

(२) रुक्मपुरे=तदाख्ये नगरे ।

"येने"ति—येन कार्येण प्रभो =स्वामिन चित्ते=मनसि लघुता=ह्रासभावः

तच्छ्रुत्वा भगवानाह—भो ! वैनतेय सत्यमभिहितं भवता । उक्तं च—

भृत्यापराधजो दण्डः स्वामिनो जायते यतः ।
तेन लज्जापि तस्योत्था न भृत्यस्य तथा पुनः ॥ ३८५ ॥

तदागच्छ येनाण्डानि समुद्रादादाय टिट्टिभं सम्भावयावः । अमरावतीं च गच्छावः । तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्याग्नेयं शरं सन्धायाभिहितः—भो ! दुरात्मन् ! दीयन्तां टिट्टिभाण्डानि । नो चेत्स्थलतां त्वां नयामि । ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि, टिट्टिभेनापि भार्यार्थे समर्पितानि । अतोऽहं ब्रवीमि—"शत्रोर्बलमविज्ञाय" इति ॥ तस्मात्पुरुषेणोद्यमो न त्याज्यः । तदाकर्ण्य सञ्जीवकस्तमेव भूयोऽपि पप्रच्छ—भो ! मित्र कथं ज्ञेयो मयासौ दुष्टबुद्धिरिति । इयन्तं कालं यावदुत्तरोत्तरस्नेहेन प्रसादेन चाहं दृष्टः । न कदाचित्तद्विकृतिर्दृष्टा तत्कथ्यतां येनाहमात्मरक्षार्थं तद्वधायोद्यमं करोमि । दमनक आह—भद्र! किमत्र ज्ञेयम् । एष ते (१) प्रत्ययः । यदि रक्तनेत्रस्त्रिशिखां भ्रुकुटिं दधानः (२) सृक्किणी परिलेलिहत्त्वां दृष्ट्वा भवति, तद्दुष्टबुद्धिः ।

---

अथवा पीडा=दुःखं स्यात्, कुलसेवकः=वंशपरम्परया सेवाभावपरायणः सत्कुलीनो भृत्यः प्राणात्ययेऽपि=प्राणानां विनाशेऽपि क्वचित्=कदापि तत्कर्म न कुर्यात् ॥ ३८४ ॥

"भृत्ये"ति—यतः=यस्मात् कारणात् भृत्यापराधजः=भृत्यस्य अपराधेन दोषेण जातो दण्डः अन्यैर्दत्त इति शेषः स्वामिनः जायते तेन लज्जापि=व्रीडापि अर्थात् दण्डोत्पन्ना तस्य स्वामिन एव भवति भृत्यस्य=सेवकस्य पुनर्न तथा जायते इत्यर्थः ॥ ३८५ ॥

(१) प्रत्ययः=विश्वासकारणमित्यत्र तात्पर्यम् । त्रिशिखाम्=त्रिलग्नाम् (२) सृक्किणी=ओष्ठप्रान्तभागौ । परिलेलिहत्=जिह्वया परिमार्जयन् ।

अन्यथा (१) सुप्रसादश्चेति । तदाज्ञापय माम् । स्वाश्रयं प्रति गच्छामि । त्वया च यथायं (२) मन्त्रभेदो न भवति तथा कार्यम् । यदि (३) निशामुखं प्राप्य गन्तुं शक्नोषि तद्देशत्यागः कार्यः । यतः ।

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ३८६ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३८७ ॥

(४) बलवताऽभिभूतस्य विदेशगमनं (५) तदनुप्रवेशो वा नीतिः । तद्देशत्यागः कार्यः । अथवात्मा (६) सामादिभिरुपायैरभिरक्षणीयः । उक्तं च—

---

(१) सुप्रसाद=प्रसन्नतर । (२) मन्त्रभेद=रहस्यस्फोट । (३) निशामुखम्=प्रदोषमित्यर्थ ।

"त्यजेदेकम्" इति—कुलस्यार्थे=वंशस्य रक्षणार्थम् एकं त्यजेत् एकस्य त्यागे क्रियमाणे यदि वंशरक्षा भवेत्तर्ह्यसौ त्यक्तव्य एवेत्यर्थ । ग्रामस्यार्थे=ग्रामवासिसकलजनरक्षायै कुलं=वंशं त्यजेत्, ग्रामरक्षायै वंशत्याग एवोचित इति भाव । जनपदस्यार्थे=जनपदो देश देशवासिजनरक्षायै ग्रामम्=त्यजेत्, आत्मार्थे=स्वरक्षार्थं पृथिवीम्=भूमिं त्यजेत्=जह्यात् अर्थात् पृथिवीस्थितान् सर्वान् परित्यज्याप्यात्मरक्षा विधेया सर्वस्यैव पदार्थस्यात्मशेषत्वादिति भाव ॥ ३८६ ॥

"आपदर्थे" इति—आपदर्थे=विपत्तेर्निवारणार्थं धनं रक्षेत्, धनैरपि दारान्=स्त्रियो रक्षेत्, दारैरपि धनैरपि च आत्मानं सततं=निरन्तरं रक्षेत् स्वात्मनि रक्षिते सति भूयोऽपि धनदारप्राप्तेरिति भाव ॥ ३८७ ॥

(४) बलवताऽभिभूतस्य=प्रबलेनाक्रान्तस्य (५) तदनुप्रवेश=बलवत एवाश्रयग्रहणम् । (६) सामादिभि=सामदानभेददण्डरूपैरित्यर्थ । तत्र—साम=सन्धि । दानम्=भूहिरण्यादिसमर्पणम् । भेद=शत्रुणा सह तदामात्यादेर्मनोभङ्गकरणम् । दण्ड=युद्धम् । अयमन्तिम उपाय ।

अपि पुत्रकलत्रैर्वा प्राणान् रक्षेच्च पण्डितः।
विद्यमानैर्यतस्तैः स्यात्सर्वं भूयोऽपि देहिनाम् ॥ ३८८ ॥

तथा च—

येन केनाप्युपायेन शुभेनाप्यशुभेन वा।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ३८९ ॥
यो मायां कुरुते मूढः प्राणत्यागे धनादिषु।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत् ॥ ३९० ॥

एवमभिधाय दमनकः करटकसकाशमगमत्। करटकोऽपि तमायान्तं दृष्ट्वा प्रोवाच—भद्र! किं कृतं तत्र भवता। दमनक आह—मया (१) तावन्नीतिबीजनिर्वापणं कृतम्, परतो (२) दैवविहितायत्तम्। उक्तं च यतः—

---

"अपी"ति-पण्डित =विवेकी पुत्रकलत्रैरपि वा प्राणान् रक्षेत्=पालयेत् यत =यस्मात् कारणात् तै प्राणै विद्यमानै सुरक्षितै सद्भि देहिनाम्= जीवाना भूयोऽपि=पुनरपि सर्वम्=पुत्रादिक स्यात्=भवितुमर्हतीत्यर्थ। सर्वमात्ममूलकमेवेति भाव ॥ ३८८ ॥

"येने"ति—अशुभेन येन केन वाऽप्युपायेन=साधनेन दीनम्=विपन्नम्, आत्मानमुद्धरेत्=रक्षयेत्, (तत ) समर्थ =सम्पन्न सन् धर्ममाचरेत् विपन्नस्य धर्मानुष्ठानं न सम्भवीति कृत्वा आपदि धर्मसङ्कोचो विधेय इति धर्मशास्त्रकारसम्मतोऽर्थ इति भाव ॥ ३८९ ॥

'य" इति—यो मूढ प्राणत्यागे=प्राणाना विनाशे समुपन्ने सति धनादिषु=धनपुत्रकलत्रादिषु मायाम्=ममताबुद्धिं कुरुते=सम्पादयते तस्य प्राणा प्रणश्यन्ति, तै =प्राणैर्नष्टै =तत् सर्वं धनादिकं नष्टमेव। भोक्तैव यदा नष्ट तर्हि भोग्ये विद्यमानेऽपि किम्फलं, तदपि तत्कृते विनष्टमेवेति।

"सम्बन्धो जीवनावधि" रित्यभियुक्तोक्तेरिति भाव ॥ ३९० ॥

(१) "नीती"ति—नीतयो बीजानीव तेषा निर्वापणं सम्यक् रोपणमित्यर्थ। (२) "दैवे"ति—दैवेन यद्विहितं निर्दिष्टं तस्यायत्त तदधीनमित्यर्थ।

पराङ्मुखेऽपि दैवेऽत्र कृत्यं कार्यं विपश्चिता ।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च ॥ ३६१ ॥

तथा च—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ ३६२ ॥

करटक आह—तत्कथय कीदृक्त्वया (१) नीतिबीजं निर्वापितम् । सोऽब्रवीत्—मयाऽन्योन्यं ताभ्यां मिथ्याप्रजल्पनेन (२) भेदस्तथा विहितो यथा भूयोऽपि मन्त्रयन्तावेकस्थानस्थितौ न द्रक्ष्यसि। करटक आह—अहो न युक्तं भवता विहितं यत्परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ कोपसागरे प्रक्षिप्तौ। उक्तं च—

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत् ।
जन्मजन्मान्तरे दुःखी स नरः स्यादसंशयम् ॥ ३६३ ॥

---

"पराङ्मुखे" इति—अत्र=इह लोके दैवे=आरब्धे कर्मणि विधातरि वा पराङ्मुखे=विपरीते सत्यपि विपश्चिता=धैर्यधारिणा बुद्धिमता पुरुषेण कृत्यम्=कर्तुं योग्यं कर्म=कार्यम्=अवश्यमेव अनुष्ठेयम्, कस्मै प्रयोजनाय—आत्मदोषविनाशाय=आत्मनः स्वस्य यो दोषः तस्य विनाशाय दूरीकरणाय, स्वचित्तस्तम्भनाय च=तथा स्वचित्तस्य मनसः स्तम्भनाय धैर्यसम्पादनाय येन मनसि पश्चात् सन्तापो न भवेद् यदहो मया मूर्खेण एवमुपायः कुतो न कृत इति ।

दैवोपहतस्य सर्वत्र चेष्टाया विफलायामपि यदि यत्नो न क्रियेत तदा परतः आत्मग्लानिर्भवेत्, तेनापि मनसि सन्ताप एव तिष्ठेत्, तस्मात्सर्वदैव मन्त्रिराक्षसवत् सोद्योगेन भाव्यम् ॥ ३१६ ॥

"उद्योगिनम्" इति—अयं श्लोकः प्राक् ११५ पृष्ठे व्याख्यातः ॥३६२॥

(१) नीतिबीजम्=नीतिबीजमिव । (२) भेदः=उपजापो मनोभङ्ग इति यावत्

"अविरुद्धम्" इति—यः=यो जनः अविरुद्धम्=अविरोधिनम्, तथा—

अपरं त्वं यद्भेदमात्रेणापि तुष्टस्तदप्ययुक्तम्, यतः सर्वोऽपि जनो (१) विरूपकरणे समर्थो भवति नोपकर्तुम्। उक्तं च-

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम्।
पातयितुमस्ति शक्तिर्वायोर्वृक्षं न चोन्नमितुम्॥ ३६४॥

दमनक आह--अनभिज्ञो भवान्नीतिशास्त्रस्य। तेनैतद् ब्रवीपि उक्तं च यतः—

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते॥ ३६५॥

---

सुखस्थम्=सुखिनम् दु खमार्गे=कष्टवर्त्मनि नियोजयेत्=विनिपातयेत्, स नर जन्मजन्मान्तरे=प्रतिजन्म असंशयम्=संशयरहितं यथा स्यात्तथा दु खी कष्टभुक् स्यात्=भवेत्। परापकारी अवश्यं दुःखी भवतीति भाव ॥३६३॥

(१) विरूपकरणे=विरूपस्य विरुद्धस्य करणे आचरणे विरोधस्योत्पादने इत्यर्थ

"घातयितुम्" इति—नीच =दुष्टप्रकृतिः पुरुष परकार्यम्=परस्यान्यस्य कार्यं घातयितुं=नाशयितुमेव वेत्ति=जानाति, प्रसाधयितुम्=सम्पादयितुं न वेत्ति। तथाहि वायो =पवनस्य वृक्षम्=तरुं पातयितुम्=भञ्जयितुमेव शक्तिः=सामर्थ्यमस्तीति शेष, नच उन्नमयितुं=उन्नतं कर्तुं वर्धयितुमिति यावत् नास्तीत्यर्थ। वायुर्यथा वृक्षस्य पातने समर्थः तस्योन्नमने त्वसमर्थ एवमेव नीचोऽपि परस्यापकारकरणे समर्थो भवति नतु परमुपकर्तुमिति भाव।

अत्र पूर्वार्धमुपमेयवाक्यम्, उत्तरार्धमुपमानवाक्यम्, तयो परकार्यविनाशनवृक्षपातनरूपौ द्वौ धर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टाविति दृष्टान्तालङ्कार। "चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृति" रिति तल्लक्षणात्॥३६४॥

"जातमात्रम्" इति—य =य पुरुष जातमात्रम्=उत्पन्नमात्रमेव शत्रुम्=वैरिणम्, व्याधिम्=रोगञ्च प्रशमम्=प्रकर्षेण विनाशम्प्रति न नयेत्=नैव प्रापयेत् असौ महाबलोऽपि=महाशक्तिमान् सन्नपि तेनैव शत्रुणा व्याधिना च वृद्धिं प्राप्य=प्रवृद्धेन सतेत्यर्थ हन्यते=विध्वस्यते। शत्रु सर्वप्रकारेणापि आमूलचूलं विनाशनीय कदापि नोपेक्ष्य इति भाव ॥३६५॥

तदुच्छेत्तुभूतोऽयमस्माकं मन्त्रिपदापहरणात् । उक्तं च—

पितृपैतामहं स्थानं यो यस्यात्र जिगीषते ।
स तस्य सहजः शत्रुरुच्छेद्योऽपि प्रिये स्थितः ॥ ३६६ ॥

तन्मया स उदासीनतया समानीतोऽभयप्रदानेन यावत्ताव-दहमपि तेन (१) साचिव्यात्प्रच्यावितः । अथवा साध्विदमुच्यते—

दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः ।
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥३६७॥

---

"पितृपैतामहम्" इति—अत्र=इह लोके यः=यो जनः यस्य पितृपैतामहं स्थानम्=पितृपरम्पराया प्राप्तं पदं जिगीषते=जेतुमिच्छति अर्थात् ग्रहीतुकामो भवति, स तस्य प्रिये=हिते स्थितोऽपि सहजः=स्वाभाविकः शत्रुः=वैरी वर्त्तते (अतो हेतोः) उच्छेद्यः=अवश्यविनाश्य इत्यर्थः । "जिगीषते" इत्यत्रात्मनेपदं चिन्त्यम् ॥३६६॥

(१) साचिव्यात्=मन्त्रिपदात् ।

'दद्याद्' इति—यदि साधुः=सज्जनः निजपदे=निजे स्वीये पदे स्थाने दुर्जनाय=दुष्टप्रकृतये पुरुषाय प्रवेशम्=अवकाशं दद्यात्=समर्पयेत् अर्थात् स्वीये उन्नते स्थाने दुष्टं स्थापयेत्, ततः=तदा सः=दुर्जनः तन्नाशाय=तस्य साधोर्नाशाय वाञ्छमानः=कामयमानः स्वयं प्रभवति=स्वयमेव स्वामी भवतीत्यर्थः । तस्मात् कारणात् विपुलमतिभिः=विपुला विशाला मतिर्बुद्धिर्येषां तैः कुशलैर्नरैः अधमानाम्=नीचानाम् (उन्नतपदप्राप्तये) अवकाशः=अवसरो न देयः=कदापि न दातव्यः । अत्र=लोके जारः=उपपतिरपि गृहपतिः=गृहस्य सर्वोपकरणसहितायाः स्त्रियः पतिः स्वामी स्यात् भिक्षुपादप्रसारणन्यायेनेति भावः इति=इत्येतद् वाक्यतः=लोकोक्तितः श्रूयते=आकर्ण्यते सुप्रसिद्धमेतदित्यर्थः । तस्मात् सर्वदैव पुरुषेण सावधानेन भाव्यमिति तात्पर्यम् । "वाञ्छमानः" इत्यत्र कथं शानजिति विवेच्यम् ॥३६७॥

तेन मया तस्योपरि वधोपाय एव विरच्यते । देशत्यागाय वा भविष्यति । तच्च त्वां मुक्त्वान्यो न ज्ञास्यति । तद्युक्तमेतत्स्वार्थायानुष्ठितम् । उक्तं च यतः--

निस्त्रिंशं हृदयं कृत्वा वाणीं क्षुरसमोपमाम् ।
विकल्पोऽत्र न कर्तव्यो हन्यात्तत्रापकारिणम् ॥ ३६८ ॥

अपरं मृतोऽप्यस्माकं भोज्यो भविष्यति । तदेकं तावद्वैरसाधनम्, अपरं साचिव्यं च भविष्यति (१) तृप्तिश्च इति । (२) तद्गुणत्रयेऽस्मिन्नुपस्थिते कस्मान्मां दूषयसि त्वं (३) जाड्यभावात् । उक्तं च--

परस्य पीडनं कुर्वन् स्वार्थसिद्धिं च पण्डितः ।
मूढबुद्धिर्न भक्षेच्च वने चतुरको यथा ॥ ३६९ ॥

करटक आह--कथमेतत् । स आह--

## कथा १६ ।

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः । तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रतिवसतः । अथान्यदिने सिंहेन कदाचिदासन्नप्रसवा प्रसववेदनया स्वयूथाद्भ्रष्टोष्ट्र्युपविष्टा कस्मिंश्चिद्वनगहने समासादिता । अथ तां व्यापाद्य यावदुदरं स्फो-

---

"निस्त्रिंशम्" इति--हृदयम्=मनः निस्त्रिंशम्=खड्गं वाणीम्=वाचम् क्षुरसमोपमाम्=क्षुरतुल्यां कृत्वा तत्र=अवसरे अपकारिणम्=शत्रुं हन्यात्=घातयेत्, अत्र=अस्मिन् विषये विकल्पः=संशयो न कर्तव्यः=कार्यः ॥३६८॥

(१) तृप्तिः=भोजनजनिता क्षुधानिवृत्तिः । (२) गुणत्रये=वैरसाधन-साचिव्य-तृप्तिरूपे । (३) जाड्यभावात्=मूर्खताहेतोः ।

"परस्ये"ति--पण्डितः=विवेकी पुरुषः वने चतुरको यथा=चतुरकाख्य शृगाल इव परस्य शत्रोः पीडनम्, स्वार्थसिद्धिञ्च कुर्वन्=सम्पादयन् भक्षेत्=भुञ्जीत न च तथा मूढबुद्धिः=मूर्खो नरो भक्षयितुं समर्थो भवितुमर्हतीत्यर्थः ।

"भक्षेत्" इति चौरादिकोऽपि भ्वादिको मतभेदेन ॥३६९॥

टयति तावज्जीवल्लघुदासेरकशिशुर्निष्क्रान्तः । सिंहोऽपि (१) दासेरक्याः पिशितेन सपरिवारः परां तृप्तिमुपागतः । परं स्नेहाद्बालदासेरकं त्यक्त्वा गृहमानीयेदमुवाच—भद्र ! न तेऽस्ति मृत्योर्भयं मत्तो नान्यस्मादपि । ततः स्वेच्छयात्र वने भ्राम्यताम् इति । यतस्ते शङ्कुसदृशौ कर्णौ, ततः "शङ्कुकर्णो" नाम भविष्यति । एवमनुष्ठिते चत्वारोऽपि त एकस्थाने विहारिणः परस्परमनेकप्रकारगोष्ठीसुखमनुभवन्तस्तिष्ठन्ति । शङ्कुकर्णोऽपि यौवनपदवीमारूढः क्षणमपि न तं सिंहं मुञ्चति । अथ कदाचिद्वज्रदंष्ट्रस्य केनचिद्वन्येन मत्तगजेन सह युद्धमभवत् । तेन मदवीर्योत्स दन्तप्रहारैस्तथा क्षतशरीरो विहितो यथा प्रचलितुं न शक्नोति । तदा (२) क्षुत्क्षामकण्ठस्तान्प्रोवाच—भोः ! अन्विष्यतां किंचित्सत्त्वं येनाहमेवंस्थितोऽपि तं व्यापाद्यात्मनो युष्माकं च क्षुत्प्रणाशं करोमि । तच्छ्रुत्वा ते त्रयोऽपि वने संध्याकालं यावद्भ्रान्ताः, परं न किंचित्सत्त्वमासादितम् । अथ चतुरकश्चिन्तयामास, यदि शङ्कुकर्णोऽयं व्यापाद्यते ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति । परं नैनं स्वामी मित्रत्वादाश्रयसमाश्रितत्वाच्च विनाशयिष्यति । अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये यथा व्यापादयिष्यति । उक्तं च—

अवध्यं चाथवागम्यमकृत्यं नास्ति किंचन ।
लोके बुद्धिमतां बुद्धिस्तस्मात्तां विनियोजयेत् ॥ ४०० ॥

---

(१) दासेरक्या =उष्ट्र्या । पिशितेन=मांसेन ।

(२) क्षुत्क्षामकण्ठ =बुभुक्षया शुष्कगल ।

"अवध्यम्" इति—लोके=संसारे किंचन वस्तु=बुद्धिमताम्=पण्डितानाम् अवध्यम्=अविनाश्यम् अथवा अगम्यम्=अविषयम्, अकृत्यम्=करणायोग्यं वा नास्ति तस्मात् तां बुद्धिम्=मतिं विनियोजयेत्=स्वव्यापारे विनिवेशयेदित्यर्थ ॥४००॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह—भोः! शङ्कुकर्ण! स्वामी तावत्पथ्यं विना क्षुधया परिपीड्यते। स्वाम्यभावादस्माकमपि ध्रुवं विनाश एव। ततो वाक्यं किंचित्स्वाम्यर्थे वदिष्यामि। तच्छ्रूयताम्। शङ्कुकर्ण आह—भोः! शीघ्रं निवेद्यतां येन ते वचनं शीघ्रं निर्विकल्पं करोमि। अपरं स्वामिनो हिते कृते मया सुकृतशतं कृतं भविष्यति। अथ चतुरक आह—भो! भद्र! आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ, येन ते द्विगुणं शरीरं भवति, स्वामिनः पुनः प्राणयात्रा भवति। तदाकर्ण्य शङ्कुकर्णः प्राह—भद्र! यद्येवं तन्मदीयप्रयोजनमेतदुच्यताम्। स्वाम्यर्थः क्रियतामिति। परमत्र धर्मः (१) प्रतिभूः। इति ते विचिन्त्य सर्वे सिंहसकाशमाजग्मुः। ततश्चतुरक आह—देव किंचित्सत्त्वं प्राप्तम्। भगवानादित्योऽप्यस्तं गतः। तद्यदि स्वामी द्विगुणं शरीरं प्रयच्छति, ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति (२) धर्मप्रतिभुवा। सिंह आह—भोः! यद्येवं तत्सुन्दरतरम्। व्यवहारस्यास्य धर्मः प्रतिभूः क्रियताम् इति। अथ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपागतः। अथ वज्रदंष्ट्रश्चतुरकमाह—भोश्चतुरक! यावदहं नदीं गत्वा स्नानं देवतार्चनविधिं कृत्वागच्छामि, तावत्त्वयात्राप्रमत्तेन भाव्यम् इत्युक्त्वा नद्यां गतः। अथ तस्मिन् गते चतुरकश्चिन्तयामास—"कथं ममैकाकिनो भोज्योऽयमुष्ट्रो भविष्यति" इति विचिन्त्य क्रव्यमुखमाह—भोः! क्रव्यमुख! क्षुधालुर्भवान्। तद्यावदसौ स्वामी नागच्छति, तावत्त्वमस्योष्ट्रस्य मांसं भक्षय। अहं त्वां स्वामिनो निर्दोषं प्रतिपादयिष्यामि। सोऽपि तच्छ्रुत्वा यावत्किंचिन्मां-

(१) प्रतिभू=प्रत्ययहेतु लग्नक "स्युर्लग्नका प्रतिभुव" इत्यमर। "जामन" इति भाषा। (२) धर्मप्रतिभुवा=धर्मलग्नकेन।

समास्वादयति तावच्चतुरकेणोक्तम्—भोः ! क्रव्यमुख ! समागच्छति स्वामी । तत्त्यक्त्वैनं दूरे तिष्ठ, येनास्य भक्षणं न (१) विकल्पयति । तथानुष्ठिते सिंहः समायातो यावदुष्ट्रं पश्यति तावद्(२)रिक्तीकृतहृदयो दासेरकः । ततो भ्रुकुटिं कृत्वा (३) परुषतरमाह—अहो ! केनैष उष्ट्र उच्छिष्टतां नीतो येन तमपि व्यापादयामि, एवमभिहिते क्रव्यमुखश्चतुरकमुखमवलोकयति । किल तद्वद किंचिद्येन मम शान्तिर्भवति । अथ चतुरको विहस्योवाच—भो ! मामनादृत्य पिशितं भक्षयित्वाधुना मन्मुखमवलोकयसि । तदास्वादयास्य (४) दुर्णयतरोः फलम् इति । तदाकर्ण्य क्रव्यमुखो जीवनाशभयाद्दूरदेशं गतः । एतस्मिन्नन्तरे तेन मार्गेण दासेरकसार्थो भाराक्रान्तः समायातः । तस्याग्रसरोष्ट्रस्य कण्ठे महती घण्टा वद्धा । तस्याः शब्दं दूरतोऽप्याकर्ण्य सिंहो जम्बुकमाह—भद्र ! ज्ञायतां किमेष रौद्रः शब्दः श्रूयतेऽश्रुतपूर्वः । तच्छ्रुत्वा चतुरकः किंचिद्वनान्तरं गत्वा सत्वरमभ्युपेत्य प्रोवाच—'स्वामिन् गम्यतां गम्यतां यदि शक्नोषि गन्तुम् ।' सोऽब्रवीत्—भद्र ! किमेवं मां व्याकुलयसि, तत्कथय किमेतद् इति । चतुरक आह—स्वामिन् ! एष धर्मराजस्तवोपरि कुपित यदनेनाकाले दासेरकोऽयं मदीयो व्यापादितः । तत्सहस्रगुणमुष्ट्रमस्य सकाशाद्ग्रहीष्यामि' इति निश्चित्य बृहन्मानमादायाग्रेसरस्योष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा वध्यदासेरकसक्तानपि पितृपितामहानादाय वैरनिर्यातनार्थमायात एव । सिंहोऽपि तच्छ्रुत्वा सर्वतो दूरादेवावलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात्प्रनष्टः । चतुरकोऽपि शनैः शनैस्तस्यो-

(१) विकल्पयति=सन्दिग्धे । (२) परुषतरम्=अतिकठोरम् । (३) दुर्णयतरो =कुनीतिवृक्षस्य (४) रिक्तीकृतहृदय =रिक्तीकृतं शून्यीकृतं हृदयउर स्थलस्थमांसपिण्डविशेषो यस्य स, वृकेणेति शेष ।

घ्रस्य मांसं भक्षयामास। अतोऽहं ब्रवीमि—"परस्य पीडनं कुर्वन्" इति॥ अथ दमनके गते सञ्जीवकश्चिन्तयामास—'अहो किमेतन्मया कृतम्, यच्छष्पादोऽपि मांसाशिनस्तस्यानुगः संवृत्तः। अथवा साध्विदमुच्यते—

अगम्यान्यः पुमान्याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ४०१॥

तत्किं करोमि। क्व गच्छामि। कथं मे शान्तिर्भविष्यति। अथवा तमेव पिङ्गलकं गच्छामि। कदाचिन्मां शरणागतं रक्षति। प्राणैर्न वियोजयति। यत उक्तं च—

धर्मार्थं यततामपीह विपदो दैवाद्यदि स्युः क्वचित्
तत्तासामुपशान्तये सुमतिभिः कार्यो विशेषान्नयः।
लोके ख्यातिमुपागतात्र सकले लोकोक्तिरेषा यतो
दग्धानां किल वह्निना हितकरः सेकोऽपि तस्योद्भवः॥४०२॥

---

"अगम्यान्" इति—य पुमान्=पुरुष अगम्यान्=गमनानर्हान् याति=गच्छति असेव्यान्=सेवायोग्याश्च निषेवते=आश्रयते स =असौ जन मृत्युम्=मरणम् उपगृह्णाति=आप्नोति, यथा अश्वतरी गर्भं मृत्युप्राप्तय एव गृह्णाति। अकार्यकारी अवश्यं मरणमाप्नोतीति भाव ॥४०१॥

"धर्मार्थ"मिति—इह=संसारे धर्मार्थम्=धर्मनिमित्ताय यतताम्=प्रयत्न कुर्वतामपि यदि क्वचित्=कस्मिंश्चिद्देशे काले वा विपद =विपत्तय स्यु =सम्भवेयु =तत तदा तासाम्=विपदाम् उपशान्तये=विनिवृत्तये सुमतिभि =सुधीभि विशेषात्=विशिष्टरूपेण नय =विपन्निवृत्तिहेतुभूत उपायप्रकार कार्य =विधेय। यत =यस्मात् कारणात् एषा लोकोक्ति =लोकाख्यानिका सकले समग्रेऽपि लोके जगति ख्यातिम्=प्रसिद्धिमुपागता यद् वह्निना दग्धाना=भस्मीभूतानामवयवाना तस्योद्भव वह्निसमुद्भव सेक =स्वेदस्तापविशेषोऽपि हितकर =दग्धाशस्योपद्रवनाशकर उपकारीति यावत्, किलेति निश्चये।

अस्यायमाशय —यथाऽग्निना दग्धे अग्नितापोऽपि उपकारी भवति एवमेव यस्मात्पुरुषविशेषात्समायाता विपत्तिस्तस्यैवाश्रयोऽपि कदाचिद्विपत्ति-

तथा च—

लोकेऽथवा तनुभृतां निजकर्मपाकं
नित्यं समाश्रितवतां सुहितक्रियाणाम् ।
भावार्जितं शुभमथाप्यशुभं निकामं
यद्भावि तद्भवति नात्र विचारहेतुः ॥ ४०३ ॥

अपरं चान्यत्र गतस्यापि मे कस्यचिद्दुष्टसत्त्वस्य मांसाशिनः सकाशान्मृत्युर्भविष्यति । तद्वरं सिंहात् । उक्तं च—

महद्भिः स्पर्धमानस्य विपदेव गरीयसी ।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे ॥ ४०४ ॥

तथा च—

महतोऽपि क्षयं लब्ध्वा श्लाघ्यं नीचोऽपि गच्छति ।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः ॥ ४०५ ॥

---

निवारको भवति "विषस्य विषमौषध" मित्युक्ते । शार्दूलविक्रीडितम् ॥४०२॥

"लोके" इति—अथवेति पक्षान्तरे । लोके=जगति नित्यम्=निरन्तरम् निजकर्मपाकं=निजाना स्वकृताना कर्मणा विपाकं फलं समाश्रितवताम्=भुक्तवताम्, सुहितक्रियाणाम्=सुहिता सुष्ठु हिता क्रिया आचरण येषा तादृशा न्याय्ये मार्गे चरतामपि तनुभृताम्=जीवानाम्, भावार्जितम्=स्वप्राक्तनकर्मानुसारि शुभम्=इष्टम्, अथवा अशुभम्=अनिष्टमपि निकामम्=अत्यर्थ यद् भावि तद् भवति=अवश्यमुपनतं जायते इत्यर्थ , अत्र=अस्मिन् विषये विचारहेतु =विचारस्य कारण न=नास्ति । अवश्यभोक्तव्ये सुखे दु खे वा चिन्ताकरणं व्यर्थमिति भाव । वसन्ततिलक वृत्तम् ॥४०३॥

"महद्भि" रिति—महद्भि =उत्तमैर्जनै सह स्पर्धमानस्य=स्पर्धां कुर्वतो वैरमातन्वत. पुरुषस्य विपदेव=विपत्तिरेव गरीयसी=प्रशस्यतरेत्यर्थ , तथाहि—गिरिविदारणे=शुण्डादण्डप्रहारेण पर्वतप्रास्फोटने नागाना=हस्तिनाम्, दन्तभङ्ग =दन्ताना दशनाना भङ्ग प्रस्फोटनं श्लाघ्य.=प्रशस्यो भवतीत्यर्थ ॥४०४॥

"महत" इति—नीचोऽपि=क्षुद्रोऽपि जन दानार्थी=गजमदग्रहणे-

एवं निश्चित्य स स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयं पश्यन्नपठत्—अहो! साध्विदमुच्यते—

अन्तर्लीनभुजङ्गमं गृहमिव ज्वालाकुलं वा वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः।
नानादुष्टजनैरसत्यवचनासक्तैरनार्यैर्वृतं
दुःखेन प्रतिगम्यते प्रचकितै राज्ञां गृहं वार्धिवत्॥४०६॥

एवं पठन्दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा प्रचकितः (१) संवृतशरीरो दूरतरं (२) प्रणामकृतिं विनाप्युपविष्टः। पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्दधानः कोपात्तस्योपरि पपात। अथ सञ्जीवकः (३) खरनखरविकर्तितपृष्ठः शृङ्गाभ्यां तदुदरमुल्लिख्य कथमपि तस्मादपेतः शृङ्गाभ्यां हन्तुमि-

---

च्छुक गजकर्णसमाहत=गजस्य हस्तिन कर्णाभ्या सम्यगाताडित मधुप=भ्रमर=षट्पदो यद्वत्=षट्पद इव महत जनात् क्षयम्=विनाशं लब्ध्वाऽपि=प्राप्यापि श्लाघ्यम्=श्लाघनीयत्वं गच्छति=प्राप्नोति। "श्लाघ्य"मिति भावे यत्॥४०५॥

"अन्तर्लीनम्" इति—अन्तर्लीनो ऽभ्यन्तरे स्थितो भुजङ्गम सर्पो यस्य तादृशं गृहमिव, व्यालै=श्वापदैर्हिंस्रजन्तुभि व्याकुलम्=व्याप्तं वनं वा=वनमिव अभिरामा हृद्या कमलाना जलजाना या छाया कान्ति तया सनाथं सहितं ग्राहाकीर्णम्=ग्राहैर्महानक्रैर्जलचरजन्तुभि आकीर्णं व्याप्तं सर=तडाग इव नानादुष्टजनैः=अनेकैर्धूर्त्तलोकै, असत्यवचनासक्तै=मृषावादरतै अनार्यै=दस्युभि वृतम्=आवरीतं राज्ञा गृहम् वार्धिवत्=समुद्रवत् प्रचकितै=प्रकर्षेण त्रस्तैर्जनै दु खेन=कष्टेन प्रतिगम्यते=आश्रीयते। राज्ञा गृहं साधुजनानामसेव्यमिति भाव। शार्दूलविक्रीडितम्॥४०६॥

(१) संवृतशरीर=संवृतं सङ्कोचम्प्राप्तं शरीरं यस्य स सङ्कुचितदेह इत्यर्थ। (२) प्रणामकरणं विनेत्यर्थ। (३) खरनखरविकर्तितपृष्ठ=खरैस्तीव्रै नखरै करजै विकर्त्तितं छेदितं पृष्ठं यस्य स। तदुदरम्=तस्य सिंहस्योदरं, विलिख्य=विपाट्येत्यर्थ।

च्छन्युद्धायावस्थितः । अथ द्वावपि तौ (१) पुष्पितपलाशप्रतिमौ (२) परस्परवधकाङ्क्षिणौ दृष्ट्वा करटको दमनकमाह— भो ! मूढमते ! अनयोर्विरोधं (३) वितन्वता त्वया साधु न कृतम्, न च त्वं नीतितत्त्वं वेत्सि । नीतिविद्भिरुक्तं च—

कार्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः ।
निःसारल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमै-
स्तेषां दुर्णयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम् ॥४०७॥

तद्यदि (४) स्वाम्यभिघातो भविष्यति तत्किं त्वदीयमन्त्रबुद्ध्या क्रियते । अथ सञ्जीवको न वध्यते तथाप्यभव्यम् । यतः प्राणसंदेहात्तस्य च वधः । तन्मूढ ! कथं त्वं मन्त्रिपदमभिलषसि (५) सामसिद्धिं न वेत्सि । तद्वृथा मनोरथोऽयं ते

---

(१) पुष्पितेति—पुष्पितो विकसितो यः पलाश तत्प्रतिमौ तत्सदृशौ रुधिरस्य स्रवणकारणादित्यर्थ ।

(२) परस्परेति—अन्योन्यमारणसङ्कल्पौ । (३) वितन्वता=विस्तारयता ।

"कार्याणी"ति—ये नीतिकुशला =नीतिशास्त्रविशारदा , उत्तमदण्ड प्रबल सङ्ग्राम एव साहसफलं येषां तानि, तथा—आयाससाध्यानि=कष्टसाध्यानि कार्याणि प्रीत्या=प्रीतिपूर्वकं साम्नैव=संशमयन्ति=सम्यक् शान्ति प्रापयन्ति ते=त एव मन्त्रिण =मन्त्रिपदाधिकारयोग्या सन्तीति शेष । ये तु अविधिना=अयुक्तेन प्रकारेण नि सारल्पफलानि=सारशून्यानि तुच्छफलानि कार्याणि दण्डोद्यमै =सङ्ग्रामप्रयासै वाञ्छन्ति=कामयन्ते, तेषाम्=तादृशाना धूर्त्तमन्त्रिणा दुर्णयचेष्टितै =कुत्सितनीतिव्यवहारै अन्यायाचरणैरित्यर्थ नरपते =राज्ञ श्री =राष्ट्रसम्पत्ति तुलाम्=संशयम् आरोप्यते= नीयते । तिष्ठामि यामि वेति राजलक्ष्मी दोलायते इति भाव ॥४०७॥

(४) स्वाम्यभिघात =स्वामिनो नाश. । (५) सामसिद्धिम्=साम्ना सन्धिना सिद्धि लाभम् ।

(१) दण्डरुचेः । उक्तं च—

सामादिदण्डपर्यन्तो नयः प्रोक्तः स्वयंभुवा ।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत् ॥ ४०८ ॥

तथा च ।

साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ॥ ४०९ ॥

तथा च—

आदौ साम प्रयोक्तव्यं पुरुषेण विजानता ।
सामसाध्यानि कार्याणि विक्रियां यान्ति न क्वचित् ॥४१०॥
न चन्द्रेण न चौषध्या न सूर्येण न वह्निना ।
साम्नैव विलयं याति विद्वेषिप्रभवं तमः ॥ ४११ ॥

---

(१) दण्डरुचे =दण्डे सङ्ग्रामे रुचिर्यस्य स तस्येत्यर्थ ।

"**सामादी**"ति—स्वयम्भुवा=ब्रह्मणा सामादिदण्डपर्यन्त =सामदान-भेददण्डावधि नय प्रोक्त =नीति कथिता, तेषा मध्ये दण्ड तु= चतुर्थ· सङ्ग्रामाख्य उपायस्तु पापीयान्=अत्यन्तं निकृष्ट ( बुद्धिमान् पुरुष ) तं पश्चात्=अन्ते त्रिभिरुपायै सिद्धावसत्या विनियोजयेत्=प्रयोजये-दित्यर्थ ॥४०८॥

"**साम्नैवे**"ति—यत्र साम्ना=सान्त्वननयेन एव सिद्धि स्यात् तत्र बुधेन=नीतिविदा दण्डो न विनियोज्य । तममुमर्थमर्थान्तरेण न्यस्यति-"**पित्त**"मिति—यदि पित्तम्=पित्ताख्यो दोषः कामलादिरोगकर शर्करया= सितोपलेन, शाम्यति=शान्तं भवति स्वस्थतामापद्यते तदा पटोलेन=निम्बेन ।ऽर्थ =किं प्रयोजनम् । "ऋजुमार्गेण सिद्धयन्तं को हि वक्रेण साधयेद्" इति भाव ॥४०९॥

"**आदा**"विति —विजानता=नीतिविदा पुरुषेण आदौ=प्रथमं साम प्रयोक्तव्यम् यत सामसाध्यानि=सामाख्येन प्रथमेनोपायेन साध्यानि कार्याणि क्वचिदपि विक्रियाम्=विकार न यान्ति=नैव प्राप्नुवन्ति ॥४१०॥

"**न**" इति—विद्वेषिप्रभवं तम =वैरिसमुत्थोऽन्धकार कोधरूप

तथा यत्त्वं मन्त्रित्वमभिलषसि, तदप्ययुक्तम् । यतस्त्वं (१) मन्त्रिगतिं न वेत्सि । यतः पञ्चविधो मन्त्रः । स च कर्मणामारम्भोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति । सोऽयं (२) स्वाम्यमात्ययोरेकतरस्य किं वा द्वयोरपि विनिपातः समुत्पद्यते लग्नः । तद्यदि काचिच्छक्तिरस्ति तद्विचिन्त्यतां विनिपातप्रतीकारः । (३) भिन्नसंधाने हि मन्त्रिणां बुद्धिपरीक्षा । तन्मूर्ख ! तत्कर्तुमसमर्थस्त्वं यतो विपरीतबुद्धिरसि । उक्तं च—

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके ।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ४१२ ॥

अन्यच्च—

घातयितुमेव नीचः परकार्यं वेत्ति न प्रसाधयितुम् ।
पातयितुमेव शक्तिर्नाखोरुद्धर्तुमन्नपिटम् ॥ ४१३ ॥

---

चन्द्रेण न, ओषध्या=तृणज्योतिर्लतया न, सूर्येण न, वह्निना न विलयं=विनाशं याति किन्तु स्नेहेनैव विलयं याति ॥४११॥

(१) मन्त्रिगतिम्=अमात्यकर्तव्यमित्यर्थः । **कर्मणामिति**—कर्मणां सन्ध्यादीनामारम्भे अनुष्ठाने षाड्गुण्यप्रयोगे उपायश्चातुर्यम् । **पुरुषद्रव्यसम्पत्**=पुरुषाणां सैनिकानां द्रव्याणां धनानां सम्पत् समृद्धिः । **देशकालविभागः**=अस्मिन् देशे काले वा सामादि प्रयोक्तव्य इति व्यवस्था । **विनिपातप्रतीकारः**=विनिपातस्य अपायस्य प्रतीकारः उपायः यथा स्वराष्ट्रस्य पातो न भवेत्तथा प्रतिविधानमित्यर्थः । **कार्यसिद्धिः**=कार्याणां सन्ध्यादीनां सिद्धिः स्वकाङ्क्षाया फलप्राप्तिः । (२) स्वाम्यमात्ययोः=नृपतिमन्त्रिणोः । लग्नः=समयविशेषः । (३) भिन्नसन्धाने=त्रुटितजोडने । वियुक्तस्य मेलनं इत्यर्थः ।

"**मन्त्रिणाम्**" इति । अयं श्लोकः ७३, ७४ पृ० पूर्वं व्याख्यातस्ततो द्रष्टव्यः ॥४१२॥

नीचस्य स्वभावमाह—"**घातयितुम्**" इति—नीचः=दुर्जनः परकार्यम्=परस्य कृत्यं घातयितुम्=नाशयितुमेव वेत्ति=जानाति प्रसाधयितुं न, आखोः=

अथवा न ते दोषोऽयम् । स्वामिनो दोषः, यस्ते वाक्यं श्रद्धाति उक्तं च—

नराधिपा नीचजनानुवर्तिनो
बुधोपदिष्टेन पथा न यान्ति ये ।
विशन्त्यतो दुर्गममार्गनिर्गमं
समस्तसंबाधमनर्थपञ्जरम् ॥ ४१४ ॥

तद्यदि त्वमस्य मन्त्री भविष्यसि तदान्योऽपि कश्चिन्नास्य समीपे साधुजनः समेष्यति । उक्तं च—

गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते ।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ४१५ ॥

तथा शिष्टजनरहितस्य स्वामिनोऽपि नाशो भविष्यति । उक्तं च—

चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः ।
ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ४१६ ॥

---

मूषिकस्य अन्नपिटम्=भक्ष्यद्रव्यस्य पेटिका पातयितुम्=पृथिव्यां क्षेपयितुमेव शक्तिः=सामर्थ्यमस्ति, उद्धर्त्तुम्=उन्नमयितुं न शक्तिरस्तीत्यनुषङ्गः ॥४१३॥

**"नराधिपा"** इति—ये नराधिपाः (मनुजेन्द्राः) राजानः नीचजनानुवर्त्तिनः=तुच्छजनसम्मतमार्गानुयायिनः सन्तः बुधोपदिष्टेन=उत्तमप्रज्ञमन्त्रिजनप्रदर्शितेन पथा=मार्गेण न यान्ति=नैव चलन्ति तदुपदिष्टे व्यवहारे न प्रवर्तन्ते, ते=एवं मूर्खानुरक्ता राजानः अमार्गनिर्गमम्=निर्गममार्गरहितम्, समस्तसम्बाधम्=अनेकविघ्नव्याहतम्, दुर्गम्=दुर्गमम्, अनर्थपञ्जरम्=व्यसनात्मकं पञ्जरं विशन्ति=प्राप्नुवन्ति विपत्तिग्रस्ता भवन्तीति यावत् । वंशस्थविलं वृत्तम् ॥४१४॥

**"गुणालय"** इति—गुणालयः=गुणानामालयः आकरोऽपि नृपतिः=राजा असन्मन्त्री=दुष्टामात्यश्चेत्तदा नाधिगम्यते=नोपसरणीयो भवतीत्यर्थः । यथा=यद्वत् प्रसन्नस्वादुसलिलः=प्रसन्नं निर्मलं स्वादु मधुरं सलिलं पानीयं यस्य स तादृशोऽपि ह्रदः=सरोवरो दुष्टग्राहः=ग्राहाख्यदुष्टजलजन्तुयुक्तः नाधिगम्यते । उपमालङ्कारः ॥४१५ ॥

**"चित्रे"** ति—ये नृपाः चित्राः मनोहराः आस्वादाः यासां तादृशाः

तत्किं मूर्खोपदेशेन । केवलं दोषो न गुणः । उक्तं च—

नानाम्यं नमते दारु नाश्मनि स्यात्क्षुरक्रिया ।
सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥ ४१७ ॥

दमनक आह—कथमेतत् । सोऽब्रवीत्—

## कथा १७ ।

अस्ति कस्मिंश्चित्पर्वतैकदेशे (१) वानरयूथम् । तच्च कदाचिद्धेमन्तसमये (२) ऽतिकठोरवातसंस्पर्शवेपमानकलेवरं तुषारवर्षोद्धतप्रवर्षघनधारानिपातसमाहतं न कथं चिच्छान्तिमगमत् । अथ केचिद्वानरा (३) वह्निकणसदृशानि गुञ्जाफलान्य-

---

कथा येषा. ते, अनायासितकार्मुकै=अनायासितं युद्धादिकर्मणि अनुत्थापित कार्मुकं धनुर्यै तादृशै भृत्यै=सेवकै रमन्ते, तेषा श्रिया= राजलक्ष्म्या रिपव=शत्रवो रमन्ते । दुर्मन्त्रिणा राज्ञा राज्यं शत्रुहस्तगतं भवतीति भाव ॥ ४१६ ॥

"नानाम्य"मिति—अनाम्यम्=नामयितुमशक्यम् दारु=काष्ठं न नमते=नैव नम्र भवति, तथा-अश्मनि=पाषाणे क्षुरक्रिया=क्षौरकृत्यं न स्यात्=नैव कर्तु शक्यत इत्यर्थ । तथा—अयोग्याय=योग्यताशून्याय अपात्राय शिष्याय नोपदिश्यते=उपदेशो न दातव्य इत्यर्थ । अस्मिन्नर्थे दृष्टान्त—सूचीमुखम्=सूचीमुखनामान पक्षिविशेषं विजानीहि । एतन्नामा पक्षी अनधिकारिभ्यो वानरेभ्य उपदेशं दत्वा विपत्तिग्रस्तोऽभूदिति ( दृष्टान्तं=कथानकं त्वं बुध्यस्वेत्यर्थ ) "नमते" इत्यात्मनेपदं चिन्त्यम् ॥ ४१७ ॥

(१) वानरयूथम्=कपिसार्थ । (२) अतिकठोरेति—अतिकठोरेण अत्यन्तरूक्षेण वातसंस्पर्शेन=पवनसंसर्गेण वेपमानं कम्पं कुर्वत् कलेवरं शरीरं यस्य तदित्यर्थ । तुषारेति-तुषारवर्षेण करकापातेनोद्धतो यो घनो-मेघ. तस्य धाराणा निपातेन प्रपतनेन समाहतं सम्यक् ताडितम् । शान्तिम्=सुखम् । (३) वह्निकणसदृशानि=वह्निकण. स्फुलिङ्ग तत्तुल्यानि, वर्णसादृश्यादिति भाव ।

वञ्चित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात्तस्थुः। अथ सूचीमुखो नाम पक्षी तेषां ते वृथायासमवलोक्य प्रोवाच--भोः! सर्वे मूर्खा यूयम्। नैते वह्निकणाः, गुञ्जाफलानि एतानि। तत्किं वृथा श्रमेण। नैतस्माच्छीतरक्षा भविष्यति। तदन्विष्यतां कश्चिन्निर्वातो वनप्रदेशो गुहा वा गिरिकन्दरं वा। अद्यापि (१) साटोपा मेघा दृश्यन्ते। अथ तेषामेकतमो वृद्धवानरस्तमुवाच--भो! मूर्ख! किं तवानेन व्यापारेण। तद्गम्यताम्। उक्तं च--

मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितम्।
नालापयेद्विवेकज्ञो यदीच्छेत्सिद्धिमात्मनः ॥ ४१८ ॥

तथा च--

आखेटकं वृथाक्लेशं मूर्खं व्यसनसंस्थितम्।
आलापयति यो मूढः स गच्छति पराभवम् ॥ ४१९ ॥

सोऽपि तमनादृत्य भूयोऽपि वानराननवरतमाह--भोः! किं

---

(१) साटोपा =साहङ्कारा।

"मुहु"रिति--विवेकज्ञ =धीमान् यदि आत्मन =स्वस्य सिद्धिम्=इष्टं हितं कल्याणमिति यावत् इच्छेत्=कामयेत तदा मुहु =पुन पुन विघ्नितकर्माणम्=विघ्नितानि व्याहतानि कर्म्माणि यस्य तम्, तथा-पराजितम्=प्राप्तपराजयं, द्यूतकारम्=दुरोदर न आलापयेत्=नैव वार्त्तयेत् एताभ्या द्वाभ्या सह आलापं न कुर्यादित्यर्थ ।

केचित्तु--द्यूतकारं, पराजितञ्चेति पृथक् २ व्याख्यान्ति तदत्र विद्वांस प्रमाणम् ॥ ४१८ ॥

"आखेटकम्" इति--आखेटकम्=मृगयासक्तम्, वृथाक्लेशम=निष्फलपरिश्रमे संलग्नम्, मूर्खम्=मूढम्, व्यसनसंस्थितम्=व्यसनेषु कामक्रोधादिषु द्यूतादिषु वा समासक्तम्, (एतान् चतुर पुरुषान) य आलापयति=वार्त्तयति स मूढ मूर्ख सन् पराभवम्=तिरस्कारं विपत्तिं वा गच्छति=प्राप्नोति ॥ ४१९ ॥

वृथाक्लेशेन। अथ यावदसौ न कथंचित्प्रलपन्विरमति तावदेकेन वानरेण व्यर्थश्रमत्वात्कुपितेन पक्षाभ्यां गृहीत्वा शिलायामास्फालित उपरतश्च। अतोऽहं ब्रवीमि—"नानाम्यं नमते दारु" इत्यादि॥ तथा च।

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।
पयःपानं भुजङ्गानां केवलं विषवर्धनम्॥ ४२०॥

अन्यच्च।

उपदेशो न दातव्यो यादृशे तादृशे जने।
पश्य वानरमूर्खेण सुगृही निगृहीकृतः॥ ४२१॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

### कथा १८।

अस्ति कस्मिंश्चिद्वनोद्देशे शमीवृक्षः। तस्य लम्बमानशिखायां कृतावासावरण्यचटकदम्पती वसतः स्म। अथ कदाचित्तयोः सुखसंस्थयोर्हेमन्तमेघो मन्दं मन्दं वर्षितुमारब्धः। अत्रान्तरे कश्चि (१) च्छाखामृगो (२) वातासारसमाहतः प्रोद्धूपितशरीरो दण्डवीणां वादयन्वेपमानस्तच्छमीमूलमासाद्योपविष्टः। अथ तं तादृशमवलोक्य चटका प्राह—भो! भद्र!

---

"उपदेश" इति—हि=निश्चयेन मूर्खाणामुपदेश प्रकोपाय=क्रोधवर्धनायेव भवति शान्तये=सुखाय हिताय वा न, तथाहि—भुजङ्गाना=सर्पाणा पय पानम्=दुग्धपान केवलं विषवर्धनम्=विषवृद्धिफलकमेव जायते। मूर्खा (शठा) कदापि नोपदेश्या इति भाव॥ ४२०॥

"उपदेश" इति—यादृशे तादृशे जने अनधिकारिणीत्यर्थ, उपदेशो न दातव्य। पश्य=विचारय, वानरमूर्खेण=शठेन कपिना सुगृही=उत्तमगृहस्थित कश्चन पक्षी निगृहीकृत=गृहरहित कृत इत्यर्थ॥४२१॥

(१) शाखामृग=वानर। (२) वातासारसमाहत=झञ्झावातोद्धतवृष्टिपातताडित। प्रोद्धूपितशरीर=वर्षजलक्लिन्नदेह। दण्डवीणा वादयन्=

हस्तपादसमायुक्तो दृश्यसे पुरुषाकृतिः ।
शीतेन भिद्यसे मूढ कथं न कुरुषे गृहम् ॥ ४२२ ॥

एतच्छ्रुत्वा तां वानरः सकोपमाह—अधमे ! कस्मान्न त्वं (१) मौनव्रता भवसि । अहो ! धार्ष्ट्यमस्याः । अद्य मामुपहसति ।

सूचीमुखी दुराचारा रण्डा पण्डितवादिनी ।
नाशङ्कते प्रजल्पन्ती तत्किमेनां न हन्म्यहम् ॥ ४२३ ॥

एवं प्रलप्य तामाह—मुग्धे ! किं तव ममोपरि चिन्तया । उक्तं च—

वाच्यं श्रद्धासमेतस्य पृच्छतश्च विशेषतः ।
प्रोक्तं श्रद्धाविहीनस्य अरण्यरुदितोपमम् ॥ ४२४ ॥

---

कुतश्चन स्थानात् प्राप्ता वीणा दण्डेन वादयन्नित्यर्थ । "दन्तवीणा वादयन्" इति पाठं सम्यञ्चं प्रपद्ये । शमीमूलम्=शमी अग्निगर्भो वृक्षस्तन्मूलम्, मूलं=पादप्रदेश ।

**"हस्तपादे"**ति—हस्तपादेन समायुक्तस्त्वं पुरुषाकृति=पुरुषस्य नरस्याकृतिरिवाकृतिर्यस्य स तादृशो दृश्यसे=विलोक्यसे, ( एतादृश सन्नपि त्वं ) शीतेन=शैत्येन खिद्यसे=पीड्यसे, हे ! मूढ ! गृहम्=आलय कथ न कुरुषे=रचयसि ॥४२२॥

(१) मौनव्रता=तूष्णीम्भावम्प्राप्ता । धार्ष्ट्यम्=शठता ।

**"सूचीमुखी"**ति—सूचीमुखी=सूचीव मुख यस्या, दुराचारा= दुर्व्यवहारा, रण्डा=धूर्ता, पण्डितमानिनी=पण्डितामिवात्मानं मन्यते या एवं सती, प्रजल्पन्ती=प्रवादं कुर्वती न आशङ्कते=नैव लज्जा धारयते तत्=तस्माद्धेतो किमहमेना न हन्मि=नैव घातये, अवश्य हन्मीत्यर्थ ॥ ४२३ ॥

**"वाच्यम्"** इति—श्रद्धासमेतस्य=श्रद्धा आस्तिक्यबुद्धि तया युक्तस्य, वाच्यम्=तस्मै उपदेष्टव्यमित्यर्थ, पृच्छतश्च=प्रश्न कुर्वतस्तु विशेषतो

तत्किं बहुना तावत्। (१) कुलायस्थितया तयाभिहितः स तावत्तां शमीमारुह्य तस्याः कुलायं शतधा खण्डशोऽकरोत्। अतोऽहं ब्रवीमि—"उपदेशो न दातव्यः" इति॥ तन्मूर्ख! शिक्षापितोऽपि न शिक्षितस्त्वम्। अथवा न ते दोषोऽस्ति, यतः साधोः शिक्षा गुणाय सम्पद्यते, नासाधोः। उक्तं च—

किं करोत्येव पाण्डित्यमस्थाने विनियोजितम्।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः॥ ४२५॥

(२) व्यर्थपाण्डित्यमाश्रित्य मम वचनमशृण्वन्नात्मनः शान्तिमपि वेत्सि। तन्नून (३) मपजातस्त्वम्। उक्तं च—

जातः पुत्रोऽनुजातश्च अतिजातस्तथैव च।
अपजातश्च लोकेऽस्मिन्मन्तव्याः शास्त्रवेदिभिः॥४२६॥

---

वाच्यम्। श्रद्धाविहीनस्य=श्रद्धाशून्यस्य पुरुषस्य प्रोक्तं=कथितन्तु अरण्यरुदितोपमम्=अरण्यरोदनसदृशं निष्फलमित्यर्थ॥ ४२४॥

(१) कुलायस्थितया=नीडस्थया। कुलायम्=नीडम्। शिक्षापित.=दत्तशिक्ष।

"किम्" इति—अस्थाने=अपात्रे विनियोजितम्=स्थापितमर्पितमिति यावत्, पाण्डित्यम्=सदुपदेश किं करोति=न किञ्चिदपि फलयतीत्यर्थ। क इव-अन्धकारप्रतिच्छन्ने=अन्धकारेण तिमिरेण प्रतिच्छन्ने प्रावृते घटे=घटस्याभ्यन्तरप्रदेशे इत्यर्थ आहित=स्थापित दीप इव। यथा बाह्याभ्यन्तरप्रदेशे प्रतिरुद्धे घटे स्थापितो दीपो विलय याति तद्वत् अपात्रेऽर्पित उपदेशोऽपि निष्फल एवेति भाव.॥ ४२५॥

(२) व्यर्थपाण्डित्यम्=वृथा बुद्धिमत्ताभिमानमित्यर्थ। (३) अपजात=अधमजात।

"जात" इति—अस्मिन् लोके=संसारे शास्त्रवेदिभि=शास्त्रज्ञै पण्डितै जात, अनुजात, अतिजात, तथा अपजातश्चेति चतुर्धा पुत्रो मन्तव्य=अभिमत इत्यर्थ॥ ४२६॥

मातृतुल्यगुणो जातस्त्वनुजातः पितुः समः ।
अतिजातोऽधिकस्तस्मादपजातोऽधमाधमः ॥ ४२७ ॥
अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः ।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः ॥ ४२८ ॥

अहो ! साध्विदमुच्यते—

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम ।
पुत्रेण व्यर्थपाण्डित्यात्पिता धूमेन घातितः ॥४२९॥

दमनक आह—कथमेतत् । सोऽब्रवीत्—

## कथा १९ ।

कस्मिंश्चिदधिष्ठाने धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म । अथ कदाचित्पापबुद्धिना चिन्तितम्--अहं तावन्मूर्खो दारिद्र्योपेतश्च । तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वास्याश्रयेणार्थोपार्जनं कृत्वैनमपि वञ्चयित्वा सुखी भवामि। अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह—भोः ! मित्र ! वार्धकभावे किं त्वमात्मविचेष्टितं स्मरसि । देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्तां कथयिष्यसि । उक्तं च—

---

"**मातृतुल्यगुण**" इति--तत्र मातृतुल्यगुण =मातु समगुण "जातः" पितु सम "अनुजात" तस्मात्=पितुरधिक ="अतिजात" अधमाधम =अतिनीचस्तु "अपजात" इत्युच्यत इति शेष ॥ ४२७ ॥

"**अपी**"ति—परस्य व्यसने हृष्ट =परस्य=अन्यस्य व्यसने=कष्टे हृष्ट प्रसन्न खल =दुर्जन , आत्मन =स्वस्यापि विनाशम्=विध्वंसं न गणयति= नैव पर्यालोचयते, इदमर्थान्तरेण न्यस्यति—समरमुखे=सङ्ग्रामाङ्गणे मस्तकनाशे=उत्तमाङ्गकर्त्तने सति कबन्ध =छिन्नशिरस्को देह प्रायो नृत्यति= बाहुल्येन नर्त्तनं करोति परिभ्रमतीत्यर्थ ॥ ४२८ ॥

"**धर्मबुद्धि**" रिति—धर्मबुद्धि कुबुद्धिश्च एतौ द्वावपि मम विदितौ= ज्ञातौ (तत्र) पुत्रेण कुबुद्धिना व्यर्थपाण्डित्यात्=निष्फलचातुर्यात् पिता= स्वजनक धूमेन=धूमाग्निना, घातित =मारित इत्यर्थ ॥ ४२९ ॥

देशान्तरेषु बहुविधभाषावेशादि येन न ज्ञातम्।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम् ॥ ४३० ॥

तथा च—

विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावद् व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥ ४३१ ॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम्। ततश्च द्वावपि तौ प्रभूतोपार्जितद्रव्यौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन निवृत्तौ। उक्तं च—

प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम्।
क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत् ॥ ४३२ ॥

---

"देशान्तरेषु" इति—येन पुरुषेण बहुविध० नानाप्रकारभाषावेशादि न ज्ञातम्=नावबुद्धम्, धरणीपीठे=पृथिवीतले भ्रमत=अटाट्या कुर्वतस्तस्य पुरुषस्य जन्मन फलं व्यर्थम्। येन देशान्तरीया आचाराहारव्यवहारा न ज्ञाता, कूपमण्डूकवदसौ वृथाजन्मेति भाव ॥ ४३० ॥

"विद्याम्" इति—विद्या, वित्तं=धनं, शिल्पम्=कारुककृत्यं वैज्ञानिकव्यवहारं तावत्=तावत्कालपर्यन्तं मानवः=नर· सम्यक् नाप्नोति=नैव लभते, यावद् भूमौ= पृथिव्या हृष्ट =प्रसन्न· सन् देशात् देशान्तरं न व्रजति=नैव याति। सकलदेशपरिभ्रमणकुशल एव सम्यक् विद्यादिफलभाग् भवतीति भाव। वृत्तमार्या ॥ ४३१ ॥

"प्राप्ते"ति—प्राप्तानि अधिगतानि विद्यार्थशिल्पानि यै तेषाम् प्राप्तविद्यानाम्, उपार्जितधनानाम्, शिक्षितविज्ञानानामित्यर्थ तथा—देशान्तरनिवासिनाम्=अन्यस्मिन् देशे प्रोषिताना पुरुषाणा ( कृते ) क्रोशमात्रोऽपि भूभागः=क्रोशपरिमितोऽपि पृथिवीप्रदेश शतयोजनवत्=चतु शतीक्रोशपरिमित· भवेत्=भवतीत्यर्थ। यस्मै विद्यादिलाभाय देशान्तरङ्गच्छन्ति तत्प्राप्ति कृत्वा सोत्कण्ठं स्वगृहम्प्रति निवृत्ता अल्पमप्यध्वानं सुदूरं मन्यन्ते इति नैसर्गिकी वृत्तिर्लोकानामिति भाव ॥ ४३२ ॥

अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः—भद्र ! न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते । यतः (१) कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ते । तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किंचिन्मात्रमादाय गृहं प्रविशावः । भूयोऽपि प्रयोजने सञ्जाते तन्मात्रं समेत्यास्मात्स्थानान्नेष्यावः । उक्तं च—

न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो ।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ ४३३ ॥

तथा च—

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ४३४ ॥

तदाकर्ण्य धर्मबुद्धिराह—भद्र ! एवं क्रियताम् । तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन संस्थितवन्तौ । अथान्यस्मिन्नहनि पापबुद्धिर्निशीथेऽटव्यां गत्वा तत्सर्वं वित्तं समादाय गर्तं पूरयित्वा स्वभवनं जगाम । अथान्येद्युर्धर्मबुद्धिं समभ्येत्य प्रोवाच—सखे ! (२) बहुकुटुम्बा वयं वित्ताभावात्सीदामः । तद्गत्वा तत्र स्थाने किंचिन्मात्रं धनमानयावः ।

---

(१) कुटुम्बिन =सपरिवारा ।

"ने"ति—प्राज्ञ =बुद्धिमान् पुरुष स्वल्पमपि वित्तम्=किंचिन्मात्रमपि धनं कस्यचित् न दर्शयेत्=नैव प्रकाशयेत् यत तस्य दर्शनात् मुनेरपि मन = हृदयं चलते=चलायमानं भवतीत्यर्थ । "अहो" इत्याश्चर्यमिदम् । "चलते" इत्यात्मनेपदं चिन्त्यम् ॥ ४३३ ॥

"यथे"ति—यथा मत्स्यै =मीनै जले=पानीये, श्वापदै =हिंस्रजन्तुभि सिंहादिभि भुवि=स्थले, पक्षिभि =पतत्रिभि आकाशे=गगने आमिषम्=मांस भक्ष्यते=अद्यते तथा=तद्वत् वित्तवान्=धनी सर्वत्र भक्ष्यते जनैरिति । धनी सर्वेषा भोग्य इति भाव ॥ ४३४ ॥

(२) बहुकुटुम्बा =बहुपरिवारा ।

सोऽब्रवीत्—भद्र ! एवं क्रियताम् । अथ द्वावपि गत्वा तत्स्थानं यावत्खनतस्तावद्रिक्तं भाण्डं दृष्टवन्तौ । अत्रान्तरे पापबुद्धिः शिरस्ताडयन्प्रोवाच—भोः ! धर्मबुद्धे ! त्वया हृतमेतद्धनम्, नान्येन । यतो भूयोऽपि गर्तापूरणं कृतम् । तत्प्रयच्छ मे तस्यार्धम् । अथवाहं राजकुले निवेदयिष्यामि । स आह—'भोः ! दुरात्मन् ! मैवं वद । धर्मबुद्धिः खल्वहम् । नैतच्चौरकर्म करोमि । उक्तं च—

मातृवत्परदाराणि परद्रव्याणि लोष्ठवत् ।
आत्मवत्सर्वभूतानि वीक्षन्ते धर्मबुद्धय.' ॥ ४३५ ॥

एवं द्वावपि तौ (१) विवदमानौ धर्माधिकारिणं गतौ प्रोचतुश्च परस्परं दूषयन्तौ । अथ धर्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थं यावन्नियोजितौ तावत्पापबुद्धिराह—अहो ! न सम्यग्दृष्टोऽयं न्यायः । उक्तं च—

विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः ।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः ॥ ४३६ ॥

तदत्र विषये मम (२) वृक्षदेवताः साक्षीभूतास्तिष्ठन्ति ।

---

"मातृवदि" ति—धर्मबुद्धय =धर्मे बुद्धिर्मतिर्येषा ते धार्मिका नरा परदाराणि=परकीययोषित मातृवत्=जननीरिव, परद्रव्याणि=परधनानि लोष्ठवत्=मृत्पिण्डवत् सर्वभूतानि=सर्वान् प्राणिन आत्मवत्=आत्मन इव वीक्षन्ते=पश्यन्ति । धार्मिका कुत्रापि स्वमनो न चालयन्तीति भाव ॥ ४३५ ॥

(१) विवदमानौ=कलह कुर्वाणौ ।

"विवाद" इति-विवादे=परस्परं कलहे समुत्पन्ने पत्रम्=लेख्यम् अन्विष्यते=परीक्ष्यते तदनुसन्धान क्रियत इत्यर्थ । तदभावे=तस्य पत्रस्याभावे साक्षिणोऽपि=अन्विष्यन्ते इति विभक्तिव्यत्यय । साक्ष्यभावात=साक्षिणामलाभे दिव्यम्=याज्ञवल्क्यादिस्मृतिग्रन्थेषु प्रोक्तं जलदिव्यादिन्यायप्रकार प्रवदन्ति=कथयन्ति ॥४३६॥

(२) वृक्षदेवता =वनदेवता । साक्षीभूता =द्रष्ट्र्य ।

ता अप्यावयोरेकतरं चौरं साधुं वा करिष्यन्ति । अथ तैः सर्वैरभिहितम्—भोः ! युक्तमुक्तं भवता । उक्तं च—

अन्त्यजोऽपि यदा साक्षी विवादे संप्रजायते ।
न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः ॥ ४३७ ॥

तदस्माकमप्यत्र विषये महत्कौतूहलं वर्तते । प्रत्यूषसमये युवाभ्यामप्यस्माभिः सह तत्र वनोद्देशे गन्तव्यम् इति । एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच—तात ! प्रभूतोऽयं मयार्थो धर्मबुद्धेश्चोरितः । स च तव वचनेन परिणतिं गच्छति । अन्यथास्माकं प्राणैः सह यास्यति । स आह—वत्स ! द्रुतं वद (१) येन प्रोच्य तद्द्रव्यं (२) स्थिरतां नयामि । पापबुद्धिराह—तात ! अस्ति तत्प्रदेशे महाशमी । तस्यां महत्कोटरमस्ति । तत्र त्वं सांप्रतमेव प्रविश । ततः प्रभाते यदाहं (३) सत्यश्रावणं करोमि, तदा त्वया वाच्यं यद्धर्मबुद्धिश्चौर इति । तथानुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिर्धर्मबुद्धिपुरःसरो धर्माधिकरणकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच—

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥४३८॥

---

"**अन्त्यज**"इति—यदा विवादे=कलहे अन्त्यजोऽपि=मङ्करजातीयोऽपि [illegible] साक्षी=द्वयोर्विवदमानयोर्द्रष्टा प्रजायते=लभ्यते तत्र दिव्य प्रमाणं न विद्यते=नापेक्ष्यत इत्यर्थ । यत्र पुन देवता साक्षिण्य तत्र किम्=किं वक्तव्यमित्यर्थः ॥ ४३७ ॥

(१) येन=त्वदीयवचनानुसारेण । (२) स्थिरताम=स्थैर्यम् । (३) सत्यश्रावणम्=सत्यस्य कथनम् ।

"**आदित्ये**"ति—अयं श्लोकः १०३ पृष्ठे व्याख्यातो द्रष्टव्य ॥४३८॥

भगवति वनदेवने ! आवयोर्मध्ये यश्चौरस्तं कथय । अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच—'भोः शृणुत शृणुत । धर्मबुद्धिना हृतमेतद्धनम्' । तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्यावलोकयन्ति तावद्धर्मबुद्धिना तच्छमीकोटरं (१) वह्निभोज्यद्रव्यैः परिवेष्ट्य वह्निना संदीपितम् । अथ ज्वलति तस्मिञ्शमीकोटरे (२) ऽर्धदग्धशरीरः (३) स्फुटितेक्षणः करुणं परिदेवयन्पापबुद्धिपिता निश्चक्राम । ततश्च तैः सर्वैः पृष्टः—भोः ! किमिदम् इत्युक्ते स पापबुद्धिविचेष्टितं सर्वमिदं (४) निवेदयित्वोपरतः । अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः—अहो साध्विदमुच्यते—

उपायं चिन्तयेत्प्राज्ञस्तथापायं च चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलेन हता बकाः ॥ ४३९ ॥

धर्मबुद्धिः प्राह—कथमेतत् । ते प्रोचुः—

## कथा २० ।

अस्ति कस्मिंश्चिद्वनोद्देशे (५) बहुबकसनाथो वटपादपः । तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म । स च बकबालकानजातपक्षानपि सदैव भक्षयन्कालं नयति । अथैको बकस्तेन

(१) वह्निभोज्यद्रव्यैः=काष्ठादिभिर्दाह्यैः पदार्थैः । (२) अर्धदग्धशरीरः=अर्धप्लुष्टदेहः । (३) स्फुटिते ईक्षणे नेत्रे यस्य सः निर्गलितचक्षुर्गोलकः । करुणम्=दीनम् । परिदेवयन्=विलपन् । (४) निवेदयित्वा=सूचयित्वा । यद्यपि अत्र ल्यपि भाव्ये "निवेद्य" इत्येव साधुर्भाति तथापि "प्रार्थयित्वा" इत्यादि व्याकरणान्तरासिद्धा प्रयोगा उपलभ्यन्त एवेति न दुष्यति ।

"उपायम्" इति—प्राज्ञः=धीमान् उपायम्=इष्टसिद्धिहेतुं चिन्तयेत्=विचारयेत् तथा अपायम्=तदनिष्टकारणमपि चिन्तयेत् । तथाहि बकमूर्खस्य पश्यतः=पश्यन्तं बकमूर्खमनादृत्येत्यर्थः, नकुलेन=बकाः हताः=विनाशिताः ।४३९।

(५) बहुबकसनाथः=अनेकबकाख्यपक्षिसमन्वितः ।

भक्षितान्यपत्यानि दृष्ट्वा शिशुवैराग्यात्सरस्तीरमासाद्य (१) बाष्पपूरपूरितनयनोऽधोमुखस्तिष्ठति। तं च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच—माम! किमेवं रुद्यते भवताद्य। स आह—भद्र! किं करोमि। मम मन्दभाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः। तद्दुःखदुःखितोऽहं रोदिमि। तत्कथय मे यद्यस्ति कश्चिदुपायस्तद्विनाशाय। तदाकर्ण्य कुलीरकश्चिन्तयामास—अयं तावद् (२) स्मज्जातिसहजवैरी। अतस्तथोपदेशं प्रयच्छामि (३) सत्यानृतं यथान्येऽपि बकाः सर्वे संक्षयमायान्ति। उक्तं च—

नवनीतसमां वाणीं कृत्वा चित्तं तु निर्दयम्।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा॥ ४४०॥

आह च—माम! यद्येवं तन्मत्स्यमांसखण्डानि नकुलस्य बिलद्वारात्सर्पकोटरं यावत्प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति। अथ तथानुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे बकाश्च शनैः शनैर्भक्षिताः। अतो वयं ब्रूमः—"उपायं चिन्तयेत्" इति॥ तदनेन पापबुद्धिना उपायश्चिन्तितो नापायः ततस्तत्फलं प्राप्तम्। अतोऽहं ब्रवीमि—"धर्मबुद्धिः कुबुद्धिश्च" इति॥ एवं मूढ! त्वयाप्युपायश्चिन्तितो नापायः पाप-

(१) बाष्पेति—बाष्पानामस्राणां पूरेण प्रवाहेन पूरिते नयने नेत्रे यस्य स अस्रधाराप्लुताक्ष। (२) अस्मदिति—अस्मज्जातीनां मीनादीनां सहजवैरी नैसर्गिक शत्रु। (३) सत्यानृतम्=सत्यमिश्रितमसत्यमित्यर्थ।

"नवनीते"ति—वाणीम्=वाचम् नवनीतसमाम्=हैयङ्गवीनसदृशीमत्यन्तमृद्वीमित्यर्थ। कृत्वा=विधाय चित्तन्तु=हृदयन्तु निर्दयम्=दयाशून्य (कृत्वा) शत्रु=वैरी तथा=तेन प्रकारेण प्रबोध्यते=उपदिश्यते यथा=येन प्रकारेण (असौ) सान्वय=सपरिवार म्रियते=मृतो भवति। येन केनापि प्रकारेण शत्रोर्नाश कर्त्तव्य इति भाव॥ ४४०॥

बुद्धिवत्। तन्न भवसि त्वं सज्जनः, केवलं पापबुद्धिरसि। ज्ञातो मया स्वामिनः (१) प्राणसंदेहानयनात्। प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यं च। अथवा साध्विदमुच्यते—

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम्।
यदि जलदध्वनिमुदितास्त एव मूढा न नृत्येयुः॥ ४४१॥

यदि त्व स्वामिनं एनां दशां नयसि तदस्मद्विधस्य का गणना। तस्मान्ममासन्नेन भवता न भाव्यम्। उक्तं च—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः॥ ४४२॥

दमनक आह—कथमेतत्। सोऽब्रवीत्—

## कथा २१।

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः। स च विभवक्षयाद्देशान्तरगमनमना व्यचिन्तयत्—

यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः।
तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः॥ ४४३॥

---

(१) प्राणसन्देहानयनात्=जीवनविषये संशयापादनात्। कौटिल्यम्=कुटिलभाव।

"यत्नादि"ति—क पुरुष यत्नादपि=बहु यत्नं कृत्वाऽपि शिखिना=मयूराणाम् आहारनि सरणमार्गम्=गुदस्थानं पश्येत्=विलोकयेत् न कोपीत्यर्थ। यदि त एव मूढा =मूर्खा जलदध्वनिमुदिता =जलदाना वारिदाना ध्वनिभि-र्गर्जनै मुदिता प्रसन्ना सन्तो न नृत्येयु =नर्त्तनं न कुर्यु। नृत्यकाल एव तेषा-माहारनि सरणमार्गो दृश्यते नान्यस्मिन् काल इति भाव ॥४४१॥

"तुलामि"ति—यत्र मूषिका =उन्दुरा लोहसहस्रस्य द्विसहस्रपरिमित-लोहस्य तुला=तोलसाधनं खादन्ति=अभ्यवहरन्ति, हे! राजन्! तत्र श्येन पक्षिविशेष बालकं हरेत् अत्र संशयो नास्ति॥ ४४२॥

"यत्रे"ति—यो जन यत्र देशे अथवा स्थाने स्ववीर्यत =स्वसाम-र्थ्यात् भोगान्=सुखानि भुक्त्वा=अनुभूय तस्मिन् देशे स्थाने विभवहीनः=क्षीणधन सन् वसेत् सः पुरुषाधम =पुरुषेषु नीच॥ ४४३॥

तथा च—

येनाहंकारयुक्तेन चिरं विलसितं पुरा।
दीनं वदति तत्रैव यः परेषां स निन्दितः॥ ४४४॥

तस्य च गृहे (१) लोहभारघटिता पूर्वपुरुषोपार्जिता तुलासीत्। तां च कस्यचिच्छ्रेष्ठिनो गृहे (२) निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनमुवाच—भोः! श्रेष्ठिन्! दीयतां मे सा निक्षेपतुला। स आह—भोः! नास्ति सा। त्वदीया तुला मूषिकैर्भक्षिता। जीर्णधन आह—भोः! श्रेष्ठिन्! नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति। ईदृगेवायं संसारः। न किंचिदत्र शाश्वतमस्ति। परमहं नद्यां स्नानार्थं गमिष्यामि। तत्त्वमात्मीयं शिशुमेनं धनदेवनामानं मया सह स्नानोपकरणहस्तं प्रेषय इति। सोऽपि चौर्यभयात्तस्य शङ्कितः स्वपुत्रमुवाच—वत्स! पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति। तद्गम्यतामनेन सार्धं स्नानोपकरणमादाय इति। अहो! साध्विदमुच्यते—

न भक्त्या कस्यचित्कोऽपि प्रियं प्रकुरुते नरः।
मुक्त्वा भयं प्रलोभं वा कार्यकारणमेव वा॥ ४४५॥

---

"येने" ति—पुरा=पूर्वस्मिन् काले येन जनेन अहङ्कारयुक्तेन=साहङ्कारेण विलसितम्=विलासपूर्वकमुषितं व्यवहृतं वा, य पुनस्तत्रैव दीनम्=करुणं वदति स परेषां निन्दित =गर्हितोऽपमानपात्र भवतीत्यर्थ ॥४४४॥

(१) लोहभारघटिता=द्विसहस्रलोहपलनिर्मिता। "पलानां द्विसहस्रश्च एक प्रकीर्तित" इति शास्त्रात्। (२) निक्षेपभूताम्=न्यासीकृताम्।

"न भक्त्ये"ति—कोऽपि नर भयं, प्रलोभं वा, कार्यकारणमेव वा=कार्यकारण हेतुहेतुमद्भावं वा मुक्त्वा=विहाय भक्त्या=प्रीत्या अनुरागेण कस्यचित् प्रियम्=हितं न प्रकुरुते। सर्वोऽपि जनो भयादिवशात्परानुरक्तो भवति नतु भक्तिवशादिति भाव ॥४४५॥

तथा च—

अत्यादरो भवेद्यत्र कार्यकारणवर्जितः।
तत्र शङ्का प्रकर्तव्या परिणामे सुखावहा॥ ४४६॥

अथासौ वणिक्शिशुः स्नानोपकरणमादाय (१) प्रहृष्टमनास्तेनाभ्यागतेन सह प्रस्थितः। तथानुष्ठिते वणिक्स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं बृहच्छिलयाच्छाद्य सत्वरं गृहमागतः पृष्टश्च तेन वणिजा—भो! अभ्यागत! कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गतः इति। स आह—नदीतटात्स श्येनेन हृतः इति। श्रेष्ठ्याह—मिथ्यावादिन्! किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति। तत्समर्पय मे सुतम्। अन्यथा राजकुले निवेदयिष्यामि इति। स आह—भोः! सत्यवादिन्! यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति। तदर्पय मे तुलाम्, यदि दारकेण प्रयोजनम्। एवं तौ विवदमानौ द्वावपि राजकुलं गतौ। तत्र श्रेष्ठी तारस्वरेण प्रोवाच—'भोः! अब्रह्मण्यमब्रह्मण्यम्। मम शिशुरनेन चौरेणापहृतः' अथ धर्माधिकारिणस्तमूचुः—भोः! समर्प्यतां श्रेष्ठिसुतः। स आह—किं करोमि। पश्यतो मे नदीतटाच्छ्येनेनापहृतः शिशुः। तच्छ्रुत्वा ते प्रोचुः—भोः! न सत्यमभिहितं भवता। किं श्येनः शिशुं हर्तुं समर्थो भवति। स आह—भोः! भोः! श्रूयतां मद्वचः।

---

"अत्यादर" इति—यत्र कार्यकारणवर्जित =कार्यकारणभावं विनैवेत्यर्थ अत्यादर =अतिसत्कारो भवेत् तत्र=तस्मिन्नादरे परिणामे असुखावहा= दुःखोदर्केत्यर्थ. शङ्का कर्तव्या, तत्रान्तेऽवश्यं भयं भविष्यतीति निश्चेतव्यमिति भाव ॥४४६॥

(१) प्रहृष्टमना =सन्तुष्टचित्त ।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
राजंस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥ ४४७ ॥

ते प्रोचुः—कथमेतत् । ततः श्रेष्ठी सभ्यानामग्र आदितः सर्वं वृत्तान्तं निवेदयामास । ततस्तैर्विहस्य द्वावपि तौ परस्परं संबोध्य तुलाशिशुप्रदानेन संतोषितौ । अतोऽहं ब्रवीमि-"तुलां लोहसहस्रस्य" इति तन्मूर्ख ! (१) सञ्जीवकप्रसादमसहमानेन त्वयैतत्कृतम् । अहो ! साध्विदमुच्यते—

प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्ते स्थितं निर्धनाः ।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खाः सदा ॥४४८॥

तथा च—

मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः ।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ४४९ ॥

---

"तुलामि"ति पृष्ठे २३५ व्याख्यातम् ॥४४७॥

(१) सञ्जीवकप्रसादम्=सञ्जीवके राजकृता कृपाम् ।

"प्रायेण" इति—अत्र=संसारे प्रायेण कुकुलजा =नीचकुलोत्पन्ना जना कुलान्वितम्=सत्कुलीनम्, दुर्भगा =मन्दभागधेयाः श्रीवल्लभम=धनप्रियम्, कृपणा =दातारम्, अनृजव =कुटिलप्रकृतय ऋजून्=सरलान, निर्धना =दरिद्रा वित्ते स्थितम् धनिनम्, वैरूप्योपहता =कुरूपा कान्तपुरुषम्=सुन्दरम्, पापिन =दुष्टाचारा धर्माश्रयम्=धार्मिकम्, मूर्खा =मन्दा [illegible] अनेकविधेषु आगमेषु विचक्षण कुशलं पुरुष सदा=सर्वदा निन्दन्ति=गर्हयन्ते । नीचा परोत्कर्षं कदापि न सहन्त इति भाव ॥४४८॥

"मूर्खाणाम्" इति—मूर्खाणाम्=बालिशाना पण्डिता =धीमन्तो जना, निर्धनानाम्=दरिद्राणा महाधना =बहुवित्ता आढ्या इति यावत्, पापशीलानाम्=पापे रताना व्रतिन =संयमिनो धर्मपरायणा, असतीनाम=कुल-

तन्मूर्ख ! त्वया हितमप्यहितं कृतम् । उक्तं च—

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः ॥ ४५० ॥

दमनक आह—कथमेतत् । सोऽब्रवीत्—

## कथा २२ ।

कस्यचिद्राज्ञो नित्यं वानरोऽतिभक्तिपरो (१) ऽङ्गसेवको-ऽन्तः पुरे ( २ ) ऽप्यप्रतिषिद्धप्रसरोऽतिविश्वासस्थानमभूत् । एकदा राज्ञो निद्रां गतस्य वानरे व्यजनं नीत्वा वायुं विदधति राज्ञो वक्षःस्थलोपरि मक्षिकोपविष्टा । व्यजनेन मुहुर्मुहु (३) र्निषिध्यमानापि पुनःपुनस्तत्रैवोपविशति । ततस्तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीक्ष्णं खड्गमादाय तस्या उपरि प्रहारो विहितः । ततो मक्षिकोड्डीय गता । तेन (४) शितधारेणासिना राज्ञो वक्षो द्विधा जातं राजा मृतश्च । तस्माच्चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः । अपरमेकस्मिन्नगरे कोऽपि विप्रो महाविद्वान्परं पूर्वजन्मयोगेन चौरो वर्तते । स तस्मिन्पुरेऽन्यदेशादागतांश्चतुरो विप्रान्बहूनि वस्तूनि (५) विक्रीणतो दृष्ट्वा चिन्तितवान्—'अहो ! केनोपा-

---

टाना कुलस्त्रिय =सदृश्या पतिव्रता नार्यं द्वेष्या =द्वेषविषया भवन्तीति यथायथमन्वेतव्यम् । मूर्खाया सर्वेऽपि गर्हणीया इति भाव ॥४४९॥

"पण्डित" इति—पण्डित =विपश्चित् शत्रुरपि सन् वरम्=मनाक्प्रिय , मूर्ख =मन्दधी हितकारकोऽपि न वरमित्यर्थ । तथाहि—वानरेण=हितपरेण सतापि मूर्खेण कपिना राजा हत =मारित , चौरेण=तस्करेण परप्राणघातकेनापि सता पण्डितेन विप्रा =ब्राह्मणा रक्षिता =त्राता ॥४५०॥

(१) अङ्गसेवक =शरीररक्षाकृत् । (२) अप्रतिषिद्धप्रसर =अव्याहतसञ्चार । (३) निषिध्यमाना=वार्यमाणाऽपि । (४) शितधारेण=तीक्ष्णधारेण । (५) विक्रीणत =मूल्यं दत्त्वा वस्तुक्रय कुर्वत । इदन्तु पदं न साधु । "परिव्यवेभ्यः क्रियः" (१।३।१८) इत्यनेन क्रीञ आत्मने

येनैषां धनं लभे।' इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि चातिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्तुमारब्धा। अथवा साध्विदमुच्यते—

असती भवति सलज्जा क्षारं नीरं च शीतलं भवति।
दम्भी भवति विवेकी प्रियवक्ता भवति धूर्तजनः॥४५१॥

अथ तास्मन्सेवां कुर्वति तैर्विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि ततस्तानि जङ्घामध्ये (१) तत्समक्षं प्रक्षिप्य स्वदेशं प्रति गन्तुमुद्यमो विहिताः। ततः स धूर्तविप्रस्तान्विप्रान्गन्तुमुद्यतान्प्रेक्ष्य चिन्ताव्याकुलितमनाः संजातः। अहो! धनमेतन्न किंचिन्मम (२) चटितम्। अथैभिः सह यामि। पथि क्वापि विषं दत्त्वैतान्निहत्य सर्वरत्नानि गृह्णामि इति विचिन्त्य तेषामग्रे सकरुणं विलप्यैवमाह—भोः! मित्राणि! यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः। तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नैवाकुलं संजातं यथा धृतिं क्वापि न धत्ते। यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत। तद्वचः श्रुत्वा ते करुणार्द्रचित्तास्तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथाध्वनि तेषां पञ्चाना-

---

पदनियमात्। "विक्रीणानान्" इति भाव्यम्। स्याद्वा व्याकरणान्तरे।

"असती"ति—असती=कुलटा दुष्टा नारी सलज्जा=बहुलज्जावती भवति उपरिष्टादेवात्यन्तं लज्जा प्रदर्शयतीत्यर्थः "अतिनम्रस्तु धूर्तराट्" इत्युक्तेः। च=तथा च क्षारम=सलवणं नीरम्=जलं शीतलम=शिशिरं भवति। दम्भी=छली पुरुष विवेकी=ज्ञानवान् भवति अतएव लोके दम्भिनो बहु पूज्यन्ते। धूर्तजन =परवञ्चको विषयलम्पट प्रियवक्ता=मधुरवाक् भवति॥४५१॥

(१) चौरसमक्षमित्यर्थः। (२) चटितम्=दत्तम्। "चट" भेदने इति भौवादिकस्य निष्ठायामिटि रूपम्।

मपि पल्लीपुरमध्ये (१) व्रजतां ध्वाङ्क्षाः कथयितुमारब्धाः— रे रे किराताः! धावत धावत (२) सपादलक्षधनिनो यान्ति । एतान्निहत्य धनं नयत । ततः किरातैर्ध्वाङ्क्षवचनमाकर्ण्य सत्वरं गत्वा ते विप्रा (३) लगुडप्रहारैर्जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः । परं धनं किंचिन्न लब्धम् । तदा तैः किरातैरभिहितम्—भोः! पान्थाः! पुरा कदापि ध्वाङ्क्षवचनमनृतं नासीत् । ततो भवतां सन्निधौ क्वापि धनं विद्यते तदर्पयत । अन्यथा सर्वेषामपि वधं विधाय (४) चर्म विदार्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्याम इति । तदा तेषामीदृशं वचनमाकर्ण्य चौरविप्रेण मनसि चिन्तितम्—यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति तदापि मां वधिष्यन्ति । ततोऽहं पूर्वमेवात्मान (५) मरत्नं समर्प्यैतान्मुञ्चामि । उक्तं च—

मृत्योर्बिभेषि किं बाल न स भीतं विमुञ्चति ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ४५२ ॥

तथा च—

गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः ।
सूर्यस्य मण्डलं भित्त्वा स याति परमां गतिम् ॥४५३॥

---

(१) व्रजताम्=गच्छताम् । ध्वाङ्क्षा =वायसा. । किराता =भिल्ला' । सम्बुद्धिपदमिदम् । (२) सपादलक्षधनिन.=पञ्चविंशतिसहस्राधिकलक्षपरिमितधनवन्त । (३) लगुडप्रहारै =दण्डकुट्टनै. । जर्जरीकृत्य=कुट्टयित्वा । मोचयित्वा=अवतार्य । (४) चर्म=त्वक् । (५) अरत्नम्=रत्नहीनम् । मुञ्चामि=किरातेभ्यो मोचयामीत्यर्थ । अन्तर्भावितण्यर्थोऽयम् ।

"मृत्यो"रिति—हे! बाल! मूढ! त्वं किम्=किमर्थं त्व मृत्यो सकाशाद् बिभेषि=भयं करोषि, स –मृत्यु भीतम्=भयापन्नं न=नैव विमुञ्चति=परित्यजति, अद्य वा अब्दशतान्ते वा=शताना वर्षाणा समाप्तौ वा वै=निश्चयेन प्राणिनाम्=जीवता मृत्यु ध्रुव =निश्चितोऽस्ति । तदत्र मया भयहीनेन भाव्यम् ॥४५२॥

"गवार्थे" इति--गवार्थे=गोना कृते, ब्राह्मणार्थे=विप्राणा कृते य'=

इति निश्चित्याभिहितम्—भोः ! किराताः ! यद्येवं ततो मां पूर्वं निहत्य विलोकयत। ततस्तैस्तथानुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोऽपि मुक्ताः। अतोऽहं ब्रवीमि—"पण्डितोऽपि वरं शत्रुः" इति। अथैवं संवदतोस्तयोः सञ्जीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहाराभिहतो गतासुर्वसुन्धरापीठे निपपात। अथ तं गतासुमवलोक्य पिङ्गलक(१) स्तद्गुणस्मरणार्द्रहृदयः प्रोवाच—भोः ! अयुक्तं मया पापेन कृतं सञ्जीवकं व्यापादयता। यतो विश्वासघातादन्यन्नास्ति पापतरं कर्म। उक्तं च—

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ४५४ ॥

भूमिक्षये राजविनाश एव
भृत्यस्य वा बुद्धिमतो विनाशे।
नो युक्तमुक्तं ह्यनयोः समत्वं
नष्टापि भूमिः सुलभा न भृत्याः ॥ ४५५ ॥

---

यो जनः प्राणत्यागम्=स्वजीवनार्पणं करोति स=पुरुषः सूर्यस्य मण्डलं भित्त्वा=सूर्यलोकमतिक्रम्य परमां गतिम्=ब्रह्मलोकं याति=प्राप्नोति मुक्तिभाग्भवतीत्यर्थः ॥४५३॥

(१) तद्गुणेति—तस्य सञ्जीवकस्य ये गुणाः राज्यव्यवस्थासम्भालकाः तेषां स्मरणेन चिन्तनेन आर्द्रं कोमलं सकरुणं हृदयं यस्य सः।

"मित्रद्रोही"ति—मित्रद्रोही=सुहृद्धन्ता, कृतघ्नः=उपकारविस्मरणकरः, तथा—विश्वासघातकः=कृतविश्वासस्यापकर्ता, ते एते त्रयोऽपि नराः= मनुष्या यावच्चन्द्रदिवाकरौ संसारे वर्त्तेते तावत्कालपर्यन्तं नरकम्=यमलोकं यान्ति=प्राप्नुवन्ति अर्थात् वहाँ यामीर्यातना भुञ्जते ॥४५४॥

"भूमिक्षय" इति—भूमिक्षये=पृथिव्या विनाशे वा=अथवा बुद्धिमतः= धीमतः भृत्यस्य=सेवकस्य विनाशे सति राजविनाशः=राज्ञो भूपतेर्मरणमेव भवति, किन्तु अनयोः=भूमिभृत्ययोर्द्वयोः उक्तम्=कथितं समत्वम्=तुल्यत्व

तथा मया सभामध्ये स सदैव प्रशंसितः। तत्किं कथयिष्यामि तेषामग्रतः। उक्तं च—

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा ॥४५६॥

एवंविधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह—देव ! कातरतमस्तवैष न्यायो यद्द्रोहकारिणं शष्पभुजं हत्वेत्थं शोचसि। तन्नैतदुपपन्नं भूभुजाम्। उक्तं च—

पिता वा यदि वा भ्राता पुत्रो भार्याथवा सुहृत्।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम् ॥ ४५७ ॥

तथा च—

राजा घृणी ब्राह्मणः सर्वभक्षी
स्त्री चात्रपा दुष्टमतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ ४५८ ॥

---

नो युक्तम्=नैवोचितम् यत —नष्टाऽपि=विनाशं गताऽपि भूमि =पृथिवी सुलभा=भूयोऽपि प्राप्तुं शक्या भृत्या =स्वामिहितकरा सेवकास्तु न सुलभा इत्यर्थ । इन्द्रवज्रा ॥४५५॥

"उक्त" इति—अयं श्लोक पूर्व १४६ पृ० व्याख्यात ॥४५६॥

"पिता" इति—पिता वा, यदि वा भ्राता=अनुज पुत्र =सुत', अथवा भार्या=स्त्री वा=किं वा सुहृद्=मित्रम्, (एषु मध्ये य कोऽपि) यदा प्राणद्रोहं= प्राणहननं (कर्त्तु) गच्छेत्=आप्नुयात् (असौ) हन्तव्य =मारणीय (अत्र विषये) पातकम्=पापं नास्ति, द्रोहकरणे तत्पराणामिषा हन्ता नरो न पापी भवतीत्यर्थ ॥४५७॥

"राजा" इति —राजा=भूपति घृणी=दयालु (दुष्टाना निग्रहकरण इत्यर्थ ) ब्राह्मण =विप्र सर्वभक्षी=धर्मशास्त्रोक्तभक्ष्यभोज्यादिविचारं परिहाय सर्वभोजी, स्त्री=कुलाङ्गना च अत्रपा=लज्जाशून्या, सहाय =सहचर दुष्टमति =मलिनबुद्धि , प्रेष्य =सेवक प्रतीप =विरुद्धाचारी प्रतिकूल इत्यर्थ ,

अपि च—

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४५६ ॥

अपि च—

अकृतोपद्रवः कश्चिन्महानपि न पूज्यते ।
पूजयन्ति नरा नागान्न तार्क्ष्यं नागघातिनम् ॥ ४६० ॥

तथा च—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ४६१ ॥

---

अधिकृतः=दत्ताधिकारो मन्त्रिप्रभृति प्रधानपुरुष प्रमादी=अवधानशून्य स्वकर्त्तव्यपालने विमुख , अमी=एते सर्वेऽपि त्याज्या.=परिहातव्या एतेषामुपरि निर्भरता न कर्त्तव्या, यश्च=जन. कृतम्=परोपकारं न वेत्ति=नैव जानाति=स्मरति कृतघ्न इत्यर्थ असावपि त्याज्य एव। इन्द्रवज्रावृत्तम् ॥४५८॥

"सत्यानृता" इति—नृपनीति =राजनीति· वाराङ्गनेव=वेश्येव अनेकरूपा=नानाकारा बहुविलासरूपा वा भवति । सा हि क्वचित् सत्या, क्वचित् अनृता=मिथ्या, परुषा=कठोरा, प्रियवादिनी=मधुरभाषिणीच, हिंस्रा=घातुका, दयालुरपि=कृपाकारिणी च, भूरिव्यया=बहुव्ययकरणपरा, प्रचुरवित्तसमागमा=बहुधनस्य आयवती चेत्यर्थ । अत्र विरुद्धा अपि सत्यानृतादयो प्रियाऽप्रियाविषयभेदाद् व्यवस्थिता विज्ञेया. ॥४५६॥

"अकृतोपद्रव" इति—न कृत उपद्रव· परापघातो येन स तादृश महानपि=सन् न पूज्यते=नैवाद्रियते तथाहि=नरा =मनुष्या नागान्=सर्पान् उपद्रवकारिण. पूजयन्ति=अर्चयन्ति, नागघातिनम्=नागाना हन्तारं तार्क्ष्यम्=गरुडं न पूजयन्तीत्यनुषङ्ग । प्रायो भक्तिर्भीतिरेव क्रियते प्रीतिमूला तु सा क्वचिदेव भवतीति भाव. ॥४६०॥

"अशोच्यान्" इति—त्वम् अशोच्यान्=शोकानर्हान् अन्वशोच =

एवं तेन सम्बोधितः पिङ्गलकः सञ्जीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत्।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रभेदो नाम
प्रथमं तन्त्रं समाप्तम्।



---

अनुशोच अनुशोचसीत्यर्थ, प्रज्ञावादान्=प्रज्ञावता पण्डितानां वादान् शब्दान् च भापसे=कथयसि, वस्तुतस्त्व पण्डितो नासि, यत पण्डिता=विद्वास गतासून्=मृतान् अगतासून्=जीवतोऽपि जन्तून् न अनुशोचन्ति=तद्विषयकशोकसन्तप्ता न भवन्तीति भाव ॥४६१॥

इति श्रीकवितार्किक-नृसिंहदेवशास्त्रि-दर्शनाचार्य-
विरचितायां पञ्चतन्त्रस्य "सुबोधिनी" टीकायां
मित्रभेदो नाम प्रथमं तन्त्रम्।

# मित्रसम्प्राप्ति नाम द्वितीयं तन्त्रम् ।

अथेदमारभ्यते (१) मित्रसम्प्राप्ति नाम द्वितीयं तन्त्रम् । यस्यायमाद्यः श्लोकः—

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः ।
साधयन्त्याशु कार्याणि काकाखुमृगकूर्मवत् ॥१॥

तद्यथानुश्रूयते—अस्ति (२) दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य (३) नातिदूरस्थो महोच्छ्रायवान्नानाविहङ्गोपभुक्तफलः कीटैरावृतकोटरश्छायाश्वासितपथिकजनसमूहो न्यग्रोधपादपो महान् । अथवा युक्तम्—

---

(१) मित्रसम्प्राप्ति=मित्राणा सम्प्राप्ति सङ्गमो यत्रेति विग्रह । "मित्रसम्प्राप्ति" इति पाठे तु मित्राणां सम्प्राप्ति=समागम इति षष्ठीतत्पुरुष समास । तन्त्रम्=प्रबन्धोऽध्याय इति यावत् ।

"**असाधना**" इति—प्राज्ञा=विद्वांस, बुद्धिमन्त विपदा प्राप्तिकाले तदुपायविवेचनापटव, बहुश्रुता=बहु अनल्पं श्रुतं शास्त्रं येषां ते "बहुश्रुता" अनेकशास्त्रपारदृश्वान, एवम्भूता जना असाधना=साधनमुपाय उपकरणमिति यावत् तद्रहिता अपि काकाखुमृगकूर्मवत्=वायसमूषिकहरिणकच्छपा इव आशु=क्षिप्रमेव कार्याणि=प्राप्तानि कृत्यानि साधयन्ति=सम्पादयन्ते इत्यर्थ । सम्भूय साधने प्रवृत्ताना बुद्धिमता मित्राणा किमप्यसाध्यं नास्तीति भाव ॥ १ ॥

(२) "दाक्षिणात्ये" इत्यादिगद्य प्रथमतन्त्रे ४र्थे पृष्ठे व्याख्यातम् ।

(३) नातिदूरस्थ=समीपवर्त्तीत्यर्थ । महोच्छ्रायवान=अत्युच्च । **नानेति**—नानाविहङ्गै=अनेकविधै पक्षिभि उपभुक्तानि आस्वादितानि फलानि यस्य स । कीटै=पिपीलिकादिभि क्षुद्रजन्तुभि । आवृतकोटर=आच्छादितकोटर । **छायेति**—छायया सूर्यप्रियया आश्वासित छायापत्रफलादिप्रदानेन सन्तर्पित पथिकजनाना पान्थाना समूह सङ्घो येन स । न्यग्रोधपादप=वटवृक्ष ।

छायासुप्तमृगः शकुन्तनिवहैर्विष्वग्विलुप्तच्छदः
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः ।
विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एव द्रुमः
सर्वाङ्गैर्बहुसत्त्वसङ्गसुखदो भूभारभूतोऽपरः ॥२॥

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म । स कदाचित्प्राणयात्रार्थं पुरमुद्दिश्य प्रचालितो यावत्प्रपश्यति, ताव(१) ज्जालहस्तोऽतिकृष्णतनुः स्फुटितचरण ऊर्ध्वकेशो (२) यमकिङ्कराकारो नरः संमुखो बभूव । अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्—यदयं दुरात्माद्य ममाश्रयवटपादपसंमुखोऽभ्येति । तन्न ज्ञायते किमद्य वटवासिनां विहङ्गमानां संक्षयो भविष्यति न वा । एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपा-

---

आवासयोग्यं वृक्षं वर्णयति—"छायासुप्ते"ति—छायासु अनातपेषु सुप्ता निद्राम्भजमाना मृगा हरिणा यत्र स तथोक्त, शकुन्तनिवहै =शकुन्ताना पक्षिणा निवहै समुदायै विष्वक्=समन्ततो विलुप्तास्त्रोटिता. कवलिता वा छदा पत्राणि यस्य स, कीटै क्षुद्रजन्तुभि आवृतानि आच्छादितानि कोटराणि यस्य स तादृश, कपिकुलै =वानरयूथै स्कन्धे=प्रकाण्डे कृतो विहित प्रश्रय नीडाद्याश्रयो यत्र स., मधुपै =भ्रमरै विश्रब्धं शङ्काशून्यं निपीतानि=नितरामास्वादितानि कुसुमानि लक्षणया कुसुमानां मकरन्दा यत्र स, सर्वाङ्गै =सर्वै अङ्गै शाखाप्रशाखाप्रभृतिभि· बहूनामनेकेषा सत्त्वाना प्राणिना सङ्गे आश्रयणे सुखद =शान्तिप्रदो य·, स एव द्रुम =वृक्ष श्लाघ्य =प्रशंसनीय । अपर.=उक्तोत्तमवृक्षलक्षणशून्योऽन्यो वृक्षस्तु भूभारभूत =भुव पृथिव्या भारभूत भारस्वरूप एव निष्फल इत्यर्थ । सर्वेषां सर्वप्रकारेणाश्रयदाता एव धन्योऽपरस्त्वधन्य इति भाव· । अत्र अप्रस्तुतप्रशंसालङ्कार· । शार्दूलविक्रीडित वृत्तम् ॥ २ ॥

(१) जालहस्त =वागुराधृत् । स्फुटितचरण =स्फुटितौ विपादिकावन्तौ चरणौ पादौ यस्य स । (२) यमेति—यमस्य मृत्यो· किङ्करो दूत· तस्याकार इवाकारो यस्य, अतिभीमाकृतिरित्यर्थ ।

दपं गत्वा सर्वान्विहङ्गमान्प्रोवाच—भोः ! अयं दुरात्मा लुब्धको जालतण्डुलहस्तः समभ्येति । तत्सर्वथा तस्य न विश्वसनीयम् । एष जालं प्रसार्य तण्डुलान्प्रक्षेप्स्यति । ते तण्डुला भवद्भिः सर्वैरपि (१) कालकूटसदृशा द्रष्टव्याः । एवं वद-तस्तस्य स लुब्धकस्तत्र वटतल आगत्य जालं प्रसार्य (२) सिन्दु-वारसदृशांस्तण्डुलान्प्रक्षिप्य नातिदूरं गत्वा निभृतः स्थितः । अथ ये पक्षिणस्तत्र स्थितास्ते (३) लघुपतनकवाक्यार्गलया निवारितास्तांस्तण्डुलान्हालाहलाङ्कुरानिव वीक्षमाणा (४) निभृतास्तस्थुः । अत्रान्तरे चित्रग्रीवो नाम कपोतराजः सहस्र-परिवारः प्राणयात्रार्थं परिभ्रमंस्तांस्तण्डुलान्दूरतोऽपि पश्यंल्ल-घुपतनकेन निवार्यमाणोऽपि (५) जिह्वालौल्याद्भक्षणार्थमपतत् । सपरिवारो निबद्धश्च । अथवा साध्विदमुच्यते—

जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम् ।
अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥ ३ ॥

अथवा (६) दैवप्रतिकूलतया भवत्येवम् । न तस्य दोषोऽस्ति ।

---

(१) कालकूटसदृशा =कालकूटाख्यमहाविषतुल्या. । (२) सिन्दुवार-सदृशान्=निर्गुण्डीतुल्यान् अतिश्वेतानित्यर्थ । (३) (लघु द्रुतं पतनमुड्डयनं यस्य स लघुपतनक ) लघुपतनकस्य वाक्यं वच एव अर्गला द्वारप्रतिबन्धक-महादण्डविशेष । (४) निभृता =गुप्ता । (५) जिह्वालौल्यात्=रसना-चापल्यात् ।

"जिह्वालौल्ये" ति–जिह्वाया लौल्ये चापल्ये प्रसक्ताना खचिताना रस-नावशवर्त्तिनामिति यावत्, अज्ञानाम्=विवेकशून्यानाम्, जलमध्यनिवासि-नाम्=पानीयाभ्यन्तरे निवसता मीनानाम्=मत्स्यानामिव अचिन्तित =अत-र्कितोपनतः वध =विनाशो मृत्यु जायते=भवति । अतिलुब्धा अवश्यं म्रियन्ते, तस्मादतिलोभो न कर्त्तव्य इति भाव ॥ ३ ॥

(६) दैवप्रतिकूलतया=भागधेयविपर्ययेण ।

उक्तं च—

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः।
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं
प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥४॥

तथा च—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम्।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ ५ ॥

अत्रान्तरे लुब्धकस्तान् (१) बद्धान्विज्ञाय प्रहृष्टमनाः (२) प्रोद्यतयष्टिस्तद्वधार्थं प्रधावितः। चित्रग्रीवोऽप्यात्मानं सपरि-

---

"पौलस्त्य" इति—पुलस्त्यस्यापत्यं पुमान् पौलस्त्य =पुलस्त्यवंशोत्पन्नो रावण अन्यदारहरणे=परकीयनारीस्तेये कथम्=केन प्रकारेण (पण्डित सन्नपि) दोषम्=पापं न विज्ञातवान्=नैव बुबुधे। रामेणापि=ईश्वरावतारेण महापुरुषेण सता हेमहरिणस्य=सुवर्णमृगस्य असम्भव कथं न लक्षित = नैव विवेचित। युधिष्ठिरेण=धर्मपुत्रेणापि सता सहसा अक्षै =द्यूतै कथम् अनर्थ =पराजयहेतुका विपत्ति, प्राप्त। हि=तथाहि प्रत्यासन्नविपत्तिमूढमनसाम्=प्रत्यासन्नया समीपवर्तिन्या विपत्त्या आपदया विमूढं विवेकशून्यं मनो येषा तादृशाना महानुभावानामपि मति =बुद्धि· क्षीयते=स्वयमेव विलुप्ता भवति। "क्षीयते" इति कर्मकर्त्तरि प्रयोग। विनाशकाले पण्डितानामपि प्रज्ञा नश्यतीति भाव। अर्थान्तरन्यास। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

"कृतान्ते"ति—कृतान्तस्य यमस्य पाशेन जालेन बद्धाना निगडितानामासन्नमरणानामित्यर्थ, दैवेन=दुष्टेन भाग्येन उपहतं विनष्टं चेतो येषा एवम्भूताना महताम्=महानुभावानामपि बुद्धय =मतय· कुब्जगामिन्य = कुपथचारिण्य जडप्राया भवन्ति=जायन्ते ॥ ५ ॥

(१) तान्=कपोतान्। बद्धान्=शितान्। (२) प्रोद्यतयष्टि =उत्थापित-लगुड।

घारं वद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान्कपोतानूचे—अहो! न भेतव्यम्। उक्तं च—

व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
स तेषां पारमभ्येति तत्प्रभावादसंशयम्॥ ६॥
सम्पत्तौ च विपत्तौ च महतामेकरूपता।
उदये सविता रक्तो रक्तश्चास्तमये तथा॥ ७॥

तत्सर्वे वयं (१) हेलयोड्डीय सपाशजाला अस्यादर्शनं गत्वा (२) मुक्तिं प्राप्नुमः। नो चेद्भयविक्लवाः सन्तो हेलया (३) समुत्पातं न करिष्यथ, ततो मृत्युमवाप्स्यथ। उक्तं च—

तनवोऽप्यायता नित्यं तन्तवो बहुलाः समाः।
बहून्बहुत्वादायासान्सहन्तीत्युपमा सताम्॥ ८॥

---

"व्यसनेषु" इति—सर्वेषु एव व्यसनेषु=कष्टेषु यस्य=पुरुषस्य बुद्धि=प्रज्ञा न हीयते=स्वयमेव न भ्रष्टा भवति स=धीर तत्प्रभावात्=तस्या बुद्धे प्रतापातिशयात् सामर्थ्यात् असंशयम्=नि सन्देहं तेषाम्=व्यसनाना पारम्=अन्तम् अभ्येति=प्राप्नोति। धीमन्तो धैर्यशालिनोऽवश्यं कष्टान्युत्तरन्तीति भाव॥६॥

"सम्पत्ता"विति—सम्पत्तौ=ऐश्वर्ये उन्नतिकाले विपत्तौ=कष्टावस्थायाम् अवनतिसमये महताम् एकरूपता=समभाव एव भवति, तथाहि—उदये=उदयकाले सविता=सूर्य रक्त, तथा अस्तमये=अस्तमनकालेऽपि रक्तश्च=रक्त एव भवतीत्यर्थ। महात्मना प्रकृतिरेकरसैव तिष्ठतीति भाव॥ ७॥

(१) हेलया=अवज्ञया जालमनादृत्येत्यर्थ। उड्डीय=विहायोगमन कृत्वा। (२) मुक्तिम्=मोक्षणम्। (३) समुत्पातम्=उड्डयनम्।

"तनव" इति—नित्यम्=निरन्तरं तनव=सूक्ष्मा आयता=विस्तारम्प्राप्ता लम्बमाना वा, तथा बहुला=प्रचुरसङ्ख्या, समा=तुल्या सन्त तन्तव=वस्त्रोपादानकारणानि सूत्राणि बहुत्वात्=बहुसङ्ख्यत्वात् बहून्=अनेकान् आयासान्=गुरुतरभारवहनादिरूपान् क्लेशान् सहन्ति=सहन्ते, इति सताम्=दृढसत्त्वाना महात्मनाम् उपमा=दृष्टान्तोऽस्तीत्यर्थ।

यथा सूक्ष्मा अपि बहवस्तन्तवो मिलिता गुरुतरभारवहने समर्था, तथा

तथानुष्ठिते लुब्धको जालमादायाकाशे गच्छतां तेषां पृष्ठतो (१) भूमिष्ठोऽपि पर्यधावत्। तत ऊर्ध्वाननः श्लोकमेनमपठत्—

जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी।
यावच्च विवदिष्यन्ते पतिष्यन्ति न संशयः॥ ९॥

लघुपतनकोऽपि (२) प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यतीति (३) कुतूहलात्तत्पृष्ठतोऽनुसरति। अथ दृष्टेरगोचरतां गतान्विज्ञाय (४) लुब्धको निराशः श्लोकमपठन्निवृत्तश्च—

नहि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति॥१०॥

---

अल्पकाया बहवोऽपि सङ्घीभूता जन्तव स्वकार्यमनायासेनैव साधयन्तीति भाव।

"सहन्ति" इत्यत्र परस्मैपदं चिन्त्यम्, व्याकरणान्तराद्वा बोध्यम्॥८॥

(१) भूमिष्ठ=पृथिवीस्थ। **अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः** (८।३।९७) इति सूत्रेण षत्वम्। "भूमिस्थ" इत्यपपाठ। पर्यधावत्=पलायाञ्चक्रे। ऊर्ध्वानन=ऊर्ध्वमुख।

**"जालम्"** इति—पक्षिण=पतत्रिण (दुर्बला.) सन्तोऽप्यमी संहता=मिलिता सन्त जालम्=पाशम् आदाय=गृहीत्वा गच्छन्ति, यावच्च विवदिष्यन्ते=परस्परं विवाद करिष्यन्ति, तावच्च पतिष्यन्ति=अधोयास्यन्ति, न संशय=अत्र सन्देहो नास्ति। विमत्यर्थकाद् वदतेर्धातो—**"भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः"** (१।३।४७) इति तङ्॥ ९॥

(२) प्राणयात्राक्रियाम्=आहारवृत्तिम्। (३) कुतूहलात्=कौतुकात्। (४) लुब्धक=व्याध।

**"नही"**ति—यत्=वस्तु भाव्यम्=भवितव्यं न=नास्ति तत् नहि भवति, यच्च भाव्य तत् यत्नेन=उद्योगेन विनापि भवति, हीति निश्चितोऽर्थ। यस्य भवितव्यता=अवश्यम्भाविता नास्ति तत् वस्तु करतलगतम्=हस्ततलस्थितमपि नश्यति=नाशमुपैति भाग्यस्यैव प्रावल्यमिति भाव॥ १०॥

तथा च—

पराङ्मुखे विधौ चेत्स्यात्कथञ्चिद् द्रविणोदयः।
तत्सोऽन्यदपि सङ्गृह्य याति शङ्खनिधिर्यथा ॥ ११ ॥

तदास्तां तावद् (१) विहङ्गामिषलोभो यावत् (२) कुटुम्बवर्तनोपायभूतं जालमपि मे नष्टम्। चित्रग्रीवोऽपि लुब्धकमदर्शनीभूतं ज्ञात्वा तानुवाच—भोः! निवृत्तः स दुरात्मा लुब्धकः। तत्सर्वैरपि (३) स्वस्थैर्गम्यतां महिलारोप्यस्य प्रागुत्तरदिग्भागे। तत्र मम सुहृद्धिरण्यको नाम मूषकः सर्वेषां (४) पाशच्छेदं करिष्यति।

उक्तं च—

सर्वेषामेव मर्त्यानां व्यसने समुपस्थिते।
वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न सन्दधे ॥ १२ ॥

एवं ते कपोताश्चित्रग्रीवेण सम्बोधिता महिलारोप्ये नगरे

---

"पराङ्मुख" इति—चेत्=यदि कथञ्चित्=केनापि प्रकारेण द्रविणोदय = द्रविणस्य धनस्योदयो लाभ स्यात् तत्=तदा विधौ=भाग्ये दैवे पराङ्मुखे= विपरीते सति सः द्रविणोदय =धनलाभः अन्यदपि=प्राक्सञ्चितमपि सङ्गृह्य=गृहीत्वा याति=विनष्टो भवतीत्यर्थः। यथा शङ्खनिधि =अत्रार्थे शङ्खनिधिर्दृष्टान्तः। यथा शङ्खनिधिर्हि स्वपोषणार्हान् पुत्रकलत्रादीन् प्रतार्य केवलमनुकूलदैवमेव पोषयति, तथा प्रतिकूलदैवस्य सर्वं धनं गृहीत्वा प्रसन्नदैवं स्वकृपापात्रं पोषयति तद्वत् ॥ ११ ॥

(१) विहङ्गामिषलोभः=विहङ्ग पक्षी तस्यामिषं मांसं तस्य लोभ लोलुपता। (२) कुटुम्बवर्त्तनोपायम्=परिवारजीविकासाधनम्। (३) स्वस्थै = त्यक्तशङ्कैः। (४) पाशच्छेदम्=बन्धनकर्त्तनम्।

"सर्वेषा" मिति—सर्वेषामेव मर्त्यानाम्=मनुष्याणा व्यसने=कष्टे समुपस्थिते=प्राप्ते सति मित्रादन्य =सुहृदितर कश्चित् वाङ्मात्रेणापि=केवलं वाचापि साहाय्यम्=सहायता न सन्दधे=नैवाकरोत्, न करोतीति विवक्षितोऽर्थे। विपत्तौ मित्रं विनाऽन्य कोऽपि सहायको न भवतीति भाव ॥१२॥

(१) हिरण्यकाविलदुर्गं प्रापुः। हिरण्यकोऽपि (२) सहस्रमुखविलदुर्गं प्रविष्टः सन् (३) अकुतोभयः सुखेनास्ते। अथवा साध्विदमुच्यते—

अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः।
अवसन्मूषकस्तत्र कृत्वा शतमुखं विलम् ॥ १३ ॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः ॥ १४ ॥

तथा च—

न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
तत्कर्म सिध्यते राज्ञां दुर्गेणैकेन यद्रणे ॥ १५ ॥
शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः।
तस्माद् दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥ १६ ॥

---

(१) हिरण्यकेति—हिरण्यकस्य तदाख्यस्य मूषकस्य विलाकारं दुर्गं कोटम्। (२) सहस्रेति—सहस्रशब्दोऽसङ्ख्यातार्थक। (३) अकुतोभय =नास्ति-कुतोऽपि भय यस्य स, मयूरव्यंसका(२।१।७२)दित्वात्समास। भयशून्य इत्यर्थ।

"अनागतम्" इति—अनागतम्=भावि भयम्=भयकारणम् दृष्ट्वा=पर्यालोच्य नीतिशास्त्रविशारद =नयविद्याचतुर मूषक =उन्दुर तत्र शतमुखं विल कृत्वाऽवसत्। शतशब्दोऽसङ्ख्यातवाची ॥ १३ ॥

"दंष्ट्रे"ति—दंष्ट्राविरहित =दाढाविहीन सर्प =भुजङ्ग मदहीन =मदेन शून्यो गज =हस्ती यथा सर्वेषा वश्य =अधीनो जायते तथा=तद्वत् दुर्गहीन =कोटविकल नृप =राजाऽपि सर्वेषा वश्यो भवतीत्यर्थ ॥१४॥

"ने"ति—गजाना सहस्रेण न, वाजिनाम्=अश्वाना लक्षेण न, तत् कर्म सिध्यते=निष्पन्न भवति, यत् कर्म रणे=सङ्ग्रामे सति राज्ञामेकेन दुर्गेण सिद्धं भवतीत्यर्थ। "सिध्यते" निष्पाद्यते सेनानीभिरिति शेष। "कर्मणि लट्" इति तु कुव्याख्यानम्, आर्षत्वात्प्रयोगस्य ॥ १५ ॥

"शतम्" इति—एकोऽपि प्राकारस्थ =दुर्गप्राचीरस्थ धनुर्धर शतम्=असङ्ख्यातान् योद्धॄन् सन्धत्ते=योधयतीत्यर्थ। तस्मात् कारणात् नीतिशास्त्र-विद =नयविद्यानिपुणा दुर्गं प्रशंसन्ति=श्लाघन्ते ॥ १६ ॥

अथ चित्रग्रीवो बिलमासाद्य तारस्वरेण प्रोवाच—भो ! भो ! मित्र ! हिरण्यक ! सत्वरमागच्छ । महती मे (१) व्यसनावस्था वर्तते । तच्छ्रुत्वा हिरण्यकोऽपि बिलदुर्गान्तर्गतः सन्प्रोवाच—भोः ! को भवान् । किमर्थमायातः । किं कारणम् । कीदृक्ते व्यसनावस्थानम्, तत्कथ्यताम् इति । तच्छ्रुत्वा चित्रग्रीव आह—भोः ! चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृत् । तत्सत्वरमागच्छ । गुरुतरं प्रयोजनमस्ति । तदाकर्ण्य (२) पुलकिततनुः प्रहृष्टात्मा स्थिरमनास्त्वरमाणो निष्क्रान्तः । अथवा साध्विदमुच्यते—

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यमागच्छन्ति महात्मनाम् ॥ १७ ॥
आदित्यस्योदयस्तात ताम्बूलं भारती कथा ।
इष्टा भार्या सुमित्रं च अपूर्वाणि दिने दिने ॥ १८ ॥
सुहृदो भवने यस्य समागच्छन्ति नित्यशः ।
चित्ते च तस्य सौख्यस्य न किंचित्प्रतिमं सुखम् ॥१९॥

---

(१) व्यसनावस्था=विपत्तिकाल ।

(२) पुलकिततनु=जातरोमाञ्च । प्रहृष्टात्मा=प्रसन्नमना । स्थिरमना=सधैर्य. । त्वरमाण=त्वरा कुर्वाण ।

"सुहृद" इति—स्नेहसम्पन्ना=प्रीतिपुष्टा. लोचनयोर्नेत्रयो' आनन्ददायिन=हर्षप्रदा सुहृद=मित्राणि महात्मनाम्=साधूना गृहवताम=गृहस्थाना गृहे नित्यमागच्छन्ति । एतेषामागतानामवश्यमातिथ्यं विधेयमिति भाव ॥ १७ ॥

"आदित्यस्ये"ति—हे ! तात ! प्रिय ! आदित्यस्य=सूर्यस्योदय ताम्बूलम्=नागवल्लीदलम्, भारती कथा=महाभारतस्य कथा व्याख्यानमुपदेशो वा, इष्टा=प्रिया भार्या=स्त्री, सुमित्रम्=सुहृद् च एतानि दिने दिने=प्रतिदिनम् अपूर्वाणि=नूतनानि इव प्रीतिहेतवो भवन्तीत्यर्थ ॥ १८ ।

"सुहृदः" इति—यस्य भवने=गृहे सुहृद नित्यश =प्रतिदिनं समाग

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादमिदमाह—भोः ! किमेतत्। स आह—भोः ! जानन्नपि किं पृच्छसि। उक्तं च यतः—

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति॥ २०॥

तत्प्राप्तं मयैतद्बन्धनं जिह्वालौल्यात्। साम्प्रतं त्वं सत्वरं पाशविमोक्षं कुरु। तदाकर्ण्य हिरण्यकः प्राह—

अर्धार्धाद्योजनशतादामिषं वीक्षते खगः।
सोऽपि पार्श्वस्थितं दैवाद्बन्धनं न च पश्यति॥ २१॥

तथा च—

रविनिशाकरयोर्ग्रहपीडनं गजभुजङ्गविहङ्गमबन्धनम्।
मतिमतां च निरीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः २२

---

च्छन्ति, तस्य चित्ते=अन्तःकरणे (उत्पन्नस्य) सौख्यस्य=आनन्दस्य प्रतिमम्=तुल्यम् सुखं=सुखसाधनम किञ्चिदपि नास्तीत्यर्थः॥ १९॥

"यस्मादि"ति—यस्मात्=प्रदेशविशेषात्, येन=हेतुना, यदा च=यस्मिन् काले च, यथा च=यादृशम्, यच्च=यद्रूपम्, यावच्च=यावत्परिमाणम्, यत्र च=यस्मिन् लोके, शुभाशुभम्=शुभमशुभं वा आत्मकर्म=स्वकृत कर्म भवति, तस्माच्च=देशात्, तेन च=कारणेन, तदा च=तस्मिंश्च काले, तथा च=तादृशमेव, तच्च=तद्रूपमेव, तावच्च=तावत्परिमितम् तत्र च=तस्मिन्नेव लोके देहादौ कृतान्तवशात्=विधातृवशात् उपैति=प्राप्नोति मानव इति शेष। कृतं कर्मावश्यमेव भुज्यत इति भाव॥ २०॥

"अर्धार्धा"दिति—खग=विहङ्गम अर्धार्धाद् योजनशतात्=पञ्चविंशतियोजनात् आमिषम्=मांसादि भोग्यं वीक्षते=आलोकते, सोऽपि=असावप्येतादृशो दूरदृक् दैवात्=प्रतिकूलदैवाद्धेतो. पार्श्वस्थितम्=निकटवर्तिबन्धनम्=पाशं न च=नैव पश्यति॥ २१॥

"रविनिशाकरयो"रिति—रविनिशाकरयो=सूर्याचन्द्रमसो ग्रह-

तथा च—

व्योमैकान्तविचारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
वध्यन्ते निपुणैरगाधसलिलान्मीनाः समुद्रादपि।
दुर्णीतं किमिहास्ति किं च सुकृतं कः स्थानलाभे गुणः
कालः सर्वजनान्प्रसारितकरो गृह्णाति दूरादपि ॥ २३ ॥

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुमुद्यतं स तमाह—भद्र ! मा मैवं कुरु। प्रथमं मम भृत्यानां पाशच्छेदं कुरु। तदनु ममापि च। तच्छ्रुत्वा कुपितो हिरण्यकः प्राह—भोः! न युक्तमुक्तं भवता। यतः स्वामिनोऽनन्तरं भृत्याः। स आह—भद्र! मा मैवं वद। (१) मदाश्रयाः सर्व एते (२) वराकाः। अपरं

पीडनम्=ग्रहेण राहुणा पीडनं ग्रासम्, तथा गजाना=हस्तिना भुजङ्गाना= सर्पाणा विहङ्गाना=पक्षिणाञ्च बन्धनं=पाशम्, तथा—मतिमताम्=बुद्धिमता पण्डितानामपि मानवाना दरिद्रताम्=निर्धनता निरीक्ष्य=दृष्ट्वा, अहो= इत्याश्चर्यम्, विधि=दैव बलवान्=सर्वापेक्षयापि प्रबलोऽस्ति, इति=एषैव मे=मम मति=निश्चय। द्रुतविलम्बितं छन्द ॥ २२ ॥

"व्योमे" ति—व्योम्नि=आकाशे एकान्ते विचारिण=विहरणशील अपि विहगा=पक्षिण आपदम्=विपत्ति पाशबन्धनादिरूपा सम्प्राप्नुवन्ति= सम्यक् लभन्ते, तथा—अगाधसलिलात्=न गाधमगाधमतलस्पर्शं सलिल पानीयं यस्य स तादृशात् समुद्रात्=सागरात् निपुणै=चतुरैर्जालिकै मीना=मत्स्या वध्यन्ते=धार्यन्ते गृह्यन्त इत्यर्थ। इह=लोके कि दुर्णीतम्= दुष्प्राप्यं नाम किमस्ति (न किञ्चिदपीत्यर्थ), सुकृतञ्च किमस्ति, स्थान- लाभे=उत्तमस्थानप्राप्तौ च क गुण=लाभ, (न कोपीत्यर्थ) प्रसारित- कर=प्रसारितौ करौ हस्तौ येन स तादृश काल=पूर्वकृतकर्मणा परि- पाकसमय दूरादपि सर्वजनान्=विश्वानपि जन्तून गृह्णाति=आकर्षयति। "समय एव करोति बलाबल" पुरुषस्तु न दुष्ट इत्यत्र तात्पर्यम्। शार्दूल- विक्रीडितम् ॥ २३ ॥

(१) मदाश्रया=अहमेवाश्रयो येषा ते। (२) वराका=कृपणा।

स्वकुटुम्बं परित्यज्य समागताः। तत्कथमेतावन्मात्रमपि संमानं न करोमि। उक्तं च—

यः संमानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम्।
वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥२४॥

तथा च—

विश्वासः सम्पदां मूलं तेन यूथपतिर्गजः।
सिंहो मृगाधिपत्येऽपि न मृगैः परिवार्यते ॥ २५ ॥

अपरं मम कदाचित्पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति। अथवा दुरात्मा लुब्धकः समभ्येति। तन्नूनं मम नरकपात एव। उक्तं च—

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः।
सुखी स्यान्नरकं याति परत्रेह च सीदति ॥ २६ ॥

---

"**यः सम्मानम्**" इति—य क्षितिप.=भूप भृत्यानाम्=अनुचराणाम्, सदा=सदैव संमानम्=आदरं धत्ते=करोति, ते=भृत्या वित्ताभावे=धनाभावे अपि तं=राजानं दृष्ट्वा कर्हिचित्=कदापि न त्यजन्ति=नैव परिहरन्ति। निर्धनावस्थायामपि ते राज्ञि अनुरक्ता एव भवन्तीत्यर्थ ॥ २४ ॥

"**विश्वास**" इति—विश्वास =अयमस्माक स्वामीति दृढः प्रत्यय एव सम्पदाम्=सम्पत्तीनामैश्वर्याणा मूलम्=कारणं तेन=विश्वासेनैव गज = हस्ती यूथपति =गजसङ्घस्य स्वामी वर्त्तत इति शेष । सिंह =सिंहस्तु मृगाधिपत्ये=मृगाणा पशूना आधिपत्ये राज्ये वर्त्तमानोऽपि मृगै.=पशुभिः न=नैव परिवार्यते=परिवारितो भवतीत्यर्थ । विश्वास एव सर्वसम्पदा मूलमिति भाव ॥ २५ ॥

"**सदाचारेषु**" इति—किञ्च-य प्रभु =स्वामी सदाचारेषु=सद्व्यवहारेषु भृत्येषु संसीदत्सु=विपन्नेषु सत्सु सुखी स्यात=स्वयं सुखे वर्त्तेत तानुपेक्ष्य विविधभोग्यभोगेष्वासक्त स्यात्, स परत्र=देहत्यागे सति नरकम्=निरय याति=गच्छति, इह च=अस्मिन् लोके च सीदति=अवसादं प्राप्तोऽपि भवति। भृत्योपकारविमुखस्य राज्ञो द्वावपि लोकौ नश्यत इति भाव ॥ २६ ॥

तच्छ्रुत्वा प्रहृष्टो हिरण्यकः प्राह—भोः! वेद्म्यहं राजधर्मम्। परं मया तव परीक्षा कृता। तत्सर्वेषां पूर्वं पाशच्छेदं करिष्यामि। भवानप्यनेन विधिना बहुकपोतपरिवारो भविष्यति। उक्तं च—

कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा।
सम्भवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे॥ २७॥

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकश्चित्रग्रीवमाह—मित्र! गम्यतामधुना स्वाश्रयं प्रति। भूयोऽपि व्यसने प्राप्ते समागन्तव्यम् इति तान्संप्रेष्य पुनरपि दुर्गं प्रविष्टः। चित्रग्रीवोऽपि सपरिवारः स्वाश्रयमगमत्। अथवा साध्विदमुच्यते-

मित्रवान्साधयत्यर्थान् दुःसाध्यानपि वै यतः।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः॥ २८॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षमवलोक्य विस्मितमना व्यचिन्तयत्—अहो! बुद्धिरस्य हिरण्यकस्य शक्तिश्च (१) दुर्गसामग्री च। तदीदृगेव विधिर्विहङ्गाना बन्धनमोक्षात्मकः। अहं च न कस्यचिद्विश्वसिमि (२) चलप्रकृतिश्च। तथाप्येनं मित्रं करोमि। उक्तं च—

---

"कारुण्यम्" इति—यस्य=राज भृत्येषु=सेवकेषु कारुण्यम्=दया, तथा-संविभाग=सम्यक् विभागं कृत्वा व्यवस्थाकरणम् अर्थात् भृत्याना गुणं दोषञ्च निरीक्ष्य तेषा यथाधिकारं पदप्रदानम्, स महीपाल त्रैलोक्यस्यापि रक्षणे=आधिपत्ये सम्भवेत्=शक्तिमान् स्यादित्यर्थ ॥ २७ ॥

"मित्रवान्" इति—यत=यस्मात् कारणात् मित्रवान्=प्रशस्तसुहृत् वै=निश्चयेन दु साध्यान्=साधयितुमशक्यान् कष्टसाध्यान् वा अर्थान=प्रयोजनान्यपि साधयति=सम्पादयति, तस्मात्=हेतो आत्मन=स्वस्य समानानि=तुल्यानि समानवयोवित्तानि मित्राणि=सुहृद कुर्वीत=सम्पादयेदित्यर्थ ॥२८॥

(१) दुर्गसामग्री=कोट्टरक्षणोपाय। विधि=प्रकार.। (२) चलप्रकृति=चपलस्वभाव। एनम्=हिरण्यकम्।

अपि सम्पूर्णतायुक्तैः कर्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥ २९ ॥

एवं (१) सम्प्रधार्य पादपादवतीर्य बिलद्वारमाश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान्—एह्येहि भोः! हिरण्यक! एहि। तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत्—किमन्योऽपि कश्चित्कपोतो (२) बन्धनशेषस्तिष्ठति येन मां व्याहरति। आह च—भोः! को भवान्। स आह—अहं लघुपतनको नाम वायसः। तच्छ्रुत्वा (३) विशेषादन्तर्लीनो हिरण्यक आह—भोः! द्रुतं गम्यतामस्मात्स्थानात्। वायस आह—अहं तव पार्श्वे (४) गुरुकार्येण समागतः। तत्किं न क्रियते मया सह दर्शनम्। हिरण्यक आह—न मेऽस्ति त्वया सह सङ्गमेन प्रयोजनमिति। स आह—भोः! चित्रग्रीवस्य मया तव सकाशात्पाशमोक्षणं दृष्टम्। तेन मम महती प्रीतिः सञ्जाता। तत्कदाचिन्ममापि बन्धने जाते तव पार्श्वान्मुक्तिर्भविष्यति। तत्क्रियतां मया सह मैत्री। हिरण्यक आह—अहो! त्वं भोक्ता। अहं ते भोज्यभूतः। तत्का त्वया सह मम मैत्री। तद्गम्यताम्। मैत्री (५) विरोधभावात्कथम्। उक्तं च—

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ३० ॥

---

"अपी"ति—सम्पूर्णतायुक्तै=सकलसम्पद्भागिभिरपि बुधै=प्राज्ञै सुहृद कर्त्तव्या=सञ्चेतव्या, तथाहि—परिपूर्ण=जलेन भरितोऽपि नदीश=सागर चन्द्रोदयम्=चन्द्रस्य शशिन उदयमुद्गमम्, अपेक्षते=कामयते। जलपूर्णोऽपि सागरो यथा उच्छलनप्रदचन्द्रोदयाकाङ्क्षावान् तथा सम्पत्सम्पन्नोऽपि प्राज्ञो मित्राकाङ्क्षायुक्तो भवेदिति भाव। दृष्टान्तालङ्कार ॥ २९ ॥

(१) सम्प्रधार्य=निश्चित्य। बिलद्वारम्=गर्त्तमुखम्। (२) बन्धनशेषः=बद्धेषु कश्चिदवशिष्ट.। (३) विशेषादन्तर्लीन=पूर्वापेक्षयाप्यभ्यन्तरे गत। (४) गुरुकार्येण=महता कार्येण हेतुना। (५) विरोधभावात्=स्वाभाविकविरोधात्।

"ययो"रिति—ययोर्द्वयो वित्तम्=धनं समम्=तुल्यम्, ययोरेव च कुलं=

तथा च--

> यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः ।
> हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः ॥ ३१ ॥

तद्गम्यताम् इति । वायस आह—भोः! हिरण्यक ! एषोऽहं तव दुर्गद्वार उपविष्टः । यदि त्वं मैत्रीं न करोषि ततोऽहं (१) प्राणमोक्षणं तवाग्रे करिष्यामि, अथवा (२) प्रायोपवेशनं मे स्यादिति । हिरण्यक आह—भोः ! त्वया वैरिणा सह कथं मैत्रीं करोमि । उक्तं च—

> वैरिणा न हि सन्दध्यात्सुश्लिष्टेनापि सन्धिना ।
> सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ ३२ ॥

वायस आह—भोः ! त्वया सह दर्शनमपि नास्ति । कुतो वैरम् । तत्किमनुचितं वदसि । हिरण्यक आह—द्विविधं वैरं भवति । सहजं कृत्रिमं च । तत्सहजवैरी त्वमस्माकम् । उक्तं च—

> कृत्रिमं नाशमभ्येति वैरं द्राक्कृत्रिमैर्गुणैः ।
> प्राणदानं विना वैरं सहजं याति न क्षयम् ॥ ३३ ॥

---

वंश. समम्, तयोरेव मैत्री=सौहार्दम्, विवाहश्च, एतौ द्वावपि युज्येयाताम् । पुष्टविपुष्टयो =अधिकहीनबलयोर्नतु तौ युक्तावित्यर्थ ॥ ३० ॥

"य"इति—यो मूढ =मूर्खो जन. आत्मन =स्वस्य असदृशम्=अतुल्य हीनमधिकं वाऽपि मित्रं कुरुते, असौ कुधी =दुर्बुद्धि हास्यताम्=उपहास-भावं याति, लोक इति शेप· ॥ ३१ ॥

(१) प्राणमोक्षणम्=जीवनत्यागम् । (२) प्रायोपवेशनम्=अनशनम् ।

"वैरिणा" इति—सुश्लिष्टेन=सम्यक्घटितेनापि सन्धिना=उपायविशे-षेण वैरिणा=शत्रुणा सह नहि सन्दध्यात्=मैत्रीं न कुर्यात् । अत्र दृष्टान्त - सुतप्तम्=अत्यन्तं तापङ्गतमपि पानीयम्=जलं पावकम्=वह्निं शमयत्येव=निर्वा-पयत्येव । स्वाभाविकवैरादिति भाव ॥ ३२ ॥

"कृत्रिमम्"इति—कृत्रिमम्=क्रियया निर्वृत्तं केनापि कारणेन समु-

वायस आह—भोः ! द्विविधस्य वैरस्य लक्षणं श्रोतुमिच्छामि। तत्कथ्यताम्। हिरण्यक आह—भोः ! कारणेन निर्वृत्तं कृत्रिमम्। तत्तदर्होपकारकरणाद्गच्छति । स्वाभाविकं पुनः कथमपि न गच्छति। तद्यथा—नकुलसर्पाणाम्, (१) शष्पभुङ्नखायुधानाम्, जलवह्न्योः, देवदैत्यानाम्, सारमेयमार्जाराणाम्, ईश्वरदरिद्राणाम, सपत्नीनाम्, सिंहगजानाम्, लुब्धकहरिणानाम्, श्रोत्रियभ्रष्टक्रियाणाम्, मूर्खपण्डितानां, पतिव्रताकुलटानां, सज्जनदुर्जनाम्। (२) न कश्चित्केनापि व्यापादितः, तथापि प्राणान्संतापयन्ति। वायस आह—भोः ! अकारणमेतत्। श्रूयतां मे वचनम्।

कारणान्मित्रतां याति कारणादेति शत्रुताम्।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ३४ ॥

तस्मात्कुरु मया सह समागमं मित्रधर्मार्थम्। हिरण्यक आह—भोः ! श्रूयतां (३) नीतिसर्वस्वम्।

सकृद्दुष्टमपीष्टं यः पुनः सन्धितुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३५ ॥

---

ऽं वैरम् कृत्रिमै =सप्रयोजनैरेव गुणै =उपकारादिभि प्राक्=शीघ्रमेव नाशमभ्येति=विनश्यति, सहजम्=स्वाभाविकन्तु वैरं प्राणदानं विना=मरणमन्तरेण, क्षयम्=नाशं न याति ॥ ३३ ॥

(१) शष्पभुङ्नखायुधानाम्=शष्पभोजिश्वापदानाम् । सारमेयमार्जाराणाम्=कुक्कुरविडालानाम् । श्रोत्रियभ्रष्टक्रियाणाम्=श्रोत्रियाः वेदविदः, भ्रष्टक्रिया ब्राह्मणब्रुवादयस्तेषाम्। (२) न कश्चिदिति—यद्यप्येतेषु मध्ये दुर्बलेन बलवान् न हत तथापि अन्योऽन्यस्य सन्तापहेतुर्भवत्येवेति तात्पर्यम् । (३) नीतिसर्वस्वम्=नयविद्याया सार ।

"कारणादि"ति—कारणात्=प्रयोजनवशात् मित्रताम्=सौहार्दं याति प्राप्नोति, कारणादेव शत्रुताम्=वैरतामेति, तस्माद् धीमता=प्राज्ञेन मित्रत्वम्=मैत्री एव योज्यम्=सम्पाद्यम्, वैर न करणीयमित्यर्थ. ॥ ३४ ॥

"सकृदि"ति—सकृत्=एकवारं दुष्टम्=प्राप्तदोषमपि इष्टं य पुन =

अथवा गुणवानहम्, न मे कश्चिद्वैरयातनां करिष्यति, एतदपि न सम्भाव्यम्। उक्तं च—

सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिने-
र्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्।
छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गल-
मज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः॥ ३६॥

वायस आह—अस्त्येतत्। तथापि श्रूयताम्—

उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम्॥ ३७॥
मृद्घट इव सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघट इव दुर्भेदः सुकरसन्धिश्च॥ ३८॥

---

भूयोऽपि सन्धातुमिच्छति=सम्मेलयितुं कामयते, स=पुरुष मृत्युम्=मरणमेव उपगृह्णाति=प्राप्नोति, यथा अश्वतरी गर्भमात्मविनाशायैव गृह्णाति॥३५॥

"सिंह" इति—सिंह. व्याकरणस्य कर्त्तु=रचयितु (निर्दोपस्य) पाणिनेर्मुने प्रियान् प्राणान्=असून् अहरत्। हस्ती=गज मीमासाकृतम्=पूर्वमीमासादर्शनिर्मातारम् जैमिनि नाम मुनिम् उन्ममाथ=जघान। मकर=नक्रविशेष. वेलातटे=समुद्रस्य कूले छन्दोज्ञाननिधिम्=छन्द शास्त्रनिर्मातारं पिङ्गलं नाम मुनिं जघान=हतवान्। अज्ञानेन मोहेन आवृतानि व्याप्तानि चेतासि येषामेवम्भूतानाम्, अतिरुषाम्=अत्यन्तं क्रोधिना तिरश्चाम्=पशुपक्षिणा गुणै=विद्यादिभि कोऽर्थ=किम्प्रयोजनम्, न किञ्चिदपीति। अमी विद्वान् नैव हन्तव्य इति विज्ञानशून्यास्तिर्यञ्चोऽतो न मैत्रीयोग्या इति भाव॥३६॥

"उपकारादि" ति—लोकानाम्=मनुष्याणाम् उपकारात्=अन्योन्यमुपकारकरणाद्धेतो, मृगपक्षिणाम्=मृगाणा पशूना पक्षिणा पतत्रिणाम् निमित्तात्=कुतश्चित्प्रयोजनविशेपात्, मूर्खाणाम्=मूढाना भयात्=भीतिहेतो लोभाद्वा मैत्री=सौहार्दं स्यात्=भवतीत्यर्थ। सताम्=साधूना पुरुषाणान्तु दर्शनात्=परस्परमवलोकनमात्रादेव सा जायत इत्यर्थं॥ ३७॥

"मृद्घट" इति—दुर्जन=दुष्ट पुरुष मृद्घट=मृण्मयकुम्भ इव

इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः।
तद्वत्सज्जनमैत्री विपरीतानां तु विपरीता ॥ ३९ ॥

तथा च—

आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्धपरार्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ४० ॥

---

सुखभेद्य =सुखेन अनायासेन ( लोष्टादिना किञ्चिदप्याघातं दत्त्वा ) भेद्य स्फोटयितुं शक्य तथा—दुस्सन्धान =दु खेन सन्धानं मेलनं यस्य तादृशो मेलयितुमशक्य भवति, सुजन =साधु पुरुषस्तु कनकघट =सुवर्णकुम्भ इव दुर्भेद्य =भेत्तुमशक्य तथा—सुकरसन्धि =सुकर अनायासेन साध्यः सन्धि-र्मेलनं यस्य स तादृश सुखसन्धेयश्च भवतीत्यनुषङ्ग· ॥ ३८ ॥

"इक्षो"रिति—इक्षो· अग्रात्=अग्रभागमारभ्य क्रमश·=उत्तरोत्तरं पर्वणि पर्वणि=अधोऽधो ग्रन्थौ ग्रन्थौ यथा रसविशेष =रसस्य विशेष उत्कर्ष उत्कृष्टो रस इत्यर्थ वर्त्तते इति शेष , सज्जनमैत्री=सज्जनाना साधुसमाचाराणा नराणा तद्वत्=इक्षुरसवत् क्रमश मैत्री सुरसं सौहार्द भवतीति शेष , विपरीतानाम्=दुर्जनानान्तु विपरीता=उक्तादर्थाद्विपर्ययेण भवति।

अयमाशय —सज्जनाना सौहार्दमुत्तरोत्तरं वर्धते, दुर्जनानान्तु प्रथमं सौहार्द पश्चाद्वैरभाव । आर्या ॥ ३९ ॥

"आरम्भगुर्वी"ति—खलसज्जनानाम्=खलाश्च सज्जनाश्चेति तेषा द्वन्द्व , दुर्जनाना सज्जनानाञ्चेत्यर्थ मैत्री दिनस्य पूर्वार्धपरार्धभिन्ना=पूर्वाह्णा-ऽपराह्णभेदेन पृथक् पृथक् छाया इव आरम्भगुर्वी=आरम्भे आदौ गुर्वी= महती, क्रमेण क्षयिणी=अपचयस्वभावा, तथा—पुरा=आदौ लघ्वी= अल्पा, पश्चाच्च वृद्धिमती=वर्धमाना च भवतीति शेष ।

यथा—दिनस्य पूर्वार्धे छाया प्रथम वह्वी भवति पश्चात् विनाशमुपैति तद्वत् खलस्य मित्रता, दिनस्य परार्धे छाया यथा प्रथमं स्वल्पा पश्चात् महती तद्वत्सज्जनस्य मैत्रीति भाव । वृत्तमुपजाति ॥ ४० ॥

तत्साधुरहम् । अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि । स आह—न मेऽस्ति ते शपथैः प्रत्ययः । उक्तं च—

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः ।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥
न विश्वासं विना शत्रुर्देवानामपि सिध्यति ।
विश्वासात् त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ४२ ॥

अन्यच्च—

बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत् ।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥ ४३ ॥

---

"**शपथै**"रिति—शपथैः=दिव्यैर्वाक्यैः सन्धितस्य=कृतसन्धानस्य दिव्या वाचा दत्त्वाऽन्योन्यं मिलितस्यापि रिपोः=शत्रोः विश्वासम्=श्रद्धां न व्रजेत्=नैव गच्छेत्, तथाहि शक्रेण=इन्द्रेण शपथं कृत्वा वृत्रः=वृत्रासुरः सूदितः=मारित इति श्रूयते=कर्णपरम्परया आकर्ण्यते, अथवा—वेदेऽपि श्रूयते इन्द्रकर्तृको वृत्रवधः ।

यत्र देवा अपि शपथं कृत्वा शत्रुं घातयन्ति, तत्रेतरेषान्तु कैव कथेति भावः ॥ ४१ ॥

"**न**" इति—विश्वासं विना देवानामपि शत्रुः=वैरी न सिद्ध्यति=पराजितो न भवतीत्यर्थः, त्रिदशेन्द्रेण=सुरपतिना दितेर्गर्भः विश्वासात्=विश्वासमुत्पाद्य विदारितः=उत्पाटितः ।

"विश्वासादि"ति "**ल्यब्लोपे कर्मण्यधिकरणे च**" इति वार्त्तिकेन ल्यब्लोपे पञ्चमी । दितिगर्भविदारणकथा श्रीमद्भागवतादिपुराणेष्वनुसन्धेया ॥ ४२ ॥

"**बृहस्पते**" रिति—तस्मात् कारणात् यः आत्मनः=स्वस्य वृद्धिम्=ऐश्वर्यम्, आयुष्यम्=चिरजीवितम्, सुखानि=सातानि च इच्छेत्=कामयेत्, स प्राज्ञः=बुद्धिमान् अत्र=इह लोके बृहस्पतेरपि नैव विश्वसेत्, शत्रोर्विश्वासं कदापि न कुर्यादित्यत्र तात्पर्यम् ॥ ४३ ॥

तथा च—

सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः ।
नाशयेच्च शनैः पश्चात् प्लवं सलिलपूरवत् ॥ ४४ ॥
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ४५ ॥
न वध्यते ह्यविश्वस्तो दुर्बलोऽपि बलोत्कटैः ।
विश्वस्ताश्चाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ४६ ॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च ।
बृहस्पतेरविश्वासो नीतिसन्धिस्त्रिधा स्थितः ॥ ४७ ॥

---

"सुसूक्ष्मेण" इति—रिपु =शत्रु सुसूक्ष्मेण=अत्यल्पेनापि रन्ध्रेण=छिद्रेण शनै =मन्दं मन्दम् अभ्यन्तरं प्रविश्य, पश्चात्=अभ्यन्तरप्रवेशानन्तरम् प्लव=उडुप सलिलपूरवत्=पानीयप्रवाहवत् नाशयेत्=विध्वंसयतीत्यर्थ. ।

यथा अत्यल्पेनापि छिद्रेण पानीयप्रवाहो नौकाभ्यन्तरमाविश्य क्रमेण ता विनाशयति, तद्वत् शत्रु. कियताऽपि कपटेन प्रविश्य तं नाशयतीति भाव ॥ ४४ ॥

"न" इति—अविश्वस्ते=विश्वासानर्हे न विश्वसेत्=कदापि विश्वासं न कुर्यात्, विश्वस्तेऽपि=विश्वासमापन्नेऽपि न विश्वसेत्, विश्वासात् उत्पन्नं भय मूलानि अपि निकृन्तति=कर्त्तयति समूलं विनाशयतीत्यर्थ ॥ ४५ ॥

"न" इति—दुर्बलोऽपि पुरुष हि=निश्चयेन अविश्वस्त =विश्वासमनापन्न बलोत्कटै =बलेनोद्धतैरपि न वध्यते=नैव हिंस्यते, विश्वस्ताश्च=विश्वासमापन्ना तु बलवन्तोऽपि=बलशालिनोऽपि दुर्बलै =हीनबलैरपि आशु=क्षिप्र वध्यन्ते ॥ ४६ ॥

"सुकृत्यम्" इति—नीतिसन्धि =नीतिशास्त्रप्रतिपादित कार्यसिद्धिहेतुक उपायविशेष त्रिधा=त्रिप्रकार स्थित , विष्णुगुप्तस्य=चाणक्यस्य (मते) सुकृत्यम्=सुष्ठु कर्त्तव्यानुष्ठानम्, भार्गवस्य=शुक्राचार्यस्य मित्राप्ति = मित्राणा प्राप्ति मित्रलाभ , बृहस्पते =देवगुरो अविश्वास =विश्वासस्याऽकरणमिति । बृहस्पतिमतमत्यादरणीयमिति भाव ॥ ४७ ॥

तत्साधुरहम् । अपरं त्वां शपथादिभिर्निर्भयं करिष्यामि । स आह—न मेऽस्ति ते शपथैः प्रत्ययः । उक्तं च—

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः ।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥
न विश्वासं विना शत्रुर्देवानामपि सिध्यति ।
विश्वासात् त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ४२ ॥

अन्यच्च—

बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत् ।
य इच्छेदात्मनो वृद्धिमायुष्यं च सुखानि च ॥ ४३ ॥

---

"**शपथै**"रिति—शपथैः=दिव्यैर्वाक्यैः सन्धितस्य=कृतसन्धानस्य दिव्या वाचा दत्त्वाऽन्योन्यं मिलितस्यापि रिपोः=शत्रोः विश्वासम्=श्रद्धां न व्रजेत्=नैव गच्छेत्, तथाहि शक्रेण=इन्द्रेण शपथं कृत्वा वृत्रः=वृत्रासुरः सूदितः=मारित इति श्रूयते=कर्णपरम्परया आकर्ण्यते, अथवा—वेदेऽपि श्रूयते इन्द्रकर्तृको वृत्रवधः ।

यत्र देवा अपि शपथं कृत्वा शत्रुं घातयन्ति, तत्रेतरेषान्तु कैव कथेति भावः ॥ ४१ ॥

"**न**" इति—विश्वासं विना देवानामपि शत्रुः=वैरी न सिद्ध्यति=पराजितो न भवतीत्यर्थः, त्रिदशेन्द्रेण=सुरपतिना दितेर्गर्भः विश्वासात्=विश्वासमुत्पाद्य विदारितः=उत्पाटितः ।

"विश्वासादि"ति "**ल्यब्लोपे कर्मण्यधिकरणे च**" इति वार्त्तिकेन ल्यब्लोपे पञ्चमी । दितिगर्भविदारणकथा श्रीमद्भागवतादिपुराणेष्वनुसन्धेया ॥ ४२ ॥

"**बृहस्पते**" रिति—तस्मात् कारणात् य आत्मनः=स्वस्य वृद्धिम्=ऐश्वर्यम्, आयुष्यम्=चिरजीवितम्, सुखानि=सातानि च इच्छेत्=कामयेत, सः प्राज्ञः=बुद्धिमान् अत्र=इह लोके बृहस्पतेरपि नैव विश्वसेत्, शत्रोर्विश्वासं कदापि न कुर्यादित्यत्र तात्पर्यम् ॥ ४३ ॥

तथा च—

सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः।
नाशयेच्च शनैः पश्चात् प्लवं सलिलपूरवत् ॥ ४४ ॥
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ४५ ॥
न वध्यते ह्यविश्वस्तो दुर्बलोऽपि बलोत्कटैः।
विश्वस्ताश्चाशु वध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ४६ ॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च।
बृहस्पतेरविश्वासो नीतिसन्धिस्त्रिधा स्थितः ॥ ४७ ॥

---

"सुसूक्ष्मेण" इति—रिपु=शत्रु सुसूक्ष्मेण=अत्यल्पेनापि रन्ध्रेण=छिद्रेण शनै=मन्द मन्दम् अभ्यन्तरं प्रविश्य, पश्चात्=अभ्यन्तरप्रवेशानन्तरम् प्लवं=उडुप सलिलपूरवत्=पानीयप्रवाहवत् नाशयेत्=विध्वंसयतीत्यर्थ.।

यथा अत्यल्पेनापि छिद्रेण पानीयप्रवाहो नौकाभ्यन्तरमाविश्य क्रमेण तां विनाशयति, तद्वत् शत्रु कियताऽपि कपटेन प्रविश्य त नाशयतीति भाव ॥ ४४ ॥

"न" इति—अविश्वस्ते=विश्वासानर्हे न विश्वसेत्=कदापि विश्वासं न कुर्यात्, विश्वस्तेऽपि=विश्वासमापन्नेऽपि न विश्वसेत्, विश्वासात् उत्पन्नं भय मूलानि अपि निकृन्तति=कर्त्तयति समूल विनाशयतीत्यर्थ ॥ ४५ ॥

"न" इति—दुर्बलोऽपि पुरुष हि=निश्चयेन अविश्वस्त=विश्वासमनापन्न बलोत्कटै=बलेनोद्धतैरपि न वध्यते=नैव हिंस्यते, विश्वस्ताश्च=विश्वासमापन्ना तु बलवन्तोऽपि=बलशालिनोऽपि दुर्बलै=हीनबलैरपि आशु=क्षिप्र वध्यन्ते ॥ ४६ ॥

"सुकृत्यम्" इति—नीतिसन्धि=नीतिशास्त्रप्रतिपादित कार्यसिद्धिहेतुक उपायविशेष त्रिधा=त्रिप्रकार स्थित, विष्णुगुप्तस्य=चाणक्यस्य (मते) सुकृत्यम्=सुष्ठु कर्त्तव्यानुष्ठानम्, भार्गवस्य=शुक्राचार्यस्य मित्राप्ति= मित्राणां प्राप्ति मित्रलाभ, बृहस्पते=देवगुरो अविश्वास=विश्वासस्याऽकरणमिति। बृहस्पतिमतमत्यादरणीयमिति भाव ॥ ४७ ॥

तथा च—

महताप्यर्थसारेण यो विश्वसिति शत्रुषु ।
भार्यासु सुविरक्तासु तदन्तं तस्य जीवितम् ॥ ४८ ॥

तच्छ्रुत्वा लघुपतनकोऽपि निरुत्तरश्चिन्तयामास—अहो ! (१) बुद्धिप्रागल्भ्यमस्य नीतिविषये । अथवात एवास्योपरि मैत्रीपक्षपातः । स आह—भो ! हिरण्यक !

सतां साप्तपदं मैत्रमित्याहुर्विबुधा जनाः ।
तस्मात्त्वं मित्रतां प्राप्तो वचनं मम तच्छृणु ॥ ४९ ॥

दुर्गस्थेनापि त्वया मया सह नित्यमेवालापो (२) गुणदोषसुभाषितगोष्ठीकथाः सर्वदा कर्तव्याः यद्येवं न विश्वसिषि । तच्छ्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्-(३)विदग्धवचनोऽयं दृश्यते लघु-

---

"महते" ति—यः=पुरुषः महताऽपि=प्रचुरेणापि अर्थसारेण=सारधनेन प्रचुरमणिमाणिक्यादिद्रव्यलाभलोभेनेति यावत् शत्रुषु=वैरिषु, तथा सुविरक्तासु=सम्यगनुरागं प्राप्तासु भार्यासु=स्त्रीषु, विश्वसिति=विश्वासं करोति तस्य=पुरुषस्य तदन्तम्=विश्वासान्तमेव जीवितम्=जीवनं भवतीति शेषः । तादृशस्तत्र विश्वास एव तस्य पुरुषस्य घातक इति भावः ॥ ४८ ॥

(१) बुद्धिप्रागल्भ्यम्=मतिवैभवमित्यर्थः ।

"सता" मिति—विबुधाः=पण्डिता जनाः सताम्=साधूनाम्, साप्तपदम्=सप्तपदभाषण( सञ्चरण )सम्बन्धि मैत्रम्=सौहार्दमिति आहुः=वदन्ति । तस्मात्=कारणात् अनेकविधपरस्परालापकरणात् त्वं मित्रतां प्राप्तः, तत्=ततो मम वचनं शृणु=आकर्णय । मित्रेण मित्रवाक्यमवश्यश्रोतव्यमिति भावः ॥ ४९ ॥

(२) गुणदोषेति—गुणाः औदार्यादयः, दोषाः परकीयच्छिद्रान्वेषणादयः तेषां सुभाषितानि तद्विषयकाः शोभना आलापा एव गोष्ठीकथाः प्रियसभासंलापा इत्यर्थः । "गोष्ठी सभासंलापयोः" रिति **मेदिनी** । (३) विदग्धवचनः=पण्डितवाक् ।

पतनकः सत्यवाक्यश्च । तद्युक्तमनेन मैत्रीकरणम् । परं कदा-
चिन्मम दुर्गे चरणपातोऽपि न कार्यः । उक्तं च—

भीतभीतः पुरा शत्रुर्मन्दं मन्दं विसर्पति ।
भूमौ प्रहेलया पश्चाज्जारहस्तोऽङ्गनास्विव ॥ ५० ॥

तच्छ्रुत्वा वायस आह—भद्र एवं भवतु । ततःप्रभृति द्वौ तावपि सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः । परस्परं कृतोपकारौ कालं नयतः । लघुपतनकोऽपि (१) मांसशकलानि मेध्यानि वलिशेषाण्यन्यानि वात्सल्याहृतानि पक्वान्नविशेषाणि हिरण्यकार्थमानयति । हिरण्यकोऽपि तण्डुलानन्यांश्च भक्ष्यविशेषांल्लघुपतनकार्थं रात्रावाहृत्य तत्कालायातस्यार्पयति । अथवा युज्यते द्वयोरप्येतत् । उक्तं च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ५१ ॥

---

"भीतभीत" इति—शत्रु. पुरा=पूर्वं भीतभीत =अत्यन्तं भयमापन्न. सन् मन्दं मन्दं=शनै शनै भूमौ=शत्रुपुरे विसर्पति=स्वपदं सन्निधापयति, पश्चात्=किञ्चित्स्थानलाभे सति अङ्गनासु=स्त्रीषु जारहस्त.=उपपतिकर इव प्रहेलया=अवज्ञया विसर्पतीत्यनुषङ्ग ।

यथा जार पूर्वं शनै शनैरासक्तिविषयामङ्गनामुपसर्प्य तत प्रीतौ जायमानाया तत्र स्वच्छन्दं विहरति, तद्वत् शत्रुरपि प्रथमं शनै शनै प्रवेशं लब्ध्वा ततो भिक्षुपादप्रसारन्यायेन सर्वमेवाक्रम्य तिष्ठतीति भाव ॥५०॥

(१) मांसशकलानि=मांसखण्डानि । मेध्यानि=भक्षयितुं योग्यानीत्यर्थ । वलिशेषाणि=काकदेयोऽन्नभागो वलि तच्छेषभागानित्यर्थ । वात्सल्येन प्रेम्णा आहृतानि=आनीतानि ।

"ददाती"ति—ददाति=अर्पयति, प्रतिगृह्णाति=आदत्ते, गुह्यम्=रहस्यम् आख्याति=श्रावयति. पृच्छति=रहस्यमिति शेष , भुङ्क्ते=प्राश्नाति. भोजयते=आशयति चेति षड्विधम्=षट्प्रकारक दान-प्रतिग्रह-रहस्यभाषण-प्रश्न-भोजन-भोज्यदानस्वरूपं प्रीतिलक्षणम्=मित्रताया चिह्नमित्यर्थ ॥५१॥

नोपकारं विना प्रीतिः कथंचित्कस्यचिद्भवेत् ।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ५२ ॥
तावत्प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते ।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ५३ ॥
पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारकम् ।
यत्प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥ ५४ ॥
पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य ।
दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुतापि पश्य ॥ ५५ ॥

---

"**नोपकारम्**" इति—उपकारम्=हितसाधन विना कस्यचित् कथञ्चिदपि प्रीतिर्न भवेत्, यत =यस्मात्कारणात्, उपयाचितदानेन=मम मनोरथे पूरिते सति एतावत्परिमितं लड्डुकादिमिष्टं तुभ्यमर्पयिष्यामीति अनुसन्धानीकरणं दिव्यवाच· प्रतिज्ञानं वेति "उपयाचितं" तस्य दानेन देवा =गणपतिप्रभृतय सुरा अपि अभीष्टदा =सङ्कल्पप्रपूरका भवन्ति। उपयाचितलक्षणं ग्रन्थान्तरेष्वप्युक्तम्-

यद्दीयते देवताभ्यो मनोराज्यस्य सिद्धये।
उपयाचितकं दिव्य-दोहदं तद् विदुर्बुधा· ॥ इति ।

देवा अपि दानमपेक्ष्य प्रीतिं तन्वते मनुष्याणान्तु कैव कथेति भाव ॥ ५२ ॥

"**तावदि**"ति—लोके=संसारे यावत् दानम्=अन्नवस्त्रादिरूपं दीयते= समर्प्यते तावदेव लोके प्रीतिर्भवेत् । तथाहि वत्स क्षीरक्षयम्=दुग्धविनाशं दृष्ट्वा मातरं त्यजति । मातृपुत्रसम्बन्धोऽपि दानसापेक्ष इति विलक्षणं दानमाहात्म्यमिति भाव ॥ ५३ ॥

"**पश्य**" इति—दानस्य माहात्म्यम्=प्रभाव यत् सद्य =क्षिप्रमेव प्रत्ययकारकम्=विश्वासहेतुर्भवति, यत्प्रभावात्=यस्य दानस्य माहात्म्यात् द्वेषी= शत्रुरपि तत्क्षणात्=सद्य एवेत्यर्थः मित्रताम्=सौहार्दं याति=प्राप्नोति। दानं हि शत्रुमपि वशयति परेषान्तु कैव कथेति भाव. ॥ ५४ ॥

"**पुत्रादपी**"ति—येन=हेतुना ससुता=सवत्साऽपि महिषी=कासारपत्नी

किं बहुना—

प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत् ।
मूषको वायसश्चैव गतौ कृत्रिममित्रताम् ॥ ५६ ॥

एवं स मूषकस्तदुपकाररञ्जितस्तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टस्तेन सह सर्वदैव (१) गोष्ठीं करोति । अथान्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच—भद्र हिरण्यक ! विरक्तिः सञ्जाता मे साम्प्रतं देशस्यास्योपरि । तदन्यत्र यास्यामि । हिरण्यक आह—भद्र ! किं विरक्तेः कारणम् । स आह—भद्र ! श्रूयताम् । अत्र देशे महत्यानावृष्ट्या (२) दुर्भिक्षं सञ्जातम् । दुर्भिक्षत्वाज्जनो (३) बुभुक्षापीडितः कोऽपि (४) बलिमात्रमपि न प्रयच्छति ।

---

नु=भो ! खलु=निश्चितं, खले=तिलकिट्टे दत्ते=भक्षणायार्पिते सति निखिलम्=समग्रं दुग्धम्=क्षीरं नित्यं=प्रतिदिनं ददाति=प्रयच्छति, तेन=कारणेन विवेकविवर्जितस्य=विचारशून्यस्य अज्ञानिनः पशोरपि=पशुजातीयस्यापि दानम्=वाञ्छितपदार्थस्य समर्पणं पुत्रादपि=प्रीतिविषयाद् वत्सादपि प्रियतरम्=अतिशयेन प्रीत्युत्पादकं मन्ये=तर्कये इति त्व पश्य=पर्यालोचयेति वाक्यार्थस्य कर्मता ॥ ५५ ॥

"प्रीतिम्" इति—नखमांसवत्=(नखा करजा ) नखमांसवत् दुर्भेद्याम्=भेत्तुमशक्या निरन्तराम्=अत्यन्तं घनां प्रीतिम्=मित्रता कृत्वा दानादिना सम्पाद्य मूषक=उन्दुरो हिरण्यक , वायस=काको लघुपतनकः, एतौ द्वावपि कृत्रिममित्रताम्=नैमित्तिकं सौहार्दं गतौ=प्राप्तौ । यथा कठिननखाना कोमलमांसस्य च परस्परं घनिष्ठ सम्बन्धो वारयितुमशक्यः तद्वदेतयोरपि प्रणयो निरन्तरो दुर्भेद्यश्चेति भाव ॥ ५६ ॥

(१) गोष्ठीम्=परस्परप्रेमालापम् । (२) दुर्भिक्षम्=भिक्षाया अभावः । अभावार्थेऽव्ययीभाव समास । (३) बुभुक्षापीडित =क्षुधया आर्त्त । (४) बलिमात्रम्=काकबलि वायसेभ्यो देयं प्रत्यहमन्नं गृहस्थैरनुष्ठेयं बलिवैश्वदेवकर्मणि प्रसिद्धम् ।

अपरं गृहे गृहे बुभुक्षितजनैर्विहङ्गानां बन्धनाय (१) पाशाः प्रगुणीकृताः सन्ति। अहमपि (२) आयुःशेषतया पाशेन बद्ध उद्धरितोऽस्मि। एतद्विरक्तेः कारणम्। तेनाहं विदेशं चलित इति (३) बाष्पमोक्षं करोमि। हिरण्यक आह—अथ भवान् क्वप्रस्थितः। स आह—अस्ति दक्षिणापथे (४) वनगहनमध्ये महासरः। तत्र त्वत्तोऽधिकः परमसुहृत्कूर्मो मन्थरको नाम। स च मे मत्स्यमांसखण्डानि दास्यति। तद्भक्षणात्तेन सह (५) सुभाषितगोष्ठीसुखमनुभवन्सुखेन कालं नेष्यामि। नाहमत्र विहङ्गानां पाशबन्धनेन क्षयं द्रष्टुमिच्छामि। उक्तं च—

अनावृष्टिहते देशे शस्ये च प्रलयं गते।
धन्यास्तात! न पश्यन्ति देशभङ्गं कुलक्षयम्॥ ५७॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां कः परः प्रियवादिनाम्॥ ५८॥

---

(१) पाशाः=बन्धनहेतुजालकानि। प्रगुणीकृताः=सज्जीकृत्य स्थापिताः। (२) आयुःशेषतया=जीवनस्यावशिष्टतया। उद्धरितः=पाशाद् विमोचितः। (३) बाष्पमोक्षम्=अस्राणां विसर्गम्। (४) वनगहनमध्ये=दुर्गमे कान्तारस्य मध्यभागे। (५) **सुभाषिते**ति—सुभाषितानां प्रियालापानां या गोष्ठी संसत् तस्याः सुखमानन्दमित्यर्थः।

"**अनावृष्टी**"ति—हे तात! प्रिय! देशे=जनपदे अनावृष्टिहते=अनावृष्ट्या वर्षाभावेन हते विनाशमुपगते, शस्ये=क्षेत्रे च प्रलयम्=विध्वंसमु-[illegible] गते सति, धन्याः=सुकृतिनो नराः देशभङ्गम्=देशस्योच्छेदं, कुलक्ष-[illegible] =वंशविनाशञ्च न पश्यन्ति=नानुभवन्ति। देशभङ्गादिसम्भावनाकाल[illegible] ततः पलायनमेव वरमिति भावः॥ ५७॥

"**कोऽतिभार**"इति—समर्थानाम्=शक्तिमतां नराणां कः अतिभारः=[illegible] कार्यमित्यर्थः, न कोऽपीति भावः। व्यवसायिनाम्=उद्यमिनां दूरं किम्? न किमपीत्यर्थः। सविद्यानाम्=विद्यया सह वर्त्तमानानां कलाकौशल-

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ५९ ॥

हिरण्यक आह—यद्येवं तदहमपि त्वया सह गमिष्यामि। ममापि महद्दुःखं वर्तते। वायस आह—भोः! तव किं दुःखम्। तत्कथय। हिरण्यक आह—भोः! बहु वक्तव्यमस्त्यत्र विषये। तत्रैव गत्वा सर्वं सविस्तरं कथयिष्यामि। वायस आह—अहं तावदाकाशगतिः। तत्कथं भवतो मया सह गमनम्। स आह—यदि मे प्राणान्रक्षसि तदा स्वपृष्ठमारोप्य मां तत्र प्रापयिष्यसि। नान्यथा मम गतिरस्ति। तच्छ्रुत्वा सानन्दं वायस आह—यद्येवं तद्धन्योऽहं यद्भवतापि सह तत्र कालं नयामि। अहं (१) सम्पातादिकानष्टावुड्डीनगतिविशेषान् वेद्मि। तत्समारोह मम पृष्ठम्, येन सुखेन त्वां तत्सरः प्रापयामि। हिरण्यक आह—उड्डीनानां नामानि श्रोतुमिच्छामि। स आह—

सम्पातं विप्रपातं च महापातं निपातनम्।
वक्रं तिर्यक्तथा चोर्ध्वमष्टमं लघुसंज्ञकम् ॥ ६० ॥

---

वता विदेशः कः? तेषां स्वदेशपरदेशगणना न भवति सर्वत्रैवेष्टसिद्धौ समर्थत्वादिति भावः। प्रियवादिनाम्=मधुरभाषिणां परः=द्वितीयः कः=कोऽस्ति, मधुरवाक्येन वशीभूताः सर्वे तेषामात्मीया एव भवन्तीति भावः ॥ ५८ ॥

"विद्वत्त्वम्" इति—विद्वत्त्वम्=पाण्डित्यम्, नृपत्वम्=राजभावः कदाचन नैव तुल्यम्=कदापि समं नास्ति, राजा=भूपतिः स्वदेशे=स्वराष्ट्र एव पूज्यते=अर्च्यते प्रजाजनैरिति शेषः, विद्वान्=पण्डितस्तु सर्वत्रैव पूज्यते। राज्ञोऽपि विद्वान् श्रेष्ठ इति भावः ॥ ५९ ॥

(१) सम्पातादिकान्=सम्पातप्रभृतीन् अग्रे वक्ष्यमाणान्। उड्डीनगतिविशेषान्=नभोगमनप्रकारान्।

"सम्पातम्" इति—सम्पातम्=समतया गमनम्, विप्रपातम्=पक्षौ विशेषेण धूनयित्वा गमनम्, महापातम्=बहुदूरमुत्थाय द्रुतगमनम्, निपातनम्=

तच्छ्रुत्वा हिरण्यकस्तत्क्षणादेव तदुपरि समारूढः । सोऽपि शनैःशनैस्तमादाय सम्पातोड्डीनप्रस्थितः क्रमेण तत्सरः प्राप्तः। ततो लघुपतनकं (१) मूषकाधिष्ठितं विलोक्य दूरतोऽपि (२) देशकालविदसामान्यकाकोऽयमिति ज्ञात्वा सत्वरं मन्थरको जले प्रविष्टः । लघुपतनकोऽपि तीरस्थतरुकोटरे हिरण्यकं मुक्त्वा शाखाग्रमारुह्य तारस्वरेण प्रोवाच—भो ! मन्थरक ! आगच्छागच्छ । तव मित्रमहं लघुपतनको नाम वायसश्चिरात्सोत्कण्ठः समायातः । तदागत्यालिङ्गय माम् । उक्तं च—

किं चन्दनैः सकर्पूरैस्तुहिनैः किं च शीतलैः ।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोडशीम् ॥ ६१ ॥

तथा च—

केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम् ।
आपदां च परित्राणं शोकसन्तापभेषजम् ॥ ६२ ॥

---

निम्नदेशमनुगमनम्, वक्रम्=कुटिला गति, तिर्यक्=पार्श्वदेशम्प्रतिगमनम्, उर्ध्वम्=किञ्चिदुन्नमय्य गमनम्, अष्टमं लघुसञ्ज्ञकम्=अतिद्रुतं नाम गमनमित्यष्टधा डड्डीनम् ॥ ६० ॥

(१) मूषकाधिष्ठितम्= मूषकेण पृष्ठभागे आरुढम्। (२) देशकालवित्= देशकालज्ञ । असामान्यकाक = अदृष्टपूर्व अलौकिकप्रकृति ।

"**किमि**"ति—सकर्पूरै =हिमवालुकासहितैः चन्दनै =अतिशिशिरैर्देवदारुभि किम् ? शीतलै =शिशिरै तुहिनै =हिमै किम् ? न किमपि फलमिति भाव । यतस्ते सर्वेऽपि कर्पूरप्रभृतय मित्रगात्रस्य=सुहृदङ्गस्य (मित्राङ्गस्पर्शस्य) षोडशीं कलाम्=षोडशभागस्याप्येकं भागं नार्हन्ति तत्तुल्या ... न सन्तीत्यर्थ ॥ ६१ ॥

"**केने**"ति—आपदाम्=विपत्तीना परित्राणम्=रक्षकं, तथा शोकसन्तापभेषजम्=इष्टवस्तुवियोगजनितश्चित्तवृत्तिविशेष शोक तेन य सन्तापो हृदयपीडा तस्य भेषजमौषधरूपम्, अत एव अमृतम्=सुधारूपं मित्रमित्यक्षरद्वयं केन सृष्टम्=उत्पादितम् । मित्रदर्शनं परमप्रीतिहेतुभूतमिति भाव ॥ ६२ ॥

तच्छ्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य (१) पुलकिततनुरानन्दाश्रुपूरितनयनो मन्थरकः प्रोवाच—एह्येहि मित्र! आलिङ्गय माम्, (२) चिरकालान्मया त्वं न सम्यक्परिज्ञातः। तेनाहं सलिलान्तः प्रविष्टः। उक्तं च—

यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम्।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः॥ ६३॥

एवमुक्ते लघुपतनको वृक्षादवतीर्य तमालिङ्गितवान्। अथवा साध्विदमुच्यते—

अमृतस्य प्रवाहैः किं कायक्षालनसम्भवैः।
चिरान्मित्रपरिष्वङ्गो योऽसौ मूल्यविवर्जितः॥ ६४॥

एवं द्वावपि तौ विहितालिङ्गनौ परस्परं पुलकितशरीरौ वृक्षादधः समुपविष्टौ प्रोचतुरात्मचरित्रवृत्तान्तम्। हिरण्यकोऽपि मन्थरकस्य प्रणामं कृत्वा वायसाभ्याशे समुपविष्टः। अथ तं समालोक्य मन्थरको लघुपतनकमाह—भोः! कोऽयं मूषकः।

---

(१) पुलकिततनुः=सरोमाञ्चः। आनन्दाश्रुभिः परिपूरिते आप्लुते नयने नेत्रे यस्य सः। (२) चिरकालात्=बहोः कालात्। सम्यक् परिज्ञातः=साधु परिचितः। सलिलान्तः प्रविष्टः=जलमध्यगतः।

"यस्ये" ति—यस्य=नरस्य वीर्यं=बलं न, कुलं=वंशो न, विचेष्टितञ्च=आचारश्च न ज्ञायते=नैवावबुध्यते तेन सह सङ्गतिम्=सङ्गमं मित्रतादिव्यवहारं न कुर्यात्, इत्येतद् बृहस्पतिः=देवगुरुः उवाच=अकथयत्, बृहस्पतेरियं नीतिरित्यर्थः। वीर्यादिज्ञानपूर्वकमेव मैत्रीसम्बन्धो विधेय इति भावः॥ ६३॥

"अमृतस्ये" ति—कायस्य शरीरस्य क्षालनं शोधनं तस्मै=तत्प्रयोजनाय सम्भवः उत्पत्तिर्येषां तैस्तादृशैः अमृतस्य=जलस्य प्रवाहैः=पूरैः किम्? न किमपि फलमित्यर्थः। यः चिरात्=दीर्घसमयादनन्तरं मित्रपरिष्वङ्गः=मित्रस्य सुहृदः परिष्वङ्गः आलिङ्गनमित्यर्थः, कथम्भूतः—मूल्यविवर्जितः=मूल्यरहितः अमूल्य इति यावत्। जलप्रवाहस्तु केवलं शरीरशान्तिप्रदम्; परं मित्रालिङ्गनन्तु बाह्याभ्यन्तरसकलसन्तापनिवारकमिति भावः॥ ६४॥

कस्मात्त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्यानीतः। तन्नात्र स्वल्पकारणेन भाव्यम्। तच्छ्रुत्वा लघुपतनक आह—भोः! हिरण्यको नाम मूषकोऽयम्। मम सुहृद् द्वितीयमिव जीवितम्। तत्किं बहुना।

पर्जन्यस्य यथा धारा यथा च दिवि तारकाः।
सिकतारेणवो यद्वत्सङ्ख्यया परिवर्जिताः॥ ६५॥
गुणाः सङ्ख्यापरित्यक्तास्तद्वदस्य महात्मनः।
परं निर्वेदमापन्नः सम्प्राप्तोऽयं तवान्तिकम्॥ ६६॥

मन्थरक आह—किमस्य वैराग्यकारणम्। वायस आह—पृष्टो मया। परमनेनाभिहितम्, यद्बहु वक्तव्यमस्ति। तत्तत्रैव गतः कथयिष्यामि। ममापि न निवेदितम्। तद्भद्र! हिरण्यक! इदानीं निवेद्यतामुभयोरप्यावयोस्तदात्मनो वैराग्यकारणम्। सोऽब्रवीत्—

## कथा १।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरे (१) मठायतनं भगवतः श्रीमहादेवस्य। तत्र च ताम्रचूडो नाम (२) परिव्राजकः प्रतिवसति स्म। स च

---

हिरण्यकस्य गुणं वर्णयन् तदागमनकारणमाह द्वाभ्या "पर्जन्यस्ये" ति—यथा पर्जन्यस्य=वारिदस्य धारा=जलसम्पात, यथा च दिवि=अन्तरिक्षे तारका=नक्षत्राणि, यद्वत्=यथा वा सिकतारेणवः=सिकताना वालुकानां रेणव कणा सङ्ख्यया गणनया परिवर्जिता=शून्या सन्ति, तद्वत्=तथैव अस्य=हिरण्यकस्य महात्मन=महाशयस्य सङ्ख्यापरित्यक्ता=सङ्ख्यया परिवर्जिता असङ्ख्येया गुणा सन्ति, सोऽयमेतादृश हिरण्यकनामा मूषक परम्=अत्यन्तं वैराग्यम्=विरक्तिम् आपन्न=प्राप्तो विरक्त सन्नित्यर्थ तव अन्तिकम्=सामीप्यम् आगत।

अतिगुणवानपि दुर्भाग्यकारणात् विपत्तिम्प्राप्तस्तदुद्धाराय मनोदु खविनाशाय च हितकारिणं सुहृदमाश्रयत एवेति भावः॥ ६५, ६६॥

(१) मठायतनम्=देवतावासस्थानम्। (२) परिव्राजक=सन्न्यासी।

नगरे (१) भिक्षाटनं कृत्वा प्राणयात्रां समाचरति । भिक्षाशेषं च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं (२) नागदन्तेऽवलम्ब्य पश्चाद्रात्रौ स्वपिति । प्रत्यूषे च तदन्नं (३) कर्मकराणां दत्त्वा सम्यक्तत्रैव देवतायतने (४) संमार्जनोपलेपनमण्डनादिकं समाज्ञापयति । अन्यस्मिन्नहनि मम बान्धवैर्निवेदितम्—स्वामिन् ! मठायतने सिद्धमन्नं मूषकभयात्तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदैव । तद्वयं भक्षयितुं न शक्नुमः । स्वामिनः पुनरगम्यं किमपि नास्ति । तत्किं (५) वृथाटनेनान्यत्र । अद्य तत्र गत्वा यथेच्छं भुञ्जामहे तव प्रसादात् । तदाकर्ण्याहं (६) सकलयूथपरिवृतस्तत्क्षणादेव तत्र गतः । उत्पत्य च तस्मिन्भिक्षापात्रे समारूढः । तत्र (७) भक्ष्यविशेषाणि सेवकानां दत्त्वा पश्चात्स्वयमेव भक्षयामि । सर्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामि । एवं नित्यमेव तदन्नं भक्षयामि । परिव्राजकोऽपि यथाशक्ति रक्षति । परं यदैव (८) निद्रान्तरितो भवति, तदाहं तत्रारुह्यात्मकृत्यं करोमि । अथ कदाचित्तेन (९) मम रक्षणार्थं महान्यत्नः कृतः । (१०) जर्जरवंशः समानीतः । तेन सुप्तोऽपि मम भयाद्भिक्षापात्रं ताडयति । अहमप्यभक्षितेऽप्यन्ने प्रहारभयादपसर्पामि । एवं तेन सह सकलां रात्रिं विग्रहपरस्य कालो व्रजति। अथान्यस्मिन्नहनि तस्य मठे (११) बृहत्स्फिङ्नामा परिव्राज-

---

(१) भिक्षाटनम्=भिक्षायै परिभ्रमणम् । (२) नागदन्ते=गृहभित्तिदत्ते कीलके (३) कर्मकराणाम्=भृत्यानाम्। (४) सम्मार्जनेति—सम्मार्जनं बहुकर्या कूटापनयन (धूल्युत्सारणम्)। (५) वृथाटनेन=निष्फलं परिभ्रमणेन । (६) सकलयूथेन स्वसार्थेन परिवृत । (७) भक्ष्यविशेषाणि=नानाविधान् भक्ष्यपदार्थानित्यर्थ । (८) निद्रान्तरित =सुप्त । (९) ममेति—मत्तो भक्ष्यपदार्थाना परिरक्षणार्थमित्यर्थ । (१०) जर्जरवंश =जीर्णो वेणुदण्ड । (११) बृहदिति—बृहत्यौ विशाले स्फिचौ नितम्बमासपिण्डौ यस्य स. "बृहत्स्फक्" तत् नाम यस्य स इत्यर्थ ।

कस्तस्य सुहृत्तीर्थयात्राप्रसङ्गेन पान्थः (१) प्राघुणिकः समायातः। तं दृष्ट्वा (२) प्रत्युत्थानविधिना (३) संभाव्य प्रतिपत्तिपूर्वकमभ्यागतक्रियया नियोजितः। ततश्च रात्रावेकत्र (४) कुशसंस्तरे द्वावपि प्रसुप्तौ धर्मकथां कथयितुमारब्धौ। अथ (५) बृहत्स्फिक्कथागोष्ठीषु स ताम्रचूडो मूषकत्रासार्थं व्याक्षिप्तमना जर्जरवंशेन भिक्षापात्रं ताडयंस्तस्य शून्यं (६) प्रतिवचनं प्रयच्छति। तन्मयो न किंचिदुदाहरति। अथासावभ्यागतः परं कोपमुपागतस्तमुवाच—भोस्ताम्रचूड! परिज्ञातस्त्वं सम्यङ् न सुहृत्। तेन मया सह साल्हादं न जल्पसि। तद्रात्रावपि त्वदीयं मठं त्यक्त्वान्यत्र मठे यास्यामि। उक्तं च—

एह्यागच्छ समाश्रयासनमिदं कस्माच्चिराद् दृश्यसे
का वार्ता ह्यतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात्।
एवं ये समुपागतान्प्रणयिनः प्रल्हादयन्त्यादरात्
तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा॥ ६७॥

---

(१) प्राघुणिक=अतिथि। (२) प्रत्युत्थानविधिना=प्रत्युद्गमनमर्यादया। (३) सम्भाव्य=सत्कृत्य। प्रतिपत्तिपूर्वकम्=सत्कारपूर्वकम्। अभ्यागतक्रियया=अतिथिसत्कारेणेत्यर्थ। (४) कुशसंस्तरे=दर्भशय्यायाम्। (५) बृहत्स्फिक्कथागोष्ठीषु=तन्नाम्नो मित्रस्य कथाप्रसङ्गेषु। व्याक्षिप्तमना=व्यग्रचित्त। (६) प्रतिवचनम्=उत्तरम्।

"एह्यी"ति—एहि आगच्छ=मत्समीपे आगच्छ आगच्छेत्यर्थः, इदम्=पुरोवर्ति आसनं समाश्रय=सेवस्व, कस्मात्=कारणात् चिरात्=बहो कालादनन्तरं दृश्यसे=विलोक्यसे अर्थात् आगमे कुतो बहु चिरायितम्, वार्त्ता=प्रवृत्ति का=कीदृशी, हि=निश्चयेन त्वमतिदुर्बल=अत्यन्तं कृशोऽसि, ते तव कुशलम्=कल्याणं वर्त्तते? तव दर्शनात् प्रीत=प्रसन्नोऽस्मि, एवम्=अनेन दर्शितेन प्रकारेण ये जना (सुहृद) समुपागतान्=समायातान् प्राघुणिकान् प्रणयिन.=प्रीतिभाजो मित्राणि आदरात् प्रह्लादयन्ति=सम्मानयन्ति

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः।
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः॥ ६८॥
नाभ्युत्थानक्रिया यत्र नालापा मधुराक्षराः।
गुणदोषकथा नैव तत्र हर्म्ये न गम्यते॥ ६९॥

तद् (१) एकमठप्राप्त्यापि त्वं गर्वितः। त्यक्तः सुहृत्स्नेहः। नैतद्वेत्सि यत्त्वया मठाश्रयव्याजेन नरकोपार्जनं कृतम्। उक्तं च—

नरकाय मतिस्ते चेत्पौरोहित्यं समाचर।
वर्षं यावत्किमन्येन मठचिन्तां दिनत्रयम्॥ ७०॥

तन्मूर्ख! शोचितव्यस्त्वं गर्वं गतः। तदहं त्वदीयं मठं परित्यज्य यास्यामि। अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूडस्तमुवाच—भो! भगवन्! मैवं वद। न त्वत्समोऽन्यो मम सुहृत्क-

---

तेषां सुहृदां अशङ्कितेन=शङ्काशून्येन मनसा=चेतसा सदा हर्म्याणि=गृहान् गन्तुम्=यातुं युक्तम्=उचितमस्ति। शार्दूलविक्रीडितम्॥ ६७॥

"गृही"ति—यत्र=यस्मिन् गृहे गृही=गृहपति आगतम्=आयातमतिथिं दृष्ट्वा=वीक्ष्य दिशो वा अधो वा वीक्षेत=अर्थात् इतस्ततः स्वां दृष्टिं प्रसारयति आगतेन सह दृष्टिमेलनं न करोति, तत्र सदने=गृहे ये यान्ति ते शृङ्गरहिताः=शृङ्गशून्याः=वृषाः वृषभाः सन्ति पशुतुल्या इत्यर्थः॥ ६८॥

"ने"ति—यत्र गृहे (आगतमतिथिम्प्रति) अभ्युत्थानक्रिया=प्रत्युद्गमनव्यवहारः न, यत्र—मधुराक्षराः=मधुराणि अक्षराणि वर्णा येषु तादृशा आलापाः=वाक्यानि न, तथा—गुणदोषकथा=पारस्परिकी गुणदोषचर्चा न अस्तीति शेषः, तत्र हर्म्ये न गम्यते=नैव गन्तव्यमिति भावः॥६९॥

(१) एकमठप्राप्त्या=एकस्य मठस्य देवतायतनस्य प्राप्त्या आधिपत्येन महन्तत्वेनेत्यर्थः।

"नरकाये"ति—चेत्=यदि ते मतिः=निश्चयः नरकाय=नरकं प्राप्तुं वर्तत इति शेषः, तर्हि वर्षं यावत्=एकं वर्षमभिव्याप्य पौरोहित्यम्=पुरोहितस्य कर्म ग्रामयाजित्वं समाचर=कुरु, प्रायः पुरोहितकर्मणि वर्त्तमानाः

श्चिदस्ति। परं तच्छ्रूयतां (१) गोष्ठीशैथिल्यकारणम्। एष (२) दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्र (३) मुत्प्लुत्यारोहति, भिक्षाशेषं च तत्रस्थं भक्षयति। तद्भावादेव मठे (४)मार्जनक्रियापि न भवति। तन्मूषकत्रासार्थमेतेन वंशेन भिक्षापात्रं मुहुर्मुहुस्ताडयामि, नान्यत्कारणमिति। अपरमेतत्कुतूहलं पश्यास्य दुरात्मनो (५) यन्मार्जारमर्कटादयोऽपि तिरस्कृता (६) अस्योत्पतनेन। बृहत्स्फिगाह—अथ ज्ञायते तस्य विलं कस्मिंश्चित्प्रदेशे। ताम्रचूड आह—भगवन्! न वेद्मि सम्यक्। स आह—नूनं (७) निधानस्योपरि तस्य विलम्। निधानोष्मणा प्रकूर्दते। उक्तं च—

ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम्।
किं पुनस्तस्य संभोगस्त्यागकर्मसमन्वितः॥७१॥

---

लोभादिवशतया वहुप्रतारका अपि भवन्ति तेन तेषा नरकप्राप्ति, उक्तश्चात एव मनुना—"प्रतिग्रह प्रत्यवर" इति। अथवा—अन्येन=पौरोहित्यादिकर्मणा किमस्ति—दिनत्रयम्=दिनत्रयपर्यन्तं मठचिन्ताम्=मठो देवमन्दिरस्तस्य चिन्ता संरक्षणादिभारवहत्वं समाचरेत्यनुषङ्ग। दिनत्रयं व्याप्य मठचिन्ताकर्त्तुर्महन्तपदवाच्यस्य देवलकस्यापि नरके वासो भवति, एतस्य पुरोहितापेक्षयात्याधिकतरकामलोभादिदोषपरवशतया सद्य एव पातित्यप्राप्ते, प्रसिद्धश्चैतेषा दुर्व्यवहारो लोके विशेषत साम्प्रतिके समय इति सन्त सन्ति साक्षिण॥ ७०॥

(१) गोष्ठिशैथिल्यकारणम्=गोष्ठ्यां परस्परालापस्य शैथिल्ये=मनोवचनाऽप्रदाने कारणं हेतु। (२) दुरात्मा=दुष्ट। (३) उत्प्लुत्य=ऊच्छलनं कृत्वा। (४) मार्जनक्रिया=वहुकरीव्यापार। (५) यदिति—मर्जारा=विडाला, मर्कटाः=वानरा तत्प्रभृतयोऽपीत्यर्थ। (६) उत्पतनेन=उद्गम्फणेन। (७) निधानस्य= शङ्खपद्मादिनिधे। विलं=गर्त्त। निधानोष्मणा=चिरकालसञ्चितवहुधनहेतुकप्रभावेण प्रकूर्द्दते=उत्प्लवते।

"ऊष्मे"ति—वित्तज=धनहेतुक ऊष्मा=उत्ताप देहिनाम्=प्राणिन

तथा च—

नाकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलान् ।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति ॥७२॥

ताम्रचूड आह—कथमेतत् । स आह—

## कथा २ ।

यदाहं कस्मिंश्चित्स्थाने (१) प्रावृट्काले व्रतग्रहणनिमित्तं कञ्चिद्ब्राह्मणं वासार्थं प्रार्थितवान् । ततश्च तद्वचनात्तेनापि (२) शुश्रूषितः सुखेन देवार्चनपरस्तिष्ठामि । अथान्यस्मिन्नहनि (३) प्रत्यूषे प्रबुद्धोऽहं ब्राह्मणब्राह्मणीसंवादे दत्तावधानः शृणोमि । तत्र ब्राह्मण आह—ब्राह्मणि ! प्रभाते (४) दक्षिणायनसङ्क्रान्तिरनन्तदानफलदा भविष्यति । तदहं

---

तेज =प्रतापं वृद्धिं नयति=वर्धयते । त्यागकर्मणा=दानव्यापारेण समन्वित = सहितस्तस्य सन्भोग =सम्यक् भोग किम्पुन स्यात् ? एतादृशोऽस्य भोगस्त्ववश्यमेव तेजो वृद्धिं नयत्येवेत्यर्थ । वित्तसंसर्ग सर्वथैव गर्वहेतुरनर्थमूलश्चेति भाव । "ऊष्मो घर्मेऽश्रुणि ज्येष्ठे पुमानूष्मा स्त्रिया त्विषि" इति कोष । नयतिरत्र द्विकर्मक ॥ ७१ ॥

**"नाकस्मादि"**ति—हे ! मात ! =जननि ! शाण्डिली=शण्डिलगोत्रोत्पन्ना काचन ब्राह्मणी अकस्मात् = कारणं विना इतरै अलुञ्चितै तिलैः= लुञ्चितान्= अपनीतत्वच तिलान् न विक्रीणाति=अपनीततुषैस्तिलैरनपनीततुषान् तिलान् कथन विशिष्टं हेतुं विना न विनिमयते । तेन अत्र= विनिमये हेतु =कारण भविष्यति । प्रयोजनं विना मन्दोऽपि न प्रवर्त्तत इति भाव । "विक्रीणीते" इति साधुरित्युक्तं प्राक् ॥ ७२ ॥

(१) प्रावृट्काले=वर्षासमये । (२) शुश्रूषित =सेवित । देवार्चनपर:= देवपूजारत । (३) प्रत्यूषे=प्रभाते । प्रबुद्ध =त्यक्तनिद्र । **ब्राह्मणेति**—ब्राह्मणस्य ब्राह्मण्याश्च परस्परं कथोपकथने । दत्तावधान:=दत्तचित्त । (४) दक्षिणायने सङ्क्रान्ति =सूर्यसङ्क्रमणम् । अनन्तफलप्रदा=बहुपुण्यदात्री ।

(१) प्रतिग्रहार्थं ग्रामान्तरं यास्यामि। त्वया ब्राह्मणस्यैकस्य भगवतः सूर्यस्योद्देशेन किञ्चिद्भोजनं दातव्यमिति। अथ तच्छ्रुत्वा ब्राह्मणी (२) परुषतरवचनैस्तं भर्त्सयमाना प्राह—कुतस्ते (३) दारिद्र्योपहतस्य भोजनप्राप्तिः। तत्किं न लज्जस एवं ब्रुवाणः। अपि च न मया तव (४) हस्तलग्नया काचिदपि लब्धं सुखम्। न मिष्टान्नस्यास्वादनम्, न च (५) हस्तपादकण्ठादिभूषणम्। तच्छ्रुत्वा (६) भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह—ब्राह्मणि! नैतद्युज्यते वक्तुम्। उक्तं च—

ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु।
इच्छानुरूपो विभवः कदा कस्य भविष्यति॥ ७३॥
ईश्वरा भूरिदानेन यल्लभन्ते फलं किल।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतिः॥ ७४॥

---

(१) प्रतिग्रहार्थम्=दानं गृहीतुम्। (२) परुषतरवचनै=अतिकठोराभिर्वाग्भि। भर्त्सयमाना=तिरस्कुर्वती। (३) दारिद्र्योपहतस्य=निर्धनस्येत्यर्थ। (४) हस्तलग्नया=तव पाणिग्रहणं प्राप्तया। (५) हस्तेति—वलयनूपुरहाराद्यलङ्कारजातम्। (६) भयत्रस्त=भीतभीतः।

"**ग्रासादि**"ति—ग्रासात्=कवलरूपादन्नादपि तदर्धञ्च=तस्य ग्रासस्यार्धमपि कस्मात्=कुत अर्थिषु अधिकारिषु भिक्षुकेषु न दीयते=न समर्प्यते नैव दीयतेत्यर्थः लोकैरिति शेष.। तेभ्योऽवश्यदातव्यमेवेति भाव। कदा=कस्मिन् काले कस्य जनस्य इच्छानुरूप= सङ्कल्पानुसारी विभव=ऐश्वर्यं भविष्यति, न भविष्यतीत्यर्थ। इच्छानुरूपस्य विभवस्य प्राप्तिर्दुलभा, तस्माद्यथाभाग्यं प्राप्तादेव भोग्यात् यत्किञ्चिदार्थिभ्योऽवश्यमेव देयमिति भाव। दानस्य माहात्म्यं महाभारतीयानुशासनिकपर्वादौ वहु द्रष्टव्यम्॥ ७३॥

"**ईश्वरा**"इति—ईश्वरा=आढ्या (धनिन) भूरिदानेन=वहुतरेण दानेन यत् फलम्=स्वर्गादिरूपं लभन्ते=प्राप्नुवन्ति, किल=इति निश्चये। दरिद्र=निर्धनो नरस्तु तत्=तदेव स्वर्गादिकं फलं काकिण्या=वराटकानां विंशत्या प्राप्नुयात्=लभेत (लभत इत्यर्थ) इति=एवंरूपं न=अस्माक

दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्ध्या।
कूपोऽन्तःस्वादुजलः प्रीत्यै लोकस्य न समुद्रः॥ ७५॥

तथा च—

अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन।
गोप्तारं न निधीनां कथयन्ति महेश्वरं विबुधाः॥ ७६॥

---

श्रुति = शास्त्रश्रवणमस्ति। तस्माद्दरिद्रेणापि मया त्वया च यत्किञ्चिद्दानम- वश्यमेव कर्त्तव्यम्, तावताप्यस्माकं स्वर्गादिफलं न दुर्लभमित्याशयो ब्राह्मणस्य॥ ७४॥

"दाता" इति—दाता=दानशील पुरुष लघुरपि=अल्पधनोऽपि सेव्य= आश्रयणीयो भवति जनैरिति शेष। कृपण=दानविरोधी अदाता समृद्ध्या= सम्पत्त्या महानपि न=नैव सेव्यो भवति लोकानामित्यर्थ.। उक्तमर्थ सम- र्थयते उत्तरार्धेन—"कूप" इति—अन्त.स्वादुजलः=अन्तरभ्यन्तरे स्वादु मधुरं जलं यस्य स मधुरपानीय कूप लोकस्य=जलार्थिजनस्य प्रीत्यै= प्रसन्नतायै हर्षायेत्यर्थ. भवतीति शेष, समुद्र. न=क्षारजलोऽनल्पजलश्च सागरस्तु लोकस्य प्रीत्यै न भवतीत्यर्थ। विशेषेण सामान्यसमर्थनरूपोऽ- र्थान्तरन्यास.। आर्या॥ ७५॥

"अकृते" ति—न कृतो नैव विस्तारित त्यागस्य दानस्य महिमा गौरवं येन स तेन तादृशेन राजराजशब्देन="अयं राजराजो राज्ञामप्य- धिपति सम्राट्" इति पदेन, पक्षान्तरे राजराजशब्देन=राजराजो धनाधिपः कुवेरः तस्य शब्देन नाम्ना किम्? न किमपि फलमित्यर्थ.। विबुधा.=पण्डिता' निधीनाम्=रत्नाना गोप्तारम्=परिपालयितारं तं कुवेरं, महेश्वरम्=महाश्चा- सावीश्वरो महेश्वरो महादेवश्च तं न कथयन्ति।

अयमाशय—निधिरक्षक कुबेरो राजराजशब्देनोच्यमानोऽपि अदातृ- त्वान्न महेश्वरशब्देनोच्यते लोके, असौ हि महेश्वरकोपरक्षकः, महेश्वरस्तु यद्यपि न निधिपतिस्तथापि दातृत्वात्=यथाभिलषितार्थिकामनाप्रपूरकत्वात् सार्थनामा महेश्वर इति। प्रचुरधनवत्त्वमेव न महेश्वरपदप्रतिपाद्यत्वे कारणमपि तु दानशीलत्वमेवेति परं तात्पर्यम्॥ ७६॥

अपि च—

सदा दानपरिक्षीणः शस्त एव करीश्वरः ।
अदानः पीनगात्रोऽपि निन्द्य एव हि गर्दभः ॥ ७७ ॥
सुशीलोऽपि सुवृत्तोऽपि यात्यदानादधो घटः ।
पुनः कुब्जापि काणापि दानादुपरि कर्कटी ॥ ७८ ॥

---

"सदा" इति—सदा=निरन्तरं दानपरिक्षीण=दानेन मदवारिणा परिक्षीण कृश, पक्षान्तरे-दानेन=धनत्यागेन दीनता प्राप्त (निर्धन) सन् करीश्वर=करिणो गजा· तेषामीश्वरो गजेन्द्र, पक्षान्तरे—करीश्वर= करस्त्यागशीलो हस्त सोऽस्यास्तीति करी तेषामीश्वरो महादानी शस्त= प्रशंसापात्रम् एव । हि=तथाहि—अदान=अमदस्रावी, पक्षान्तरे अदानी कृपणो नर पीनगात्र=स्थूलकायोऽपि एकत्र स्वभावात्, परत्र निजोदर-मात्रभरणपरत्वात् गर्दभ=रासभ (रासभतुल्यो नरश्च) निन्द्य एव= गर्हणीय एव । तिर्यञ्चोऽपि दानेनैव प्रशस्यन्ते, परेषान्तु कैव कथेति भाव ।

अत्र हि—श्लिष्टविशेषणमहिम्नाऽप्रस्तुतात् करीश्वरात् गर्दभाच्च प्रस्तु-तस्य दातु कृपणस्य च प्रतीते अप्रस्तुतप्रशंसालङ्कार । उक्तञ्च चन्द्रा-लोके—"अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रया" इति । परमियं विशेषा-त्सामान्यावगतौ बोध्येत्यलं प्राज्ञेषु बहुशास्त्रार्थकरणेन ॥ ७७ ॥

"सुशील" इति—सुशीलोऽपि=सुष्ठु शीलं स्वभावो यस्य स सुस्व-भावोऽपि एकत्र पक्षे माङ्गलिकत्वात् परत्र कस्याप्यनिष्टस्यानाचरणात्, सुवृत्तोऽपि=सुवर्त्तुलोऽपि, अन्यत्र सुष्ठु वृत्तमाचरणं यस्य स तादृश सच्चरित्रो-ऽपीत्यर्थ, घट=कलश अदानात्=एकत्र जलस्याऽवितरणात्, परत्र कृपण-त्वात्, अधो याति=अधो गच्छति, जलशून्यावस्थायामधोमुखतया स्थाप्यमान-त्वादिति, पक्षे लोकैरनादरणीयत्वादिति भाव ।

पुन=किन्तु कुब्जापि=वक्रभावं गताऽपि, काणापि=विकृताकारा-ऽपि (पक्षद्वयेऽपि समानोऽर्थ), कर्कटी=एर्वारुकं फलं दानात्=एकस्मिन पक्षे पान्थेभ्य आत्मसमर्पणात् परत्र पक्षे-धनत्यागात् उपरि=समुन्नते प्रदेशे मञ्चादिषु, प्रशंसनीये स्थाने च यातीत्यनुषङ्ग ।

यच्छञ्जलमपि जलदो वल्लभतामेति सकललोकस्य।
नित्यं प्रसारितकरो मित्रोऽपि न वीक्षितुं शक्यः॥ ७६॥

एवं ज्ञात्वा दारिद्र्याभिभूतैरपि स्वल्पात्स्वल्पतरं काले पात्रे च देयम्। उक्तं च—

सत्पात्रं महती श्रद्धा देशे काले यथोचिते।
यद्दीयते विवेकज्ञैस्तदानन्त्याय कल्पते॥ ८०॥

---

अत्रापि पूर्ववत् श्लिष्टविशेषणमात्रसामर्थ्यात् अप्रस्तुतघटात् अप्रस्तुतकर्कट्याश्च प्रस्तुतस्याऽदातु दातुश्च प्रतीते अप्रस्तुतप्रशंसालङ्कार॰॥ ७८॥

"यच्छन्नि"ति—जलद॰=वारिदो मेघ जलमपि=जलमात्रमपि यच्छन्=ददत् सकललोकस्य=प्राणिमात्रस्य वल्लभताम्=प्रियताम् एति=प्राप्नोति। मित्रोऽपि=अत्युच्चस्थ सूर्योऽपि पक्षे वन्धुरपि नित्यम्=सदा प्रसारितकर=प्रसारिता विस्तारिता करा मयूखा येन स॰, पक्षान्तरे—धनप्रार्थनया प्रसारितहस्त॰ वीक्षितुं=द्रष्टुं न शक्य=नैव योग्य, एकत्र तेजस॰ प्राचुर्यात् दृष्टिप्रतिरोधकत्वेन, परत्र—नियतप्रार्थनापरत्वेन जनैरनादरणीयताहेतोरिति भाव।

अत्रापि—श्लिष्टविशेषणमाहात्म्यात् अप्रस्तुताद् जलदात् मित्राच्च प्रस्तुतस्य दानशौण्डस्य अदातु कृपणस्य च प्रतीते पूर्ववद् अप्रस्तुतप्रशंसालङ्कार।

मित्रशब्दो वन्धुवाचकतापक्षे क्लीब, सूर्यवाचकत्वे तु पुंलिङ्ग एव भवतीति न विस्मरणीयम्। परमत्र—ग्रन्थकारस्य वन्धुपक्षेऽप्यसौ पुंस्येव भातीति सूक्ष्मं निरीक्ष्यम्। वृत्तमार्या॥ ७६॥

"सत्पात्रम्" इति—सत्पात्रम्=उत्कृष्टं दानपात्रम्, महती=समधिका श्रद्धा=आस्तिक्यवुद्धि तदा विवेकज्ञै॰=निपुणै शास्त्राभिप्रायविज्ञै॰ यथोचिते=यथायोग्ये देशे=वाराणसीप्रभृतिक्षेत्रे काले=अमावास्यादिपर्वणि यत् दीयते=यत् दानं क्रियते तद्=दानम् आनन्त्याय=अनन्तफलाय कल्पते=अनन्तफलप्रदं भवतीत्यर्थ॰।

"आनन्त्याय" इत्यत्र "क्लृपि सम्पद्यमाने च" (वा०) इति चतुर्थी॥८०॥

तथा च—

अतितृष्णा न कर्तव्या तृष्णां नैव परित्यजेत्।
अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥ ८१ ॥

ब्राह्मण्याह—कथमेतत्। स आह—

## कथा ३।

अस्ति कस्मिंश्चिद्वनोद्देशे कश्चित् (१) पुलिन्दः। स च (२) पापर्द्धिं कर्तुं वनं प्रति प्रस्थितः। अथ तेन (३) प्रसर्पता महानञ्जनपर्वतशिखराकारः (४) क्रोडः समासादितः। तं दृष्ट्वा (५) कर्णान्ताकृष्टनिशितसायकेन समाहतः। तेनापि कोपाविष्टेन चेतसा (६) बालेन्दुद्युतिना दंष्ट्राग्रेण पाटितोदरः पुलिन्दो (७) गतासुर्भूतलेऽपतत्। अथ लुब्धकं व्यापाद्य शूकरोऽपि (८) शरप्रहारवेदनया पञ्चत्वं गतः। एतस्मिन्नन्तरे कश्चिदासन्नमृत्युः शृगाल इतस्ततो निराहारतया

---

"अतितृष्णा" इति—अतितृष्णा=अतिलिप्सा लोभ न कर्तव्या, तृष्णाम्=शास्त्रमर्यादया विहितां लिप्सा नैव परित्यजेत्=परिहरेत्, अतितृष्णाऽभिभूतस्य=अतिमात्रं लोभेनाकृष्टस्य जनस्य मस्तके=शिरसि शिखा=शिखावत् प्रतीयमान चापस्याग्रभागो भवति=उत्तिष्ठते इत्यर्थ ॥८१॥

(१) पुलिन्दः=म्लेच्छजातीयोऽन्त्यजविशेष। (२) पापर्द्धिम्=पापस्य ऋद्धिर्वृद्धिस्तां जीवहत्यारूपाम् (३) प्रसर्पता=विचरता। अञ्जनेति—अञ्जनस्य कज्जलस्य पर्वतो गिरिस्तस्य शिखरस्य कोटेराकार इवाकारो यस्य स कज्जलगिरिचूडातुल्यमूर्त्तिरित्यर्थ। (४) क्रोड=सूकर। (५) कर्णान्तेति—कर्णान्तमाकर्णम् आकृष्ट आसञ्जितो निशितस्तीक्ष्ण सायको वाणो येन स तादृशेन सता पुलिन्देनेत्यस्य विशेषणं नेयम्। समाहत=मारित। तेनापि=क्रोडेनापि। (६) बालेन्दुद्युतिना=सद्यउदितचन्द्रकान्तिना। दंष्ट्राग्रेण=दाढाया अग्रभागेन। पाटितोदर=विदारितकुक्षि। (७) गतासु=गतप्राणो मृत इत्यर्थ। (८) शरप्रहारवेदनया=वाणाघातपीडया।

पीडितः परिभ्रमंस्तं प्रदेशमाजगाम । यावद्वराहपुलिन्दौ द्वावपि पश्यति तावत्प्रहृष्टो व्यचिन्तयत्—भोः ! (१) सानुकूलो मे विधिः । तेनैतदप्यचिन्तितं भोजनमुपास्थितम् । अथवा साध्विदमुच्यते—

अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम् ।
शुभाशुभं समभ्येति विधिना संनियोजितम् ॥ ८२ ॥

तथा च—

यस्मिन् देशे च काले च वयसा यादृशेन च ।
कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते ॥ ८३ ॥

तदहं तथा भक्षयामि यथा बहून्यहानि मे प्राणयात्रा भवति। तत्तावदेनं (२) स्नायुपाशं धनुष्कोटिगतं भक्षयामि । उक्तं च—

शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् ।
रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ८४ ॥

---

(१) सानुकूल =कृपालुरित्यर्थ ।

"अकृत" इति—उद्यमे=उद्योगे अकृतेऽपि=अननुष्ठितेऽपि पुंसाम्=प्राणिनाम् अन्यजन्मकृतम्=अन्यस्मिन् जन्मनि सम्पादितम् शुभाशुभम्=इष्टानिष्टरूपं सुखदु खमय फलं विधिना=दैवेन सन्नियोजितम्=समुपस्थापितं सनभ्येति=सम्यक् प्राप्नोति कर्मकर्तॄन् प्राणिन इति शेष ॥ ८२ ॥

"यस्मिन्" इति—यस्मिन् देशे च काले च यादृशेन वयसा च=आयुषापि यत् शुभाशुभम्=पुण्याऽपुण्यं कर्म कृतं=पूर्वजन्मानि अनुष्ठितं स्यात् , तत्=कर्म तथा=तेनैव प्रकारेण देशकालाद्यवच्छेदेन तेन=तेनैव कर्त्रा भुज्यते=अनुभूयते ॥ ८३ ॥

(२) स्नायुपाशम्=स्नायुरचितं रज्जुविशेषम् । धनुष्कोटिगतम्=धनुषश्चापस्य कोटावग्रभागे गतं लग्नम् ।

"शनैःशनै" रिति—प्राज्ञै =बुद्धिमद्भिर्नरै स्वयम्=आत्मना उपार्जितम्=सङ्गृहीतं वित्तम्=धनम्, रसायनमिव=जराव्याधिविनाशकौषध-

इत्येवं मनसा निश्चित्य (१) चापचटितकोटिं मुखमध्ये प्रक्षिप्य स्नायुं भक्षितुं प्रवृत्तः। ततश्च त्रुटिते पाशे (२) तालुदेशं विदार्य चापकोटिर्मस्तकमध्येन निष्क्रान्ता। सोऽपि तद्वेदनया तत्क्षणान्मृतः। अतोऽहं ब्रवीमि—"अतितृष्णा न कर्तव्या" इति॥ स पुनरप्याह—ब्राह्मणि! न श्रुतं भवत्या।

आयुः कर्म च वित्तं च विद्या निधनमेव च।
पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः॥ ८५॥

अथैवं सा तेन प्रबोधिता ब्राह्मण्याह—यद्येवं तदस्ति मे गृहे (३) स्तोकस्तिलराशिः। ततस्तिलां (४) ल्लुञ्चित्वा तिलचूर्णेन ब्राह्मणं भोजयिष्यामि इति। ततस्तद्वचनं श्रुत्वा ब्राह्मणो ग्रामं गतः। सापि तिलानुष्णोदकेन (५) संमर्द्य कुट्टित्वा सूर्यातपे

---

विशेषमिव शनैः शनैः=अल्पाल्पमेव क्रमेणेति यावत् भोक्तव्यम्=सुखभोगाय व्ययीकर्त्तव्यम्, कदाचन=कदापि हेलया=अवज्ञया न भोक्तव्यम्।

यथा रसायनं स्तोकपरिमाणमेव सादरं भुञ्जानस्य जराव्याध्यादिशमनं बहुकालजीवनं च करोति तथैवाल्पमात्रया व्ययीकृतं धनमपि भोक्तुश्चिरकालाय तिष्ठतीति भावः॥ ८४॥

(१) चापचटितकोटिम्=चापस्य धनुषः चटितकोटिम्=खण्डितमग्रभागं प्रत्यञ्चाया व्यपरोपणस्थानमित्यर्थः। (२) तालुदेशम्=तालुमध्यभागम्। विदार्य=प्रास्फोटय।

"आयु"रिति—आयुः=जीवनसमयः, कर्म=कार्यम्, वित्तम्=धनम्, विद्या=शास्त्रज्ञानम्, तथा—निधनम्=मृत्यु, एतानि पञ्च गर्भस्थस्य=मातुःस्थितस्यैव देहिनः=प्राणिनः सृज्यन्ते=विधात्रा रच्यन्ते, हि=इति श्चितोऽयमर्थः। इदञ्च योगशास्त्रे बहुस्पष्टम्॥ ८५॥

(३) स्तोकः=अल्पः। तिलराशिः=तिलसमुदायः। (४) लुञ्चित्वा=कृत्वा तिलानां त्वचोऽपनीयेत्यर्थः। उष्णोदकेन=तप्तेन वारिणा। (५) संमर्द्य=अभ्युदय। कुट्टित्वा=कण्डयित्वा।

दत्तवती। अत्रान्तरे तस्या (१) गृहकर्मव्यग्रायास्तिलानां मध्ये कश्चित् (२) सारमेयो मूत्रोत्सर्गं चकार। तं दृष्ट्वा सा चिन्तितवती—अहो! नैपुण्यं पश्य (३) पराङ्मुखीभूतस्य विधेः, यदेते तिला अभोज्याः कृताः। तदहमेतान्समादाय कस्यचिद् गृहं गत्वा लुञ्चितैरलुञ्चितानानयामि। सर्वोऽपि जनोऽनेन विधिना प्रदास्यतीति। अथ यस्मिन् गृहेऽहं भिक्षार्थं प्रविष्टस्तत्र गृहे सापि तिलानादाय प्रविष्टा विक्रयं कर्तुम्। आह च-गृह्णातु कश्चिदलुञ्चितैर्लुञ्चितांस्तिलान्। अथ तद्गृहगृहिणी प्रविष्टा यावदलुञ्चितैर्लुञ्चितान्गृह्णाति, तावदस्याः पुत्रेण (४) कामन्दकीशास्त्रं दृष्ट्वा व्याहृतम्—मातः! अग्राह्याः खल्विमे तिलाः। नास्या अलुञ्चितैर्लुञ्चिता ग्राह्याः। कारणं किंचिद्भविष्यति। तेनैषाऽलुञ्चितैर्लुञ्चितान्प्रयच्छति। तच्छ्रुत्वा तया परित्यक्तास्ते तिलाः। अतोऽहं ब्रवीमि—"नाकस्माच्छाण्डिली मातः" इति॥ एतदुक्त्वा (५) स भूयोऽपि प्राह—अथ ज्ञायते (६) तस्य क्रमणमार्गः। ताम्रचूड आह—भगवन्! ज्ञायते। यत एकाकी न समागच्छति। किंत्वसङ्ख्ययूथपरिवृतः (७) पश्यतो मे परिभ्रमन्नितस्ततः सर्वजनेन सहागच्छति याति च। अभ्यागत आह—अस्ति किंचित् (८) खनित्रकम्। स आह—बाढमस्ति। एषा (९) सर्वलोहमयी स्वहस्तिका। अभ्यागत आह—तर्हि

(१) गृहेति—गृहस्य कर्ममार्जनलेपनादिकं तत्र व्यग्राया व्यापृतायाः। (२) सारमेय=कुक्कुर। मूत्रोत्सर्गम्=प्रस्रावम्। (३) पराङ्मुखीभूतस्य=विपरीतस्य। विधे=दैवस्य। (४) कामन्दकीशास्त्रम्=नीतिशास्त्रेष्वन्यतमं शास्त्रं यथा चाणक्यशास्त्रं तादृशमित्यर्थः। व्याहृतम=उक्तम्। (५) स=बृहत्स्फिक्। (६) तस्य=मूषकस्य। क्रमणमार्ग=विहरणपन्थाः। (७) पश्यतो मे=पश्यन्तं मामनादृत्य। "षष्ठी चानादरे" (२।३।३८) इति सूत्रेण अनादरे षष्ठी। (८) खनित्रकम्=खननसाधनं दात्रादिकम्। (९) सर्वलोहमयी=सर्वतो लोहनिर्मिता। स्वहस्तिका=दात्रम्।

प्रत्यूषे त्वया मया सह स्थातव्यम्, येन द्वावपि (१)जनचरणामलिनायां भूमौ तत्पदानुसारेण गच्छावः। (२) मयापि तद्वचनमाकर्ण्य चिन्तितम्—अहो! विनष्टोऽस्मि, यतोऽस्य (३) साभिप्रायवचांसि श्रूयन्ते। नूनं यथा (४) निधानं(५) ज्ञातं तथा दुर्गमप्यस्माकं ज्ञास्यति। एतदभिप्रायादेव ज्ञायते। उक्तं च—

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ॥ ८६ ॥

वाञ्छैव सूचयति पूर्वतरं भविष्यं
पुंसां यदन्यतनुजं त्वशुभं शुभं वा।
विज्ञायते शिशुरजातकलापचिह्नः
प्रत्युद्गतैरपसरन् सरसः कलापी ॥ ८७ ॥

---

(१) जनचरणेति—जना लोका तेषा चरणौ पादै अमलिनायाम्=अक्षुण्णायाम्। (२) मयापि=हिरण्यकेनेत्यर्थ। (३) साभिप्रायवचासि=मदीयवासस्थानज्ञानप्रतिपादकवचासि। (४) निधानम्=निधि। (५) ज्ञातम्=अनुमितम्।

"सकृदि"ति—विबुधा=पण्डिता देवा वा पुरुषम्=नरं सकृदपि=एकवारमपि दृष्ट्वा=निरीक्ष्य तस्य=पुरुषस्य सारताम्=उत्कर्षमपकर्षं वा जानन्ति=अवगच्छन्ति। तथाहि—निपुणा=चतुरा पुरुषा हस्ततुलयापि=हस्तात्मकतुलादण्डेनापि पलप्रमाणम्=पलस्य परिमाणं परिमितिं विजानन्ति=बुध्यन्ते। चतुराणा वस्तुपरिमाणज्ञाने तुलादण्डापेक्षैव न भवतीति भाव। आर्यावृत्तम् ॥ ८६ ॥

"वाञ्छैवे"ति—पुंसाम्=नराणा वाञ्छैव=कामनारूपा चित्तवृत्तिरेव पूर्वतरम्=प्राक्तनं, भविष्यम्=आगामिनम्, अन्यतनुजम्=जन्मान्तरीणशरीरजातम् यत् शुभमशुभं वा तत् सूचयति=अवबोधयति प्रकटीकरोतीति यावत्। तथाहि—अजातम्=अनुत्पन्नं कलापस्य बर्हस्य पिच्छस्य चिह्नं लक्षणं यस्य सः अपसरन्=अपगच्छन् सरस=मनोहर शिशु=बाल कलापी=मयूर प्रत्युद्गतैः=सुन्दरतरैर्गतिविशेषैः विज्ञायते=निश्चीयते इत्यर्थ. ॥ ८७ ॥

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्यज्यान्य-मार्गेण गन्तुं प्रवृत्तः । सपरिजनो यावदग्रतो गच्छामि तावत्-त्संमुखो बृहत्कायो मार्जारः समायाति । स च मूषकवृन्दम-वलोक्य तन्मध्ये सहसोत्पपात । अथ ते मूषका मां (१) कुमार्गगामिनमवलोक्य गर्हयन्तो हतशेषा (२) रुधिर-प्लावितवसुंधरास्तमेव दुर्गं प्रविष्टाः । अथवा साध्विदमु-च्यते—

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात् ।
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन्मृगः
कूपान्तः पतितः करोतु विधुरे किं वा विधौ पौरुषम् ॥८८॥

अयं भाव —कलापो हि मयूरस्य चिह्नम्, तस्याऽनुक्रमेऽपि पदविन्यासाभ्यस्तगतिविशेषेणैव "अयं मयूरो नान्य पक्षी" इति लोकाना चित्तानि निश्चाययतीति । वसन्ततिलकावृत्तम् ॥ ८७ ॥

(१) कुमार्गगामिनम्=उत्पथप्रवृत्तम् । (२) रुधिरप्लावितवसुन्धरा = रुधिरेण शोणितेन प्लाविता अक्ता वसुन्धरा पृथिवी यस्ते शोणिताक्तभूतला ।

"छित्त्वा" इति—मृग =हरिण पाशम्=जालं छित्त्वा, कूटरचनाम्= कूटस्य मृगबन्धनस्य यन्त्रविशेषस्य रचना स्थितिम् अपास्य=उत्क्षिप्य, बलात्=बलमाश्रित्य वागुराम्=बन्धनीं भङ्क्त्वा=त्रोटयित्वा, पर्यन्तेषु प्रान्त-भागेषु अग्निशिखाकलापैः हुतवहज्वालाजालैः जटिलात् व्याप्ताद् गहनाद् वनात्=जङ्गलात् दूरं निर्गत्य=दूरं यात्वा, तथा—व्याधानामाखेटकाराणां शर-गोचरात्=बाणविषयादपि जवेन=वेगेन उत्पत्य=उच्छलनां दत्वा धावन्= पलायमान कूपान्त पतित =कूपस्य अन्तर्मध्ये पतितो त्रुटितो भवतीति शेष , एवं बहु यतमानो यो विपद्यते तत् विधौ=दैवे विधुरे=प्रतिकूले सति किं वा करोतु=विदधातु । प्रतिकूले दैवे किमपि कर्तुं न शक्नोतीति भाव ।

यद्यप्युद्योगकरणं मनुष्यधर्मस्तथाप्यसौ तावदेव फलति यावद्दैवं न प्रति-कूलमिति तु पर सार ॥ ८८ ॥

अथाहमेकोऽन्यत्र गतः। शेषा मूढतया तत्रैव दुर्गं प्रविष्टाः। अत्रान्तरे स दुष्टपरिव्राजको रुधिरबिन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेणागत्योपस्थितः। ततश्च स्वहस्तिकया खनितुमारब्धः। अथ तेन खनता प्राप्तं तन्निधानं यस्योपरि सदैवाहं कृतवसतिर्यस्योष्मणा महादुर्गमपि गच्छामि। ततो हृष्टमनास्ताम्रचूडमिदमूचेऽभ्यागतः—भो! भगवन्! इदानीं स्वपिहि निःशङ्कः। अस्योष्मणा मूषकस्ते जागरकं संपादयति। एवमुक्त्वा निधानमादाय मठाभिमुखं प्रस्थितौ द्वावपि। अहमपि यावन्निधानरहितं स्थानमागच्छामि, तावदरमणीयमुद्वेगकारकं तत्स्थानं वीक्षितुमपि न शक्नोमि। कथं मे स्यान्मनसः प्रशान्तिः। एवं चिन्तयतो महाकष्टेन स दिवसो व्यतिक्रान्तः। अथास्तमितेऽर्के सोद्वेगो निरुत्साहस्तस्मिन्मठे सपरिवारः प्रविष्टः। अथ (१) अस्मत्परिग्रहशब्दमाकर्ण्य ताम्रचूडोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताडयितुं प्रवृत्तः। अथासावभ्यागतः प्राह—सखे! किमद्यापि निःशङ्को न निद्रां गच्छसि। स आह—भगवन्! भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः। तद्भयाज्जर्जरवंशेन भिक्षापात्रं ताडयामि। ततो विहस्याभ्यागतः प्राह—सखे! मा भैषीः। वित्तेन सह गतोऽस्य (२) कूर्दनोत्साहः। सर्वेषामपि जन्तूनामियमेव (३) स्थितिः। उक्तं च—

यदुत्साही सदा मर्त्यः पराभवति यज्जनान्।
यदुद्धतं वदेद्वाक्यं तत्सर्वं वित्तजं बलम् ॥ ८६ ॥

---

(१) अस्मदिति—अस्माकं परिग्रहस्य=मूषकवृन्दस्य शब्द भाण्डास्फोटनध्वनिम्। (२) कूर्दनोत्साह=उत्फालनशक्ति। (३) स्थिति=मर्यादा, नियम इत्यर्थ।

"यदि"ति—मर्त्य=मनुष्य सदा=सर्वदा यत् उत्साही=सोद्योगी भवतीति शेष, यत् जनान्=लोकान् पराभवति=तिरस्करोति, यच्च उद्धतम्=

अथाहं तच्छ्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः। तच्छ्रुत्वासौ मे शत्रुर्विहस्य ताम्रचूडमुवाच—भोः! (क) पश्य पश्य कौतूहलम्।
आह च—

अर्थेन बलवान्सर्वोऽप्यर्थयुक्तः स पण्डितः।
पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम् ॥ ९० ॥

तत्स्वपिहि त्वं गतशङ्कः। यदस्योत्पतनकारणं तदावयोर्हस्तगतं जातम्। अथवा साध्विदमुच्यते—

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
तथार्थेन विहीनोऽत्र पुरुषो नामधारकः ॥ ९१ ॥

तच्छ्रुत्वाहं मनसा विचिन्तितवान्—यतोऽङ्गुलिमात्रमपि कूर्दनशक्तिर्नास्ति, तद्धिगर्थहीनस्य पुरुषस्य जीवितम्।
उक्तं च—

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ९२ ॥

---

कठोरं व्याहृतं वदेत्=कथयेत् (वदतीत्यर्थ) तत्सर्वं वित्तजम्=धन (मद) जातमेव बलं बोध्यम्। धनस्योष्मणैवोद्धता भवन्ति जना इति भाव ॥८९॥

(१) पश्य पश्य=आलोचयेत्यर्थ । कौतूहलम्=आश्चर्यम्।

"अर्थेने"ति—सर्व=सर्वोऽपि जन. अर्थेन=धनेन बलवान्, य. अर्थयुक्त=धनी स पण्डित=स एव विद्वान्, एनं व्यर्थम्=विनष्टधनं मूषकं स्वजाते=आत्मजाते समताङ्गतम्=तुल्यता प्राप्तं पश्य। धननाशाद्धेतोरयं सम्प्रति स्वेतरसाधारणमूषकतुल्य सवृत्त इति भाव ॥ ९० ॥

"दंष्ट्राविरहित" इति—यथा दंष्ट्रया=दाढया विरहित शून्य. सर्प यथा वा—मदहीन=गतमदो गज तथा=तद्वत् अत्र=इह लोके अर्थेन विहीन=नष्टधनो दरिद्र. पुरुषः नामधारक=नाममात्रेणैव पुरुष स्यात् न तु वस्तुत पौरुषसम्पन्न इत्यर्थः ॥ ९१ ॥

"अर्थेने" ति—अर्थेन च विहीनस्य=निर्धनस्य अत एव अल्पमेधस=

यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः ।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः ॥ ६३ ॥
सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणाः ।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ ६४ ॥
न तथा बाध्यते लोके प्रकृत्या निर्धनो जनः ।
यथा द्रव्याणि संप्राप्य तैर्विहीनः सुखे स्थितः ॥ ६५ ॥

---

अल्पा मेधा बुद्धिर्यस्य सोल्पमेधा तस्य, पुरुषस्य सर्वा क्रिया =समग्रा एव क्रियाः कर्माणि आहारविहारादीनि उच्छिद्यन्ते=विनश्यन्ति, ग्रीष्मे=घर्मकाले कुसरित =कुनद्य यथा=इवेत्यर्थ । अल्पमेधस इत्यत्र समासान्तोऽसिच् । "**नित्यमसिच् प्रजामेधयोः**" ( ५।४।१०२ ) इत्यत्र—"अन्यत्रापि भवति" इति काशिकोक्तेः ॥ ६२ ॥

"**यथे**" ति—यथा काकयवा=कङ्करा बुमा इति यावत्, यथा वा अरण्ययवा =जाङ्गला. तिला नाममात्रा =नामैव मात्रं सत्ता येषा ते नाममात्रधारिण एव भवन्ति, हि=निश्चयेन सिद्धौ=कार्ये कदापि न ( सम्पद्यन्ते ) तथा धनहीना नरा इति स्पष्टोऽर्थ ॥ ६३ ॥

"**सन्तोऽपि**"इति—दरिद्रस्य=निर्धनस्य नरस्य सन्तोऽपि=विद्यमाना अपि इतरे गुणा =दयादाक्षिण्यादयो न हि राजन्ते=नैव भासन्ते। भूतानाम्= पृथिव्यादिभूताना मध्ये आदित्यः=सूर्य इव श्री =लक्ष्मी सम्पद् गुणाना प्रकाशिनी=भासयित्री भवति । सूर्यो यथा स्वमयूखपुञ्जेन सर्वान् पदार्थान् भासयते तद्वत्सम्पत् स्वप्रतापेन सर्वान् गुणान् प्रकटीकरोतीति भाव ।

अत्रोपमानभूतसूर्यपदे उपमेयभूतश्रीपदे च भिन्नलिङ्गनिर्देशो नोपमादोषापादकः "त्रैलोक्यमिव विष्णुना" (वृत्त० ११६) इत्यादिवत् ॥६४॥

निर्धनता सन्तोषे सति गुणपक्षे निर्दिशति—"**न तथे**"ति—प्रकृत्या= स्वभावेन जन्मत आरभ्य निर्धन =दरिद्र जन पुरुष तथा=तद्वत् न बाध्यते=नैव पीडितो भवति, यथा द्रव्याणि=भोग्यपदार्थान् सम्प्राप्य सुखे स्थित.=सुखी सम्पन्न सन् पश्चात् तैर्विहीनः=धनादिभिर्द्रव्यै रहितो

शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वतः ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिनः ॥ ६६ ॥
शङ्कनीया हि सर्वत्र निष्प्रतापा दरिद्रता ।
उपकर्तुमपि प्राप्तं निःस्वं सन्त्यज्य गच्छति ॥ ६७ ॥
उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः ।
हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ ६८ ॥

---

बाध्यत इत्यनुषङ्ग । अकाण्डतः प्राप्तं दारिद्र्यं बहु दुःखप्रदं भवति स्वाभाविकन्तु न तथेति भाव ॥ ६५ ॥

"शुष्कस्ये"ति—शुष्कस्य=शोषङ्गतस्य, कीटखातस्य=कीटै. क्षुद्रजन्तुविशेषै (कृतं) खातं गर्त्तो यस्य कीटैरात्तसारस्य, सर्वत=समन्तात् वह्निदग्धस्य=वह्निना अनलेन दग्धस्य प्लुष्टस्य ऊषरस्थस्य=क्षारभूमिस्थस्य तरो.=वृक्षस्यापि जन्म वरम्=श्रेष्ठम्, तथा अर्थिन=याचकस्य निर्धनस्य न वरम् ।

दर्शितविशेषणविशिष्टात्तरोरपेक्षया निर्धनो याचकश्चेदत्यन्तमेव पापिष्ठ इति भाव. ॥ ६६ ॥

"शङ्कनीया"इति—हि=निश्चयेन निष्प्रतापा=प्रतापशून्या दरिद्रता=निर्धनता सर्वत्र=सर्वस्मिन् देशे काले च शङ्कनीया=शङ्कास्थानमित्यर्थः । तथाहि—उपकर्तुम्=परोपकारं परहित कर्त्तुमपि प्राप्तम्=आयातं नि स्वम्=निर्धन सन्त्यज्य=परिहाय गच्छति=याति । जन इति शेष ।

उपकाराय प्रवृत्तमपि दरिद्रं दृष्ट्वा "अयमस्मत्तो धनहरणशङ्कयोपकारार्थ प्रवर्त्तते" इत्यालोच्य तं दूरत एव परिहरन्तीत्यहो ! महत्कष्टप्रदं दारिद्र्यमिति भाव ॥ ६७ ॥

"उन्नम्ये"ति—निर्धनाना मनोरथा=सङ्कल्पा हृदयेषु उन्नम्योन्नम्य=उत्थायोत्थाय तत्रैव=हृदयेष्वेव लीयन्ते=लयं यान्ति, विधवास्त्रीस्तनौ इव=विधवाया स्त्रिया स्तनौ यथा हृदयष्वेव लीयेते इत्यर्थ· । दरिद्रमनोरथा विधवास्त्रीस्तनाविव वृथोत्थाना इति भाव ॥ ६८ ॥

व्यक्तेऽपि वासरे नित्यं दौर्गत्यतमसावृतः ।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते ॥ ९९ ॥

एवं विलप्याहं भग्नोत्साहस्तन्निधानं (१) गण्डोपधानीकृतं दृष्ट्वा स्वं दुर्गं प्रभाते गतः । ततश्च मद्भृत्याः प्रभाते गच्छन्तो मिथो जल्पन्ति—अहो! असमर्थोऽयमुदरपूरणेऽस्माकम् । केवलमस्य पृष्ठलग्नानां बिडालादिविपत्तयः । तत्किमनेनाराधितेन । उक्तं च—

यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः ।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ १०० ॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोऽहम् । यावन्नो कश्चिन्मम संमुखेऽभ्येति तावन्मया चिन्तितम्—धिगियं दरिद्रता । अथवा साध्विदमुच्यते—

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ १०१ ॥

---

"व्यक्तेपी"ति—इह=लोके वासरे=दिवसे व्यक्तेऽपि=भास्करमयूखैरुद्भासितेऽपि नित्यम्=निरन्तर दौर्गत्यतमसावृत =दुर्गतेर्भावो दौर्गत्यं दारिद्र्यमेव तमोऽन्धकार तेन आवृतः आच्छादितो जन अग्रत =पुर स्थितोऽपि केनापि जनेन न दृश्यते=नैवालोक्यते । पुर स्थितोऽपि दरिद्रो न केनापि दृष्टिविषयीक्रियत इत्यहो! सौरालोकेनाप्यभेद्यं दारिद्र्यतम इति भाव ॥९९॥

(१) गण्डोपधानीकृतम्=गण्डस्य कपोलस्योपधानीकृतमुपबर्हीकृतम् ।

"यत्सकाशा" दिति—यत्सकाशात्=यत्पार्श्वात् यदाश्रयेणेत्यर्थ :=इष्टसिद्धिर्न स्यात्, किन्तु केवला विपत्तय =कष्टान्येव स्यु =भवेयु स ामी=तादृशोऽधिपती राजादि अनुजीविभि =भृत्यै विशेषात्=विशिष्ट- (अवश्यमेव) दूरतस्त्याज्य =आरादेव परिहरणीय इत्यर्थ. । त्तिमात्रप्रदे कोऽप्यनुरक्तो न भवतीति भाव ॥ १०० ॥

"मृत"इति—दरिद्र पुरुष =निर्धनो नरः मृत =मृतवत् शक्ति- .ान इत्यर्थ , अप्रजम्=सन्तानोत्पत्तिसामर्थ्यहीन मैथुनम्=स्त्रीसम्भोग

एवं मे चिन्तयतस्ते भृत्या मम शत्रूणां सेवका जाताः । ते च मामेकाकिनं दृष्ट्वा (१) विडम्बनां कुर्वन्ति । अथ मयैकाकिना (२) योगनिद्रां गतेन भूयो विचिन्तितम्—यत्तस्य कुतपस्विनः (३) समाश्रयं गत्वा तद्दण्डोपधानवर्तिकृतां वित्तपेटां शनैः शनैर्विदार्य तस्य निद्रावशङ्गतस्य स्वदुर्गे तद्वित्तमानयामि, येन भूयोऽपि मे वित्तप्रभावेणाधिपत्यं पूर्ववद्भविष्यति। उक्तं च—

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः ।
नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव ॥ १०२ ॥
दौर्गत्यं देहिनां दुःखमपमानकरं परम् ।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥ १०३ ॥

---

नृतम्=फलशून्यम्, अश्रोत्रियम्=वेदज्ञविहीन श्राद्धम्=पितृकर्म मृतम्=नष्टम्, तथा—अदक्षिण =दक्षिणाशून्य. यज्ञ =ज्योतिष्टोमादिर्याग. मृत.=हत । सर्वमेतद्व्यर्थमेवेति भाव । यद्यपि—"नित्यमसिच् प्रजामेधयोः (५।४।१२२) इति सूत्रेण समासान्तेऽसिचि—"अप्रजसम्" इति भाव्यम् तथापि "अप्रजम्" इति समासान्तविधेरनित्यत्वान्न दुष्टमिति बोध्यम् ॥१०१॥

(१) विडम्बना कुर्वन्ति=उपहसन्ति, समानादरं प्रकटयन्तीत्यर्थः । (२) योगनिद्रां गतेन=नष्टनिधे पुनरुद्धाराय नेत्रनिमीलनपूर्वकचिन्तापरेणेत्यर्थ ।

(३) समाश्रयम्=आश्रमम् ।

"व्यथयन्ती"ति—धनैर्हीनाः=वसुभी रहिता निर्धना जना कुलज.=सद्वंशोद्भवा विधवा इव मनोरथशतै=नानाविधै सङ्कल्पविशेषैः चेत=हृदयं परं=केवल व्यथयन्ति=पीडयन्ति, परन्तु—अनुष्ठानै=तादृशसङ्कल्पसाधककर्माचरणै ( योग्यै साधनविशेषै ) न, चेतो नायासयन्ति येनेष्टलाभ स्यादिति भाव ॥ १०२ ॥

"दौर्गत्यम्" इति—देहिनाम्=प्राणिनाम् दौर्गत्यम्=दारिद्र्यं परम्=अत्यन्तम्. अपमानकरम्=तिरस्कारजनकं दु खम्=कष्टमस्ति, येन=दौर्गत्येन स्वैरपि=निजैर्बन्धुभिरपि जीवन्तोऽपि जना =बान्धवा मृता =नष्टा इव मन्यन्ते, निर्धना स्वबन्धुभिरपि नाद्रियन्त इति भावः ॥ १०३ ॥

दैन्यस्य पात्रतामेति पराभूतेः परं पदम् ।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषीकृतः ॥ १०४ ॥
लज्जन्ते बान्धवास्तेन सम्बन्धं गोपयन्ति च ।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥ १०५ ॥
मूर्तं लाघवमेवैतदपायानामिदं गृहम् ।
पर्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥ १०६ ॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः ।
दीपखट्वोत्थच्छायेव त्यज्यते निर्धनो जनः ॥ १०७ ॥

---

"दैन्यस्ये"ति—दौर्गत्येन=दारिद्र्येन कलुषीकृतः=मलिनीकृतो जन शश्वत्=सततं दैन्यस्य=दीनतायाः पात्रताम्=विषयताम् एति=प्राप्नोति, पराभूते=पराभवस्य परं पदम्=प्रधानं स्थानम्, तथा—विपदाम्=विपत्तीना कष्टानाम् आश्रय भवतीति शेष ॥ १०४ ॥

"लज्जन्त"इति—यस्य=पुरुषस्य कपर्दका=वराटका अपि न स्यु तस्य बान्धवा=सम्बन्धिन लज्जन्ते=व्रीडा वहन्ति (अतो हेतोः) तेन सह सम्बन्धम्=सम्पर्कं गोपयन्ति=निगूहन्ति स्वावमाननाभयादपलपन्ति च, तथा तस्य मित्राणि=सुहृदोऽपि अमित्रता=शत्रुता यान्ति=प्राप्नुवन्ति । निर्धने जने सर्वोऽपि विरक्तो भवतीति भाव ॥ १०५ ॥

"मूर्त्तम्"इति—शरीरिणाम्=देहिना एतत् निर्धनत्वम्=दारिद्र्य मूर्त्तम्=साक्षान्मूर्त्तिमत् लाघवम्=लघुता तुच्छेतति यावत्, इदम्—अपायानाम्=विपत्तिना गृहम्=अधिष्ठानम्, अयञ्च धनाभाव मरणस्य=मृत्यो पर्यायः=नामान्तरं मृत्युरेवेत्यर्थ ॥ १०६ ॥

"अजाधूलि"रिति—त्रस्तै=त्रासं प्राप्तै अयमस्मत्त किञ्चिच्चिप्यते इति हेतोर्भीतै जनै=लोकै अजाधूलिरिव=अजापदोत्थतरेणुरिव, मार्जनीरेणुवत्=बहुकरी (कूटोत्सारिणी) समुत्सारितधूलिरिव, तथा—दीपखट्वोत्थच्छाया इव=दीपमन्तरित्य खट्वाया उत्था उत्थिता या छाया तद्वत् निर्धनः=धनहीनो जनः=नर त्यज्यते=हीयते ।

शौचावशिष्टयाप्यस्ति किञ्चित्कार्यं क्वचिन्मृदा ।
निर्धनेन जनेनैव न तु किञ्चित्प्रयोजनम् ॥ १०८ ॥
अधनो दातुकामोऽपि सम्प्राप्तो धनिनां गृहम् ।
मन्यते याचकोऽयं धिग्दारिद्र्यं खलु देहिनाम् ॥ १०९ ॥

अतो वित्तापहारं विदधतो यदि मे मृत्युः स्यात्तथापि शोभनम् । उक्तं च—

स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः ।
पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥ ११० ॥

तथा च—

गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा ।
प्राणांस्त्यज्यति यो युद्धे तस्य लोकाः सनातनाः ॥ १११ ॥

---

अस्पृश्यत्वादनङ्गलकरत्वाच्च यथा अजाधूल्यादिक जनैस्त्यज्यते तथा दरिद्रोऽपीति भाव । मालोपमालङ्कार ॥ १०७ ॥

"शौचावशिष्टये"ति—शौचात्=हस्तपादिशुचिकर्मणा अवशिष्टया=उद्धृतया अपवित्रया मृदा=मृत्तिकयाऽपि क्वचित् किंचित् कार्यम्=प्रवहणीमुखबन्धादिरूपम् अस्ति=भवति स्यादित्यर्थ, निर्धनेन जनेन तु किञ्चिदपि प्रयोजन नैवास्तीत्यनुपद्यः । तादृशमृत्तिकापेक्षयाऽप्यत्यन्ताऽपवित्रो निष्प्रयोजनश्च दरिद्र इति भाव ॥ १०८ ॥

"अधन" इति–अधन =निर्धनो जन दातुकामोऽपि=(कस्यचिद्वस्तुनो) दानार्थी सन्नपि=धनिनाम् श्रीमता गृह सम्प्राप्तश्चेत्, अयं याचक =प्रार्थी इति मन्यते जनैरिति शेष, खलु=निश्चयेन देहिनाम्=शरीरिणा दारिद्र्यम्=निर्धनत्व धिक्=कष्टप्रद निन्दनीयमित्यर्थ ॥ १०९ ॥

"स्ववित्ते"इति–यो नर =मनुष्य स्ववित्तहरणम्=स्वस्य वित्तस्य धनस्य हरणं दृष्ट्वा=विलोक्य असून्=प्राणान् रक्षति=जीवतीत्यर्थ, तद्दत्तम्=तेन दत्त निर्वापितं सलिलाञ्जलिम्=जलाञ्जलिं तर्पणपानीय पितरोऽपि न गृह्णन्ति=नैवाददते । नष्टधनस्य जीवनापेक्षया मरणमेव श्रेय इति भाव ॥११०॥

"गवार्थे"इति—यो गवार्थे=गवा कृते ब्राह्मणार्थे=ब्राह्मणाना कृते

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशमुपागतस्य पेटायां मया छिद्रं कृतं यावत्, तावत्प्रबुद्धो दुष्टतापसः। ततश्च जर्जरवंश-प्रहारेण शिरसि ताडितः कथञ्चिदायुःशेषतया निर्गतोऽहम्, न मृतश्च। उक्तं च—

प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि नविस्मयो मे यदस्मदीयं न हि तत्परेषाम्॥११२॥

काककूर्मौ पृच्छतः—कथमेतत्। हिरण्यक आह—

## कथा ४।

अस्ति कस्मिंश्चिन्नगरे सागरदत्तो नाम वणिक्। (१) तत्सूनुना रूपकशतेन विक्रीयमाणः पुस्तको गृहीतः। तस्मिंश्च लिखितमस्ति—

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम्॥ ११३॥

---

तथा स्त्रीवित्तहरणे=स्त्रीवित्तयोर्हरणे चौर्ये सति युद्धे=प्राप्ते सङ्ग्रामे प्राणान्=असून् त्यजति तस्य सनातना =अक्षया लोका =स्वर्गा भवन्तीत्यर्थ। धनरक्षार्थं प्राणत्यागोऽपि वरमिति भाव ॥ १११ ॥

"**प्राप्तव्यम्**" इति—मनुष्य =नर प्राप्तव्यम्=प्राप्तुं योग्यं स्वभाग्यवर्त्तिनम् अर्थम्=धनं लभते तम्=प्राप्तव्यमर्थ देवोऽपि=विधिरपि लङ्घयि-[illegible]=अतिक्रमितुमन्यथाकर्त्तुमिति यावत् न शक्त =नैव समर्थोऽस्ति, [illegible]त्=कारणाद् अहं न शोचामि=शोकं न करोमि, नच मे=मम [illegible]य =वितर्कना, हि=यतः यदस्मदीयम्=स्वात्मभोक्तव्यं भवति तत् परे-[illegible]—अन्येषा न भवितुमर्हतीत्यर्थ ॥ ११२ ॥

(१) तत्सूनुना=वणिक्पुत्रेण। रूपकशतेन=शतसङ्ख्याकरजतमुद्रया। [illegible]कः=ग्रन्थ।

"**प्राप्तव्यम्**" इति व्याख्यातम्॥ ११३ ॥

तद्दृष्ट्वा सागरदत्तेन तनुजः पृष्टः—पुत्र ! कियता मूल्येनैष पुस्तको गृहीतः । सोऽब्रवीत्—रूपकशतेन । तच्छ्रुत्वा सागरदत्तोऽब्रवीत्-धिङ्मूर्ख ! त्वं लिखितैकश्लोकं रूपकशतेन यद् गृह्णासि एतया बुद्ध्या कथं द्रव्योपार्जनं करिष्यसि । तदद्यप्रभृति त्वया मे गृहे न प्रवेष्टव्यम् । एवं (१) निर्भर्त्स्य गृहान्निःसारितः । स च तेन (२)निर्वेदेन विप्रकृष्टं देशान्तरं गत्वा किमपि नगरमासाद्यावस्थितः । अथ कतिपयदिवसैस्तन्नगरनिवासिना केनचिदसौ पृष्टः—कुतो भवानागतः । किंनामधेयो वा इति । असावब्रवीत्—"प्राप्तव्यमर्थं लभते मनुष्यः" । अथान्येनापि पृष्टेनानेन तथैवोत्तरं दत्तम् । एवं च तस्य नगरस्य मध्ये "प्राप्तव्यमर्थ" इति तस्य प्रसिद्धं नाम जातम् । अथ राजकन्या चन्द्रवती नाम (३) अभिनवरूपयौवनसम्पन्ना सखीद्वितीयैकस्मिन्महोत्सवदिवसे नगरं निरीक्षमाणास्ति । तत्रैव च कश्चिद्राजपुरुषोऽतीव रूपसम्पन्नो मनोरमश्च कथमपि तस्या दृष्टिगोचरे गतः । तद्दर्शनसमकालमेव (४) कुसुमबाणाहतया तया निजसख्यभिहिता—सखि ! यथा किलानेन सह समागमो भवति तथाद्य त्वया यतितव्यम् । एवं च श्रुत्वा सा सखी तत्सकाशं गत्वा शीघ्रमब्रवीत्-यदहं चन्द्रवत्या तवान्तिकं प्रेषिता । भणितं च त्वां प्रति तया, यन्मम त्वद्दर्शनान्मनोभवेन (५) पश्चिमावस्थाकृता । तद्यदि शीघ्रमेव मदन्तिकं न समेष्यसि तदा मे मरणं शरणमिति । तच्छ्रुत्वा तेनाभिहितम्—यद्यवश्यं मया तत्रागन्तव्यं तत्कथय केनोपा-

(१) निर्भर्त्स्य=धिक्कृत्य । निस्सारित =बहिष्कृत । (२) निर्वेदेन= वैराग्येण । (३) अभीति—अभिनवेन=नूतनेन रूपेण यौवनेन च सम्पन्ना । (४) कुसुमेति—कुसुमबाण =कामदेवस्तेनाहतया ताडितया मन्मथविह्वलयेत्यर्थ । (५) पश्चिमावस्था, अन्तिमा दशा मृत्युरूपेत्यर्थ ।

येन प्रवेष्टव्यम्। अथ सख्याभिहितम्—रात्रौ (१) सौधावलम्बितया दृढवरत्रया त्वया तत्रारोढव्यम्। सोऽब्रवीत्—यद्येवं निश्चयो भवत्यास्तदहमेवं करिष्यामि, इति निश्चित्य सखी चन्द्रवतीसकाशं गता अथागतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत्—अहो! महदकृत्यमेतत्। उक्तं च—

गुरोः सुतां मित्रभार्यां स्वामिसेवकगेहिनीम्।
यो गच्छति पुमांल्लोके तमाहुर्ब्रह्मघातिनम् ॥ ११४ ॥

अपरं च—

अयशः प्राप्यते येन येन चापगतिर्भवेत्।
स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत् ॥ ११५ ॥

इति सम्यग्विचार्य तत्सकाशं न जगाम। अथ (२) प्राप्तव्यमर्थः पर्यटन्धवलगृहपार्श्वे रात्रावलम्बितवरत्रां दृष्ट्वा (३) कौतुकाविष्टहृदयस्तामालम्ब्याधिरूढः। तया च राजपुत्र्या स एवा-

---

(१) सौधावलम्बितया=हर्म्यावलम्बिन्या। दृढवरत्रया=दृढया कठोरया वरत्रया=वद्ध्रया चर्मरज्ज्वेत्यर्थ।

"गुरो" रिति—य पुमान् गुरो सुताम्=गुरुकन्याम्, मित्रभार्याम्=सुहृद स्त्रियम्, स्वामिसेवकगेहिनीम्=स्वामिन सेवकस्य च भार्यां गच्छति=रमयते, लोके तम् पुरुपं ब्रह्मघातिनम्=ब्रह्महत्याकारिणमाहु=कथयन्ति। गुरुसुतादिभोगजन्यपापस्य ब्रह्महत्यासमत्वादित्यर्थ· गुरुसुताद्युपलक्षणं परकीयाभोगमात्रस्य। एतासु गमनं नैवानुष्ठेयमिति भाव ॥ ११४ ॥

"अयश" इति—येन=कर्मणा अयश=अपकीर्त्ति प्राप्यते, येन च [illegible]गति=नीचगति श्वशृगालादियोनिप्राप्ति भवेत्, येन च स्वर्गात्=[illegible] भ्रश्यते=अध पतति तत्=तादृशं दुष्टं पापं कर्म परकीया[illegible]गमनादिकं, न समाचरेत्=कदापि न कुर्यात् ॥ ११५ ॥

(२) प्राप्तव्यमर्थ=सागरदत्तसुत। धवलगृहपार्श्वे=सौधसमीपे। (३) कौतुकेति—कौतुकेन=कुतूहलेन आविष्टं व्याप्तं हृदय चेतो यस्य स।

यमित्याश्वस्तचित्तया (१) स्नानखादनपानाच्छादनादिना सम्मान्य तेन सह शयनतलमाश्रितया (२) तदङ्गसंस्पर्शसंजात हर्षरोमाञ्चितगात्रयोक्तम्—युष्मद्दर्शनमात्रानुरक्तया मयात्मा प्रदत्तोऽयम्। त्वद्वर्जमन्यो भर्ता मनस्यपि मे न भविष्यति इति । तत्कस्मान्मया सह न ब्रवीषि । सोऽब्रवीत्-"प्राप्तव्यमर्थं लभते मनुष्य" इत्युक्ते तयान्योऽयमिति मत्वा धवलगृहा (३) दुत्तार्य मुक्तः । स तु (४) खण्डदेवकुले गत्वा सुप्तः । अथ तत्र कयाचित्स्वैरिण्या (५) दत्तसंकेतको यावद् (६) दण्डपाशकः प्राप्तः, तावदसौ पूर्वसुप्तस्तेन दृष्टो रहस्यसंरक्षणार्थमभिहितश्च —को भवान् । सोऽब्रवीत्-"प्राप्तव्यमर्थं लभते मनुष्यः" इति श्रुत्वा दण्डपाशकेनाभिहितम्—यच्छून्यं देवगृहमिदम् । तदत्र मदीयस्थाने गत्वा स्वपिहि। तथा प्रतिपद्य स (७) मतिविपर्यासादन्यशयने सुप्तः । अथ तस्य रक्षकस्य कन्या विनयवती नाम रूपयौवनसम्पन्ना कस्यापि पुरुषस्यानुरक्ता संकेतं दत्त्वा तत्र शयने सुप्तासीत् । अथ सा तमायातं दृष्ट्वा स एवायमस्मद्वल्लभ इति रात्रौ (८) घनतरान्धकारव्यामोहितोत्थाय भोजनाच्छादनादिक्रियां कारयित्वा (९) गान्धर्वविवाहेना-

---

(१) स्नानेति--स्नानशौचादिनेत्यर्थ । सम्मान्य=सत्कृत्य । (२) तदङ्गेति--तस्य प्राप्तव्यमर्थस्य अङ्गाना संस्पर्शेन आलिङ्गनादिना सञ्जात समुत्पन्नो यो हर्ष सुखविशेष तेन रोमाञ्चितानि पुलकितानि गात्राणि यस्या सा-तयेत्यर्थ । युष्मदिति--युष्माकं दर्शनमात्रेणानुरक्तया आसक्तिमतया । (३) उत्तार्य=निष्कास्य । मुक्त =परित्यक्त । (४) खण्डदेवकुले=भग्ने देवमन्दिरे । (५) स्वैरिण्या=कुलटया । दत्तसङ्केत=कृतसमय । (६) दण्डपाशक =तन्नाना पुरुष, कश्चिद्रक्षिपुरुषो वा । (७) मतिविपर्यासात्=बुद्धिभ्रमात् । (८) घनेति--घनतरोऽत्यन्तं निविडो योऽन्धकार तेन व्यामोहिता । (९) गान्धर्वविवाहेन—

"इच्छयाऽन्योन्यसयोग कन्यायाश्च वरस्य च ।
गान्धर्व सतु विज्ञेयो मैथुन्य कामसम्भव "॥ इति

त्मानं (१)विवाहयित्वा तेन समं शयने स्थिता विकसितवदनकमला तमाह—किमद्यापि मया सह विश्रब्धं भवान्न ब्रवीति। सोऽब्रवीत्—'प्राप्तव्यमर्थं लभते मनुष्यः" इति श्रुत्वा तया चिन्तितम्—यत्कार्यमसमीक्षितं क्रियते तस्येदृक्फलविपाको भवति इति। एवं विमृश्य (२) सविषादया तया निःसारितोऽसौ। स च यावद्वीथीमार्गेण गच्छति तावद् (३) अन्यविषयवासी वरकीर्तिर्नाम वरो महता वाद्यशब्देनागच्छति। प्राप्तव्यमर्थोऽपि तैः समं गन्तुमारब्धः। अथ यावत्प्रत्यासन्ने लग्नसमये (४) राजमार्गासन्नश्रेष्ठिगृहद्वारे रचितमण्डपवेदिकायां (५) कृतकौतुकमङ्गलवेशा वणिक्सुतास्ति तावन् (६) मदमत्तो हस्त्यारोहकं हत्वा प्रणश्यज्जनकोलाहलेन लोकमाकुलयंस्तमेवोद्देशं प्राप्तः। तं च दृष्ट्वा सर्वे (७) वरानुयायिनो वरेण सह प्रणश्य दिशो जग्मुः। अथास्मिन्नवसरे (८) भयतरललोचनामेकाकिनी कन्यामवलोक्य मा भैषीः! अहं परित्राता इति सुधीरं (९) स्थिरीकृत्य दक्षिणपाणौ सङ्गृह्य (१०) महासाहसिकतया प्राप्तव्यमर्थः परुषवाक्यैर्हस्तिनं निर्भर्त्सितवान्। ततः कथमपि दैवयोगादपयाते हस्तिनि

---

मनूक्तेन गान्धर्वसञ्ज्ञकेन विवाहेन। (१) विवाहयित्वा—उद्वाह्येत्यर्थ तत्करोत्यर्थे णिजन्ताद्विवाहशब्दात् क्त्वाया रूपमिदम् अतो ल्यप शङ्का न कार्या। (२) सविषादया=मनोग्लानिं प्राप्तया। (३) अन्यविषयवासी=देशान्तरवास्तव्य.। (४) राजेति—राजमार्गे आसन्नं समीपस्थं यत् श्रेष्ठिनो गृहं [illegible] द्वारे। (५) कृतकौतुकमङ्गलवेशा=कृतोऽनुष्ठित कौतुकेन=विवाहमूत्रेण [illegible] यया सा। (६) मदमत्त—मदेनोद्धत, आरोहकम्=हस्तिपालकम्। [illegible] दि.ति—प्रणश्यन्त. पलायमाना ये जनास्तेषा कोलाहलेन [illegible] आकुलयन् विह्वलीकुर्वन्। (७) वरानुयायिन=वरयात्रिण। [illegible]) भयेति—भयेन त्रासेन तरले चञ्चले लोचने नेत्रे यस्या सा ताम्। [illegible]) स्थिरीकृत्य=सान्त्वयित्वा। (१०) महेति,—अत्यन्तं बलवत्तयेत्यर्थ।

सखुहृद्बान्धवेनातिक्रान्तलग्नसमये वरकीर्तिनागत्य तावत्तां कन्या (१) मन्यहस्तगतां दृष्ट्वाभिहितम्—भोः ! श्वशुर ! (२) विरुद्धमिदं त्वयानुष्ठित यन्मह्यं प्रदाय कन्यान्यस्मै प्रदत्ता इति । सोऽब्रवीत्--भोः ! अहमपि हस्तिभयपलायितो भवद्भिः सहायातो न जाने किमिदं वृत्तम् इत्याभिधाय दुहितरं प्रष्टुमारब्धः—वत्से ! न त्वया सुन्दरं कृतम् । तत्कथ्यतां कोऽयं वृत्तान्तः । साब्रवीत्—यदहमनेन प्राणसंशयाद्रक्षिता, तदेनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यति इति । अनेन (३) वार्ताव्यतिकरेण रजनी व्युष्टा । अथ प्रातस्तत्र संजाते महाजनसमवाये वार्ताव्यतिकरं श्रुत्वा राजदुहिता तमुद्देशमागता । कर्णपरम्परया श्रुत्वा दण्डपाशसुतापि तत्रैवागता । अथ तं महाजनसमवायं श्रुत्वा राजापि तत्रैवाजगाम । प्राप्तव्यमर्थं प्राह--भोः ! विश्रब्धं कथय । कीदृशोऽसौ वृत्तान्तः । अथ सोऽब्रवीत्—"प्राप्तव्यमर्थं लभते मनुष्यः" इति । राजकन्या स्मृत्वा प्राह--"देवोऽपि तं लङ्घयितुं न शक्तः" इति । ततो दण्डपाशकसुताब्रवीत्—"तस्मान्न शोचामि न विस्मयो मे" इति । तमखिललोकवृत्तान्तमाकर्ण्य वणिक्सुताब्रवीत्—"यदस्मदीयं न हि तत्परेषाम्" इति । अभयदानं दत्त्वा राजा पृथक्पृथग्वृत्तान्ताञ्ज्ञात्वा (४) ऽवगततत्त्वस्तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण समं सर्वालंकारपरिवारयुतां दत्त्वा त्वं मे पुत्रोऽसीति नगराविदितं तं यौवराज्येऽभिषिक्तवान् । दण्डपाशकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना संभाव्य प्राप्तव्यमर्थाय प्रदत्ता । अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे संमानपुरःसरं

(१) अन्यहस्तगताम्=प्राप्तव्यमर्थपाणिलग्नाम् (२) विरुद्धम्=अन्याय्यम् । (३) वार्ताव्यतिकरेण=पारस्परिकवादविवादेन । व्युष्टा=अतिक्रान्ता प्रभातेत्यर्थ (४) अवगततत्त्व =ज्ञातरहस्य ।

समानीतौ। अथ सोऽपि स्वगोत्रेण सह विविधभोगानुपभुञ्जानः सुखेनावस्थितः। अतोऽहं ब्रवीमि—"प्राप्तव्यमर्थं लभते मनुष्य" इति। तदेतत्सकलं सुखदुःखमनुभूय परं विषादमुपागतोऽनेन मित्रेण त्वत्सकाशमानीतः। तदेतन्मे वैराग्यकारणम्। मन्थरक आह—भद्र! भवति सुहृदयमसंदिग्धं यः क्षुत्क्षामोऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठमारोप्यानयति न मार्गेऽपि भक्षयति। उक्तं च यतः—

विकारं याति नो चित्तं वित्ते यस्य कदाचन।
मित्रं स्यात्सर्वकाले च कारयेन्मित्रमुत्तमम्॥ ११६॥
विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम्।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः॥ ११७॥

तथा च—

आपत्काले तु सम्प्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु सम्प्राप्ते दुर्जनोऽपि सुहृद्भवेत्॥ ११८॥

---

"विकार"मिति—यस्य वित्ते=धनविषये कदापि चित्तं=मनो विकारम्=विकृतिं लोभादिदूषितत्वं नो याति=न प्राप्नोति स सर्वकालेऽपि मित्रं स्यात्, तच्चोत्तमं मित्रं सर्वदैव कारयेत्=कुर्यादित्यर्थः॥ ११६॥

"विद्वद्भि" रिति—विद्वद्भिः=पण्डितैः, एतैश्चिह्नैः=लक्षणैः अविकृतमुखादिलक्षणैः असंशयं यथा स्यात्तथा अत्र=लोके सुहृदाम्=मित्राणाम् परीक्षाकरणम्=चित्तनिर्णयकरणम्, पण्डितैः=वेदज्ञैः होमाग्नेः=आहवनीयादेरिव प्रोक्तम्=कथितम्।

यथा वेदज्ञा दक्षिणावर्त्तत्वादिभिर्लक्षणैः यज्ञियं वह्निं परीक्षन्ते तद्वत् सुहृदोऽपि प्रोक्तैर्लक्षणैः मित्रतां विवेचयन्त इति भावः॥ ११७॥

"आपत्काल" इति—आपत्काले=विपत्तिसमये तु सम्प्राप्ते यन्मित्रम्=यत् हितकृत् मित्रमेव तत्=तदेव मित्रमित्यर्थः, वृद्धिकाले=धनार्थैश्वर्यलाभसमये सम्प्राप्ते तु दुर्जनोऽपि=दुर्हृदपि सुहृद् भवेत्=मित्रतां यातीत्यर्थः। आपदायां यः साहाय्यमाचरति स एव बन्धुरिति भावः॥ ११८॥

तन्ममाप्यद्यास्य विषये विश्वासः समुत्पन्नो यतो नीतिविरुद्धेयं मैत्री मांसाशिभिर्वायसैः सह जलचराणाम्। अथवा साध्विदमुच्यते—

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत्।
दृश्यते मित्रविध्वस्तात्कार्याद्वैरी परीक्षितः ॥ ११९ ॥

तत्स्वागतं भवतः। स्वगृहवदास्यतामत्र सरस्तीरे। यच्च वित्तनाशो विदेशवासश्च ते संजातस्तत्र विषये संतापो न कर्तव्यः। उक्तं च—

अभ्रच्छाया खलप्रीतिः सिद्धमन्नं च योषितः।
किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १२० ॥

अत एवं विवेकिनो (१) जितात्मानो धनस्पृहां न कुर्वन्ति। उक्तं च—

सुसंञ्चितैर्जीवनवत्सुरक्षितैर्निजेऽपि देहे न नियोजितैः क्वचित्।
पुंसो यमान्तं व्रजतोऽपि निष्ठुरैरेतैर्धनैः पञ्चपदी न दीयते॥१२१॥

---

"मित्रम्"इति—कोपि कस्यापि न नितान्तं मित्रं न च वैरकृत्=शत्रुरपि नितान्तं नेत्यर्थ, तथाहि—मित्रविध्वस्तात्=मित्रेण विनाशितात् कार्यात् वैरी=शत्रु. परीक्षित =विवेचितो भवतीति दृश्यते लोकैरिति शेष।

अस्यायमाशय —मित्रमपि मित्रकार्यविध्वंसकृत् भवेत्, तदाऽसावपि शत्रुता याति अत कार्यवशादेव मित्रताशत्रुते परीक्ष्येते ॥ ११९ ॥

"अभ्रे"ति—अभ्राणा मेघाना छाया=अनातप, खलप्रीति =खलस्य दुष्टस्य जनस्य प्रीति.=सौहार्दम्,सिद्धम्=पक्वम् अन्नम्=भोज्यम्,योषित =स्त्रियः, तथा—यौवनानि=तारुण्यानि धनानि च=एतानि सर्वाण्यभ्रच्छायादीनि किञ्चित्कालोपभोग्यानि=अल्पकालपर्यन्तमेव सम्भोगार्हाणि भवन्ति। अल्पकालस्थायीन्येतानि, अत एतेषा क्षये धीमता शोको न कर्त्तव्य इति भाव ॥ १२० ॥

(१) जितात्मान =जितो वशीकृत आत्माऽन्त करणं यैस्ते।

"सुसञ्चितै"रिति—सुसञ्चितैः=सु सम्यक कष्टं सोढ्वापि सञ्चितैः

अन्यच्च—

यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ १२२ ॥
निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः ।
निर्धनः प्राप्तदोषोऽपि सर्वत्र निरुपद्रवः ॥ १२३ ॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थान्कष्टसंश्रयान् ॥ १२४ ॥

---

जीवनवत्=प्राणवत् सुरक्षितै =सुपालितैः क्वचित्=कदाचित् निजेऽपि=स्वीयेऽपि देहे=शरीरे न नियोजितै –समर्पितै स्वशरीररक्षार्थमपि न व्ययीकृतैरित्यर्थ', निष्ठुरै =क्रूरस्वभावै सञ्चयितुरपि प्रायोऽपकारजनकत्वात्, एवम्भूतै एतैर्धनै· यमान्तम्=यमसमीपं व्रजत =गच्छतोऽपि पुंस पञ्चपदी=पञ्चाना पदाना समाहार पञ्चपदी पदपञ्चकमात्रमपि न दीयते=नार्प्यते, मरणकाले मात्रयापि सार्धं न गम्यते इत्यर्थ । वंशस्थवृत्तम् ॥ १२१ ॥

'**यथे**''ति—मत्स्यै =मीनैर्जले, श्वापदैः=घातुकैः सिंहादिभि भुवि, पक्षिभि =श्येनादिभि आकाशे, यथा आमिषम्=मांसं भक्ष्यते । तथा=तद्वत् वित्तवान्=धनी सर्वत्र=सुगमदुर्गमादिप्रदेशे यत्र यत्र याति तत्र तत्रैव भक्ष्यते इत्यनुषङ्ग । सर्वथैव धनवान् तस्करादिभिर्लुण्ठ्यते इति भाव ॥ १२२ ॥

"**निर्दोष**"मिति—निर्दोषम्=दोषरहितमपि वित्ताढ्यम्=धनिनं नृप = राजा दोषै योजयति=सम्बन्धयाति धनहरणलिप्सयेति शेष । निर्धनस्तु पुरुष प्राप्तदोषोऽपि=कृतापराधोऽपि सर्वत्र=देशे काले निरुपद्रव =धनापहरणजन्यविपत्तिशून्य इत्यर्थ· । प्राय सर्वेषा विपद् धनमूलैवेति भाव ॥ १२३ ॥

"**अर्थाना**"मिति–अर्थानाम्=धनाना अर्जने=सङ्ग्रहे, अर्जिताना=सङ्गृहीतानाञ्च रक्षणे दु खं भवतीति शेष (किमधिकं वक्तव्यम्) नाशे दु खं, व्यये=व्ययकरणे वितरणे दुःखम्=कष्टमेव, अतः कष्टसंश्रयान्=दु खाश्रयभूतान् अर्थान् धिक्=निन्द्या एवार्था इत्यर्थः । ''धिक्'' शब्दयोगे द्वितीया ॥ १२४ ॥

अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात्॥ १२५ ॥

अपरं विदेशवासजमपि वैराग्यं त्वया न कार्यम्। यतः—

को धीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।
यद्दंष्ट्रानखलाङ्गुलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥१२६॥

अर्थहीनः परे देशे गतोऽपि यः प्रज्ञावान्भवति स कथंचिदपि (१) न सीदति। उक्तं च—

---

"अर्थार्थी"ति—अयं मूढो जन अर्थार्थी=धनलिप्सु सन् यानि कष्टानि सहते=भुनक्ति, चेत्=यदि मोक्षार्थी=मुक्तिकाम सन् शतांशेनापि तानि=दु खानि सहेत तर्हि मोक्षमाप्नुयात्=जन्ममरणबन्धनरहितो भवेदित्यर्थः। परमपुरुषार्थरूपमोक्षप्राप्तिहेतुभूतसाधनानुष्ठाने तादृशं दु खं न भवति यादृशमर्थोपार्जन इति नितान्त परिहेयाऽर्थलिप्सेति भाव ॥ १२५ ॥

"को धीरस्ये"ति—धीरस्य=धैर्यशालिनो मनस्विन =महाशयस्य क स्वविषय =स्वीयो देश कोऽस्ति, को वा=अथवा कश्च विदेश.=परदेशः स्मृत =उक्त। (असौ मनस्वी) यं देशं श्रयते=सेवते तमेव बाहुप्रतापार्जितम्=बाहुप्रतापेन स्वभुजबलेन अर्जितं स्वायत्तं कुरुते=सम्पादयते, तत्रैव बहुधनादिसम्पत्तीरर्जयतीत्यर्थ।

उक्तमर्थं समर्थयते"यदि"ति—दंष्ट्रानखलाङ्गुलप्रहरणै.=दंष्ट्राः दाढा, नखा करजा, लाङ्गुलं पुच्छं, एतेषा प्रहरणै सञ्चालनैः सिंह यत्=यदेव वनम्=अरण्यं गाहते=विलोडयते, तस्मिन्नेव=वने हतद्विपेन्द्ररुधिरै =हता.मारिता ये द्विपेन्द्रा महागजास्तेषा रुधिरै. शोणितै आत्मन तृष्णां=पिपासामिच्छां वा छिनत्ति=दूरीकरोति पूरयतीत्यर्थ.। मनस्विन. परतन्त्रवृत्तयो न भवन्तीति भावः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास ॥१२६ ॥

(१) न सीदति=नैव क्लेशभाग्भवतीत्यर्थ।

कोऽतिभार समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥ १२७ ॥

तत् (१) प्रज्ञानिधिर्भवान्न प्राकृतपुरुपतुल्यः। अथवा--

उत्साहसम्पन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं मार्गति वासहेतोः ॥ १२८ ॥

अपरं प्राप्तोऽप्यर्थः (२) कर्मप्राप्त्या नश्यति । तदेतावन्ति दिनानि त्वदीयमासीत्। मुहूर्तमप्यनात्मीयं भोक्तुं न लभ्यते। स्वयमागतमपि विधिनापह्रियते।

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १२९ ॥

हिरण्यक आह--कथमेतत्। स आह--

---

"क" इति--समर्थानाम्=शक्तिशालिना अतिभार =अत्यायास कः ? व्यवसायिनाम्=सोद्योगाना वणिक्प्रभृतीना दूरं किम् ? सुविद्यानाम्=शोभनविद्यानां यस्या कस्या अपि विद्याया पारङ्गताना विदेश क ? प्रियवादिनाम् मधुरभापिणां पर =अन्य क ? नकोऽपीत्यर्थ । समर्थादीना न किञ्चिदपि भारादिकं भवतीति भाव ॥ १२७ ॥

(१) प्रज्ञानिधि=महामति । प्राकृतपुरुपतुल्य :=नीचपुरुपसम. ।

"उत्साहे"ति--उत्साहसम्पन्नम्=उद्योगिनम्, अदीर्घसूत्रम्=क्षिप्रमेव कार्यकारिणमनलसम्, क्रियाविधिज्ञम्=क्रियाविधिं जानातीति क्रियाविधिज्ञः कार्यानुष्ठानचतुरस्तम्, व्यसनेपु द्यूतादिपु असक्तम्=अलिप्तम्, शूरम्=वलिष्ठम्, कृतज्ञम्=परोपकारस्मर्त्तारम्, तथा--दृढसौहृदम्=दृढं स्थिरं सौहृदं मित्रता यस्य तम् एतादृशगुणोपेतं नरं वासहेतो =निवासार्थं लक्ष्मीः=श्री सम्पत्, स्वयम्=स्वयमेव मार्गति=अन्वेपयते। उपजातिवृत्तम् ॥ १२८ ॥

(२) कर्मप्राप्त्या=प्रारब्धकर्मवशेन ।

"अर्थस्ये"ति--अर्थस्य=धनस्य उपार्जनम्=सञ्चय कृत्वा यो मूढ =

## कथा ५ ।

कस्मिंश्चिदधिष्ठाने सोमिलको नाम (१) कौलिको वसति स्म । स च (२) अनेकविधपट्टरचनारञ्जितानि पार्थिवोचितानि सदैव वस्त्राण्युत्पादयति । परं तस्य चानेकविधपट्टरचनानिपुणस्यापि न (३) भोजनाच्छादनाभ्याधिकं कथमप्यर्थमात्रं संपद्यते । अथान्ये तत्र सामान्यकौलिकाः (४) स्थूलवस्त्रसम्पादनविज्ञानिनो महर्द्धिसंपन्नाः । तानवलोक्य स स्वभार्यामाह— प्रिये ! पश्यैतान्स्थूलपट्टकारकान्धनकनकसमृद्धान् । (५) तदधारणकं ममैतत्स्थानम् । तदन्यत्रोपार्जनाय गच्छामि । सा प्राह—भोः ! प्रियतम ! मिथ्या प्रलपितमेतद्यदन्यत्र गतानां धनं भवतीति । उक्तं च—

उत्पतन्ति यदाकाशे निपतन्ति महीतले ।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति ॥ १३० ॥

---

नन्दनाति स भोग नैव समश्नुते=न प्राप्नोति, अत्र कथानक यथा— महत् अरण्य=वनम् आसाद्य=प्राप्य सोमिलक इति ॥ १२६ ॥

(१) कौलिक =तन्तुवाय । (२) अनेकेति—अनेकविधा =नानाप्रकाराः या पटरचना=वस्त्रवयन तेन रञ्जितानि सुन्दराणि । पार्थिवोचितानि= पार्थिवाना राज्ञामुचितानि परिधानयोग्यानि । वस्त्राणि=वासासि । उत्पादयति= वयति । (३) भोजनाच्छादनाभ्यधिकम्=अत्यावश्यकभोजनादिव्यवहारमात्राद‌धिकमित्यर्थ । (४) स्थूलेति—स्थूलवस्त्रवयनकुशला । महर्धिसम्पन्नाः बहुधनिन । (५) अधारणकम्=न धारकमित्यर्थ. । अस्मिन् स्थाने मम भाग्यलाभो नास्तीत्यर्थ ।

"उत्पतन्ती"ति—आकाशे=गगने यत् उत्पतन्ति=उड्डीयन्ते, यच्च महीतले=पृथिव्या निपतन्ति=कदाचिदवतरन्ति,तदापि=तदपि पक्षिणाम्=तिरश्चामपि अदत्तम्=पूर्वजन्मनि अकृतम् न=नैव उपतिष्ठति=उपनतं भवति । यत्पुरा दत्तं तदेव लभ्यत इत्यत सन्तोष एव कार्य इति भाव ॥ १३० ॥

तथा च—

न हि भवति यन्न भाव्यं भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति यस्य तु भवितव्यता नास्ति॥१३१॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पुराकृतं कर्म कर्तारमनुगच्छति॥१३२॥

शेते सह शयानेन गच्छन्तमनुगच्छति।
नराणां प्राक्तनं कर्म तिष्ठेत्त्वथ सहात्मना॥१३३॥

यथा छायातपौ नित्यं सुसंबद्धौ परस्परम्।
एवं कर्म च कर्ता च संश्लिष्टावितरेतरम्॥१३४॥

तस्मादत्रैव (१) व्यवसायपरो भव। कौलिक आह—प्रिये! न सम्यगभिहितं भवत्या। व्यवसायं विना कर्म न (२)फलति।

---

"नही"ति—व्याख्यातं प्राक् पृ. २५१॥१३१॥

"यथे"ति—धेनुसहस्रेषु=गोसहस्रेषु मध्ये वत्स=तर्णक यथा स्वमातरम्=स्वजननीं विन्दति=लभते, तथा=तद्वत् पुरा=पूर्वस्मिन् जन्मनि कृत कर्म कर्त्तारम्=स्वकृतस्य कर्मण फलस्य भोक्तारं जीवम् अनुगच्छति=अनुयाति। यद् येन यादृशं क्रियते तत्तेन तादृशमेवावश्यं भुज्यत इति भाव॥१३२॥

"शेते" इति—नराणाम्=प्राणिना प्राक्तनं कर्म शयानेन=निद्रा कुर्वाणेन नरेण सह शेते, गच्छन्तं=चलन्तञ्च अनुगच्छति, अथ—आत्मना सह तिष्ठेत् स्थितमनुतिष्ठतीत्यर्थ। प्राक्तनं कर्म फलप्रदानायोद्यतं केनापि वारयितुं न शक्यत इति भावः॥१३३॥

"यथे"ति—यथा=येन प्रकारेण छायातपौ नित्यं=सततं परस्परसम्बद्धौ=म्मिलितौ तिष्ठत इति शेष, यत्रैवातपस्तत्रैव छायेत्यर्थ। एवमेव कर्म च चैतौ द्वावपि इतरेतरम्=अन्योन्यं संश्लिष्टौ=संयुक्तौ भवत इत्यर्थ। ोक्तैव प्राप्नोति भाव॥१३४॥

(१) व्यवसायपर=उद्योगपर। (२) फलति=सिद्धं भवति।

उक्तं च—

यथैकेन न हस्तेन तालिका सम्प्रपद्यते ।
तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम् ॥ १३५ ॥
पश्य कर्मवशात् प्राप्तं भोज्यकालेऽपि भोजनम् ।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथंचन ॥ १३६ ॥

तथा च—

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ १३७ ॥

तथा च—

उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः ।
न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः ॥ १३८ ॥
उद्यमेन विना राजन्न सिद्ध्यन्ति मनोरथाः ।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ १३९ ॥

---

"यथे" ति—एकेन हस्तेन=पाणिना यथा तालिका=पाणितलसंशब्द न सम्प्रपद्यते=नैवोत्पद्यते, तथा उद्यमपरित्यक्तम्=उद्योगेन विहीनं कर्मणः फलमपि न स्मृतम्=सिद्ध न भवतीत्यर्थ । दैवं कर्मापि पुरुषकारापेक्षमिति भाव ॥१३५॥

"पश्ये"ति भोज्यकाले=भोजनसमये कर्मवशात्=प्राक्तनात् कर्मणः प्राप्तमपि भोजनं कथञ्चन=कथमपि हस्तोद्यमं=हस्तेन ग्रासत्रोटनरूपोद्योगं विना वक्त्रे=मुखे न प्रविशेत् इति त्वं पश्य=आलोचय। उद्योगकरणं पुरुषस्य धर्म इति भाव ॥ १३६ ॥

"उद्योगिनम्" इति—व्याख्यातं प्राक् ११५ पृ० ।

"उद्यमेने"ति—हि=निश्चये, उद्यमेन कार्याणि सिद्ध्यन्ति=फलन्ति मनोरथैः =मनोराज्यैर्न, तथाहि—सुप्तस्य=शयानस्य सिंहस्य मुखे=आस्ये मृगा =पशवो न प्रविशन्ति । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास ॥१३८॥

"उद्यमेने"ति—हे राजन् ! उद्यमेन विना मनोरथाः=सङ्कल्पा न

स्वशक्त्या कुर्वतः कर्म न चेत्सिद्धिं प्रयच्छति ।
नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥ १४० ॥

तन्मयावश्यं देशान्तरं गन्तव्यम् इति निश्चित्य वर्धमानपुरं गतः। तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः। अथार्धपथे गच्छतस्तस्य कदाचिदटव्यां पर्यटतो भगवान् रविरस्तमुपागतः।तदासौ (१) व्यालभयात्स्थूलतरवटस्कन्धमारुह्य यावत्प्रसुप्तस्ताव (२) न्निशीथे स्वप्ने द्वौ पुरुषौ (३) रौद्राकारौ परस्परं प्रजल्पन्तावशृणोत् । तत्रैक आह—(४) भोः! कर्तः! त्वं किं सम्यङ् न वेत्सि यदस्य सोमिलकस्य (५) भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति । तत्किं त्वयास्य सुवर्णशतत्रयं प्रदत्तम्। स आह—भोः! कर्मन्! मयावश्यं दातव्यं (६) व्यवसायिनाम् । तत्र च तस्य (७) परिणतिस्त्वदायत्ता इति । अथ यावदसौ कौलिक प्रबुद्धः

---

सिद्ध्यन्ति, यद् भाव्यं तद् भविष्यति इति=एतत् कातरा=दीना नि.-सत्त्वा जना जल्पन्ति=भाषन्ते ॥ १३९ ॥

"स्वशक्त्ये"ति—चेत्=यदि स्वशक्त्या=स्वया शक्त्या सामर्थ्येन स्वशक्त्यनुसारं कुर्वत=कार्यं साधयत पुरुषस्य कर्म सिद्धिम्=फल न प्रयच्छति=नोत्पादयते, तत्र=तस्यामवस्थाया पुमान् नोपालभ्य=उपालम्भविषयो न भवति तिरस्कारार्हो न जायते । कथम्भूत दैवान्तरितपौरुष= दैवेन प्राक्तनदुरदृष्टेन अन्तरितं विघ्नितं पौरुषं यस्य स तादृश । उद्योग पुरुषस्य कर्त्तव्यम्, फलन्तु परमेश्वरायत्तमिति भाव ॥ १४० ॥

(१) व्यालभयात्=सर्पत्रासात् । स्थूलतरवटस्कन्धम्=अतिपीवरवृक्ष- ७ ।(२) निशीथे=अर्धरात्रे । (३) रौद्राकारौ=भीषणौ (४) ।. ! कर्त्त=हे कर्मफलदात प्रभो!। कर्तृशब्दस्य सम्बुद्धावेकवचनम्। (५) ति—भोजनाच्छादनाभ्याधिका=अन्नवासोऽतिरिक्ता । समृद्धि=सम्पत् । प्रारब्धे इति शेष ।(६) व्यवसायिनाम्=उद्योगिनाम्। सम्बन्धविवक्षया षष्ठी । व्यवसायिभ्य इत्यर्थ ।(७) परिणति=परिपाक परिणाम इति यावत् ।

(१) सुवर्णग्रन्थिमवलोकयति तावद्रिक्तं पश्यति । ततः (२) साक्षेपं चिन्तयामास—अहो ! किमेतत् ! महता कष्टेनोपार्जितं वित्तं (३) हेलया क्वापि गतम् । तद् (४) व्यर्थश्रमोऽकिंचनः कथं स्वपत्न्या मित्राणां च मुखं दर्शयिष्यामि—इति निश्चित्य तदेव (५) पत्तनं गतः । तत्र च (६) वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः । यावदर्धपथे भूयोऽटवीगतस्य भगवान् भानुरस्तं जगाम । अथ सुवर्णनाशभयात्सुश्रान्तोऽपि न विश्राम्यति । केवलं (७) कृतगृहोत्कण्ठः सत्वरं व्रजति । अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ चाशृणोत् । तत्रैकः प्राह—भोः ! कर्तः ! किं त्वयैतस्य सुवर्णशतपञ्चकं प्रदत्तम् । तत्किं न वेत्सि. यद्भोजनाच्छादनाभ्यधिकमस्य किंचिन्नास्ति । स आह—भोः ! कर्मन् ! मयावश्यं देयं व्यवसायिनाम् । तस्य परिणामस्त्वदायत्तः । तत्किं माम् (८) उपालम्भयसि । तच्छ्रुत्वा सोमिलको यावद्ग्रन्थिमवलोकयति तावत्सुवर्णं नास्ति । ततः परं दुःखमापन्नो व्यचिन्तयत्—अहो ! किं मम धनरहितस्य जीवितेन । तदत्र वटवृक्ष आत्मानम् (९) उद्बध्य प्राणांस्त्यजामि । एवं निश्चित्य (१०) दर्भमयीं रज्जुं विधाय स्वकण्ठे

---

(१) सुवर्णग्रन्थिम्=(वर्षत्रयमुषित्वा उपार्जितानां) सुवर्णानां सुवर्णमुद्राणां ग्रन्थिं वसनप्रान्तेन बन्धनम् । रिक्तम्=शून्यम् । (२) साक्षेपम्=सशोकम् । (३) हेलया=अवज्ञया अतर्कितभावेनेत्यर्थः । (४) व्यर्थश्रमः=वृथोद्यम । अकिञ्चन =निर्धन । (५) पत्तनम्=पुटभेदनं नगरमित्यर्थः । (६) वर्षमात्रेण=एकवर्षेण । "अपवर्गे तृतीया" (२।३।६) इति सूत्रेणात्र सुवर्णफलप्राप्तौ-द्योत्यायां कालात्यन्तसंयोगे तृतीया । (७) कृतगृहोत्कण्ठ =कृता गृहं प्रति उत्कण्ठा येन स । (८) उपालम्भयसि=उपालम्भं करोषि न्यक्करोषीत्यर्थः । उपोपसृष्टात् लभधातोः स्वार्थे णिचि "लभेश्च" (७।१।६४) इति सूत्रेण नुमि रूपम् । अथवा तत्करोत्यर्थे णिच् । (९) उद्बध्य=पाशयित्वा । (१०) दर्भमयीं=कुशमयीम् ।

पाशं नियोज्य शाखायामात्मानं निबध्य यावत्प्रक्षिपति ताव देकः पुमानाकाशस्थ एवेदमाह—भो ! भोः ! सोमिलक ! मैवं (१) साहसं कुरु। अहं ते वित्तापहारकः। न ते भोजनाच्छादनाभ्यधिकां (२) वराटिकामपि सहामि। तद्गच्छ स्वगृहं प्रति। अन्यच्च भवदीयसाहसेनाहं तुष्टः। तथा मे न स्याद् व्यर्थं दर्शनम्। तत्प्रार्थ्यतामभीष्टो वरः कश्चित्। सोमिलक आह-यद्येवं तद्देहि मे प्रभूतं धनम्। स आह—भोः ! किं करिष्यसि भोगरहितेन धनेन, यतस्तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति। उक्तं च—

किं तया क्रियते लक्ष्म्या या वधूरिव केवला।
या न वेश्येव सामान्या पथिकैरुपभुज्यते॥ १४१॥

सोमिलक आह—यद्यपि तस्य धनस्य भोगो नास्ति, तथापि तद्भवतु। उक्तं च—

कृपणोऽप्यकुलीनोऽपि सज्जनैर्वर्जितः सदा।
सेव्यते स नरो लोके यस्य स्याद्वित्तसञ्चयः॥ १४२॥

---

(१) साहसम्=हठकृत्यम्। (२) वराटिकाम्=कपर्दिकाम्। सहामि=मर्षये। "सह" धातोश्चौरादिकस्य विकल्पेन लटि रूपम्। पक्षे "साहयति" इति भवति।

"कि"मिति—या=लक्ष्मी केवला वधूरिव=स्नुषेव पुत्रमात्रभोग्या, या च सामान्या=साधारणी वेश्येव=पण्यस्त्रीरिव पार्थिकै=सर्वसाधारणजनै उपभुज्यते=सेव्यते नतु स्वयम्, तया लक्ष्म्या=सम्पत्त्या। किं क्रियते=किमपि फल नास्तीत्यर्थ। या स्वभोग्या न भवेत् पुत्रादिभिरेव भोग्या स्यात्सा दमीर्न काम्येति वक्तुराशय॥ १४१॥

"कृपण"इति—यस्य=पुरुषस्य वित्तसञ्चय=वित्तस्य धनस्य सञ्चय द्धि स्यात् सञ्चितधनं भवेदित्यर्थ, स कृपण=व्ययविमुखोऽपि, अकु- ोऽपि=नीचवंशोऽपि, तथा सदा सज्जनै=सदाचारै साधुपुरुषै वर्जित= त्यक्तोऽपि लोके=संसारे सेव्यते=पूज्यते लोकैरिति शेष। धनसङ्ग्रह ८ एवेति भाव॥ १४२॥

तथा च—

शिथिलौ च सुबद्धौ च पततः पततो न वा ।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च ॥ १४३ ॥

पुरुष आह—किमेतत् । सोऽब्रवीत्—

कथा ६ ।

कस्मिंश्चिदधिष्ठाने (१) तीक्ष्णविषाणो नाम महावृषभः प्रतिवसति स्म । स च (२) मदातिरेकात्परित्यक्तनिजयूथः शृङ्गाभ्यां नदीतटानि विदारयन् स्वेच्छया (३) मरकतसदृशानि शष्पाणि भक्षयन्नरण्यचरो बभूव । अथ तत्रैव वने प्रलोभको नाम शृगालः प्रतिवसति स्म । स कदाचित्स्वभार्यया सह नदीतीरे सुखोपविष्टस्तिष्ठति । अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव पुलिनमवतीर्णः । ततश्च तस्य लम्बमानौ (४) वृषणाववलोक्य शृगाल्या शृगालोऽभिहितः—स्वामिन् ! पश्यास्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ । तदेतौ क्षणेन प्रहरेण वा पतिष्यतः । एवं ज्ञात्वा भवता (५) पृष्ठानुयायिना भाव्यम् । शृगाल आह—प्रिये ! न ज्ञायते कदाचिदेतयोः पतनं भविष्यति वा न वा । तत्किं वृथा श्रमाय मां नियोजयसि । अत्रस्थस्तावज्जलार्थमागतान् मूषकान् भक्ष-

---

"शिथिला"विति—हे भद्रे ! =भन्दनीये ! मया दश पञ्च च वर्षाणि= पञ्चदशसंवत्सरान् व्याप्य शिथिलौ च=लम्बमानौ च, सुबद्धौ च दृढतया सश्लेषं प्राप्तौ च, पततः न वा पततः वृषणाविति शेषः, निरीक्षितौ=दृष्टौ । चापल्याद्धेतोरिति भावः । एतत्तत्त्वन्त्वग्रे स्फुटीभविष्यति ॥ १४३ ॥

(१) "तीक्ष्णविषाण"=तीक्ष्णौ खरौ विषाणौ शृङ्गौ यस्य स खरशृङ्गः अन्वर्थं नामेदं तस्येत्याशयः । (२) मदातिरेकात्=मदस्य गर्वस्य अतिरेकात् आधिक्यात् मदोन्मत्ततयेत्यर्थः । (३) मरकतसदृशानि= मरकतमणिवद्धरितानि । शष्पाणि=बालतृणानि । (४) वृषणौ= अण्डकोषौ । (५) पृष्ठानुयायिना=पश्चाद्गामिना ।

यिष्यामि समं त्वया, मार्गोऽयं यतस्तेषाम् । अपरं यदि त्वां मुक्त्वास्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि, तदागत्यान्यः कश्चिदेतत्स्थानं समाश्रयिष्यति । नैतद्युज्यते कर्तुम् । उक्तं च-

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ १४४ ॥

शृगाल्याह—भोः ! कापुरुषस्त्वम् । यत्किंचित्प्राप्तं तेनापि सन्तोषं करोषि । उक्तं च—

सुपूरा स्यात्कुनदिका सुपूरो मूषकाञ्जलिः ।
सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १४५ ॥

तस्मात्पुरुषेण सदैवोत्साहवता भाव्यम् । उक्तं च—

यत्रोत्साहसमारम्भो यत्रालस्यविहीनता ।
नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १४६ ॥

---

'य" इति—यो नर ध्रुवाणि=स्थिराणि निश्चितानि परित्यज्य=परिहाय अध्रुवाणि=अनिश्चितानि निषेवते=आश्रयते तस्य ध्रुवाणि नश्यन्ति, अध्रुवम्= अनिश्चितन्तु नष्टमेव=प्रागेव नष्टमित्यर्थ ॥१४४॥

"सुपूरे"ति—कुनदिका=तुच्छा नदी सुपूरा स्यात्=अल्पेनैव पूरणीया भवेत्, मूषकाञ्जलि =मूषकस्याञ्जलिरपि ( अतिक्षुद्रत्वात् ) सुपूर स्यात् । सुसन्तुष्ट =अल्पलाभेनैव तोषं प्राप्त कापुरुष =कुत्सितो जन स्वल्पकेनापि= अत्यल्पवस्तुनापि तुष्यति । अनलस उत्तमस्त्वेतादृशो न भवतीति भाव ॥ १४५ ॥

"यत्रे"ति—यत्र उत्साहसमारम्भ =उत्साहेन हृदयहर्षेण समारम्भ णामुपक्रम उद्योग इति यावत्, यत्र च आलस्यविहीनता=निरुद्योग- यता आलस्यपरित्याग इत्यर्थ, तथा—नयश्च विक्रमश्च नयविक्रमौ ।तबले तयो·संयोग सम्बन्धो द्वयोरपि यथायोगं प्रयोग तत्र=तत्रैव श्री = पत् अचला=स्थिरा इति ध्रुवं=निश्चितम् । पौरुषपक्षे एव विशिष्टा स्थिति पत्तीनामिति भाव ॥ १४६ ॥

तद्दैवमिति संचिन्त्य त्यजेन्नोद्योगमात्मनः।
अनुयोगं विना तैलं तिलानां नोपजायते ॥ १४७ ॥

अन्यच्च—

यः स्तोकेनापि संतोषं कुरुते मन्दधीर्जनः।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥१४८ ॥

यच्च त्वं वदसि, एतौ पतिष्यतो न वेति, तदप्ययुक्तम्।
उक्तं च—

कृतनिश्चयिनो वन्द्यास्तुङ्गिमा न प्रशस्यते।
चातकः को वराकोऽयं यस्येन्द्रो वारिवाहकः ॥ १४९ ॥

---

"तद्दैवम्" इति—तत्=तस्मात् कारणात् उत्साहसमारम्भद्वारैव श्रिया स्थिरताहेतो दैवम्=प्रारब्धं कर्मेति संचिन्त्य="यद्भाग्ये तदेव लप्स्यते" इत्यालोच्य आत्मन उद्योगम्=पौरुषं न त्यजेत्=नैव हापयेत्। तथाहि—तिलाना तैलम्=तिलभव स्नेह अनुयोगम्=पीडनयन्त्रसञ्चालनात्मकव्यापारं विना नोपजायते=नाविर्भवति नैव लभ्यते इत्यर्थ ॥ १४७ ॥

"य" इति—य=यो मन्दधी=मूढबुद्धि जन नर स्तोकेनापि=अल्पकेनापि लब्धेन वस्तुना सन्तोषम्=अलम्बुद्धिं कुरुते=धत्ते, भाग्यहीनस्य=हीन(मन्द)भाग्यस्य तस्य=नरस्य दत्तापि=केनचिदर्पिताऽपि श्रीः=सम्पत्ति. मार्ज्यते=विनाश्यत इत्यर्थ। सन्तुष्टजनपार्श्वे श्री स्थिरा न भवतीति-भाव ॥ १४८ ॥

"कृते" ति—कृतनिश्चयिन=दृढनिश्चया. पुरुषा वन्द्या.=वन्दनीया मान्या भवन्तीति शेष, तुङ्गिमा=(केवलम्) उच्चाभिमान न प्रशस्यते=नैव स्तूयते न योग्यो भवतीत्यर्थ, कोऽयं नाम वराक=क्षुद्रोपि चातक.=स्तोकक पक्षी य कृतनिश्चय, यस्य=कृतनिश्चयस्य इन्द्र=देवराजोऽपि वारिवाहक.=जलप्रदाता।

अतिक्षुद्रोऽपि चातक इन्द्रदत्तमेव जलं पास्यामीति कृत(दृढ)निश्चय सन् जलायेन्द्रमेवाभ्यर्थयते, तस्य तादृशं दृढं सङ्कल्पं निश्चित्य देवराजोऽपि तस्य कामना प्रपूरयति, अतो दृढसङ्कल्पानामवश्यमेवेष्टसिद्धिरिति भाव।

अपरं मूषकमांसस्य (१) निर्विरणाहम्। एतौ च मांसपिण्डो पतनप्रायौ दृश्येते। तत्सर्वथा नान्यथा कर्तव्यम् इति। अथासौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णविषाणस्य पृष्ठमन्वगच्छत्। अथवा साध्विदमुच्यते—

तावत्स्यात्सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ह्रियते बलात्॥ १५०॥
अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम्।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः॥ १५१॥

एवं स तस्य पृष्ठतः सभार्यः परिभ्रमंश्चिरकालमनयत्। न च (२) तयोः पतनमभूत्। ततश्च निर्वेदात्पञ्चदशे वर्षे शृगालः स्वभार्यामाह--

---

"कृतनिश्चयिनो वन्द्यस्तुङ्गिमा न प्रशस्यते" इति पाठे तु—कृतनिश्चयिन=दृढसङ्कल्पस्य नरस्य वन्द्य=स्तुत्य तुङ्गिमा=अभिमान न=अस्माकं प्रशस्यते=प्रशंसनीयोऽभिलषणीयो भवतीत्यर्थो बोध्य। "प्रशस्यते" इति कर्मकर्त्तरि प्रयोग। "न" इति सम्बन्धविवक्षया षष्ठी॥ १४६॥

(१) निर्विरणा=विरक्ता।

"तावदि" ति—अत्र=संसारे तावदेव पुरुष सर्वकृत्येषु=सर्वेषु कार्येषु स्वयम्प्रभु=स्वतन्त्र यावत् स्त्रीवाक्याङ्कुशविक्षुण्ण=स्त्रीवाक्यमेवाङ्कुश ताडनी तेन विक्षुण्ण=विद्ध बलात्=हठात् प्रसह्य न ह्रियते=हृतो न भवति। "ध्रियते" इति पाठे तु "न वर्त्तत" इत्यर्थो बोध्य॥१५०॥

"अकृत्यम्" इति--स्त्रीवाक्यप्रेरित=स्त्रीणा नारीणा वाक्येन रितो नियुक्तो नर अकृत्यम्=करणानर्हमपि कृत्यं=कर्त्तव्य मन्यते, तथा-यमपि सुग=सुगमं मन्यते, तथा—अभक्ष्यम्=भक्षणायोग्यमपि गोमा-ादि भक्ष्य मन्यते।

स्त्रीवशा पुरुषा प्रतिकूलमपि सर्वमनुकूलमिति भावयन्ते इति ाव॥ १५१॥

(२) तयो=वृषणयो।

शिथिलौ च सुबद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे दश वर्षाणि पञ्च च॥ १५२ ॥

तयोस्तत्पश्चादपि पातो न भविष्यति। तत्तदेव स्वस्थानं गच्छावः। अतोऽहं ब्रवीमि—"शिथिलौ च सुबद्धौ च" इति॥ पुरुष आह—यद्येवं तद्गच्छ भूयोऽपि वर्धमानपुरम्। तत्र द्वौ वणिक्पुत्रौ वसतः। एको गुप्तधनः, द्वितीय उपभुक्त-धनः ततस्तयोः स्वरूपं बुद्ध्वैकस्य वरः प्रार्थनीयः। यदि ते धनेन प्रयोजनमभक्षितेन. ततस्त्वामपि गुप्तधनं करोमि। अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमि इति। एवमुक्त्वाऽदर्शनं गतः। सोमिलकोऽपि विस्मितमना भूयोऽपि वर्धमानपुरं गतः। अथ सन्ध्यासमये श्रान्तः कथ-मपि तत्पुरं प्राप्तो गुप्तधनगृहं पृच्छन्कृच्छ्राल्लब्ध्वास्तमितसूर्ये प्रविष्टः। अथासौ भार्यापुत्रसमेतेन गुप्तधनेन (१) निर्भर्त्स्य-मानो हठाद् गृहं प्रविश्योपविष्टः। ततश्च भोजनवेलायां तस्यापि (२) भक्तिवर्जितं किंचिदशनं दत्तम्। ततश्च भुक्त्वा तत्रैव यावत्सुप्तो निशीथे पश्यति तावत्तावपि द्वौ पुरुषौ परस्परं मन्त्रयतः। तत्रैक आह—भोः! कर्तः! किं त्वयास्य गुप्तध-नस्यान्योऽधिको व्ययो निर्मितो यत्सोमिलकस्यानेन भोजनं दत्तम्। तदयुक्तं त्वया कृतम्। स आह—भोः! कर्मन्! न ममात्र दोषः। मया पुरुषस्य लाभप्राप्तिर्दातव्या। तत्परि-णतिः पुनस्त्वदायत्ता इति। अथासौ यावदुत्तिष्ठति तावद् गुप्तधनो (३) विषूचिकया खिद्यमानो रुजाभिभूतः क्षणं ति-ष्ठति। ततो द्वितीयेऽहि (४) तद्दोषेण कृतोपवासः संजातः।

---

"शिथिलौ"विति-व्याख्यातं पुरा॥ १५२॥

(१) निर्भर्त्स्यमान=तिरस्क्रियमाण। (२) भक्तिवर्जितम्=प्रीति-शून्यम्। (३) विषूचिकया=अतीसाररोगेण। (४) तद्दोषेण=उक्तेन व्याधिना। कृतोपवास=अनशनव्रत।

सोमिलकोऽपि प्रभाते तद्गृहान्निष्क्रम्योपभुक्तधनगृहं गतः। तेनापि चाभ्युत्थानादिना सत्कृतो (१) विहितभोजनाच्छादनसंमानस्तस्यैव गृहे भव्यशय्यामारुह्य सुष्वाप। ततश्च निशीथे यावत्पश्यति तावत्तावेव पुरुषौ मिथो मन्त्रयतः। अथ तयोरेक आह—'भोः! कर्तः! अनेन सोमिलकस्योपकारं कुर्वता प्रभूतो व्ययः कृतः। तत्कथय कथमस्यो (२) द्धारकविधिर्भविष्यति। अनेन सर्वमेत (३) द्व्यवहारकगृहात्समानीतम्। स आह—भोः! कर्मन् मम कृत्यमेतत्। परिणतिस्त्वदायत्ता इति। अथ प्रभातसमये राजपुरुषो (४) राजप्रसादजं वित्तमादाय समायात उपभुक्तधनाय समर्पयामास—तद्दृष्ट्वा सोमिलकश्चिन्तयामास—संचयरहितोऽपि वरमेष उपभुक्तधनः। नासौ कदर्यो गुप्तधनः। उक्तं च—

अग्निहोत्रफला वेदाः शीलवित्तफलं श्रुतम्।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम्॥ १५३॥

---

अत्रायमाशयः—सोमिलकाय तेनैकवारं भोजनं दत्तम्, तेनात्मनस्तदंशस्याल्पत्वं जातमिति कृत्वा एकदिनोपवासेन तत्पूरणं कृतमिति।

(१) विहितेति—विहितः सम्पादितः भोजनाच्छादनाभ्यां सम्मानः आदरो यस्य स तथोक्तः। भव्यशय्याम्=उत्तमशयनीयम्। (२) उद्धारकविधिः=परिशोधकरणं व्ययीकृतस्य धनस्य पूरणमित्यर्थः। (३) व्यवहारगृहात्=व्यवसायिभवनात्। समानीतम्=मूल्यमदत्त्वैव समयान्तरे तुभ्यमर्पयिष्यामीति प्रतिज्ञां दत्त्वा सङ्गृहीतम्। (४) राजप्रसादजम्=कुतोऽपि हेतो राज्ञः सकाशात् पुरस्काररूपेण प्राप्तम्, इदञ्च विधात्रा तस्मै अतिथिकृतसत्कारात्मकपुण्यकर्मफलरूपतया प्रेषितमित्याशयः।

"अग्निहोत्रे" ति—वेदाः अग्निहोत्रफलाः=अग्निहोत्रं फलं प्रयोजनं येषां ते तादृशाः, श्रुतं=शास्त्रं शास्त्रजं ज्ञानं वा शीलवित्तफलम्=शीलं सदाचारः वित्तं धनञ्च फलं यस्य तत् तादृशम्, दाराः=स्त्रियः रतिपुत्रफलाः= रतिर्भोगः पुत्रः फलं येषां तादृशाः, धनम्=वित्तम् दत्तभुक्तफलम्=दत्त

तद्विधाता मां दत्तभुक्तफलं करोतु । न कार्यं मे गुप्तधनेन । ततः सोमिलको दत्तभुक्तधनः संजातः । अतोऽहं ब्रवीमि—"अर्थस्योपार्जनं कृत्वा" इति ॥ तद्भद्र ! हिरण्यक ! एवं ज्ञात्वा धनविषये संतापो न कार्यः । अथ विद्यमानमपि धनं (१) भोज्यवन्ध्यतया तदविद्यमानं मन्तव्यम् । उक्तं च—

गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ १५४ ॥

तथा च—

उपार्जितानामर्थानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १५५ ॥
दातव्यं भोक्तव्यं धनविषये सञ्चयो न कर्तव्यः ।
पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये ॥ १५६ ॥

---

दानं भुक्तं भोगश्च फलं यस्य तत्तादृशमस्ति ।

अत्रेदं तात्पर्यम्—अग्निहोत्रादिकर्मानुष्ठानमेव वेदाध्ययनफलम्, श्रुतज्ञो विद्वान् सुशीलो भवति सत्पात्रत्वाच्च सम्पत्तिं प्राप्नोति, भार्यास्तु पुत्रार्थे रमणार्थं च क्रियन्ते, धनस्य फलं दानं भोगश्च, अन्यत्तु सर्वं निष्फलमेवेति ॥ १५३ ॥

(१) भोज्यवन्ध्यतया=भोगात्मकफलशून्यतया ।

"गृहमध्ये"ति—यदि गृहमध्यनिखातेन=गृहस्य मध्ये प्रोथितेन भोगविहीनेनेत्यर्थः, धनेन=वसुना तेनैव धनेन किं वयं धनिनः=श्रेष्ठिनो न भवामः । भोगशून्यानां धनिनां निर्धनानाञ्च नैव कोऽपि विशेष इति भावः ॥१५४॥

"उपार्जितानाम्"इति—उपार्जितानाम्=सञ्चितानाम् अर्थानां हि=निश्चयेन त्यागः=दानमेव रक्षणम्=रक्षासाधनं बोध्यम् । केषां क इव—तडागोदरसंस्थानाम्=तडागस्य ह्रदस्य उदरे मध्ये स्थितानाम् अम्भसाम्=जलानाम् परीवाह इव=प्रस्रवणमिव जलोच्छ्वास इवेत्यर्थः । यथा निरुद्धानि जलानि पूतिगन्धीनि भवन्ति नश्यन्ति, तद्वत् दानशून्यं धनमपि पापोत्पत्तिहेतुः सन्नाशमात्रफलमेवेति भावः ॥ १५५ ॥

"दातव्यम्"इति—धनविषये दातव्यं=दानं कर्तव्यम्, भोक्तव्यम्=

अन्यच्च—

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥१५७॥

एवं ज्ञात्वा विवेकिना स्थित्यर्थं वित्तोपार्जनं कर्तव्यम्, यतो दुःखाय तत्। उक्तं च—

धनादिकेषु विद्यन्ते येऽत्र मूर्खाः सुखाशया।
तप्ता ग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनम् ॥ १५८ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ १५९ ॥

---

भोग कर्त्तव्य, सञ्चय =सङ्ग्रहो न कर्त्तव्य । इह=लोके मधुकरीणाम्= भ्रमरीणा मधुमक्षिकाणा सञ्चितम्=सङ्गृहीतम् अर्थम्=मधुरूपं पदार्थम् अन्यजना हरन्ति इति त्वं पश्य=आलोचयेति वाक्यार्थस्य कर्मत्वम् ॥१५६॥

"**दानम्**"इति-श्लोको निगदार्थ । आर्यावृत्तम्॥ १५७ ॥

"**धनादिकेष्वि**"ति--इह=लोके ये मूर्खा धनादिकेषु=धनप्रभृति-भोग्येषु पदार्थेषु सुखाशया=सुखस्याशया अभिलाषेण स्वसुखमभिलष्येत्यर्थ । विद्यन्ते=तिष्ठन्ति, धनादिकमेव सुखोपायो नान्य इति मन्यन्ते, ते ग्रीष्मेण तप्ता =नैदाघतापसन्तप्ता सन्त शैत्यार्थम्=शीतलतालाभाय हुताशनम= वह्निं सेवन्ते=भजन्ते ।

अत्र यद्धनादिना सुखाशाकरणं तद् ग्रीष्मतापतप्तस्य वह्निसेवनसम-मिति यत्तद्भ्या द्वयोर्वाक्यार्थयोरैक्यारोपात् निदर्शनालङ्कार । "वाक्यार्थयो सदृशयोरैक्यारोपो निदर्शना' इति लक्षणात् ॥ १५८ ॥

"**सर्पा**" इति—सर्पा =भुजङ्गमा -पवनं पिबन्ति न च ते दुर्बला = क्षीणा, वनगजा =आरण्या हस्तिन शुष्कै =अनार्द्रैरपि तृणै =घासै बलिनो भवन्ति,मुनिवरा =मननशीलास्तपस्विन कन्दै =मूलकै फलैश्च कालम्=समय गमयन्ति=यापयन्ति कन्दाद्युपभुज्यैव जीवन्तीत्यर्थ । तस्मात् सन्तोष =परि-

सन्तोषामृततृप्तानां यत्सुखं शान्तचेतसाम्।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम्॥ १६०॥
पीयूषमिव सन्तोषं पिबतां निर्वृतिः परा।
दुःखं निरन्तरं पुंसामसन्तोषवतां पुनः॥ १६१॥
निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि।
आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः॥ १६२॥
वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः।
वाञ्छा निवर्तते नार्थैः पिपासेवाग्निसेवनैः॥ १६३॥

---

धन वस्तुलाभेनापि आत्मतृप्तिरेव पुरुषस्य परम्=अत्यन्तं निधानम्=निधिरित्यर्थ.। आशात्याग एव सुखहेतुरिति भाव । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यास ॥ १५९॥

"सन्तोषे"ति—सन्तोष एवामृतं सुधा तेन तृप्ताना परितोषं गतानाम् अत एव शान्तचेतसाम्=शान्तं चेतो येषा तेषा स्पृहाशून्याना यत्सुखमस्ति, तत्=सुखम् इतश्चेतश्च धावताम्=धनसङ्ग्रहाय चेष्टमानाना धनलुब्धानाम्=धनलिप्सूना कुत सुखम्। लोभस्य परिवर्जनमेव सुखसाधनमिति भाव ॥ १६०॥

"पीयूष"मिति—पीयूषम्=अमृतमिव सन्तोषम्=आत्मतृप्तिं पिबताम् भजमानाना परा निर्वृति=महानानन्दो भवति, असन्तोषवताम्=अपरितुष्यता पुंसाम्=नराणा पुन निरन्तरम्=सततं दु खम्=कष्टमेव भवतीत्यर्थ। असन्तोष सर्वस्य दु खस्य निदानमिति भाव ॥ १६१॥

"निरोधा"दिति—चेतस=मनस निरोधात्=नियन्त्रणात् तत्तदिन्द्रियविषयसङ्कल्पेभ्य प्रत्याहरणात्=निखिलान्यपि=समग्राण्यपि अक्षाणि=इन्द्रियाणि निरुद्धानि=वश्यानि भवन्ति। तथाहि—रवौ=सूर्ये मेघैः=वारिदै आच्छादिते=आवृते सति गभस्तय=सूर्यमयूखा. आच्छन्ना=आवृता स्यु। अत्रोपमानोपमेयवाक्यनिष्ठधर्मयोर्बिम्बप्रतिबिम्बभावापन्नयोर्दृष्टान्तालङ्कार ॥ १६२॥

"वाञ्छे"ति—शान्ता महर्षय वाञ्छाविच्छेदनम्=वाञ्छाया विष-

अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ॥ १६४ ॥
धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ॥
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १६५ ॥
दानेन तुल्यो निधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमं न चान्यत्
सन्तोषतुल्यं धनमस्ति नान्यत् ॥ १६६ ॥

---

यवासनाया विच्छेदनं विध्वंसो निवृत्तिरिति यावत् स्वास्थ्यम्=सुखम् आहु =कथयन्ति, तथाहि—अग्निमेवनं =वह्नितापे पिपासेव=तृषेव अर्थे = धने वाञ्छा=वासना न निवर्त्तते=नैव निवृत्ता भवति । "हविषा कृष्ण-वर्त्मेव भूय वाभिवर्धते" इत्युक्तेरिति भाव ॥ १६३ ॥

"**अनिन्द्य**"मिति—स्वापतेयकृते=धनस्य लाभार्थं अनिन्द्यम्=निन्दा-नर्हमपि निन्दन्ति=गर्हयन्ते, अस्तुत्यम्=स्तवनायोग्यमपि उच्चकै =अतिमात्रं स्तुवन्ति=प्रशंसन्ति, किमधिकेन, किं कि न कुर्वते=धनवासनाव्याकुला जना सर्वमेवाकृत्यं कुर्वन्तीत्यर्थ ॥ १६४ ॥

"**धर्मार्थ**"मिति--यस्य=पुरुषस्य धर्मार्थम्=यज्ञदानादिद्वारा धर्मो-पार्जनार्थं वित्तेहा=धनविषयिणी चेष्टा वर्त्तते, तस्यापि=धर्मेच्छोरपि सा वित्तेहा न शुभावहा=कल्याणप्रदा नास्ति । हि=यत पङ्कस्य=कर्दमस्य प्रक्षा-लनात्=जलादिना शोधनात् दूरात्=प्रागेव अस्पर्शनम्=स्पर्शाभाव वरम्= श्रेष्ठमस्ति । प्राय पापेन धनमर्जयित्वा पश्चात्तद्द्वारा यदि धर्म उपार्जनीय ततो वरं तदनर्जनमेवेति भाव ॥ १६५ ॥

"**दानेने**"ति-दानेन=पात्रेभ्यो धनार्पणेन तुल्य =सम अन्यो निधि = निधानं रत्नादिक नास्ति । लोभात् च अन्य =भिन्न पृथिव्याम्=भूमौ रिपु =शत्रुर्नास्तीति सम्बन्ध । शीलसमम्=सदाचारतुल्यम् अन्यत् विभू-षणम्=अलङ्कारो नास्ति । सन्तोषतुल्यम्=सन्तोषेण समम् अन्यद्=अपरं धनं नास्ति । उपजातिवृत्तम् ॥ १६६ ॥

दारिद्र्यस्य परा भूतिर्यन्मानं द्रविणाल्पता।
जरद्गवधनः शर्वस्तथापि परमेश्वरः ॥ १६७ ॥
सकृत्कन्दुकपातेन पतत्यार्यः पतन्नपि।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ १६८ ॥

एवं ज्ञात्वा भद्र! त्वया सन्तोषः कार्यः—इति मन्थरकवचनमाकर्ण्य वायस आह—मन्थरको यदेवं वदति तत्त्वया चित्ते कर्तव्यम्। अथवा साध्विदमुच्यते—

सुलभाः पुरुषा राजन्! सततं प्रियवादिनः।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १६९॥
अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः ॥ १७० ॥

---

"दारिद्र्यस्ये"ति—यत्=या मानद्रविणाल्पता=मान एव द्रविणं धनं तस्याल्पता सन्तोषस्य न्यूनता सा दारिद्र्यस्य=निर्धनताया परा=उत्कृष्टा भूति=ऐश्वर्यम् पराकाष्ठेत्यर्थ. । तथाहि—शर्वः=महादेव जरद्गवधन.=जरद्गवो जीर्णो वृषभ एव धनं यस्य स, तथाप्यसौ परमेश्वर । निर्धनत्वेऽपि मानोन्नतो महादेवः परमेश्वर एव, अतो मनस्वितैव श्रेष्ठेति भावः। मानहीनो निर्धन, नतु धनहीन इति तु पर· सारः। "वृद्धोक्षस्तु जरद्गव" इत्यमर । अत्र "गोरतद्धितलुकि" (५।४।९२) इति सूत्रेण समासान्तष्टच् ॥ १६७ ॥

"सकृदि"ति—आर्य=सज्जनस्तु कन्दुकपातेन=गेन्दुकपतनवत् पतन्नपि=अधोगच्छन्नपि सकृत् पतति पुनरुत्पतत्येव । मूर्खस्तु=मूढो नरस्तु यथा मृत्पिण्डपतनम्=यथा मृत्पिण्ड पतति तथा=तद्वत् पतति, नैव पुनरुत्थितो भवति। दुर्दिनान् पतनोत्तरं भूयोऽप्युत्थानमुन्नतपदलाभं श्रयते नतु मूर्ख इति भाव ॥ १६८ ॥

"सुलभा" इति—व्याख्यातं प्राक् पृ० ॥१६९॥

"अप्रियाणी"ति—इह लोके=ये जना नृणाम्=मनुष्याणाम् अप्रियाणि=आपाततोऽहितान्यपि वदन्ति त एव सुहृद=मित्राणि प्रोक्ताः=

अथैवं जल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितस्तस्मिन्नेव सरसि प्रविष्टः। अथायान्तं ससंभ्रममवलोक्य लघुपतनको वृक्षमारूढः। हिरण्यको निकटवर्तिनं (१) शरस्तम्बं प्रविष्टः। मन्थरकः सलिलाशयमाश्रितः। अथ लघुपतनको मृगं सम्यक्परिज्ञाय मन्थरकमुवाच—एह्येहि सखे! मन्थरक! मृगोऽयं तृषार्तोऽत्र समायातः सरसि प्रविष्टः। तस्य शब्दोऽयं न मानुषसंभव इति। तच्छ्रुत्वा मन्थरको देशकालोचितमाह—भो! लघुपतनक! यथायं मृगो दृश्यते प्रभूतमुच्छ्वासमुद्वहन् (२) उद्भ्रांतदृष्ट्या पृष्ठतोऽवलोकयति, तन्न तृषार्त एषः, नूनं लुब्धकत्रासितः। तज्ज्ञायतामस्य पृष्ठे लुब्धका आगच्छन्ति न वा इति। उक्तं च—

भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः।
दिशोऽवलोकयत्येव न स्वास्थ्यं व्रजति क्वचित् ॥१७१॥

तच्छ्रुत्वा चित्राङ्ग आह—भो! मन्थरक! ज्ञातं त्वया सम्यङ्मे त्रासकारणम्। अहं लुब्धकशरप्रहारादुद्धारितः कृच्छ्रेणात्र समायातः। मम यूथं तैर्लुब्धकैर्व्यापादितं भविष्यति। तच्छरणागतस्य मे दर्शय किंचिदगम्यं स्थानं लुब्धकानाम्। तदाकर्ण्य मन्थरक आह—भोश्चित्राङ्ग! श्रूयतां नीतिशास्त्रम्—

---

सन्तीत्यर्थ.। अन्ये तु नामधारका=नाममात्रेण सुहृदो नतु कर्मणापीति भाव. ॥ १७० ॥

(१) शरस्तम्बम्=वेणुतृणगुच्छकम्। (२) उद्भ्रान्तदृष्ट्या=चकितावलोकनेन।

"**भयत्रस्त**"इति—भयत्रस्त.=भयेन त्रासं गत उद्विग्नो नर मुहु=वारं वारं प्रभूतम्=प्रचुरम् उच्छ्वासम्=ऊर्ध्वं श्वासं कुरुते तनोति। तथा—दिशोऽप्यवलोकयति एव=अवश्यं सर्वासु दिक्षु दृष्टिपातं कुरुते, क्वचित्=कस्मिन्नपि परिवर्त्तने स्वास्थ्यम्=सुखिता न व्रजति=न प्राप्नोति सुखी न भवतीत्यर्थ ॥ १७१ ॥

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने।
हस्तयोश्चालनादेको द्वितीयः पादवेगजः॥ १७२॥

तद्गम्यतां शीघ्रं (१) सघनं वनम्, यावदद्यापि नागच्छन्ति ते दुरात्मानो लुब्धकाः। अत्रान्तरे लघुपतनकः सत्वरमभ्युपेत्योवाच—भो! मन्थरक! गतास्ते लुब्धकाः (२) स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः। तच्चित्राङ्ग! त्वं (३) विश्रब्धो वनाद्बहिर्भव। ततस्ते चत्वारोऽपि मित्रभावमाश्रितास्तस्मिन्सरसि मध्याह्नसमये वृक्षच्छायाया (४) अधस्तात्सुभाषितगोष्ठीसुखमनुभवन्तः सुखेन कालं नयन्ति। अथवा युक्तमेतदुच्यते—

सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकाः।
विनापि सङ्गमं स्त्रीणां सुधियः सुखमासते॥ १७३॥

---

"द्वौ" इति—इह=लोके शास्त्रे वा शत्रुदर्शने=शत्रोर्वैरिणो दर्शने जाते सति (अर्थात् शत्रो सकाशात्पराभवप्राप्तिसम्भावनाया जाताया सत्याम्) विमुक्तौ=शत्रो सकाशात् स्वात्मरक्षाविषये द्वौ उपायौ=द्वे साधने प्रोक्तौ=कथितौ, तत्र-एक हस्तयोः=करयो चालनात्=प्रस्फारणरूपाद्व्यापारात्, द्वितीय उपाय पादवेगज=पादयोश्चरणयोर्योवेगस्तज्जो मत इति शेष।

अयमाशय.—यदि शत्रो सकाशाद् भयप्राप्ति स्यात्तदा हस्तपादादिद्वारा तत्ताडनरूपो व्यापार कर्त्तव्य (सति सामर्थ्ये), अन्यथा दूरत एव पलायितव्यमिति॥ १७२॥

(१) सघनम्=सान्द्रम्। (२) स्वगृहोन्मुखा=स्वगृहम्प्रत्युद्दिश्य दत्तास्या। प्रचुरेति—प्रचुर प्रभूतं यन्मासपिण्ड पिण्डाकारं मांसं तद्धारिण.। (३) विश्रब्ध=विश्वस्तो गतभय इत्यर्थ। (४) अधस्तात्=तलप्रदेशे।

"सुभाषिते" ति—सुधिय=पण्डिता काव्यशास्त्रविनोदिन सुभाषितस्य मधुरभाषणस्य प्रियालापस्येति यावत् यो रसास्वाद आनन्दानुभव' तेन बद्ध समुत्पन्नो यो रोमाञ्च पुलक स एव कञ्चुकश्चोलको येषा ते तादृशा स्त्रीणाम्=सुन्दरीणा नायिकाना सङ्गमम्=सम्भोगं विनापि सुखम्=सानन्दं

सुभाषितमयद्रव्यसङ्ग्रहं न करोति यः ।
स तु प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ॥ १७४ ॥

तथा च—

सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः ।
यस्य संपुटिका नास्ति कुतस्तस्य सुभाषितम् ॥ १७५ ॥

अथैकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो नायातः । अथ ते व्याकुलीभूताः परस्परं जल्पितुमारब्धाः—अहो ! किमद्य सुहृन्न समायातः । किं सिंहादिभिः क्वापि व्यापादितः, उत लुब्धकैः,

---

यथा स्यात्तथा आसते=स्थिता भवन्ति । सुधिया स्त्रीसङ्गमादप्याधिको मित्रगोष्ठीसमागमजनित आनन्द इति भाव ॥ १७३ ॥

"सुभाषिते"ति—य =पुरुष सुभाषितमयद्रव्यसङ्ग्रहम्=सुभाषितमयानां सूक्तिस्वरूपाणां द्रव्याणा धनाना सङ्ग्रहं सञ्चयं न करोति=नैव सम्पादयते, स तु=स प्रस्तावयज्ञेषु=प्रस्तावा परस्परालापा प्राकरणिक्यो वार्त्ता एव यज्ञा यागास्तेषु, का दक्षिणा प्रदास्यति=यज्ञस्यान्तिमाङ्गभूतं देयं द्रव्यं दक्षिणा ता कां=किंस्वरूपा वितरिष्यति, केन प्रकारेण सभ्यजनान् तोषयिष्यतीत्यर्थः ।

सभ्यजनसन्तोषसमुत्पादनायावश्यमेव पुरुषेण सुभाषितानि कण्ठीकर्त्तव्यानीति भाव ॥ १७४ ॥

"सकृदि"ति—य =यो जन सकृत्=एकवारम् उक्तम्=सुभाषितं न गृह्णाति=नावधारयते । अर्थात् उच्चारणमात्रेणैव तदभिप्रायज्ञो न भवितुमर्हति, वा=अथवा स्वयं न करोति=स्वयमेव सूक्तीर्वदितुं न पारयते, यस्य च सम्पुटिका=(परोक्ष)सुभाषितात्मकद्रव्यसन्धारणसमर्था मेधारूपा पेटी नास्ति, तस्य कुत सुभाषितम्=नासौ सुभाषिताधिकारी । तादृशस्य पुंस सुभाषितगोष्ठीप्रवेशाधिकार एव नास्तीति भाव ।

य सुभाषिततात्पर्यविज्ञानसमर्थ , यो वा स्वयं विदग्ध, यश्च नानाविधसूक्तिधनसङ्ग्रही, स एव विद्वत्सभाया भूषणमिति तु पर तात्पर्यम् ॥ १७५ ॥

अथवा (१) अनले प्रपतितो गर्तविषमे वा नवतृणलौल्यादिति। अथवा साध्विमुदच्यते—

स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात्।
किमु दृष्टवह्वपायप्रतिभयकान्तारमध्यस्थे॥ १७६॥

अथ मन्थरको वायसमाह—भो लघुपतनक! अहं हिरण्यकश्च तावद्द्वावप्यशक्तौ तस्यान्वेषणं कर्तुं मन्दगतित्वात्। तद्गत्वा त्वमरण्यं (२) शोधय यदि कुत्रचित् तं जीवन्तं पश्यसि इति। तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत् (३) पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितस्तिष्ठति। तं दृष्ट्वा शोकव्याकुलितमनास्तमवोचत्—भद्र! किमिदम्। चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव। अथवा युक्तमेतत्—

अपि मन्दत्वमापन्नो नष्टो वापीष्टदर्शनात्।
प्रायेण प्राणिनां भूयो दुःखावेगोऽधिको भवेत्॥ १७७॥

---

(१) अनले=वह्नौ। गर्तविषमे=गर्त्ते खातं तद्वशात् विषमे नतोन्नते प्रदेशे। नवेति-नवानां नूतनानां तृणानां लौल्यात्=लोभावेशवशात्।

"स्वगृहे"ति—स्निग्धैः=सुहृद्भिः प्रियैर्बन्धुभिर्वा मोहात्=मायाममताहेतोः स्वगृहस्य यदुद्यानमुपवनं तद्गतेऽपि सुहृदि बन्धौ पापम्=अनिष्टं विशङ्क्यते=सम्भाव्यते। दृष्टेति—दृष्टाः प्रत्ययिता बहवोऽनेकविधा येऽपाया अनिष्टानि तैः प्रतिभयो भयावहः कान्तारो जङ्गलं दुर्गं वर्त्म वा तस्य मध्यस्थे सुहृदि किमु वक्तव्यमिति शेषः। एतादृशे विकटे प्रदेशे बन्धूनामवस्थानमत्यन्तमेव शङ्कास्पदमिति भावः। आर्यावृत्तम्॥ १७६॥

(२) शोधय=गवेषय। (३) पल्वलतीरे=अल्पसरस्तटे। "पल्वलञ्चाल्पसरः" इत्यमरः। कूटेति—कूटपाशेन=दम्भजालेन नियन्त्रितो निगडितः।

"अपी"ति—इष्टदर्शनात्=इष्टस्य प्रियस्य दर्शनात् अवलोकनात् मन्दत्वम्=लाघवम् आपन्नोऽपि=प्राप्तोऽपि, नष्टोऽपि=नाशङ्गतोऽपि वा, प्राणिनाम्=जीवानां दुःखावेगः=दुःखस्योच्छलनं प्रायेण=प्रायशः भूयः=पुनरपि अधिको भवेत्।

ततश्च वाष्पावसाने चित्राङ्गो लघुपतनकमाह— भो ! मित्र ! सञ्जातोऽयं तावन्मम मृत्युः । तद्युक्तं संपन्नं यद्भवता सह मे दर्शनं सञ्जातम् । उक्तं च—

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
तद्द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च ॥१७८॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ—

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
तत्क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥ १७९ ॥

तच्छ्रुत्वा लघुपतनक आह–भद्र ! न भेतव्यमस्मद्विधैर्विद्यमानैः । यावदहं द्रुततरं हिरण्यकं गृहीत्वागच्छामि । अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तं च—

---

उक्तञ्च—"स्वजनस्य हि दु खमग्रतो विवृतद्वारमिवोपजायते" इति । मन्दीभूतमपि दु खं स्वजनदर्शनोत्तरं भूयोऽभिवर्द्धत एवेति भाव ॥१७७॥

"**प्राणात्यये**"इति—प्राणात्यये=प्राणानामत्यये विनाशे समुत्पन्ने=प्राप्ते सति यदि मित्रदर्शनं स्यात् तत्=तदा पश्चात्=मित्रदर्शनोत्तरम् जीवत = प्राणत. अपि=वा मृतस्य च=पञ्चत्वङ्गतस्य वा जनस्य द्वाभ्याम्=द्वाभ्यामपि प्रकाराभ्या जीवनमरणलक्षणाभ्या सुखदम्=मित्रदर्शनं सुखप्रदं भवतीति शेप ।

अयमाशय —आसन्ने मरणभये मित्रदर्शने सति मित्रस्य चातुर्यमाहात्म्येन विपन्नस्य रक्षापि स्यात्, मरणे सति पश्चादौर्ध्वदैहिककृत्यादिकरणेन मृतस्य सद्गतिलाभोऽपि भवेदिति द्वयोरप्यवस्थयोर्मित्रदर्शनमुपकारीति ॥ १७८ ॥

स्वान्तिमकालं निश्चित्य क्षमा प्रार्थयते—"**अज्ञानादि**"ति—अज्ञानात् ज्ञानतो वापि=प्रमादाद् बुद्धिपूर्वकं वेत्यर्थ. यत् मया दुरुक्तम्=कटु अनर्हं वच उदाहृतम्=मित्रगोष्ठीषु उक्तम्, तत् मे=मम वचो युवाभ्या प्रीतिपरम्=प्रणयभरितं मन =हृदयं कृत्वा क्षन्तव्यम्=अनुग्रहपूर्वकं सोढव्यमित्यर्थ ॥१७९॥

संपदि यस्य न हर्षो विपदि विषादो रणे च भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥१८०॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकं च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किंचिज्जीविताशया (१) संश्लिष्ट आह—

आपन्नाशाय विबुधैः कर्तव्या सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ १८१ ॥

हिरण्यक आह—भद्र ! त्वं तावन्नीतिशास्त्रज्ञो (२) दक्षमतिः । तत्कथमत्र कूटपाशे पतितः। स आह—भोः ! न कालोऽयं (३) विवादस्य । तन्न यावत्स पापात्मा लुब्धकः समभ्येति तावद्द्रुततरं (४) कर्तयेमं मत्पादपाशम् । तदाकर्ण्य विहस्याह

---

"सम्पदी"ति—यस्य जनस्य सम्पदि=ऐश्वर्ये सति हर्ष =आनन्दोच्छलना न, विपदि=आपदाया विषाद =मनोग्लानिरूपा चेतसो दु खावस्था न, रणे=सङ्ग्रामे च भीरुत्वम्=कातरता न विद्यत इति शेष , जननी=माता भुवनत्रयतिलकम्=लोकत्रयस्यापि शिरोमणिभूतं सर्वश्रेष्ठं तम्=तादृशं सुतं=पुत्रं विरलम्=अल्पं यथा तथा जनयति=प्रसूते ।

उक्तलक्षणविशिष्टो महापुरुषो दुर्लभ इति भाव' ॥ १८० ॥

(१) संश्लिष्ट =जीवितसम्भावनया सयुक्त इत्यर्थ ।

"आपन्ने"ति—विबुधै =विद्वद्भि आपन्नाशाय=आपदा विपत्तीना नाशाय विध्वंसाय अमला =निर्मलहृदया कपटमलरहितमनसः सुहृद.=मित्राणि कर्त्तव्या =सम्पादनीया । अत्र=संसारे य =यो जन' मित्रविवर्जित =सुहृद्विहीन स कश्चिदपि आपदम्=विपत्तिं न तरति=नैव पारयते विपद्भ्यो विमुक्तो न भवितुमर्हतीत्यर्थ. । आपत्परित्राणे मित्रमेव समर्थमिति भाव. ॥१८१

(२) दक्षमति =पटुबुद्धिरित्यर्थ । (३) विवादस्य=प्रश्नानुप्रश्नस्य । (४) कर्तय=छिन्धि । मत्पादपाशम्=मदीयचरणबन्धनम् ।

ततश्च वाष्पावसाने चित्राङ्गो लघुपतनकमाह— भो ! मित्र ! सञ्जातोऽयं तावन्मम मृत्युः । तद्युक्तं संपन्नं यद्भवता सह मे दर्शनं सञ्जातम् । उक्तं च—

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम् ।
तद् द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च ॥१७८॥

तत्क्षन्तव्यं यन्मया प्रणयात्सुभाषितगोष्ठीष्वभिहितम् । तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ—

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम् ।
तत्क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥ १७९ ॥

तच्छ्रुत्वा लघुपतनक आह-भद्र ! न भेतव्यमस्मद्विधैर्विद्यमानैः । यावदहं द्रुततरं हिरण्यकं गृहीत्वागच्छामि । अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति । उक्तं च—

---

उक्तञ्च—"स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते" इति । मन्दीभूतमपि दुःखं स्वजनदर्शनोत्तरं भूयोऽभिवर्द्धत एवेति भाव. ॥१७७॥

"**प्राणात्यये**"इति—प्राणात्यये=प्राणानामत्यये विनाशे समुत्पन्ने=प्राप्ते सति यदि मित्रदर्शनं स्यात् तत्=तदा पश्चात्=मित्रदर्शनोत्तरम् जीवत = प्राणत अपि=वा मृतस्य च=पञ्चत्वङ्गतस्य वा जनस्य द्वाभ्याम्=द्वाभ्यामपि प्रकाराभ्या जीवनमरणलक्षणाभ्या सुखदम्=मित्रदर्शनं सुखप्रदं भवतीति शेप ।

अयमाशय —आसन्ने मरणभये मित्रदर्शने सति मित्रस्य चातुर्यसाहाय्येन विपन्नस्य रक्षापि स्यात्, मरणे सति पश्चादौर्ध्वदैहिककृत्यादिकरणेन मृतस्य सद्गतिलाभोऽपि भवेदिति द्वयोरप्यवस्थयोर्मित्रदर्शनम्परमुपकारीति ॥ १७८ ॥

स्वान्तिमकालं निश्चित्य क्षमा प्रार्थयते—"**अज्ञानादि**"ति—अज्ञानात् ज्ञानतो वापि=प्रमादाद् बुद्धिपूर्वकं वेत्यर्थ यत् मया दुरुक्तम्=कटु अनर्ह वच उदाहृतम्=मित्रगोष्ठीषु उक्तम्, तत् मे=मम वचो युवाभ्या प्रीतिपरम्=प्रणयभरितं मन =हृदयं कृत्वा क्षन्तव्यम्=अनुग्रहपूर्वकं सोढव्यमित्यर्थः ॥१७९॥

संपदि यस्य न हर्षो विपदि विषादो रणे च भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥१८०॥

एवमुक्त्वा लघुपतनकश्चित्राङ्गमाश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान् । हिरण्यकं च चित्राङ्गपाशमोक्षणं प्रति कृतनिश्चयं पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः । सोऽपि मूषकमवलोक्य किंचिज्जीविताशया (१) संश्लिष्ट आह—

आपन्नाशाय विबुधैः कर्तव्या सुहृदोऽमलाः ।
न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ १८१ ॥

हिरण्यक आह—भद्र ! त्वं तावन्नीतिशास्त्रज्ञो (२) दक्षमतिः । तत्कथमत्र कूटपाशे पतितः। स आह—भोः ! न कालोऽयं (३) विवादस्य । तद्य यावत्स पापात्मा लुब्धकः समभ्येति तावद्द्रुततरं (४) कर्तयेमं मत्पादपाशम् । तदाकर्ण्य विहस्याह

---

"सम्पदी"ति—यस्य जनस्य सम्पदि=ऐश्वर्ये सति हर्ष.=आनन्दोच्छ्लना न, विपदि=आपदायां विषाद =मनोग्लानिरूपा चेतसो दु खावस्था न, रणे=सङ्ग्रामे च भीरुत्वम्=कातरता न विद्यत इति शेष, जननी=माता भुवनत्रयतिलकम्=लोकत्रयस्यापि शिरोमणिभूतं सर्वश्रेष्ठं तम्=तादृशं सुतं=पुत्र विरलम्=अल्पं यथा तथा जनयति=प्रसूते ।

उक्तलक्षणविशिष्टो महापुरुषो दुर्लभ इति भाव ॥ १८० ॥

(१) संश्लिष्ट =जीवितसम्भावनया संयुक्त इत्यर्थ ।

"आपन्ने"ति—विबुधै =विद्वद्भि आपन्नाशाय=आपदा विपत्तीना नाशाय विध्वंसाय अमला =निर्मलहृदया कपटमलरहितमनस सुहृद = मित्राणि कर्तव्या =सम्पादनीया । अत्र=संसारे य =यो जन मित्रविवर्जित = सुहृद्विहीन स कश्चिदपि आपदम्=विपत्तिं न तरति=नैव पारयते विपद्भ्यो विमुक्तो न भवितुमर्हतीत्यर्थ । आपत्परित्राणे मित्रमेव समर्थमिति भाव. ॥१८१

(२) दक्षमति =पटुबुद्धिरित्यर्थ । (३) विवादस्य=प्रश्नानुप्रश्नस्य ।
(४) कर्तय=छिन्धि । मत्पादपाशम्=मदीयचरणबन्धनम् ।

हिरण्यकः—किं मय्यपि समायाते लुब्धकाद् बिभेषि । ततः शास्त्रं प्रति महती मे विरक्तिः सम्पन्ना यद्भवद्विधा अपि नीतिशास्त्रविद एनामवस्थां प्राप्नुवन्ति । तेन त्वां पृच्छामि । स आह—भद्र ! कर्मणा बुद्धिरपि हन्यते । उक्तं च—

कृतान्तपाशबद्धानां दैवोपहतचेतसाम् ।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १८२ ॥

विधात्रा रचिता या सा ललाटेऽक्षरमालिका ।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याप्यातिपण्डिताः ॥१८३॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसन्तप्तहृदयो मन्थरकः शनैः शनैस्तं प्रदेशमाजगाम । तं दृष्ट्वा लघुपतनको हिरण्यकमाह-अहो ! न शोभनमापतितम् । हिरण्यक आह—किं स लुब्धकः समायाति । स आह—आस्तां तावल्लुब्धकवार्ता । एष मन्थरकः समागच्छति । तदनीतिरनुष्ठितानेन, यतो वयमप्यस्य कारणान्नूनं व्यापादनं यास्यामो यदि स पापात्मा लुब्धकः समागमिष्यति । तदहं तावत्खमुत्पतिष्यामि । त्वं पुनर्बिलं प्रविश्यात्मानं रक्षयिष्यसि । चित्राङ्गोऽपि वेगेन दिगन्तरं

---

"कृतान्ते"ति—कृतान्तस्य यमस्य मृत्यो पाशेन जालेन बद्धाना सिताना निगडितानामासन्नमृत्यूनामिति यावत्, तथा-दैवोपहतचेतसाम्=दैवेन दुरदृष्टेन उपहतं नष्टं विचारशून्य चेतो येषा तेषा, महताम्=महाशयानामपि बुद्धय.=मतय कुब्जगामिन्य =कुटिलगतय भवन्ति=जायन्ते । प्रतिकूलदैवाना नीतिविदामपि मतयो विपत्तिसमये भ्रष्टा जायन्त इति भाव ॥ १८२ ॥

"विधात्रे"इति—विधात्रा=विश्वसृजा ललाटे=गोधिप्रदेशे मस्तके सा=प्राक्तनदेहे सम्पादिता या अक्षरमालिका=वर्णावली रचिता=लिखिता, अतिपण्डिता =अतिमात्रं निपुणा अपि जना स्वबुद्ध्या=निजमतिवैभवेन ताम्=अक्षरमालिका मार्जयितुं=प्रोञ्छयितुं न समर्था =नैव शक्ता भवन्तीति शेष । निष्प्रतीकाराणि दैवविलसितानीति भाव· ॥ १८३ ॥

यास्यति । एष पुनर्जलचरः (१) स्थले कथं भविष्यतीति व्याकुलोऽस्मि । अत्रान्तरे प्राप्तोऽयं मन्थरकः । हिरण्यक आह—भद्र ! न युक्तमनुष्ठितं भवता यदत्र समायातः । तद्भूयोऽपि द्रुततरं गम्यताम्, यावदसौ लुब्धको न समायाति । मन्थरक आह—भद्र ! किं करोमि न शक्नोमि तत्रस्थो (२) मित्रव्यसनाग्निदाहं सोढुम् । तेनाहमत्रागतः । अथवा साध्विदमुच्यते—

दयितजनविप्रयोगा वित्तवियोगाश्च केन सह्याः स्युः ।
यदि सुमहौषधकल्पो वयस्यजनसङ्गमो न स्यात् ॥१८४॥

वरं प्राणपरित्यागो न वियोगो भवादृशैः ।
प्राणा जन्मान्तरे भूयो भवन्ति न भवद्विधाः ॥ १८५ ॥

(३) एवं तस्य प्रवदत (४) आकर्णपूरितशरासनो लुब्धको-

---

(१) जलचरस्य स्थले गमनशक्तेरभावादित्यर्थ । (२) मित्रेति—मित्रस्य सुहृदो व्यसनं कष्टमेवाग्निर्वह्निस्तद्दाहं तेन जनित सन्तापमित्यर्थ

दयितेति—यदि सुमहौषधकल्प =सुमहौषध=वीर्यवद् यदौषधं तत्सदृश. सकलपीडाशमक वयस्यजनसङ्गम =मित्रजनसमागम न स्यात्, तर्हि दयितजनाना प्रियजनाना विप्रयोगा -विरहा , वित्तवियोगाश्च=वित्तस्य धनस्य वियोगा अपि केन जनेन सह्या =सोढव्या स्युः । मित्रजनाना समागमेन बन्धुविरहजो धनविरहजश्च शोको विस्मर्यत एव लौकैरिति निर्गलितोऽर्थ । आर्यावृत्तम् ॥ १८४ ॥

"वरम्" प्राणपरित्याग =मृत्युरेव वरं=प्रिय स्यात् भवादृशै =त्वत्सदृशै सुहृद्भि वियोग =विरहो न वरमित्यर्थ । प्राणा =जीवनानि भूय =पुनरपि जन्मान्तरे=अन्यस्मिन् जन्मनि भवन्ति, भवद्विधास्तु सज्जना न लभ्यन्त इति शेष । सौहार्दसम्पन्नो बन्धुः सर्वथैव दुर्लभ इति भाव ॥ १८५ ॥

(३) एवं प्रवदतः=एव प्रवदन्तं तं मन्थरकमनादृत्येत्यर्थ । (४) आकर्णपूरितशरासन =आकर्णं कर्णपर्यन्त पूरितम् आकृष्टं शरासनं धनुर्येन सः कर्णान्ताकृष्टकार्मुकः ।

ऽप्युपागतः। तं दृष्ट्वा मूषकेण तस्य (१) स्नायुपाशस्तत्क्षणात्खण्डितः। अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन्प्रधावितः। लघुपतनको वृक्षमारूढः। हिरण्यकश्च समीपवर्तिविलं प्रविष्टः। अथासौ लुब्धको मृगगमनाद्विषण्णवदनो व्यर्थश्रमस्तं मन्थरकं मन्दं मन्द स्थलमध्ये गच्छन्तं दृष्टवान् अचिन्तयच्च—यद्यपि (२) कुरङ्गो धात्रापहृतस्तथाप्ययं कूर्म आहारार्थं सम्पादितः। तदद्यास्यामिषेण मे कुटुम्बस्य(३) आहारनिर्वृत्तिर्भविष्यति। एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः। अत्रान्तरे तं नीयमानमवलोकय हिरण्यको दुःखाकुलः (४) पर्यदेवयत्—कष्टं भोः! कष्टमापतितम्।

एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य।
तावद् द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति॥ १८६॥

यावदस्खलितं तावत्सुखं याति समे पथि।
स्खलिते च समुत्पन्ने विषमं च पदे पदे॥ १८७॥

---

(१) स्नायुपाश=तन्तिजालम्। (२) कुरङ्ग=हरिण। धात्रापहृत=दैवेन नाशित। कूर्म=कच्छप (३) आहारनिर्वृति=प्राणयात्रा। (४) पर्यदेवयत्=व्यलपत्।

विपदो विपदनुबन्धिन्य इत्याह—"एकस्ये" ति—अहम् अर्णवस्य=समुद्रस्य पारमिव=तीरमिव यावत् एकस्य दुःखस्य=कष्टस्य अन्तम्=चरम[illegible]मा न गच्छामि=नैव लभे तावत् द्वितीयं दुःखं मे=मम समुपस्थितम्=[illegible], तथाहि—छिद्रेषु=रन्ध्रस्थानेषु प्राप्तेषु सत्सु अनर्थाः=विपत्तयः बहुलीभवन्ति=सङ्कुलीभवन्ति अहमहमिकया सम्प्राप्नुवन्तीत्यर्थः। इन्द्रवज्रावृत्तम्॥ १८६॥

उक्तमेवार्थं प्रकारान्तरेण स्फुटीकरोति "यावदि"ति—यावत् समे=

यन्नम्रं सरलं चापि तच्चापत्सु न सीदति।
धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजम्॥ १८८॥

न मातरि न दारेषु न सोदर्ये न चात्मजे।
विश्रम्भस्तादृशः पुंसां यादृङ् मित्रे निरन्तरे॥ १८९॥

यदि तावत्कृतान्तेन मे धननाशो विहितस्तत् (१) मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मादपहृतम्। अपरमपि मित्रं परं मन्थरकसमं न स्यात्। उक्तं च--

असम्पत्तौ परो लाभो गुह्यस्य कथनं तथा।
आपद्विमोक्षणं चैव मित्रस्यैतत्फलत्रयम्॥ १९०॥

---

समभावे पथि=मार्गे अस्खलितम्=अपतितमस्ति तावत्=तावत्कालपर्यन्तं सुखं याति=सुखं लभते मनुष्य इति शेषः। स्खलिते=पाते समुत्पन्ने=प्राप्ते सति पदे पदे=प्रतिपदं विषमस्य कष्टरूपं सङ्घटनं समुपतिष्ठत इति शेषः। सुखकाले सुखानि दुःखकाले दुःखानि च अविचारितं समापतन्तीति निर्गलितोऽर्थः॥ १८७॥

"यदि"ति--यत् धनुः, मित्रं, कलत्रं=स्त्री च नम्रम्=अवनमनस्वभावम्, विनयान्वितम्, तथा सरलम्=अकुटिलं तथा--शुद्धवंशजम्=उत्तमवेणुजातम्, सत्कुलोत्पन्नञ्च तत्--आपत्सु। धनुर्धरस्य, मित्रस्य, भर्त्तुश्च विपत्तिषु न सीदति=अवसादं न भजते। न भनक्ति, नावसादं याति, न च व्यभिचारादिविकारं लभते इत्यर्थः। तत्=तादृशं धनुरादिकं दुर्लभम्=दुष्प्राप्यं विरलं भाग्येनैव लभ्यमित्यर्थः॥ १८८॥

अकृत्रिमन्तु मित्रं सर्वथैव दुर्लभमित्याह--"न" इति--निरन्तरे=हृदयविच्छेदरहिते अभिन्नहृदये निसर्गसिद्धे मित्रे=सुहृदि पुंसाम्=मानवानां यादृक् विश्रम्भः=विश्वासो भवतीति शेषः, तादृशः=तद्रूपो विश्वासः मातरि=जनन्यां न, दारेषु=स्त्रीषु न, सोदर्ये=समानोदरे भ्रातरि न, तथा च--आत्मजे=औरसे पुत्रेऽपि न भवितुमर्हतीत्यर्थः। सर्वविश्वासस्थानापेक्षया मित्रमेवाधिकं विश्वासस्थानमित्याशयः॥ १८९॥

(१) मार्गश्रान्तस्य=अध्वश्रमगितस्य। विश्रामभूतम्=आश्रयः।

"असम्पत्ता"विति--असम्पत्तौ=दारिद्र्ये सति परः=उत्कृष्टो महान्

तदस्य पश्चान्नान्यः सुहृन्मे। तत्किं ममोपर्यनवरतं(१) व्यसनशरैर्वर्षति हन्त विधिः। यत आदौ तावद्वित्तनाशः, ततः परिचारभ्रंशः, ततो देशत्यागः, ततो मित्रवियोग इति। अथवा स्वरूपमेतत्सर्वेषामेव जन्तूनां (२) जीवितधर्मस्य उक्तं च—

काय: संनिहितापायः संपदः क्षणभङ्गुराः।
समागमाः सापगमाःसर्वेषामेव देहिनाम्॥ १६१॥

तथा च—

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये दीप्यति जाठराग्निः।
आपत्सु वैराणि समुल्लसन्ति
छिद्रेष्वनर्था बहुलीभवन्ति॥ १६२॥

अहो! साधूक्तं केनापि—

---

लाभः वित्तस्येति शेषः, तथा—गुह्यस्य=रहस्यस्य च कथनम्=आलापः, तथा—आपद्विमोक्षणम्=आपदो विपदो विमोक्षणं परिरक्षणञ्च मित्रस्य एतदेव फलत्रयम्। एतानि त्रीण्येव प्रधानप्रयोजनानीति भावः॥ १६०॥

(१) व्यसनशरैः=व्यसनरूपैः सायकैः। हन्त=खेदे। विधिः=दैवम्।
(२) जीवितधर्मस्य=प्राणधारणात्मकव्यापारस्य।

उक्तमर्थं प्रतिपादयति—"काय" इति—सर्वेषामेव देहिनाम्=कायः=देहः सन्निहितापायः=सन्निहितः समीपवर्त्ती अपायो विनाशो यस्य स तादृशः, सम्पदः=अर्थाः धनाद्याः पदार्थाः क्षणभङ्गुराः=क्षणविध्वंसिनः, समागमाः= संयोगाः सापगमाः=सवियोगाः सन्तीति शेषः॥ १६१॥

विपदां विपदनुबन्धित्वमाह—"क्षते" इति—क्षते=व्रणे अभीक्ष्णम्=नः पुनः प्रहाराः=आघाताः निपतन्ति=जायन्ते, धनक्षये=वित्तविनाशे सति जाठराग्निः=उदरानलः दीप्यति=प्रवर्धते, आपत्सु=विपत्तिषु वैराणि= शात्रवाणि समुल्लसन्ति=समुद्दीपितानि भवन्ति छिद्रेषु=रन्ध्रेषु विपत्तिषु अनर्थाः= कष्टानि बहुलीभवन्ति=सङ्घीभवन्तीत्यर्थः। अधिकं प्राक् द्रष्टव्यम्। उपजातिः॥ १६२॥

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्॥ १६३॥

अत्रान्तरे चाक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्रैव समायातौ। अथ हिरण्यक आह—अहो! किं वृथा प्रलपितेन। तद्यावदेष मन्थरको दृष्टिगोचरन्न नीयते, तावदस्य (१) मोक्षोपायश्चिन्त्यताम् इति। उक्तं च—

व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत्।
क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति॥ १६४॥
केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम्॥ १६५॥

---

"प्राप्ते" इति—भये=भीतिहेतौ प्राप्ते सति परित्राणम्=परितो रक्षकम्, तथा—प्रीतिविश्रम्भभाजनम्=प्रीतिविश्रम्भयोः सौहार्दविश्वासयोः भाजनं पात्रम्, अत एव रत्नम्=रत्नभूतम् इदं "मित्रम्" इत्यक्षरद्वयं केन सृष्टं=रचितमित्यहो! न जानीमः। मित्रं सर्वसाहाय्यकारिभ्योऽपि पदार्थेभ्योऽधिकमिष्टसाधकं भवतीति भावः॥ १६३॥

(१) मोक्षोपायः=परित्राणसाधनम्।

धैर्येण विपत्त्यन्तरणोपायाश्चिन्तनीय इत्याह द्वाभ्याम्—"व्यसन" मिति—यः—योजनः व्यसनं प्राप्य=विपत्तिं प्राप्य मोहात्=अज्ञानात् केवलं परिदेवयेत्=विलापं कुर्यात् असौ मूढः क्रन्दनम्=विलापमेव वर्धयति=समेधयते, किन्तु तस्य=व्यसनस्य अन्तम्=अवसानं न गच्छति=नैवाप्नोति। विपदि धैर्यमेवाश्रयणीयमिति भावः॥ १६४॥

"केवलम्" इति—नयपण्डितैः=नीतिशास्त्रनिपुणैश्चाणक्यप्रभृतिभिर्महानुभावैः तस्य=व्यसनस्य उच्छेदसमारम्भः=विनाशकरणोद्यमः, तथा—विषादपरिवर्जनम्=विषादस्य मनोग्लान्यपरपर्यायस्याधैर्यस्य परिवर्जनं परित्यागः, व्यसनस्य=विपत्तेः केवलमुक्तद्वयमेव भेषजम्=औषधरूपं साधनम् उक्तम्=निगदितम्।

विपत्काले विलापं परिहाय तन्निवृत्तावेव यत्नोऽनुष्ठेय इति भावः॥१६५॥

अन्यच्च--

अतीतलाभस्य सुरक्षणार्थं भविष्यलाभस्य च सङ्गमार्थम्।
आपत्प्रपन्नस्य च मोक्षणार्थं यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः॥१६६॥

तच्छ्रुत्वा वायस आह—भो! यद्येवं तत्क्रियतां मद्वचः। एष चित्राङ्गोऽस्य मार्गं गत्वा किंचित्पल्वलमासाद्य तस्य तीरे (१) निश्चेतनो भूत्वा पततु। अहमप्यस्य शिरसि समारुह्य मन्दैः (२) चञ्चुप्रहारैः शिर (३) उल्लेखयिष्यामि, येनासौ दुष्टलुब्धकोऽमुं मृतं मत्वा मम चञ्चुप्रहरणप्रत्ययेन मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति। अत्रान्तरे त्वया दर्भमयानि पाशानि (४) खण्डनीयानि येनासौ मन्थरको द्रुततरं पल्वलं प्रविशति। चित्रांग आह--भद्रोऽयं त्वया दृष्टो मन्त्रः। नूनं मन्थरकोऽयं मुक्तो मन्तव्यः इति। उक्तं च--

सिद्धं वा यदि वाऽसिद्धं चित्तोत्साहो निवेदयेत्।
प्रथमं सर्वजन्तूनां तत्प्राज्ञो वेत्ति नेतरः॥१६७॥

---

विपन्निवृत्त्यर्थं विचार्यमाणो मन्त्र एव श्रेष्ठ इत्याह—"अतीते" ति—अतीतो गतो यो लाभोऽर्थादुपार्जितं यद्धनं तस्य सुरक्षणार्थम्=सुष्ठु योगार्थं सञ्चयार्थमिति यावत् तथा--भविष्यलाभस्य=भविष्यो भावी यो लाभ तस्य सङ्गमार्थम्=प्राप्त्यर्थम्, तथा--आपत्प्रपन्नस्य=आपद प्रपन्न प्राप्त तस्य विमोक्षणार्थम्=रक्षायै यत् मन्त्र्यते=अन्योन्यं रहसि विचार्य स्थिरीक्रियते हि=निश्चयेन असौ मन्त्र =स एव "मन्त्र" पदाभिलप्य इत्यर्थ।

सम्प्रति यथास्माकं विपन्मुक्ति स्यात्तथैव विचार्यतामिति निष्कर्ष ॥१६६॥

(१) निश्चेतन =गतसञ्ज्ञ। (२) मन्दै =अल्पै। चञ्चुप्रहारै =त्रोटिकृतैराघातैः। (३) उल्लेखयिष्यामि=विदारयिष्यामि। (४) खण्डनीयानि=कर्त्तनीयानि।

"सिद्ध"मिति—चित्तोत्साह =चित्तस्य=हृदयस्योत्साह उद्योग प्रथमं सिद्धेरसिद्धेश्च प्राक् सर्वेषा जन्तूनाम् सिद्धम्=फलसहितम्, असिद्धम्=विफल वा कार्यमिति शेष निवेदयेत्=सूचयतीत्यर्थ, तत्=एतत् प्राज्ञ =बुद्धिमान्

तदेवं क्रियताम् इति। तथानुष्ठिते स लुब्धकस्तथैव मार्गासन्नपल्वलतीरस्थं चित्रांगं वायससनाथमपश्यत्। तं दृष्ट्वा हर्षितमना व्यचिन्तयत्—नूनं (१) पाशबन्धनवेदनया वराकोऽयं मृगः (२) सावशेषजीवितः पाशं (३) त्रोटयित्वा कथमप्येतद्वनान्तरं यावत्प्रविष्टस्तावन्मृत तद्वश्योयं मे कच्छपः सुयन्त्रितत्वात्। तदेनमपि तावद्गृह्णामि इत्यवधार्य कच्छपं भूतले प्रक्षिप्य (४) मृगमुपाद्रवत्। एतस्मिन्नन्तरे हिरण्यकेन (५) वज्रोपमदंष्ट्राप्रहरणेन (६) तद्दर्भवेष्टनं खण्डशः कृतम्। मन्थरकोऽपि तृणमध्यान्निष्क्रम्य समीपवर्तिनं पल्वलं प्रविष्टः। चित्राङ्गोऽप्यप्राप्तस्यापि तस्य तल उत्थाय वायसेन सह पलायितः। एतस्मिन्नन्तरे (७) विलक्षो विषादपरो लुब्धको निवृत्तो यावत्पश्यति, तावत्कच्छपोऽपि गतः। ततश्च तत्रोपविश्येमं श्लोकमपठत्—

प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत्त्वया मे हृतः
सम्प्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्यया
यच्चान्यन्न कृतं कृतान्त! कुरु ते तच्चापि सह्यं मया॥१९८॥

---

जनो वेत्ति=जानीते, न इतर=अन्य. साधारणो मन्दप्राज्ञो जनो न वेत्ति, अप्राज्ञस्तु ज्ञातुमसमर्थ एवेत्यर्थ। उक्तञ्च कालिदासेन शकुन्तलायाम्—"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय" इति॥ १९७॥

(१) पाशेति—पाशेन जालेन यद्बन्धनं तज्जनितया वेदनया पीडया। (२) सावशेषजीवित=अवशिष्टजीवन। (३) त्रोटयित्वा=भञ्जयित्वा। (४) मृगमुपाद्रवत्=मृगमुद्दिश्यान्वधावत। (५) वज्रोपमेति—वज्रोपमा कुलिशसमा या दंष्ट्रा दन्त तद्रूपेण प्रहरणेन शस्त्रेण। (६) तद्दर्भवेष्टनम्=तस्य कुशपाशम्। तादिति पृथक् पदं वा। (७) विलक्ष=सलज्ज। विषादपरः=दुःखित।

लुब्धको दैवमुपालभते—"प्राप्त" इति—हे कृतान्त! दुर्दैव! अयम्=पुरोवर्ती(सन्निकृष्ट)गुरुमृग=पुष्टो हरिण. मे=मम बन्धनम्=पाश प्राप्तोऽपि दृढबद्धो-

एवं बहुविधं (१) विलप्य स्वगृहं गतः। अथ तस्मिन्व्याधे दूरतरं गते सर्वेऽपि ते काककूर्ममृगमूषिकाः परमानन्दभाजः परस्परमालिङ्गय पुनर्जातमिवात्मानं मन्यमानास्तदेव सरः संप्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म। एवं ज्ञात्वा (२) विवेकिना मित्रसंग्रहः कार्यः। न च मित्रेण सह (३) व्याजेन वर्तितव्यमिति। उक्तं च यतः—

यो मित्राणि करोत्यत्र न कौटिल्येन वर्तते।
तैः समं न पराभूतिं सम्प्राप्नोति कथंचन॥ १९९॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रसम्प्राप्ति नाम द्वितीयं तन्त्रं समाप्तम्।

---

ऽपि त्वया हृतः=विनाशितो गृहीत इत्यर्थ। ततः—कमठः=कच्छपः सम्प्राप्तो मया सचापि तव आदेशात =तवैवाज्ञया नष्टः=पलायित इति नियतम्=निश्चितम्, अहञ्च भार्यया=पत्न्या तथा शिशुकं=पुत्रकं समं=समकालमेव त्यक्तः=विहीनः पुत्रादिविकलः अत्र वने=अरण्ये क्षुत्क्षामः=बुभुक्षया आर्त्तः भ्रमामि=पर्यटामि। यच्च अन्यत्=अनिष्टं ते=त्वया न कृतम्=न सम्पादितम्, तत् अपि कुरु=साधय, मया तु सह्यम्=सोढव्यमेव। तव दत्तामाज्ञा कोऽपि वारयितुं न समर्थ इति भावः। अत्र "ते" इति "त्वया" इत्यस्यार्थेऽव्ययम्। "ते मे शब्दौ निपातेषु" (अधि० ५। अ० २। सू० १०) इति वामनोक्तेः। शार्दूलविक्रीडितम्॥१९८॥

(१) विलप्य=शोकं कृत्वा। (२) विवेकिना=कुशलेन। (३) व्याजेन=दम्भेन।

"यः" इति—मित्रविषये दम्भपरित्यागस्य गुणमाह—अत्र=लोके यः=पुमान् मित्राणि करोति, मित्रैः समं=सह कौटिल्येन=छलेन च न वर्त्तते=नैव व्यवहरति, : कदाचन=कदाचिदपि पराभूतिम्=शत्रुभिः कृतं पराभवम् न सम्प्राप्नोति=न लभते। छलविहीनाया मैत्र्या कृताया परमैश्वर्यमवाप्यत इति निर्गलितोऽर्थः १९९

इति श्रीकवितार्किक-नृसिंहदेवशास्त्रि-दर्शनाचार्य-विरचितायां पञ्चतन्त्रस्य "सुबोधिनी" टीकायां मित्रसम्प्राप्ति नाम द्वितीयं तन्त्रम्।

---

# काकोलूकीयं नाम तृतीयं तन्त्रम्।

अथेदमारभ्यते (१) काकोलूकीयं नाम तृतीयं तन्त्रम्। यस्यायमाद्यः श्लोकः—

> न विश्वसेत्पूर्वविरोधितस्य
> शत्रोश्च मित्रत्वमुपागतस्य।
> दग्धां गुहां पश्य उलूकपूर्णां
> काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य समीपस्थो (२) नेकशाखासनाथोऽतिघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति। तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म। स तत्र विहितदुर्ग-

---

(१) काकोलूकीयम्=काकश्च उलूकश्चानयोः समाहारः काकोलूकम्। काकोलूकमधिकृत्य कृतो ग्रन्थ इति "काकोलूकीयम्" "अधिकृत्य कृते ग्रन्थे" (४।३।८७) इत्यनेन छ प्रत्यय, तस्येय्।

शत्रौ कृतो विश्वासोऽनर्थमेव प्रसूते इत्याह—"न" इति। पूर्वविरोधितस्य=पूर्वश्चासौ विरोध "पूर्वविरोधः" सोऽस्यास्तीति पूर्वविरोधितः "तदस्य सञ्जात' —(५।२।३६) मितीतच्। एवम्भूतस्य पूर्वं वैरं गतस्य शत्रो =वैरिणः पश्चात् मित्रत्वम्=मैत्रीम् उपागतस्य च=प्राप्तस्यापि (चोऽप्यर्थे) न विश्वसेत्=न विश्वासं कुर्यात्। तथाहि—उलूकपूर्णाम्=उलूकै पेचकै पूर्णां व्याप्ता गुहाम्=कन्दराम्, काकप्रणीतेन=काकेन वायसेन (मित्रभावङ्गतेन) प्रणीत प्रापित इति काकप्रणीतस्तेन वह्निना=अग्निना दग्धाम्=भस्मसात्कृता पश्य=प्रेक्षस्व। विशेषेण सामान्य समर्थनरूपोऽर्थान्तरन्यास ॥ १ ॥

(२) अनेकेति—अनेकाभि शाखाभिः सनाथ सहित.। अतिघनतराणि=नितान्तं निविडानि यानि पत्राणि छदानि तै छन्न समाकीर्णः। न्यग्रोधपादप =वटवृक्ष।

रचनः सपरिजनः कालं नयति स्म। तथान्योऽरिमर्दनो नामोलूकराजोऽसङ्ख्योलूकपरिवारो (१) गिरिगुहादुर्गाश्रयः प्रतिवसति स्म। स च रात्रावभ्येत्य सदैव तस्य न्यग्रोधस्य समन्तात्परिभ्रमति। अथोलूकराजः पूर्वविरोधवशाद्यं कंचिद्वायसं (२)समासादयति तं व्यापाद्य गच्छति। एवं नित्याभिगमनाच्छनैः शनैस्तन्न्यग्रोधपादपदुर्गं तेन समन्ता (३) न्निर्वायसं कृतम्। अथवा भवत्येवम्। उक्तं च—

य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।
रोगं चालस्यसंयुक्तः स शनैस्तेन हन्यते ॥ २ ॥

तथा च—

जातमात्रं न यः शत्रुं व्याधिं च प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥ ३ ॥

---

(१) गिरिगुहादुर्गाश्रय =गिरेः पर्वतस्य गुहा दरी एव दुर्गं कोट्टमाश्रयो यस्य स। (२) समासादयति=लभते। व्यापाद्य=हत्वा (३) निर्वायसम्=काकशून्यम्। अनेके काका हता इत्यर्थ।

"य"इति--य =योजन आलस्यसंयुक्त =क्रियाविहीन सन् यदृच्छया=स्वच्छन्दं प्रसरन्तम्=वृद्धिं प्राप्नुवानं स्वम्=स्वकीयं शत्रुं रोगम्=व्याधिञ्च उपेक्षेत=तन्निवारणविषये औदासीन्यमाश्रयेत् स =सोऽयमलस शत्रूपेक्षाकारी पुरुष तेन=शत्रुणा रोगेण च शनै.=क्रमेण हन्यते=हिंस्यते मार्यते इति यावत्। शत्रो रोगस्य च प्रथमत एव प्रतीकारकरणं श्रेय इति भाव ॥२॥

"जातमात्रम्"इति—य =यो जन जातमात्रम्=उत्पन्नमात्रमुत्पन्नमित्य . शत्रुं व्याधिञ्च प्रशमं=शान्ति न नयेत्=न गमयेत् स निरुद्योगी प्रमादी वा अतिपुष्टाङ्गयुक्तोऽपि=अतिपुष्ट अत्यन्तं पुष्टै अतिमात्रं प्रबलै अङ्गै =शरीरावयवैर्हस्तपादादिभि मन्त्रिप्रभृतिभी राज्याङ्गैश्च युक्तोऽपि पश्चात्=अनन्तरं तेन=शत्रुणा व्याधिना च हन्यते=विनाश्यते। शत्रुर्व्याधिश्चादावेव समूलघात हन्तव्यौ कदापि नोपेक्ष्यावित्याशय ॥ ३ ॥

अथान्येद्युः स वायसराजः (१) सर्वान्वायससचिवानाहूय प्रोवाच—: (२) उत्कटस्तावदस्माकं शत्रुरुद्यमसंपन्नश्च कालवशान्नित्यमेव (३) निशागमे समेत्यास्मत्पक्षकर्तनं करोति। तत्कथमस्य (४) प्रतिविधानम्। वयं तावद्रात्रौ न पश्यामः, न च तस्य दिवा दुर्गं विजानीमः, येन गत्वा प्रहरामः। तदत्र विषये किं युज्यते (५) संधि-विग्रह-यान-आसन-संश्रयद्वैधीभावानामेकतमस्य क्रियमाणस्य। तद्विचार्य शीघ्रं कथयन्तु भवन्तः। अथ ते प्रोचुः—युक्तमभिहितं देवेन यदेष प्रश्नः कृतः। उक्तं च—

अपृष्टेनापि वक्तव्यं सचिवेनात्र किंचन।
पृष्टेन तु ऋतं पथ्यं वाच्यं च प्रियमप्रियम्॥ ४॥
यो न पृष्टो हितं ब्रूते परिणामे सुखावहम्।
सुमन्त्री प्रियवक्ता च केवलं स रिपुः स्मृतः॥ ५॥

---

(१) सर्वान्=सकलान्। वायससचिवान्=काकमन्त्रिणः। आहूय=आकार्य। मन्त्रिमण्डलस्य परिषदं कृत्वेत्यर्थः। (२) उत्कटः=उद्धतः। उद्यमसम्पन्नः=उत्साही। (३) निशागमे=रात्रेरारम्भे। **अस्मदिति**—अस्माकं पक्षस्य कर्तनं विध्वंसनम्। (४) प्रतिविधानम्=प्रतीकारः। (५) **सन्धीति**—सन्ध्यादीनां स्वरूपमनुपदं तत्र २ स्फुटीभविष्यति।

राज्ञा सचिवानां विचारोऽवश्यमधिगन्तव्यो मन्त्रिभिश्च सत्यमेव कथ्यम् इत्याह—"**अपृष्टेना**" पीति—अत्र=राज्यव्यवहारे अपृष्टेनापि=अजिज्ञासितेनापि सचिवेन=मन्त्रिणा किंचन=यत् किमपि कालोचितं तत् वक्तव्यम्=गदनीयम्। पृष्टेन=अनुयुक्तेन तु सता मन्त्रिणा प्रियम्=हितम्, अप्रियम्=अहितम् ऋतम्=सत्यम् तथा—पथ्यम्=उदर्के सुखप्रदं वाच्यम्=निगाद्यम्॥ ४॥

पृष्टोऽपि सचिवो युक्तं न वक्ति चेदसौ न हितवादीत्याह - "**यो न**" इति—यः सुमन्त्री प्रियवक्ता=हितवादी अमात्यः पृष्टः=कृतप्रश्नोऽपि हितम्=इष्टम्, परिणामे=उदर्के सुखावहम्=सुखप्रदं न ब्रूते नैवोपदिशति (राजानम्प्रति) स केवलं रिपुः=शत्रुरेव स्मृतः=उक्तो नीतिशास्त्रकारैरिति शेषः॥ ५॥

तस्मादेकान्तमासाद्य कार्यो मन्त्री महीपतेः।
येन तस्य वयं कुर्मो निर्णयं कारणं तथा ॥ ६ ॥

अथ स मेघवर्णो (१)ऽन्वयागतोज्जीवि-संजीवि अनुजीवि-प्रजीवि—चिरजीविनाम्नः पञ्च सचिवान्प्रत्येकं प्रष्टुमारब्धः। तत्रैतेषामादौ तावदुज्जीविनं पृष्टवान्—भद्र! एवं (२) स्थिते किं मन्यते भवान् स आह—राजन्! बलवता सह (३) विग्रहो न कार्यः। यथा स (४) बलवान्कालप्रहर्ता च। उक्तं च यतः—

बलीयसे प्रणमतां काले प्रहरतामपि।
संपदो नापगच्छन्ति प्रतीपमिव निम्नगाः ॥ ७ ॥

---

मन्त्रणाया अवश्यकर्त्तव्यत्वमाह—"तस्मादि" ति—तस्मात्=यस्मात् कारणाद्धितप्रियादिवादिनैव मन्त्रिणा भाव्यं तस्माद्धेतो एकान्तम्=रह प्रदेशम्, आसाद्य=प्राप्य, महीपते=(प्रकृते) राज्ञो वायसराजस्येत्यर्थ मन्त्रः=मन्त्रणा कार्य स्वामात्यै सहेति शेष। येन=मन्त्रेण वयम्=सर्वेऽपि मन्त्रिण तस्य=राज्ञ निर्णयम्=सन्धिविग्रहादिनिश्चयं तथा कारणम्=हेतुञ्च अनुष्ठानरूपं कुर्म=विदधीमहि। प्रकाशे मन्त्रो न कार्य इति तु रहस्यम् ॥६॥

(१) अन्वयागतान्=कुलक्रमायातान्। उज्जीव्यादीन्। एतानि मेघवर्णस्य मन्त्रिणा नामानि। (२) एवं स्थिते=एतस्यामवस्थायामित्यर्थ। (३) विग्रह=युद्धम्। (४) कालप्रहर्त्ता=स्वसमये प्रहारकर्त्ता रन्ध्रमन्विष्य प्रहारीत्यर्थ।

"बलीयसे" इति—बलीयसे=अतिशयेन बलवते शत्रवे प्रणमताम्=प्रणामं कुर्वता तदाज्ञया वर्त्तमानानाम्, तथा—काले प्रहरताम्=रन्ध्रमन्विष्य —नामुपरि प्रहारं कुर्वतामपि, सम्पद=श्रिय धनानि, निम्नगा=निम्नप्रदेश [illegible] नद्यः प्रतिकूलम्=प्रतीपमूर्ध्वदेशमिव पक्षान्तरे—प्रतिकूलं=शत्रुपक्षं [illegible]न्तिऽनैवापयन्ति, शत्रुहस्तमुपेत्य विनाशं न यान्तीत्यर्थ।

यथा निम्नस्वभावगामित्वान्नद्य कदाप्यूर्ध्वे न यान्ति तद्वत् देशकालाधिकार [illegible]कर्तव्यविवेकशालिनो दुर्बलस्यापि स्वामिन सम्पदोऽधिकबलान् [illegible]पि नाश्रयन्ते इति भाव ॥ ७ ॥

तथा च—

सन्त्याज्यो धार्मिकश्चार्यो भ्रातृसङ्घातवान्बली।
अनेकविजयी चैव सन्धेयः स रिपुर्भवेत्॥ ८॥
सन्धिः कार्योऽप्यनार्येण विज्ञाय प्राणसंशयम्।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितम्॥ ९॥

(१) येनानेकयुद्धविजयी स तेन विशेषात्सन्धेयः। उक्तं च—

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रभावेण तस्याशु वशं गच्छन्त्यरातयः॥ १०॥
सन्धिमिच्छेत्समेनापि सन्दिग्धो विजयो युधि।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः॥ ११॥

---

कै सह सन्धि कर्त्तव्यो विग्रहो वा न कार्य इत्याह—"सन्त्याज्य" इति—धार्मिक=धर्मपरायण, आर्य=साध्वाचार परस्याऽनुपतापीति यावत्, भ्रातृसङ्घातवान्=सहोदरसङ्घोपेत, बली=शक्तिमान् अनेकविजयी=बहुसमरविजेता च यो रिपु=शत्रु स सन्त्याज्य=परिहर्त्तव्य भवेत्, तेन सह विग्रह कदापि न कार्यो यतो ह्यसौ दुर्जय, किन्त्वसौ "सन्धि" नामकेनैवोपायेन परं सन्तोषणीय इत्याशय॥ ८॥

विजये सन्दिग्धे सति किं कर्त्तव्यमित्याख्याति—"सन्धि" रिति—प्राणसशयम्=प्राणा स्थास्यन्ति न वेति संशयं सन्देहं विज्ञाय=विशेषतो ज्ञात्वा, अनार्येण=दुष्टेनापि सन्धि कार्य स्वहितं कामयमानेन जनेनेति शेष। यत प्राणै=असुभि संरक्षितै=कृतरक्षै सद्भिः सर्व रक्षितम्=स्थितं भवति। जीवन्नरो भद्रशतानि पश्यतीत्युक्तेरिति भाव॥ ९॥

(१) येन=कारणेन। स=उलूकराज।

प्रबलेन सह सन्धेर्विशेषफलमाचष्टे "अनेके" ति—अनेकयुद्धविजयी=बहुसमरविजेता राजा, यस्य=यस्य कस्यापि अन्यस्य हीनबलस्य सन्धानम्=सन्धिम् गच्छति=प्राप्नोति सन्धिनामकेनोपायेन मैत्रीं करोतीत्यर्थ तस्य=कृतसन्धे अरातय=शत्रव तत्प्रभावेण=अनेकयुद्धविजयिन प्रतापेन आशु=क्षिप्रमेव वशं गच्छन्ति=अधीना जायन्ते॥ १०॥

विजयसन्देहे भूयोऽपि कृत्यमुपदिशति—"सन्धि" मिति—यदि

सन्दिग्धो विजयो युद्धे जनानामिह युध्यताम्।
उपायत्रितयादूर्ध्वं तस्माद्युद्धं समाचरेत्॥ १२॥
असन्दधानो मानाद्यः समेनापि हतो भृशम्।
आमकुम्भ इवान्येन करोत्युभयसङ्क्षयम्॥ १३॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे।
दृषत्कुम्भं यथा भित्त्वा तावत्तिष्ठति शक्तिमान्॥ १४॥

---

युधि=सङ्ग्रामे विजय सन्दिग्ध =संशयितोऽस्ति, तदा समेनापि=समवलेनापि सन्धिमिच्छेत्=सन्धि कुर्यात्। सांशयिकम्=संशयविषयीभूतं कार्यं नहि कुर्यात्=कदापि न विदध्यात् इति=एतन्नीतियोगं वृहस्पति =देवगुरु उवाच=अकथयत्॥ ११॥

सङ्ग्रामो न बहु श्रेष्ठ इत्याशयेनाह--इह=लोके युध्यताम्=समरं कुर्वता जनाना युद्धे=सङ्ग्रामे विजय =जयलाभ. सन्दिग्ध =संशयापन्न, तस्मात् उपायत्रितयात्=उपायाना सामदानभेदाना त्रितयात् ऊर्द्ध्वम्=परत युद्धं समाचरेत्=अनुतिष्ठेत्। यदि सामादिभिराद्यैस्त्रिभिरुपायैरिष्टसिद्धिर्न भवेत्ततश्चरम उपाय आश्रयणीय इति भाव। "युध" धातुर्दैवादिक आत्मनेपदी चेति शानचि "युध्यमानाना" मिति भाव्यम्, परन्तु—"युध्येदिति युध क्याचि" (अधि० ५। अ० २। सू० २८) इति वामनोक्तदिशा "युध्यता" मिति शतरि न दुष्टम्॥ १२॥

समेन सह सन्ध्यकरणे दोषमाचष्टे--असन्दधान" इति। य =समबल· मानात्="अहं समवलेन शत्रुणा सन्धिं न विधास्यामि" इत्यहङ्कारात् समेनापि=समवलेनापि शत्रुणापि असन्दधान =सन्धिमकुर्वन् स अन्येन=
५र· समवलेन शत्रुणा भृशम्=अतिमात्रं हत =ताडित सन् आमकुम्भ
व=अपक्वघट इव उभयसङ्क्षयम्=स्वस्य स्वरिपोश्च द्वयोरपि विनाशं
.. ेति=जनयति, अत समशक्तिमान् शत्रुरवश्यमेव सन्धेयो न विग्रहीतव्य
३९ ·। ॥ १३॥

वलवता रिपुणा विग्रहो न कार्य इत्याह-"**सम**"मिति। शक्तिमता= वलवता रिपुणा समम्=सह अशक्तस्य=दुर्वलस्य युद्धं मृत्यवे-विनाशायैव

अन्यच्च—

भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम्।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत्॥ १५॥
खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम्।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत्॥ १६॥
तस्मान्न स्यात्फलं यत्र दृष्टं युद्धं तु केवलम्।
न तत्स्वयं समुत्पाद्यं कर्तव्यं न कथंचन॥ १७॥

---

भवति हि=इति निश्चितमेतत्। दृषत्=अश्मा कुम्भम्=मृद्घटं भित्त्वा=स्फोटयित्वा यथा तिष्ठति तावत्=तद्वत् शक्तिमान् तिष्ठति दुर्बलं निहत्यैव विश्रमं करोतीत्यर्थः। प्रबलो रिपुः सर्वथैव सन्धेय इति भावः॥ १४॥

विग्रहात्पूर्वं तत्फलविषये बहुविचार्यमित्याह—"भूमि"रिति भूमिः=पृथिवी, मित्रम्=सुहृत्, हिरण्यम्=सुवर्णं धनकोशो वेति यावत् विग्रहस्य युद्धस्य फलत्रयम्=एतानि त्रीणि फलानि सन्तीत्यर्थः। यदि एषाम्=भूम्यादित्रयाणां मध्ये एकमपि नास्ति=न स्यात् तदा विग्रहम्=सङ्ग्रामं न समाचरेत्=नैव कुर्यात्॥ १५॥

उक्तेऽर्थे उपपत्तिं दर्शयति—"खनना"दिति—सिंहः=पञ्चास्यो महाबली पाषाणशकलाकुलम्=पाषाणां प्रस्तराणां शकलैः खण्डैराकुलं सङ्कीर्णम् आखुबिलम्=आखोर्मूषिकस्य बिलं=गर्त्तम्, खनन्=उत्पाटयन् नखभङ्गम्—नखानां करजानां भङ्गं त्रोटनं प्राप्नोति, वा=अथवा मूषकः=अतिक्षुद्रो जन्तुरुन्दुरः (येन तस्य प्राणयात्रासिद्धिरेव न स्यात्) फलम्=परिणामः भवेत्।

अल्पलाभाय बह्वी हानिर्नोत्थापनीयेति भावः॥ १६॥

"तस्मादि"ति—तस्मात् कारणात् यत्र=यस्मिन् कार्ये फलम्=उक्तं भूम्यादित्रितयलम्भनं न दृष्टम् तु=किन्तु केवलम्=शुष्कं निरर्थकं युद्धमेव, तत्=तादृशं कार्यं स्वयं न समुत्पाद्यम्=स्वकीयया चेष्टया नोत्थापनीयम्, परेणोत्पादितञ्चेत् तदापि कथञ्चन न कर्त्तव्यम्=कथमपि न विधेयम्। किन्त्वे तादृशेऽवसरे सन्धिरेव विधेय इति निर्गलितोऽर्थः॥ १७॥

बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत् ।
वाञ्छन्नभ्रंशिनी लक्ष्मीं न भौजङ्गीं कदाचन ॥ १८ ॥
कुर्वन्हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम् ।
भुजङ्गवृत्तिमापन्नो वधमर्हति केवलम् ॥ १९ ॥
कौर्मं संकोचमास्थाय प्रहारानपि मर्षयेत् ।
काले काले च मतिमानुत्तिष्ठेत्कृष्णसर्पवत् ॥ २० ॥

---

"**बलीयसे**"ति—बलीयसा=अतिबलवता शत्रुणा समाक्रान्त=कृताक्रमणोऽभिभूतः सन वैतसीम्=वेतससम्बन्धिनीं वृत्तिं व्यवहारं नम्रतामित्यर्थ आश्रयेत्=समाचरेत् । किं कुर्वन् सन् अभ्रंशिनी=अविनश्वरा लक्ष्मी=सम्पत्तिं वाञ्छन्-अभिलषन् सन्, अतः—भौजङ्गीम्=भुजङ्गस्येयं भौजङ्गी सर्पसम्बन्धिनी तां वृत्तिं फणोत्थापनरूपामुद्धतामित्यर्थ कथञ्चन=कदापि न समाचरेदित्यनुषङ्गः । प्रबले शत्रौ यदि नम्रता न प्रदर्श्येत तदावश्यमध पात इति भाव ॥ १८ ॥

उक्तमेवार्थं स्फुटी करोति—"**कुर्वन्**"इति—हि=निश्चयेन वैतसीम्=वेतससम्बन्धिनीं वृत्तिम्=नम्रताव्यवहारं कुर्वन् महतीं श्रियम्=अनल्पां राष्ट्रसम्पत्तिं प्राप्नोति, भुजङ्गवृत्तिम्=सर्पवत् शिरउत्थानमनम्रताव्यापारम्-आपन्न=प्राप्तस्तु केवलं वधम्=मृत्युमेव अर्हति=प्राप्नोति विनाशभाग्-भवतीत्यर्थ ॥ १९ ॥

अत्रान्यदप्याह—"**कौर्म**" मिति—मतिमान्=धीमान् पुमान् कौर्मम्=कूर्मसम्बन्धिनं सङ्कोचम्=आकुञ्चनभावम् आस्थाय=आश्रित्य प्रहारान् अपि=शत्रुकृतानाघातानपि मर्षयेत्=सहेत, तथा—काले काले=समये समये

आगतं विग्रहं मत्वा सुसाम्ना प्रशमं नयेत् ।
विजयस्य ह्यनित्यत्वाद्रभसं च समुत्सृजेत् ॥ २१ ॥

तथा च—

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं नहि घनः कदाचिदुपसर्पति' ॥ २२ ॥

(१) एवमुज्जीवी साममन्त्रं सन्धिकारं क्लृप्तवान् ।

अथ तच्छ्रुत्वा सञ्जीविनमाह--भद्र! तवाभिप्रायमपि श्रोतुमिच्छामि । स आह—देव ! न ममैतत्प्रतिभाति यच्छत्रुणा सह सन्धिः क्रियते । उक्तं च यतः—

शत्रुणा न हि सन्दध्यात्सुश्लिष्टेनापि सन्धिना ।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ २३ ॥

---

"आगतम्" इति—विग्रहम्=युद्धम् आगतं=प्राप्तं मत्वा=विज्ञाय सुसाम्ना=शोभनेन सामोपायेन प्रशमम्=प्रकर्षेण शमं शान्तिं नयेत्=गमयेत् तत्र हेतुमाह—विजयस्येति विजयस्य=विजयलाभस्य अनित्यत्वात्=कादाचित्कत्वात् रभसं=युद्धोद्योगम्प्रति त्वरां च समुत्सृजेत्=परित्यजेत् हि=इत्येतन्निश्चितम् ।

नहि युद्धे एकान्तविजय , पराजयस्यापि दृश्यमानत्वात्, सामप्रयोगे स्वराष्ट्रस्थिरतैवेति न दोष इति भाव ॥ २१ ॥

बलवता तु सर्वथैव सङ्ग्रामो हेय इत्याह—"बलिना" इति । बलिना=बलवता शत्रुणा सह योद्धव्यम्=समरो विधेय इति निदर्शनम्=दृष्टान्त इति हासादिषु कथानक वा नास्ति=क्वापि नोपलभ्यते, हि=तथाहि , घन =मेघ प्रतिवातम्=वातस्य प्रातिकूल्येन कदाचिदपि न, उपसर्पति=नैव सञ्चरति । वातो हि घनापेक्षया प्रबलोऽतो यथा मेघो वाताऽनुकूल्येन सञ्चरति तद्वत् दुर्बल प्रबलानुसार्येव भवेदित्याशय ॥ २२ ॥

(१) उज्जीवी=तदाख्यो मन्त्री । साममन्त्रम्=सामप्रयोगेण मन्त्रणाम् । सन्धिकारम्=सन्धिविधानोपयोगिनम् । क्लृप्तवान्=स्थापितवान् ।

"शत्रुणा" इति—सुश्लिष्टेन=सम्यक् घटितेनापि सन्धिना="सन्धि"

अपरं च स(१) क्रूरोऽत्यन्तलुब्धो धर्मरहितः। तत्त्वया विशेषान्न सन्धेयः। उक्तं च यतः—

सत्यधर्मविहीनेन न सन्दध्यात्कथंचन।
सुसन्धितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ २४ ॥

तस्मात्तेन सह योद्धव्यमिति मे मतिः। उक्तं च यतः—

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेद्रिपुः॥ २५ ॥

---

नामकेन प्रयोगेण=प्रयोगद्वारा शत्रुणा=वैरिणा सह नहि=नैव सन्दध्यात्=सङ्गतिं कुर्यात् पुमानिति शेषः। तथाहि—सुतप्तम्=अतिमात्रं तापमुष्णतां प्राप्तम्—अत्युष्णमपि पानीयम्=जलं (कर्तृपदमिदम्) पावकम्=वह्निं शमयत्येव=निर्वापयत्येव, नैसर्गिकवैरित्वादिति भावः।

यथा जलमग्नेर्नैसर्गिकः शत्रुः, अग्निना सह सन्धिं प्राप्तं तदीयोष्णतयाऽभेदङ्गतमपि सति सम्भवे संहितमप्यग्निं निर्वापयति तद्वत् कृतसन्धिरपि नैसर्गिकः शत्रुर्घातको भवतीत्ययं साधर्म्येण **दृष्टान्तः** ॥ २३ ॥

(१) सः=उलूकराजः। क्रूरः=कठोरहृदयो निष्ठुर इति यावत्। अत्यन्तलुब्धः=महालोभी। धर्मरहितः=पापात्मा।

**"सत्ये"**ति—सत्यधर्मविहीनेन=सत्यपालनात्मकधर्मरहितेन मिथ्यावादिनेत्यर्थः कथञ्चन=कथमपि न सन्दध्यात्=सन्धिं न कुर्यात् यतः (एतादृशोऽसत्यपरः पुमान्) सुसन्धितः=सुष्ठु सन्धिना निगडितोऽपि असाधुत्वात्=दुर्जनत्वात् हेतोः अचिरात्=शीघ्रमेव विक्रियाम्=विकारं कृतस्यान्यथाभावं याति=प्राप्नोति, कृतमपि सन्धिं विघटयतीत्यर्थः ॥ २४ ॥

**"क्रूर"**इति—क्रूरः=निष्ठुरः, लुब्धः=तृष्णालुः, अलसः=दीर्घसूत्री, असत्यः=मृषावाक्, प्रमादी=अवधानशून्यः, भीरुः=त्रासोपेतः, अस्थिरः=धीरताविहीनः, मूढः=अविवेकी, युद्धावमन्ता=युद्धे निरुद्योगश्च रिपुः=शत्रुः सुखोच्छेद्यः=सुखेन विनाशयितुं शक्यः। अतो युद्धे उत्साहभङ्गो न प्रदर्शनीय इत्याशयोऽस्ति सञ्जीविनः ॥ २५ ॥

अपरं तेन (१) पराभूता वयम्। तद्यदि सन्धानकीर्तनं करिष्यामः स भूयोऽत्यन्तं कोपं करिष्यति। उक्तं च—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ २६ ॥
सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ २७ ॥

यदेवैतद्वदति रिपुर्बलवान् तदप्यकारणम्। उक्तं च यतः—

सोत्साहशक्तिसंपन्नो हन्याच्छत्रुं लघुर्गुरुम्।
यथा कण्ठीरवो नागे सुसाम्राज्यं प्रपद्यते ॥ २८ ॥

---

(१) पराभूता =तिरस्कृता । सन्धानकीर्त्तनम्=सन्धिप्रसङ्गम्।

"**चतुर्थ**" इति—चतुर्थोपायसाध्ये=चतुर्थेन दण्डात्मकेन युद्धापरपर्यायेण उपायेन साध्ये वशीकारार्हे रिपौ=शत्रौ सान्त्वम्=सामनामा आदिरुपाय अपक्रिया=असाधनम् प्रयोक्तुरेवानिष्टकारकमित्यर्थ तथाहि—स्वेद्यम्=स्वेदोपचारयोग्यम्, आमज्वरम्=अजीर्णज्वरमपक्वज्वरिणं रोगिणमित्यर्थ, अम्भसा पानीयेन क पुरुष =पुमान् प्रतीकारे लग्नो भिषक् परिषिञ्चति=परिषेकं करोति। यथा नवज्वरितस्याम्भ सेको ज्वराभिवृद्धये नतु तदुपशमाय, तथा कोपशालिनि शत्रौ सामप्रयोगोऽपि तदीयकोपोद्दीपनकरो नतु शान्तिकारणमित्युपमानोपमेयवाक्यगतयोर्धर्मयो बिम्बप्रतिबिम्बभावनिर्देशाद् **दृष्टान्तालङ्कारः** ॥ २६ ॥

"**सामवादा**" इति—सकोपस्य=कोपेन सह वर्त्तमानस्य क्रुद्धस्य शत्रो सामवादा =सान्त्वनवचनानि प्रत्युत=अधिकं दीपकाः=क्रोधोज्ज्वलना भवन्ति इति शेष नतु शान्तिं जनयन्तीत्यर्थ । कस्य के इव—प्रतप्तस्य=प्रकृष्टेन तापम्प्राप्तस्यात्युष्णस्य सर्पिष =घृतस्य सहसा=बलात् तोयबिन्दव =जलकणा इव। यथा प्रतप्तस्य घृतस्योपरि सहसा प्रक्षिप्ता जलबिन्दवस्तत्राग्निमुद्दीपयन्ति तद्वत् क्रुद्धं शत्रुम्प्रति सामवाक्यानि तदीयकोपानलमेव समुज्ज्वालयन्त्यतोऽसौ चतुर्थोपायसाध्य इति भाव ॥ २७ ॥

"**सोत्साहे**"ति—नागे=गजे (हस्तिनि महाकाये सत्यपि) यथा

मायया शत्रवो वध्या अवध्याः स्युर्बलेन ये ।
यथा स्त्रीरूपमास्थाय हतो भीमेन कीचकः ॥ २९ ॥

तथा च—

मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विपः ।
शष्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपम् ॥ ३० ॥
प्रयाति शमनं यस्य तेजस्तेजस्वितेजसा ।
वृथा जातेन किं तेन मातुर्यौवनहारिणा ॥ ३१ ॥

---

कण्ठीरव=सिंह (नागापेक्षया अल्पकायोऽपि) सुसाम्राज्यम्=सुखेनानायासेनैव प्रभुत्वं प्रपद्यते=करोति तथा—सोत्साहशक्तिसम्पन्न=उत्साहेन सह वर्त्तमाना सोत्साहा दृढहृदयसत्त्वनिश्चयोपेता या शक्ति सामर्थ्यं तया सम्पन्न समन्वितो नर लघु=अल्पोऽपि (चेत्) गुरुम्=महान्तं बलिनमपि शत्रुं हन्यात्=घातयेत् ॥ २८ ॥

"**मायया**" इति । ये शत्रव बलेन=शक्तिरूपेण साधनेन अवध्याः=(वधं नार्हन्ति) अहन्तव्या. ते मायया=कपटनीत्या वध्या=हन्तव्या भवन्ति । यथा भीमेन=भीमसेनेन स्त्रीरूपम्=नारीस्वरूप ( सैरन्ध्रयावेपं ) आस्थाय=कृत्वा कीचक=कीचकाख्यो विराटसेनापति हत=मारित । इयञ्च विराटनगरे गुप्तवासं कुर्वता पाण्डवाना भारतीया कथा विराटपर्वणि वर्णिता, यत्र सैरन्ध्रीरूपमवलम्ब्य परस्त्रीक्रमणकारी दुष्ट कीचको भीमसेनेन हत ॥२९॥

"**मृत्योरिवे**" ति—मृत्योरिव=यमस्येव उग्रदण्डस्य=उग्रो भयङ्करो दण्डश्चतुर्थोपायो यस्य तस्य तीक्ष्णतेजस राज्ञ. द्विप=शत्रव. वशं यान्ति=आयत्ता भवन्तीत्यर्थ । रिपव=शत्रव दयालुम्=कोमलस्वभावमनुग्रं नृपं शष्पतुल्यम्=बालतृणसममत्यन्तदुर्बलत्वेनानायाससमुच्छेद्य मन्यन्ते=यवस्यन्ति, हि=इत्येतन्निश्चितमेव नात्र कोपि संशय इत्यर्थ । प्रभुत्व-च्छद्भिरात्मतेजस्विता कदापि न परित्याज्येति भाव ॥ ३० ॥

'**प्रयाति**" इति—यस्य=राज्ञोऽन्यस्य वा संसारिण तेज=प्रताप [illegible] तेजस्विना प्रतापवता तेजसा प्रतापेन शमनम्=विनाशं प्रयाति, मातु=जनन्या यौवनहारिणा=तारुण्यक्षयकारिणा वृथा=मुधा जातेन=[illegible] किम्=सिद्धयति ? तेजो हीनस्य वृथैव जन्मेति भाव ॥ ३१ ॥

या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः।
कान्तापि मनसः प्रीतिं न सा धत्ते मनस्विनाम्॥ ३२॥
रिपुरक्तेन संसिक्तारिस्त्रीनेत्राम्बुभिस्तथा।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीवने॥ ३३॥

एवं सञ्जीवी विग्रहमन्त्रं विज्ञापयामास।

अथ तच्छ्रुत्वानुजीविनमपृच्छत्—भद्र! त्वमपि स्वाभिप्रायं निवेदय सोऽब्रवीत्—देव! दुष्टः स बलाधिको (१) निर्मर्यादश्च। तत्तेन सह सन्धिविग्रहौ न युक्तौ। केवलं (२) यानमर्हं स्यात्। उक्तं च—

बलोत्कटेन दुष्टेन मर्यादारहितेन च।
न सन्धिविग्रहौ नैव विना यानं प्रशस्यते॥ ३४॥

---

"या" इति—या लक्ष्मी=श्री वैरि०=वैरिणा शत्रूणा शोणितानि रुधिराण्येव कुङ्कुमानि काश्मीरकेशरा तै अनुलिप्ताङ्गी=अनुलिप्तानि=अञ्चितानि अङ्गानि अवयवा यस्या सा तादृशी न=नास्ति, सा कान्ता अपि=मनोहरा अपि मनस्विनाम्=शौर्यशालिना वीराणा मनस =हृदयस्य प्रीतिम्=प्रेमाणमानन्दमिति यावत्, न धत्ते=नो जनयति।

वीरा युद्धप्रियत्वात् स्वभुजबलोपार्जिता श्रियमेव प्रिया मन्यन्ते नत्वनायासलब्धामिति भाव ॥ ३२ ॥

"रिपुरक्तेन" इति—यस्य भूपस्य=राज्ञ भूमि =पृथिवी रिपुरक्तेन=रिपूणा शत्रूणा रक्तेन शोणितेन, तथा—अरीणा स्त्रियो नार्य तासा नेत्राम्बुभि =बाष्पवारिभि संसिक्ता=सम्यगार्द्रभावं नीता न स्यात्, तस्य जीवने=प्राणने, का श्लाघा=प्रशंसा न कापीत्यर्थ ॥ ३३ ॥

(१) निर्मर्याद =शिष्टव्यवहारविहीन । (२) यानम्=स्वराष्ट्ररक्षाविधानपूर्वक शत्रूद्ध्वंसनाय गमनम् । शत्रोस्त्रासार्थं युद्धसमुद्यममिति यावत्।

"बलोत्कटेने" ति—बलोत्कटेन=बलेनोद्धतेन, दुष्टेन=दुर्जनेन, अनार्येणेत्यर्थ । मर्यादारहितेन=परित्यक्तशिष्टाचारेण च सन्धिविग्रहौ न=नैव कार्यौ। तथा—यान विना=यानाख्यप्रयोगं विनाऽन्यन्न प्रशस्यते=युज्यते ॥ ३४ ॥

द्विधाकारं भवेद्यानं भयत्रस्तप्ररक्षणम् ।
एकमन्यज्जिगीषोश्च यात्रालक्षणमुच्यते ॥ ३५ ॥
कार्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते ।
यानमुत्कृष्टवीर्यस्य शत्रुदेशे न चान्यदा ॥ ३६ ॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्त्तिताः ।
व्यसने वर्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३७ ॥
स्वस्थानं सुदृढं कृत्वा शूरैश्चाप्तैर्महाबलैः ।
परदेशं ततो गच्छेत्प्रणिधिव्याप्तमग्रतः ॥ ३८ ॥

---

यानं विभजति—"**द्विधाकार**"मिति—यानम् द्विधाकारम्=द्विप्रभेदं भवेत्, तयोर्मध्ये एकं भयत्रस्तप्ररक्षणम्=भयत्रस्ताना रिपुभयेनार्त्तानां प्रकर्षेण रक्षणं भीतिकारणात्पालनम्, अन्यत्=द्वितीयन्तु जिगीषो.=जेतुमिच्छो यात्रालक्षणम्=युद्धकरणाय शत्रुम्प्रति गमनस्वरूपमुच्यते नीतिविद्भि-रिति शेषः ।

इदन्तु—"न वयं रिपोस्त्रस्ता अपि तु युद्धे स्थिरीभवाम" इत्येतत्प्रक-टनरूपम् ॥ ३५ ॥

यानप्रयोगस्य कालमाह—'**कार्तिके**"इति—उत्कृष्टवीर्यस्य= उत्कृष्टमाधिक वीर्यं बलं यस्य स तस्य समाधिकबलस्येत्यर्थ । विजिगीषो = जयकामस्य राज्ञ. कार्त्तिके=ऊर्जे अथवा चैत्रे मासि शत्रुदेशे=रिपो राष्ट्रे यानम्=युद्धाय यात्राकरणं प्रशस्यते, अन्यदा=अन्यस्मिन् चैत्रकार्त्तिक-मासभिन्ने काले न प्रशस्यते इत्यर्थ फलति ॥ ३६ ॥

"**अवस्कन्दे**"ति—व्यसने=स्त्रीमद्यादिस्वरूपदुर्व्यापारे वर्त्तमानस्य लग्नस्य, तथा—छिद्रान्वितस्य=छिद्रैः प्रकृतिकोपभवैर्महामायादिरूपैर्दु-र्भिक्षादिरूपैर्वा दोषैर्व्याप्तस्य शत्रो. विजयाय अवस्कन्दप्रदानस्य=अवस्कन्द आक्रमणं तस्य प्रदानं विधानमनुष्ठानमिति यावत् तस्य सर्वे काला.=चैत्रा-दिविशेषमनादृत्य सर्वेऽपि समयाः प्रकीर्त्तिता.=कथिता. नीतिविद्भिरिति शेष. । एतादृशस्य शत्रोर्विजयाय कालो न विचारणीय इति भाव ॥ ३७ ॥

"**स्वस्थान**" मिति—शूरैः=शौर्यवद्भि, आप्तै.=विश्वासपात्रैः कुलक-

अज्ञातविवधासारतोयशस्यो व्रजेत्तु यः ।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति ॥ ३९ ॥

तत्ते युक्तं कर्तुं (१) मपसरणम् । अन्यच्च—

न विग्रहो न सन्धानं वलिना तेन पापिना ।
कार्यलाभमपेक्ष्यापसरणं क्रियते बुधैः ॥ ४० ॥

उक्तं च यतः—

यदपसरति मेषः कारणं तत्प्रहर्तुं
मृगपतिरपि कोपात्सङ्कुचत्युत्पतिष्णुः ।
हृदयविहितवैरा गूढमन्त्रोपचाराः
किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ४१ ॥

---

मार्गतैरित्यर्थ , तथा—महावलै =महापराक्रमै शत्रुपराजयकरणाय साहसपरै. पुरुषै स्वस्थानम्=स्वराष्ट्रं सुदृढम्=वैरिभिरप्रधर्ष्यं कृत्वा=व्यवस्थाप्य, तत अग्रत =स्वावस्कन्दनात्पूर्वं प्रणिधिव्याप्तम्=प्रणिधिभिरर्थात् शत्रुच्छिद्रज्ञानाय पूर्वं प्रेषितैर्निजैर्गुप्तचरैराकीर्णं परदेशम्=शत्रो राष्ट्रं गच्छेत्=आक्रमेत् । चक्षु.स्थानीयैश्चरै प्रथमं ज्ञातच्छिद्रस्य शत्रोर्विजये नैव स्खलनम्,अन्यथा तद्भवतीति भावः ३८

"अज्ञाते"ति—न ज्ञातान्यज्ञातानि अनवबुद्धानि, विवध =अध्वा रिपुराष्ट्रप्रतिगमनमार्ग , आसार =सुहृद्बलम्,तोयम्=पानीयम्,शस्यम्=धान्यादिकञ्च एतेषा द्वन्द्व । अज्ञातानि अविदितानि विवधासारतोयशस्यानि येन स तादृश यो राजा विजिगीषु परराष्ट्रं व्रजेत्=गच्छेत् स भूय =पुन स्वराष्ट्रम्=स्वराजधानीं न अधिगच्छति=परावृत्य नैव लभते, स्वस्यैव पराजयप्राप्तेरित्यर्थः ।

"विवधो वीवधश्चापि पर्याहारेऽध्वभारयो " इति विश्व. । आसारस्तु सुहृद्बलम्" इति वैजयन्ती ॥ ३९ ॥

(१) अपसरणम्=यानम् ।

"न"इति—वलिना=बलवता पराक्रमिणा पापिना=दुरात्मना भ्रष्टाचारेण तेन=ऊलूकेन विग्रह =सङ्ग्राम सन्धानम्=सन्धिश्च न=नैव कर्त्तव्याविति शेष । कार्यलाभम्=कार्यस्य विजयरूपस्य लाभं प्राप्तिम् अपेक्ष्य=प्रतिपाल्य बुधै =नयविद्भि अपसरणम्=यानमेव क्रियते ॥ ४० ॥

"यदि" ति—मेष =भेडक इत्याख्यच्छागविशेष यत् अपसरति=

अन्यच्च—

बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः।
युधिष्ठिर इवाप्नोति पुनर्जीवन्स मेदिनीम् ॥ ४२ ॥
युद्धयतेऽहङ्कृतिं कृत्वा दुर्बलो यो बलीयसा।
स तस्य वाञ्छितं कुर्यादात्मनश्च कुलक्षयम् ॥ ४३ ॥

तद्बलवताभियुक्तस्यापसरणसमयोऽयं न सन्धेर्विग्रहस्य च। एवमनुजीविमन्त्रोऽपसरणस्य।

अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह—भद्र ! त्वमप्यात्मनोऽभिप्रायं वद। सोऽब्रवीत्—देव ! मम सन्धि-

---

अन्यमेषकेणाक्रान्त सन् पश्चाद्याति तत् अपसरणम्=प्रहर्तुम्=प्रहारं कर्तुं कारणम्=आक्रमणकारिणो मेषकस्य प्रहारहेतुरित्यर्थ । कोपात्=क्रोधात् उत्पतिष्णु =उत्पातकाम लक्ष्यमनुलक्ष्येति शेष मृगपति =सिंहोऽपि सङ्कुचति=प्रथमं सङ्कोचमाश्रयते, लक्ष्यभूतस्य प्राणिन उपरि पातात्प्रथमं स्वाङ्गसङ्कोचनं सिंहस्य प्रबलबलपातहेतुरेव भवतीति भाव ।

तथाहि—बुद्धिमन्त'=विवेकिनो जना , हृदये निहितं स्थापितं वैरं यैस्ते तथोक्ता अपि, गूढमन्त्रोपचारा =गूढ परत्राऽप्रकाशितो मन्त्रोपचारो मन्त्रणा व्यवहारो येषा ते तादृशा सन्त किमपि=किमपि विशिष्टं हेतुं विगणयन्त.= विचारयन्त. सहन्ते=शत्रुभि' कृतमुपद्रवं मर्षयन्ते । मालिनी वृत्तम् ॥ ४१ ॥

"बलवन्त"मिति—बलवन्तम्=पराक्रमिणं रिपुम्=शत्रु दृष्ट्वा= निश्चित्य यः=यो धीमान् देशत्याग करोति स पुनर्जीवन् सन् युधिष्ठिर इव मेदिनीम्=भूमिं (स्वराष्ट्रम्) आप्नोति।

यदि शत्रु प्रबल स्यात्तर्हि कालान्तरे जयैषिणा पुरुषेण देशत्यागोऽपि धेय', पश्चाद्योगेन बलमासाद्य शत्रुः पराजेय इति भाव. ॥ ४२ ॥

"युध्यते"इति—यो दुर्बल =अल्पपराक्रम. अहङ्कृतिम्=अभिमानं कृत्वा बलीयसा=समधिकबलवता शत्रुणा सह युद्ध्यते=सङ्ग्रामसमाचरति, स = अविवेकी दुरभिमान तस्य=शत्रो. वाञ्छितम्=इष्टमेव कुर्यात्,तथा—आत्मन'= स्वस्य कुलक्षयम्=कुलस्यविनाश समूलोन्मूलनं कुर्यादित्यनुपज्यते ॥ ४३ ॥

विग्रहयानानि त्रीण्यपि न (१) प्रतिभान्ति। विशेषत (२) श्चासनं प्रतिभाति। उक्तं च यतः—

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते॥ ४४॥

अन्यच्च।

अभियुक्तो बलवता दुर्गे तिष्ठेत्प्रयत्नवान्।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये॥ ४५॥
यो रिपोरागमं श्रुत्वा भयसन्त्रस्तमानसः।
स्वं स्थानं सन्त्यजेत्तत्र न स भूयो वसेन्नरः॥ ४६॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
स्थानहीनस्तथा राजा गम्यः स्यात्सर्वजन्तुषु॥ ४७॥

---

(१) प्रतिभान्ति=त्रीण्यपि न रोचयन्ते। (२) आसनम्=दुर्गादि. सङ्ग्रहीकरणम्।

"नक्र"इति—नक्र=कुम्भीर स्वस्थानम्-आसाद्य=स्वकीयं स्थान प्राप्य गजेन्द्रमपि=गजराजं महागजमपि कर्षति=आतानयति, स एव=गजेन्द्रस्याकर्षी स एव नक्र स्थानात्=स्वकीयात् जलरूपात् स्थानात्=प्रच्युत=परिभ्रष्टश्चेत् शुना=सारमेयेण अल्पबलेनापि परिभूयते=निराक्रियते वध्यते इत्यर्थ। "स्थानस्थित कापुरुषोऽपि सिंह" इति निष्कर्ष॥ ४४॥

"अभियुक्तः"इति—बलवता=पराक्रमिणा शत्रुणा अभियुक्त=आक्रान्तो नर प्रयत्नवान्=सावधान सन् दुर्गे=कोटे तिष्ठेत्, तत्रस्थ=दुर्गास्थित. आत्ममुक्तये=आत्मसंरक्षणाय सुहृदाम्=मित्रपक्षाणा आह्वानम्=साहाय्यायाभिमन्त्रण प्रकुर्वीत॥ ४५॥

"य" इति—य=योजन रिपो=शत्रो आगमम्=सङ्ग्रामायागमनमभिक्रमण श्रुत्वा=आकर्ण्य भयेन सन्त्रस्तं विह्वल मनो यस्य स तादृश. स्वम्=स्वीयं स्थान सन्त्यजेत् स नर भूय=पुन न वसेत्=स्वस्थाने निवासं कर्तुं कदापि समर्थो न भवितुमर्हतीत्यर्थ॥ ४६॥

'दंष्ट्रे'ति—दंष्ट्राविरहित=उत्पाटितदन्त सर्प=भुजङ्ग., मदहीन

निजस्थानस्थितोऽप्येकः शतं योद्धुं सहेन्नरः ।
शक्तानामपि शत्रूणां तस्मात्स्थानं न सन्त्यजेत् ॥ ४८ ॥
तस्माद् दुर्गं दृढं कृत्वा सुभटासारसंयुतम् ।
प्राकारपरिखायुक्तं शस्त्रादिभिरलङ्कृतम् ॥ ४९ ॥
तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन्सम्प्राप्स्यसि क्ष्मान्तं मृतो वा स्वर्गमेष्यसि ॥ ५० ॥

अन्यच्च—

बलिनापि न बध्यन्ते लघवोऽप्येकसंश्रयाः ।
विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥ ५१ ॥

---

गतमद गजः=हस्ती च, एतौ द्वावपि यथा=यद्वत् वीर्यशून्यत्वात्सर्वैरेव तिरस्कर्तुं शक्येते, तथा=तद्वत् स्थानहीन =स्वस्थानपरिभ्रष्ट राजा सर्वजन्तुषु=सर्वेषु जन्तुषु प्राणिषु मध्ये येन केनापि गम्य =प्राप्योऽभिभवनीय इति यावत् स्यात्=भवति । अत स्वस्थानपरित्याग. कदापि न विधेय इति भाव ॥ ४७ ॥

"निजे" ति—निजस्थानस्थित =स्वस्थानावलम्बी एकोऽपि नर शक्तानाम्=बलवतामपि शत्रूणा शतं योद्धुम्=सङ्ग्रामायितुं सहेत्=समर्थो भवति, तस्मात् कारणात् स्थान=स्वाश्रयं न सन्त्यजेत् ॥ ४८ ॥

एवमुक्त्वा स्वाभिमत प्रकटीकरोति द्वाभ्या "तस्मादि" ति—तस्मात्=उपरिदर्शिताद्धेतुवृन्दात्, सुभटासारसंयुतम्=सुभटै महावीरै आसारै सुहृद्बलैश्च संयुतं परिव्याप्तम्, प्राकारै प्राचीरै परिखाभिर्महाखातैर्युक्तम्, तथा-शस्त्रादिभि =भुशुण्डीतोमरशतघ्नीप्रभृतिभिर्नानाविधै प्रहरणै. अलङ्कृतम्=सर्वदिक्षु मण्डितम् तथा—दृढम्=सुसम्बद्धं शत्रुकृतैराक्रमणैरभेद्यं दुर्गम्=कोट्टं कृत्वा=विधाय मध्यगत =दुर्गान्तरालवर्ती नित्यम्=निरन्तरं तिष्ठ=स्थितो भव, कथम्भूत -युद्धाय=समराय कृतनिश्चय =कृत सिद्धो निश्चयो यस्य स तादृश । एवं सति—जीवन्=प्राणन् (चेत्) क्ष्मान्तम्=क्ष्माया पृथिव्या अन्तं सागरान्ता पृथिवीमित्यर्थ प्राप्स्यसि=लप्स्यसे, मृतो वा=मृतश्चेत् स्वर्गम् एष्यसि=नाकलोकं यास्यसि, अकातरस्य समरे मृतस्य स्वर्गलोकप्राप्तेरिति भाव । तथा चोक्तं गीतायाम्—"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इति॥४९-५०॥

"बलिने"ति—एकसंश्रय =एक संश्रयः स्थित्याधारो येषा ते सहधी-

महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः।
प्रसह्य इव वातेन शक्यो धर्षयितुं यतः॥ ५२॥
अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः।
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसंश्रयात्॥ ५३॥
एवं मनुष्यमेकं च शौर्येणापि समन्वितम्।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम्॥ ५४॥

एवं प्रजीविमन्त्रः। इदमासनसंज्ञकम्।

एतत्समाकर्ण्य चिरञ्जीविनं प्राह—भद्र! त्वमपि स्वाभिप्रायं वद। सोऽब्रवीत्—देव! (१) षाड्गुण्यमध्ये मम संश्रयः सम्यक्प्रतिभाति तत्तस्यानुष्ठानं कार्यम्। उक्तं च—

---

भूत्वैकस्मिन्नधिकरणे स्थिता मित्रभूता. लघवोऽपि=दुर्बला अपि, बलिना अपि=पराक्रमशालिनाऽपि विपक्षेण शत्रुणा न बध्यन्ते=नैव हन्यन्ते हन्तुं न शक्यन्त इत्यर्थ। केन के इव—विपक्षेण अपि=विरुद्धेन सतापि मरुता=पवनेन एकस्थानस्थवीरुध=एकस्मिन् स्थाने स्थिता वीरुध लता सजातीया सतत्य यथा=इव। उपमा॥ ५१॥

"महानपी"ति—महान्=विशालोऽपि बलवान्=प्रबल. सुप्रतिष्ठित=दृढमूल एकज=एकल सन् यत=यस्मात् कारणात् प्रसह्य इव=बलादिव वातेन=पवनेन धर्षयितुम्=उत्पाटयितु शक्यो भवति तस्मादेकलो न तिष्ठेदिति निष्कृष्टोऽर्थ॥ ५२॥

"अथे"ति—अथ=किञ्च ये संहता=सङ्घीभूय स्थिता, सर्वत=समन्तत सुप्रतिष्ठिता—बद्धमूला वृक्षा सन्ति ते एकसंश्रयात्=समानाश्रयाद्धेतो. वातेन=वायुना शीघ्रेण=प्रबलवेगिनाऽपि न हन्यन्ते=हन्तु न शक्यन्ते। "हि" इति निश्चितोऽयमर्थ॥ ५३॥

"एव"मिति—शौर्येणापि समन्वितम्=महावीरमपीत्यर्थ एकं मनुष्यम् एकाकिन नरम्, द्विषन्त=शत्रव शक्यम्=शक्यसमुच्छेद (विनाश्यं) मन्यन्ते. तत परम्=विनाश्यज्ञानोत्तरं च हिंसन्ति=घातयन्ते॥ ५४॥

(१) षाड्गुण्यमध्ये=सन्धिविग्रहयानासनद्वैधीभावसमाश्रयमध्ये। संश्रय=बलवतो धार्मिकस्य विजयिनो राज्ञ समाश्रयणम्।

असहायः समर्थोऽपि तेजस्वी किं करिष्यति ।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति ॥ ५५ ॥
सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः ॥ ५६ ॥

तदत्रैव स्थितेन त्वया कश्चित्समर्थः समाश्रयणीयः, यो (१) विपत्प्रतीकारं करोति । यदि पुनस्त्वं स्वस्थानं त्यक्त्वान्यत्र यास्यसि, तत्कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति। उक्तं च यतः—

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ५७ ॥

---

संश्रयस्य फलं दर्शयितुमुपक्रमते—"असहाय"इति । समर्थ –शक्तिमान् तेजस्वी अपि=तथा प्रतापशाली असहाय =प्रबलाश्रयशून्यश्चेत् किं करिष्यति=किमपि कर्तुं नैव शक्ष्यति । तथाहि--निर्वाते=वातरहिते प्रदेशे ज्वलित =प्रदीप्तोऽपि वह्नि.=अग्नि स्वयमेव प्रशाम्यति=निर्वाति । वह्निर्हि वायुसखा, तत्साहाय्याभावात् प्रदीप्तो भवतीति भाव । अत्रोपमानोपमेयवाक्ययोः परस्परबिम्बप्रतिबिम्बभावेन दृष्टान्तालङ्कारः ॥ ५५ ॥

उक्तमेवार्थं प्रकारान्तरेण पोषयति—"सङ्गति" रिति—पुंसाम्=नराणा सङ्गति·=सम्मिलनं सहायसङ्घ इत्यर्थ श्रेयसी=कल्याणकारिणी भवतीति शेषः, परं सा सङ्गति स्वपक्षे=स्वीयपक्षे स्वसाजात्यै सह विशेषत =विशेषेणातिशयेन श्रेयसी श्रेयस्करी भवति । तथाहि—तुषैरपि=अतितुच्छैरपि तुसै कडङ्गरै परिभ्रष्टा =विहीना सन्तः तण्डुला =तन्दुला न प्ररोहन्ति=नैव अङ्कुरयन्ति । तुषसङ्गतेरभावाद्यथा तन्दुला अङ्कुरोत्पादने न समर्था तथा स्वसजातीयसङ्गतिविहीना पुरुषा अपि शत्रुपराजयादिस्वाभीष्टकार्यसाधने अशक्ता एव तिष्ठन्तीति भाव । अत्र वैधर्म्येण दृष्टान्तालङ्कारो बोध्य ॥५६॥

(१) विपत्प्रतीकारम्=विपत्तीना निवारणोपायम् ।

स्वस्थानस्थबलं परात्प्राप्यमाणसाहाय्ये हेतुर्भवितुमर्हतीत्यमुमर्थं भङ्ग्यन्तरेण निर्दिशति—"वनानी" ति—वनानि=जङ्गलप्रदेशान् दहत =भस्मी-

अथवा नैतदेकान्तं यद्बलिनमेकं समाश्रयेत्। लघूनामपि संश्रयो रक्षायै एव भवति। उक्तं च यतः--

सङ्घातवान्यथा वेणुर्निबिडो वेणुभिर्वृतः।
न शक्यः स समुच्छेत्तुं दुर्बलोऽपि तथा नृपः॥ ५८॥

यदि पुनरुत्तमसंश्रयो भवति तत्किमुच्यते। उक्तं च—

महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम्॥ ५९॥

तदेव संश्रय विना न कश्चित्प्रतीकारो भवति। तस्मात्संश्रयः कार्य इति मेऽभिप्रायः। एवं चिरंजीविमन्त्रः--

अथैवमभिहिते स मेघवर्णो राजा (१) चिरन्तनं पितृसचिवं दीर्घायुषं सकलनीतिशास्त्रपारङ्गतं स्थिरजीविनामानं प्रणम्य प्रोवाच—तात! यदेते मया पृष्टाः सचिवास्तावदत्रस्थितस्यापि तव. तत्परीक्षार्थम्। येन त्वं सकलं श्रुत्वा यदु-

---

कुर्वतो वह्नेः=अनलस्य मारुत=पवन सखा=सहायो भवति, स एव दीपनाशाय=दीपस्य निर्वाणाय (प्रदीपवर्त्तिका भस्मीकुर्वतो वह्नेर्ध्वंसाय) भवति, तथाहि—कृशे=क्षीणे जने कस्य सौहृदमस्ति न कस्यापीत्यर्थ। क्षीणे जने कोऽपि सद्भावं न प्रकाशयति, तस्मात्स्थानबलं प्रशस्यमिति भाव॥ ५७॥

सङ्घशक्तिस्तु सर्वथापि, प्रबलेत्याह—"सङ्घातवान्" इति—वेणुभि=वंशै वृत=वेष्टित, सङ्घातवान्=समूहोपेत अतएव निबिड=घनतामुपगत दार्ढ्यं प्राप्त इत्यर्थ वेणु=एकोऽपि लघुर्वंश यथा समुच्छेत्तुम्=विनाशयितु न शक्यः तथा दुर्बलोऽपि नृप=राजा (सङ्घशक्तिसमन्वितश्चेत्) समुच्छेत्तु न शक्य इति पूर्वेणानुषङ्ग॥ ५८॥

"महाजनस्ये" ति—महाजनस्य=उत्तमस्य जनस्य सम्पर्क=सम्मिलनं कस्य=जनस्याल्पशक्तेरपि उन्नतिकारक=उन्नतपदप्राप्तिहेतुर्न भवति अपि सर्वस्यैवेत्यर्थ.। तथाहि—पद्मपत्रस्थितम्=कमलदलवर्त्ति तोयम्=पानीयं मुक्ताफलश्रियम्=मौक्तिकशोभा धत्ते=धारयते॥ ५९॥

(१) चिरन्तनम्=कुलक्रमादागतमित्यर्थ.। दीर्घायुषम्=वृद्धम्।

चितं तन्मे समादिशसि । तद्यद्युक्तं भवति तत्समादेश्यम् । स आह—वत्स ! सर्वैरप्येतैर्नीतिशास्त्राश्रयमुक्तं सचिवैः । यदुपयुज्यते (१) स्वकालोचितं सर्वमेव । परमेष द्वैधीभावस्य कालः । उक्तं च—

अविश्वासं सदा तिष्ठेत्सन्धिना विग्रहेण च ।
द्वैधीभावं समाश्रित्य नैव शत्रौ बलीयसि ॥ ६० ॥

तच्छत्रुं विश्वास्याविश्वस्तैर्लोभं दर्शयद्भिः सुखेनोच्छिद्यते रिपुः । उक्तं च—

उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा ।
गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥ ६१ ॥

तथा च—

स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः ।
यो भवेदेकभावेन न स जीवति मानवः ॥ ६२ ॥

---

(१) स्वकालोचितम्=स्वसमययोग्यम् । द्वैधभावस्य=वक्ष्यमाणस्वरूपस्य ।

"अविश्वास" मिति—बलीयसि=बलवत्तरे शत्रौ सन्धिना=मैत्रीव्यवहारेण विग्रहेण=युद्धेन च सदा=सदैव अविश्वासं ससन्देहं यथा तथा तिष्ठेत्, किन्तु— द्वैधीभावम्=बलवत्तररिपुद्वयमध्ये काकाक्षिगोलकन्यायेनालक्षितावस्थितिर्द्वैधीभाव "राज्येन साकमहं तवैवास्मि" इत्युभयत्रात्मानं समर्पयित्वा दुर्गमाश्रित्य स्वराष्ट्राभ्युदयापेक्षया अवस्थान नाम, तं समाश्रित्य= अवलम्ब्य अविश्वासम्=अविश्वासपूर्वकं नैव तिष्ठेत् किन्तु-एकेन शत्रुणा कदाचिदाक्रान्तस्तदा अपरसाहाय्येनात्मानं पालयिष्यामीति निश्चित एव तिष्ठेत् ॥६०॥

'उच्छेद्यम्" इति—विद्वास =विवेकिनो नीतिविद उच्छेद्यम्= वे .म. अरिम्=शत्रुम् एकदा=कदाचित् (स्वार्थसिद्धौ) वर्धयन्ति= तद्धि ये विश्वासप्रदानाय स्वाभ्युदयोपेक्षा प्रदर्शयन्तीत्यर्थ । तथाहि—गुडेन वर्द्धित =वृद्धिं गमित. श्लेष्मा=कफ वृद्धया = वर्धनमात्रेण सुखम्=अनायासं यथा तथा निपात्यते=बहिष्क्रियते ॥ ६१ ॥

"स्त्रीणाम्" इति—यो मानव स्त्रीणाम्=नारीणाम्, शत्रो =वैरिण,

कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा।
एकभावेन कर्तव्यं शेषं द्वैधसमाश्रितम्॥ ६३॥
एको भावः सदा शस्तो यतीनां भावितात्मनाम्।
स्त्रीलुब्धानां न लोकानां विशेषेण महीभृताम्॥ ६४॥

तद् (१) द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति। (२) लोभाश्रयाच्च शत्रु(३) मुच्चाटयिष्यसि। अपरं यदि किंचिच्छिद्रं तस्य पश्यसि तद्गत्वा व्यापादयिष्यसि। मेघवर्ण आह—तात! मया सो (४)ऽविदितसंश्रयः। तत्कथं

---

कुमित्रस्य=कुत्सितमित्रस्य दुर्बन्धोरित्यर्थ. विशेपत.=विशेषभावेन पण्यस्त्रीणाम्=वारयोषिताम्, एकभावेन=अभिन्नहृदयेन भवेत्, स न जीवति=स मानवस्तैरेवोपहन्यत इत्यर्थ। जीवितुमिच्छुना एतेषु नैकान्ततो विश्वसनीयमिति भाव॥६२॥

"कृत्यम्" इति—देवद्विजातीनाम्=देवाना ब्राह्मणानाञ्च आत्मन=स्वस्य तथा गुरो=मातु पितु विद्यादातृप्रभृतेश्च कृत्यम्=कार्यम् एकभावेन=निश्चितभावेन परमेण विश्वासेन वाह्याभ्यन्तरभेदभावपरित्यागेनेति यावत् कर्त्तव्यम्=साधनीयम्, शेषम्=एभ्योऽवशिष्टं राजादेः द्वैधसमाश्रितम्=द्वैधं द्विभावेन समाश्रितं युतं कर्त्तव्यमित्यनुषज्यते। एव न क्रियेत चेदवश्यमनर्थापात इति भाव॥ ६३॥

"एक" इति—भावितात्मनाम्=भावित परमेश्वरभजनेन शोधित आत्माऽन्त करण यैस्तेषा भगवच्चरणनलिननिलीनमनसा यतीनाम्=यमिना संन्यासिना योगिनाञ्च (सम्बन्धविवक्षया षष्ठी) एको भाव=एकस्वरूपतयावस्थान विश्वास इति यावत् सदा=सदैव शस्त=प्रशंसनीयो भवतीति शेष। स्त्रीलुब्धानाम्=स्त्रीष्वासक्ताना पामराणा न शस्त. तेषु विश्वासो न कर्तव्य इत्यर्थ। महीभृताम्=राज्ञान्तु विशेषेण न शस्त एको भाव इत्यनुषज्यते। स्त्रीलुब्धादिषु द्वैधीभाव एव स्थाप्य इति भावः॥ ६४॥

(१) द्वैधीभावम्=यथोपरि वर्णितम्। (२) लोभाश्रयात्=लोभपरवशात् शत्रोरिति शेष। (३) उच्चाटयिष्यसि=उद्ध्वंसयिष्यसि। (४) अविदितसंश्रय=न विदित संश्रय आवासो यस्य स अज्ञातावास।

तस्य छिद्रं ज्ञास्यामि । स्थिरजीव्याह—वत्स ! न केवल स्थानम्, छिद्राण्यपि तस्य प्रकटीकरिष्यामि (१) प्रणिधिभिः। उक्तं च—

गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ६५ ॥

उक्तं चात्र विषये—

यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः ।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात् ॥ ६६ ॥

मेघवर्ण आह—तात! "कानि तीर्थान्युच्यन्ते कतिसङ्ख्यानि च, कीदृशा गुप्तचराः तत्सर्वं निवेद्यताम्" इति । स आह—अत्र विषये भगवता नारदेन युधिष्ठिरः प्रोक्तः । यच्छत्रुपक्षेऽष्टादश तीर्थानि, स्वपक्षे पञ्चदश । त्रिभिस्त्रिभिर्गुप्तचरैस्तानि ज्ञेयानि । तैर्ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति । उक्तं च नारदेन युधिष्ठिरं प्रति—

कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ६७ ॥

---

(१) प्रणिधिभिः=चारैः गुप्तदूतैरित्यर्थः ।

"गाव"इति—गावः=धेनवः गन्धेन=घ्राणद्वारा पश्यन्ति=जानन्ति, द्विजाः=ब्राह्मणाः वै=निश्चयेन वेदैः=वेदप्रमाणैः सन्दिग्धे कर्त्तव्येऽर्थे वेदं स्वतः प्रमाणीकृत्य पश्यन्ति=सत्याऽसत्ये निर्णयन्ति, राजानः=नृपाः चारैः=गुप्तदूतैः पश्यन्ति=परराष्ट्रविषयकवृत्तान्तमवगच्छन्ति, इतरे जनाः=गवादिभ्यो भिन्ना लोकाः चक्षुर्भ्याम्=नेत्राभ्यां पश्यन्तीत्यनुषज्यते ॥ ६५ ॥

"य"इति—यो नृपः गुप्तैः चारैः=छद्मना रहस्यवेदिभिर्दूतैः निजे पक्षे, ...षतः=असाधारणभावेन परपक्षे=शत्रुपक्षे तीर्थानि=मन्त्रप्रभृत्यष्टादशस्थानानि वेत्ति=जानाति सः दुर्गतिम्=दुर्दशां राज्यभ्रंशनात्मिकां दुरवस्थां न आप्नुयात्=(कदापि) न लभत इत्यर्थः । "तीर्थं"शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारेषु मन्त्राद्यष्टादशस्वपि" इति विश्वः ॥६६॥

"कच्चिदि"ति—त्रिभिः त्रिभिः अविज्ञातैः=गूढं चरद्भिः, वेषं परिवर्त्य

(१)तीर्थशब्देनायुक्तकर्माभिधीयते। (२) तद्यदि तेषां कुत्सितं भवति तत्स्वामिनोऽभिघाताय भवति। यदि प्रधानं भवति, तद्वृद्धये स्यादिति। तद्यथा-मन्त्री,पुरोहितः,सेनापतिः,युवराजः(३) दौवारिकः, अन्तर्वासिकः, प्रशासकः, समाहर्तृ-संनिधातृ-प्रदेष्टृज्ञापकाः, साधनाध्यक्षः, गजाध्यक्षः, कोशाध्यक्षः दुर्गपाल-करपाल-सीमापाल-प्रोत्कटभृत्याः। एषां (४) भेदेन द्रागिपुः साध्यते।

---

गुप्तभावेन परकीयराष्ट्रवृत्तज्ञानाय छद्मना परिभ्रमद्भिः चारकै =प्रणिधिभि अन्येषु=विपक्षेषु अष्टादश (१८), स्वपक्षे दश पञ्च च=पञ्चदश (१५) तीर्थानि कच्चित् वेत्सि=जानासि किम्? इत्याह नारदो युधिष्ठिरम्प्रतीत्यर्थः। "कच्चित् कामप्रवेदने" इत्यमरप्रामाण्यात् त्वं जानास्येवेत्यर्थं फलति ॥ ६७ ॥

(१) प्रकृते "तीर्थ" शब्देन विवक्षितमर्थं दर्शयितुमाह—

"**तीर्थशब्देने**"ति—अयुक्तकर्म=अयुक्ते अवधानशून्ये शत्रौ कर्म=विनाशचेष्टादिरूपम्, अथवा—अयुक्ते=आपद्गते प्रभौ कर्म=तस्यापदुद्धरणक्षमो मन्त्रादिकर्म यस्य स "अयुक्तकर्मा" अमात्यप्रभृति प्रकृतिवर्गः। (२) तत्=तीर्थम्, तेषाम्=मन्त्र्यादीनाम्। स्वामिनः=राज्ञः, अभिघाताय=विनाशाय। (३) **दौवारिकः**=द्वारपाल। "**द्वारादीनाञ्च**" (७।३।४) इत्यनेनोभयपदवृद्धिः। **अन्तर्वासिकः**=अन्तर्वासे=अन्तःपुरे नियुक्त। "**तत्र नियुक्तः**" (४।४।६९)। इति सूत्रेण नियुक्तार्थे ठक्। सञ्ज्ञापूर्वकविधेरनित्यत्वान्न वृद्धिः। "अन्तर्वेशिक" इति पाठेऽप्ययमेवार्थः। अन्तःपुरचर इत्यर्थः। **प्रशासकः**=प्रकर्षेण शासनकर्त्ता सर्वशासनाधिकृतः। **समाहर्त्रि**-ति—तत्र **समाहर्त्ता**=करसङ्ग्रहणकर्त्ता, **सन्निधाता**=सङ्गृहीतकराणां सन्निधानकारक, **प्रदेष्टा**=मार्गोपदेष्टा, **ज्ञापकः**=संवादस्य वेदयिता। **साधनाध्यक्षः**=बलाधिपति, **गजाध्यक्षः**=गजादिपशुविभागाधिपति, **कोशाध्यक्ष**=धनाधिपति। **दुर्गे**ति—दुर्गपाल=कोटरक्षक। **करपालः**=राजस्वरक्षकः, **सीमापालः**=सीमाध्यक्ष। **प्रोत्कटभृत्यः**=प्रबलकर्मचारी (४) भेदेन=उपजापेन स्वामिन उपरि वैरूप्यासम्पादनेनेत्यर्थः। द्राक्=शीघ्रम्, साध्यते=वशीक्रियते।

स्वपक्षे च (१) देवी, जननी, (२) कञ्चुकी, मालिकः, शय्यापालकः, स्पर्शाध्यक्षः, सांवत्सरिकः, भिषक्, जलवाहकः, ताम्बूलवाहकः, आचार्यः, अङ्गरक्षकः, स्थानचिन्तकः, छत्रधरः, विलासिनी। एषां वैरद्वारेण स्वपक्षे विघातः। तथा च—

वैद्यसांवत्सरिकाचार्याः स्वपक्षेऽधिकृताश्चराः।
यथाहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु॥ ६८॥

तथा च—

कृत्वाकृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम्।
विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः॥ ६९॥

---

(१) देवी=कृताभिषेका स्त्री। जननी=राजमाता। (२) कञ्चुकी="अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते" इतिलक्षणः। मालिकः=मालाकारः राज्ञोऽन्तःकरणे प्रतिदिनं माल्यदायकः। शय्यापालकः=शय्यारचयिता। स्पर्शाध्यक्षः=राज्ञःस्पर्शेन्द्रियग्राह्यानुलेपनादिद्रव्याधिपतिः। सांवत्सरिकः=दैवज्ञः कालवित्। भिषक्=वैद्यः। जलवाहकः=कहारः जलविभागाध्यक्ष इत्यर्थः। ताम्बूलवाहकः=चर्वणार्हताम्बूलकर्मणि नियुक्तः। आचार्यः=गुरुः। अङ्गरक्षकः=शरीररक्षी। स्थानचिन्तकः=उपनिवेशस्थानीयदोषादोषविवेकी। छत्रधरः=छत्रवाहकः। विलासिनी=वेश्या। एषाम्=देवीप्रभृतीनाम्, वैरद्वारेण=शत्रुतोत्पादनद्वारा स्वपक्षे=राजपक्षे, विघातः=विनाशः। एतेषां हि राजपार्श्वे गमागमयोः प्रतिबन्धो नास्ति, यद्येभिर्वैरं स्यात्तर्हि राजहननं सुकरमेवेत्याशयः।

"वैद्ये"ति—चराः=गूढदूताः, आहितुण्डिकोन्मत्ताः=विषवैद्याः, क्षिप्ताश्च सन्तः, अर्थात् एते गूढचराः विषवैद्यवेशम् उन्मत्तवेशञ्च गृहीत्वा चरन्तः सन्तः, यथा शत्रुषु=वैरिषु सर्वम्=रहस्यं जानन्ति, तथा अधिकृताः=प्राप्ताधिकाराः अत्यन्तं विश्वासेन तत्तदधिकारे नियुक्ताः वैद्यसांवत्सरिकाचार्याः=भिषग्दैवज्ञगुरवः स्वपक्षे सर्वं जानन्तीत्यनुपज्यते। यद्येतैः सह वैरं भवेत्तर्हि स्वपक्षे विघातो बोध्य इति भावः॥ ६८॥

"कृत्वे"ति—कृत्यविदः=कृत्यं कार्यं विदन्ति जानन्तीति कृत्यविदः

एवं मन्त्रिवाक्यमाकर्ण्यात्रान्तरे मेघवर्ण आह—तात ! अथ किंनिमित्तमेवंविधं (१) प्राणान्तिकं सदैव वायसोलूकानां वैरम् । स आह—वत्स ! कदाचिद्धंस-शुक-बक-कोकिल-चातक-उलूक-मयूर-कपोत-पारावत-विष्किरप्रभृतयः सर्वेऽपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुमारब्धाः—अहो ! अस्माकं (२) तावद्वैनतेयो राजा। स च वासुदेवभक्तः। न कामपि चिन्तामस्माकं करोति । तत्किं तेन वृथास्वामिना, यो लुब्धकपाशैर्नित्यं निबध्यमानानां न रक्षां विधत्ते । उक्तं च—

यो न रक्षति वित्रस्तान्पीड्यमानान्परैः सदा ।
जन्तून्पार्थिवरूपेण स कृतान्तो न संशयः ॥ ७० ॥

---

कार्यज्ञा विधिज्ञाश्च, प्रणिधयः=गुप्तचरा तीर्थेषु=मन्त्राद्यनुष्ठानेषु जलावतारेषु च, अन्तःपदम्=स्थानं पादक्षेपञ्च कृत्वा महतः=प्रबलस्य गभीरस्य च, विद्विषदम्भसः=विद्विषन् शत्रुरेवोऽम्भः पानीयं तस्य, तलं=स्वरूपमाशयं, अधश्च विदाङ्कुर्वन्तु=जानन्तु ।

"प्रणिधिर्गूढपुरुषः" इति हलायुधः । "अधः स्वरूपयोस्तलम्" इत्यमरः । "विदाङ्कुर्वन्तु" इति विदधातोर्लोटि "विदाङ्कुर्वन्त्वित्यन्यतरस्याम्" ( ३।१।४१ ) इति निपातः ॥ ६९ ॥

(१) प्राणान्तिकम्=जीवनान्तकृतम् । वायसेति—"वायसोलूकानाम्" इत्यत्र कथं बहुवचनम्, यावत्—"येषाञ्च विरोधः शाश्वतिकः" ( २।४।९ ) इत्यनेन नित्य एव द्वन्द्वैकवद्भावः, तेन "काकोलूकस्य" इति भव्यं भाति । "काकोलूक" मित्यादौ तु परत्वात् विभाषामृगेति प्राप्तं चकारेण बाध्यते इति सिद्धान्तकौमुद्यां मूल एवोक्तं दीक्षितैः । बहुवचनबीजं प्राक् २६१ पृ० २४ श्लोकोक्तार्थद्वारापि सुशकं द्रष्टव्यम् । (२) वैनतेयः=गरुडः। विनताया अपत्यं पुमान् वैनतेयः स्त्रीभ्यो ढक् (४।१।१२०)। लुब्धकपाशैः=लुब्धकानां व्याधानां पाशैर्जालैः ।

"य" इति—यः परैः=शत्रुभिः पीड्यमानान्=हन्यमानान् अत एव

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ७१ ॥
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ७२ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ७३ ॥

तत्सांप्रतमन्यः कश्चिद्राजा विहङ्गमानां क्रियताम्—इति ।

---

सदा वित्रस्तान्=विशेषेण त्रस्तान् भीतान् जन्तून्=प्रजा न रक्षति स पार्थिवरूपेण=राजरूपेण कृतान्त=यमः, न संशय=अस्मिन्नर्थे कोऽपि संशयो नास्ति । प्रजारक्षाविमुखो राजा यमतुल्य इति भाव ॥ ७० ॥

"यदि" इति—यदि नरपति=राजा सम्यक् समीचीन नेता=नायक सञ्चालको न स्यात् तत=तदा प्रजा जलधौ=समुद्रे अकर्णधारा=न कर्णधारो नाविको यस्या सा तादृशी नौ.=नौका इव, इह=लोके विप्लवेत=विनष्टा भवेदित्यर्थ ।

यथा सागरे रक्षकं नाविकं विना नौका विप्लवते तथा प्रजा अपि रक्षकं राजानं विना नश्यतीति निर्गलितोर्थ. ॥ ७१ ॥

"षडि"ति—पुरुष, अर्णवे=सागरे भिन्नाम्=त्रुटिता नावम्=नौकामिव इमान् षट् जह्यात्=परित्यजेत् । ( तान् गणयति ) (१) अप्रवक्तारम्=यथार्थोपदेशाविमुखम् आचार्यम्=गुरुम्, (२) अनधीयानम्=वेदाध्ययनशून्यं मूर्खमृत्विजम्=पुरोहितम्, (३) अरक्षितारम्=प्रजारक्षणपराङ्मुखं राजानम्=नृपतिम्, (४) अप्रियवादिनीम्=कटु (कर्कश) भाषिणीं भार्यां स्त्रि- , (५) ग्रामकामं=ग्रामलुब्धम् अर्थात् यः ग्रामं विहाय प्रचुरतृणसम्प- मिम्प्रति गोचारणाय न याति तादृशं गोपालम्=गोपम्,(६)वनकामम्=नगरं रित्यज्य यो वन एव भ्रमति अर्थात् क्षौरकार्यं विस्मरति तं तादृशं नापितञ्च, ,त . षट् जह्यादित्यर्थ । एतादृशानां परिग्रहणे स्वकीय हानिरेव भवतीति भाव ॥ ७२–७३ ॥

अथ (१) तैर्भद्राकारमुलूकमवलोक्य सर्वैरभिहितम्—यदेष उलूको राजास्माकं भविष्यति। तदानीयन्तां नृपाभिषेकसम्बन्धिनः (२) सम्भाराः इति। अथ (३) साधिते विविधतीर्थोदके, प्रगुणीकृतेऽष्टोत्तरशतमूलिकासङ्घाते, प्रदत्ते सिंहासने, (४) वर्तिते सप्तद्वीपसमुद्रभूधरविचित्रे धरित्रीमण्डले, प्रसारिते व्याघ्रचर्मणि, आपूरितेषु हेमकुम्भेषु दीपेषु वाद्येषु च, सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु, पठत्सु वन्दिमुख्येषु, वेदोच्चारणपरेषु समुदितमुखेषु ब्राह्मणेषु, गीतपरे युवतिजने, आनीतायामग्रमहिष्यां कृकालिकायाम्, उलूकोऽभिषेकार्थं यावत्सिंहासन उपविशति, तावत्कुतोऽपि वायसः समायातः। सोऽचिन्तयत्—अहो! किमेष सकलपक्षिसमागमो महोत्सवश्च। अथ ते पक्षिणस्तं दृष्ट्वा मिथः प्रोचुः—पक्षिणां मध्ये वायसश्चतुरः श्रूयते। उक्तं च—

नराणां नापितो धूर्तः पक्षिणां चैव वायसः।
दंष्ट्रिणां च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम्॥ ७४॥

---

(१) भद्राकारम्=शान्तमूर्त्तिम्। (२) सम्भारा =द्रव्याणि। (३) साधिते=समाहृते। विविधतीर्थोदके=नानातीर्थजले। प्रगुणीकृते=सुसज्जीकृते। अष्टेति—अष्टाधिकशतविधमूलसमूहे। प्रदत्ते=तिलकीकृते।

(४) वर्तिते=उपस्थिते। सप्तेति—सप्तसङ्ख्यैर्द्वीपै समुद्रैः, भूधरैश्च विचित्रे विस्मयजनके। प्रसारिते=विस्तारिते। आपूरितेषु=भरितेषु। इदञ्च विशेषण हेमेत्यादित्रयाणाम्। तत्र हेमकुम्भेषु सुवर्णघटेषु जलेन आपूरितेषु, तैलेन दीपेषु, शब्देन वाद्येषु इति यथायोग्यं योजनीयम्। सज्जीकृतेषु=उपस्थापितेषु। वन्दिमुख्येषु=स्तुतिपाठकेषु।

समुदितेति—समुदितानि अन्योन्यं मिलितानि एकस्वराणि मुखानि येषा तेषु एकस्वरेण वेदोच्चारण विदधानेष्वित्यर्थ। गीतपरे=गायनव्यापृते। युवतिजने तरुणीसङ्घे। अग्रमहिष्याम्=प्रधानमहिष्याम्। प्रकृते तु कृकालिकाया तन्नामकोलूकपत्न्याम्। अभिषेकार्थम्=राज्यतिलकार्थमित्यर्थ.।

"नराणाम्" इति—नराणाम्=मनुष्याणा मध्ये नापित.=क्षौरकर्मा,

तदस्यापि वचनं ग्राह्यम् । उक्तं च—

वहुधा वहुभिः सार्धं चिन्तिताः सुनिरूपिताः ।
कथंचिन्न विलीयन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ७५ ॥

अथ वायसः समेत्य तानाह—अहो ! किं महाजनसमागमोऽयं परममहोत्सवश्च । ते प्रोचुः—भोः! नास्ति कश्चिद् (१) विहङ्गमानां राजा । तदस्योलूकस्य विहङ्गराज्याभिषेको निरूपितस्तिष्ठति समस्तपक्षिभिः । तत्त्वमपि स्वमतं देहि । (२)प्रस्तावे समागतोऽसि । अथासौ काको विहस्याह— अहो ! न युक्तमेतत्, यन्मयूर-हंस-कोकिल-चक्रवाक-शुक-कारण्डव-हारीत-सारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवान्धस्यास्य (३) करालवक्त्रस्याभिषेकः क्रियते । तन्नैतन्मम मतम् । यतः—

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम् ।
अक्रुद्धस्येदृशं वक्त्रं भवेत्क्रुद्धस्य कीदृशम् ॥ ७६ ॥

---

पक्षिणाञ्चैव=पक्षिषु मध्ये वायस =काक , दंष्ट्रिणाम्=मासभक्षकविशेषाणा पशुजीवानां मध्ये शृगाल =फेरव , तपस्विना=तपोधनाना मुनीना मध्ये श्वेताभिक्षु =श्वेताम्बर क्षपणकविशेषो धूर्त्तो भवतीति शेष । केचित्तु—श्वेतभिक्षुपदेन श्वेतवर्णो भिक्षु. संन्यासीति व्याख्यान्ति ॥ ७४ ॥

"वहुधे" ति—विद्वद्भि =विपश्चिद्भि चिन्तिता.=सावधानतया विचारिता·, तथा—वहुभि =अनेकै सार्द्धम्=सह मिलित्वा चिन्तिता.=तर्किता , सुनिरूपिता =सुष्ठु निर्धारिता· नया =मन्त्रा नीतिप्रयोगाः कथञ्चित्= कथमपि कदापि च न विलीयन्ते=विकारभावं न प्राप्नुवन्ति ॥ ७५ ॥

(१) विहङ्गमानाम्=पक्षिणाम् । (२) प्रस्तावे=युक्ते समये प्रारम्भ इति । (३) करालवक्त्रस्य=विकटभीत्युत्पादकमुखस्य ।

"वक्रनासमि"ति—अक्रुद्धस्य=क्रोधमकुर्वतोऽपि अस्योलूकस्य पेचकस्य ईदृशं भीतिजनकं वक्त=मुखं भवेत्=विद्यते, कीदृशं तत्, तथाहि—वक्रनासम्=वक्रा विकटा निम्नोन्नता नासा घोणा यत्र तत्तादृशम्, कुटिलघोणमित्यर्थ., तथा—सुजिह्माक्षम्=सुजिह्मे=अत्यन्तमाकुञ्चिते अक्षिणी

तथा च—

स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनम्।
उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति ॥ ७७ ॥

अपरं वैनतेये स्वामिनि स्थिते किमेष दिवान्धः क्रियते राजा। तद्यद्यपि गुणवान्भवति तथाप्येकस्मिन्स्वामिनि स्थिते नान्यो भूपः प्रशस्यते।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः।
युगान्त इव भास्वन्तो बहवोऽत्र विपत्तये ॥ ७८ ॥

तत् (१) तस्य नाम्नापि यूयं परेषामगम्या भविष्यथ। उक्तं च—

गुरूणां नाममात्रेऽपि गृहीते स्वामिसम्भवे।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते ॥ ७९ ॥

---

यत्र तत् अत्यन्तमन्तर्घूर्णितनयनमित्यर्थः। तथा—क्रूरम्=विकटम् तथा—अप्रियदर्शनम्=न प्रियं हृद्यं दर्शनं यस्य तत् विकृताकृतीत्यर्थः। क्रुद्धस्य=कोपम्प्राप्तस्य अस्य (पुनः) कीदृशं विकृतं भवेत् (इति न जानीमः) किन्त्वतिमात्रमेव दुर्दर्शं स्यादिति भावः ॥ ७६ ॥

"स्वभावे" ति—स्वभावरौद्रम्=स्वभावेन निसर्गेणैव भयङ्करम्, अत्युग्रम्=अतिक्रूरम्, तथा अप्रियवादिनम्=कर्कशवाचम्, उलूकम्=पेचकं नृपतिम्=राजानं कृत्वा=मत्वा नः=अस्माकं का सिद्धिः=को नाम लाभो भविष्यति, न कापीत्यर्थः ॥ ७७ ॥

"एक" इति—तेजस्वी=प्रतापी विक्रमीति यावत् पार्थिवः=राजा एक एव=नतु द्वौ बहवो वा भुवः=पृथिव्याः हितार्थाय=कल्याणाय भवतीति शेषः। अत्र=इह लोके बहवः=अनेके राजानः युगान्ते=प्रलयकाले बहवो भास्वन्तः=सूर्या इव विपत्तये=प्रजानां कष्टायैव भवन्तीति शेषः। उपमा ॥७८॥

(१) तस्य=वैनतेयस्य। नाम्नापि=नाममात्रेणापि। अगम्याः=दुर्धर्षा इत्यर्थः।

"गुरूणाम्" इति—स्वामिसम्भवे=स्वस्वामिभावसम्बन्धवति गुरूणाम्=महापुरुषाणां नाममात्रे गृहीते=केवलं नाम्न्यपि उच्चारिते सति "अमुक-

तथा च—

व्यपदेशेन महतां सिद्धिः सञ्जायते परा।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्॥ ८०॥

त ऊचुः—कथमेतत्। स आह—

कथा १।

कस्मिंश्चिद्वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचिन्महत्यनावृष्टिः सञ्जाता (१) प्रभूतवर्षाणि यावत्। तया तडागह्रदपल्वलसरांसि शोपमुपगतानि। अथ तैः समस्तगजैः स गजराजः प्रोक्तः—देव! पिपासाकुला (२) गजकलभा मृतप्राया अपरे मृताश्च। तदन्विष्यतां कश्चिज्जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति। ततश्चिरं ध्यात्वा तेनाभिहितम्—अस्ति महाह्रदो विविक्ते प्रदेशे स्थलमध्यगतः पातालगङ्गाजलेन सदैव पूर्णः। तत्तत्र गम्यताम् इति। तथानुष्ठिते (३)पञ्चरात्रमुपसर्पद्भिः समासादितस्तैः स ह्रदः। तत्र स्वेच्छया जलमवगाह्यास्तमनवेलायां निष्क्रान्ताः। तस्य च ह्रदस्य (४) समन्ताच्छशकविला असङ्ख्याः सुकोमलभूमौ तिष्ठन्ति। तेऽपि समस्तैरपि तैर्गजैरितस्ततो भ्रमद्भिः परिभग्ना

स्याहं प्रतापिनः प्रजा" इति ख्यापिते सति दुष्टानाम्=दुर्जनानां पुरतः=समीपे तत्क्षणादेव=तस्मिन्नेव क्षणे क्षेमम्=कल्याणं जायते। तादृशस्य प्रभोर्नाममात्रश्रवणेनैव दुष्टा भयभीताः सन्तो न कमप्यपकारं कर्त्तुं पारयन्त इति भावः॥७९॥

"व्यपदेशेने"ति—महताम्=प्रतापिनां व्यपदेशेन=नामकीर्त्तनमात्रेणैव परा=उत्कृष्टा सिद्धिः=लाभः सञ्जायते, तथाहि—शशिनः=चन्द्रस्य व्यपदेशेन शशकाः सुखं यथा तथा वसन्ति॥ ८०॥

(१) प्रभूतवर्षाणि=बहून् संवत्सरान् व्याप्य। (२) गजकलभाः=हस्तिपोताः। (३) पञ्चरात्रम्=पञ्चानां रात्रीणां समाहारः पञ्चरात्रम्। उपसर्पद्भिः=गच्छद्भिः। (४) समन्तात्=सर्वासु दिक्षु।

बहवः शशका भग्नपदशिरोग्रीवा विहिताः। केचिन्मृताः (१) केचिज्जीवशेषा जाताः। अथ गते तस्मिन्गजयूथे शशकाः सोद्वेगा (२) गजपदक्षुण्णसमावासाः केचिद्भग्नपादाः, अन्ये जर्जरितकलेवरा रुधिरप्लुताः, अन्ये हतशिशवो (३) बाष्पपिहितलोचनाः समेत्य मिथो मन्त्रं चक्रुः—अहो! विनष्टा वयम्, नित्यमेवैतद्गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति। तत्सर्वेषां नाशो भविष्यति। उक्तं च—

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः॥ ८१॥

तच्चिन्त्यतां कश्चिदुपायः। तत्रैकः प्रोवाच—गम्यतां देशत्यागेन। किमन्यत्। उक्तं च मनुना व्यासेन च—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ८२॥

---

(१) जीवशेषा=जीवनमात्रावशिष्टा। (२) गजेति—गजाना हस्तिनां पादेश्चरणैः क्षुण्णा दलिता समावासा संश्रयस्थानानि येषा ते। (३) बाष्पैरस्रैः पिहितानि व्याप्तानि लोचनानि नेत्राणि येषा ते।

"स्पृशन्नि"ति—गज स्पृशन्=स्पर्शं कुर्वन् अपि हन्ति, भुजङ्गमः=सर्पः जिघ्रन् अपि=गन्धमात्रेणापीत्यर्थ। तथा—नृप=राजा हसन्=उपहासं कुर्वन् अपि, तथा—दुर्जन=दुष्ट मानयन् अपि=दत्तमानोऽपि सम्मानं कुर्वन्वा हन्ति॥ ८१॥

"त्यजेदि" ति—कुलस्य=वंशस्य अर्थे=प्रयोजनाय एकं जनमिति शेष त्यजेत्=जह्यात्, यद्येकस्य जनस्य त्यागे सति वंशो रक्षितो भवति तदा तत्त्यागो विधेय इत्यर्थ। ग्रामस्य अर्थे कुल त्यजेत्=कुलत्यागे ग्राम सुरक्षितस्तिष्ठेत् चेत्तदा तदपि कर्त्तव्यमित्याशय। एवं जनपदस्य=देशस्य अर्थे ग्रामं त्यजेत्, आत्मार्थे=आत्मरक्षार्थे पृथिवीम्=पृथिवीस्थ निखिलं द्रव्यम् (अत्र "पृथिवी" पदस्य पृथिवीस्थद्रव्ये लक्षणा, सकलपृथिव्यास्त्यागस्य कर्तुमशक्यत्वात्) त्यजेत् यदि पृथिवीस्थनिखिलपदार्थपरित्यागे

क्षेम्यां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥ ८३ ॥
आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ८४ ॥

ततश्चान्ये प्रोचुः—भोः ! पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम् । तत्क्रियतां (१) तेषां कृते काचिद्विभीषिका । यत्कथमपि दैवान्न समायान्ति । उक्तं च—

निर्विषेणापि सर्पेण कर्तव्या महती फटा ।
विषं भवतु मा चास्तु फटाटोपो भयङ्करः ॥ ८५ ॥

अथान्ये प्रोचुः—यद्येवं ततस्तेषां महाद्विभीषिकास्थानमस्ति

---

सत्यात्मा सुरक्षितो भवेत्तदा तदपि त्याज्यमेवेत्यर्थ ॥ ८२ ॥

"क्षेम्यामि" ति—नृप=भूप अविचारयन्=किमपि हिताऽहितविचारमकुर्वाण आत्मार्थम्=आत्मरक्षार्थं क्षेम्याम्=क्षेमङ्करीम्, नित्यं सस्यप्रदाम्=सदैव प्रचुरशस्यदात्रीम्, तथा—पशुवृद्धिकरीम्=प्रचुरतृणघासाद्युत्पादनेन गवादिपशुजातं वर्धयन्तीं सर्वप्रकारेण सुखप्रदामित्यर्थ एवम्भूतामपि भूमिं परित्यजेत्=परितो जह्यात् । यद्यहं जीविष्यामि तर्हि सर्वमपि साधयिष्य इत्यालोच्य स्वरक्षार्थं सर्वस्वमपि परिहरेदित्याशय ॥ ८३ ॥

"आपदर्थे" ति—आपदर्थे=आपदा निवृत्तये धनम्=वसु रक्षेत्, धनै=वित्तै महता प्रयत्नेन सञ्चितैरपि दारान्=स्त्रियो रक्षेत्, दारैरपि=स्त्रीभिरपि, धनैरपि सर्वथैवेत्यर्थ । आत्मानं सततं=निरन्तरं रक्षेत् । सर्वैरप्युपायैरात्माऽवश्यरक्षणीय',तस्मिन् रक्षिते पुनरपि सर्वसमुत्पत्तेरिति भाव ॥ ८४ ॥

(१) तेषाम्=गजानाम् । विभीषिका=भीतिप्रदर्शनप्रकार ।

"निर्विषेणापी" ति—निर्विषेण=विषशून्येनापि सर्पेण महती फटा=
५९ कर्त्तव्या=प्रदर्शनीयेत्यर्थ, यत —विषं भवतु=स्याद्वा, मा वाऽस्तु=न वा भवतु, फटाटोप =फणाविस्तारस्तु भयङ्कर =भीतिजनको भवत्येवेति शेष । कदाचिद् भीत्युत्पादोऽपि शत्रुजयहेतुर्भवतीति भाव ॥ ८५ ॥

थेन नागमिष्यन्ति । सा च (१) चतुरदूतायत्ता विभीषिका । यतो विजयदत्तो नाम राजास्मत्स्वामी शशकश्चन्द्रमण्डले निवसति । तत्प्रेष्यतां कश्चिन्मिथ्यादूतो यूथाधिपसकाशं यच्चन्द्रस्त्वामत्र ह्रद आगच्छन्तं निषेधयति । यतोऽस्मत्परिग्रहोऽस्य समन्ताद्वसति । एवमभिहिते श्रद्धेयवचनात्कदापि निवर्तते । अथान्ये प्रोचुः—यद्येवं तदस्ति लम्बकर्णो नाम शशकः । स च (२) वचनरचनाचतुरो दूतकर्मज्ञः । स तत्र प्रेष्यतामिति । उक्तं च—

साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः ।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ८६ ॥

अन्यच्च—

यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत् ।
मिथ्यावादं विशेषेण तस्य कार्यं न सिध्यति ॥ ८७ ॥

तदन्विष्यतां यद्यस्माद्व्यसनाद् (३) आत्मनां सुनिर्मुक्तिः । अथान्ये प्रोचुः—अहो ! युक्तमेतत् । नान्यः कश्चिदुपायोऽस्माकं जीवितस्य । तथैव क्रियताम् । अथ लम्बकर्णो गजयूथाधि-

---

(१) चतुरदूतायत्ता=चतुरो निपुण दूतो वार्त्ताहर तदायत्ता तदधीना ।
(२) वचनेति—वाक्यविन्यासदक्ष ।

"साकार" इति—य साकार =शोभनमूर्त्ति , निस्पृहः=लोभरहित., वाग्मी=प्रशस्तवाक्, वचनरचनाचतुर , नानाशास्त्रेषु अनेकासु विद्यासु विचक्षण =कुशल , परचित्तस्य=परकीयहृदयस्थभावस्य अवगन्ता=अवबोद्धा पराऽभिप्रायज्ञ इत्यर्थ । स =तादृशो राज्ञो दूत =सन्देशहारक इष्यते=काम्यते ।
अत्र यत्तदोर्नित्यसम्बन्धनियमात् "य" इत्यध्याहार्यम् ॥ ८६ ॥

"य" इति—यः मूर्खम् लौल्यसम्पन्नम्=अतिलोभिनम्, विशेषेण मिथ्यावादम्=अत्यन्तालीकभाषिणं (जनं) राजद्वारिकम्=राजद्वारि नियुक्तं दूतम् आचरेत्=कुर्यात् तस्य कार्यम्=इष्टं न सिध्यति=नैव फलतीत्यर्थ ॥८७॥

(३) आत्मनाम्=स्वेषा शशकानाम् । सुनिर्मुक्ति.=परित्राणमित्यर्थ· ।

पसमीपे निरूपितो गतश्च। तथानुष्ठिते लम्बकर्णोऽपि गजमार्गमासाद्यागम्यं स्थलमारुह्य तं गजमुवाच—भो! भो! दुष्ट! गज! किमेवं लीलया निःशङ्कतयात्र चन्द्रह्रद आगच्छसि। तन्नागन्तव्यम्, निवर्त्यतामिति। तदाकर्ण्य विस्मितमना गज आह—भोः! कस्त्वम्। स आह—अहं लम्बकर्णो नाम शशकश्चन्द्रमण्डले वसामि। साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतः। जानात्येव भवान्, यथार्थवादिनो दूतस्य न दोषः करणीयः। दूतमुखा हि राजानः सर्व एव। उक्तं च—

उद्यतेष्वपि शस्त्रेषु बन्धुवर्गवधेष्वपि।
परुषाण्यपि जल्पन्तो वध्या दूता न भूभुजा॥ ८८॥

तच्छ्रुत्वा स आह—भोः! शशक! तत्कथय भगवतश्चन्द्रमसः सन्देशम्, येन सत्वरं क्रियते। स आह—भवतातीतादिवसे यूथेन सहागच्छता प्रभूताः शशका निपातिताः। तत्किं न वेत्ति भवान् यन्मम (१) परिग्रहोऽयम्। तद्यदि जीवितेन ते प्रयोजनम्, तदा केनापि प्रयोजनेनात्र ह्रदे नागन्तव्यमिति सन्देशः। गज आह— अथ क्व वर्तते भगवान्स्वामी चन्द्रः। स आह—अत्र ह्रदे साम्प्रतं शशकानां (२) भवद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातस्तिष्ठति। अहं पुनस्तवान्तिकं प्रेषितः। गज आह—यद्येवं तद्दर्शय मे तं स्वामिनं येन प्रणम्यान्यत्र गच्छामि। शशक आह—भोः! आगच्छ मया सहैकाकी येन दर्शयामि—तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रबिम्बमदर्शयत्।

"उद्यतेषु" इति—शस्त्रेषु=खड्गप्रभृतिषु उद्यतेष्वपि=समरारम्भसमये उद्गूर्णेष्वपि, बन्धुवर्गस्य वधेष्वपि परुषाणि=कठोराणि वचांसि जल्पन्त=कथयन्तोऽपि दूताः भूभुजा=राज्ञा न वध्या =न हन्तव्या भवन्तीति शेष ॥८८॥

(१) परिग्रह =परिगृह्यते परिवार इति यावत्। अयम्=शशकयूथ।
(२) भवदिति—भवतो यूथेन=गजसङ्घेन मथितानाम्=पद्भिराहतानाम्।

आह च—भोः ! एष नः स्वामी जलमध्ये (१) समाधिस्थस्तिष्ठति । (२) तन्निभृतं प्रणम्य सत्वरं व्रजेति । नो चेत्समाधिभङ्गाद्भूयोऽपि प्रभूतं कोपं करिष्यति । अथ गजोऽपि त्रस्तमनास्तं प्रणम्य पुनर्गमनाय प्रस्थितः । शशकाश्च तद्दिनादारभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म । अतोऽहं ब्रवीमि—"व्यपदेशेन महताम्" इति ॥ अपि च क्षुद्रमलसं कापुरुषं व्यसनिनमकृतज्ञं पृष्ठप्रलपनशीलं स्वामित्वेन नाभियोजयेज्जीवितकामः । उक्तं च—

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ ८६ ॥

ते प्रोचुः—कथमेतत् । स आह—

## कथा २ ।

कस्मिंश्चिद्वृक्षे पुराहमवसम् । तत्राधस्तात्कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म । अथ सदैवास्तमनवेलायामागतयो (३) र्द्वयोरनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिराजर्षिपुराणचरितकीर्तनेन च पर्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित्कपिञ्जलः प्राण-

---

(१) समाधिस्थ=ध्याने मग्न । (२) निभृतम्=निःशब्दम् ।

"क्षुद्र" मिति—पुरा=पूर्वस्मिन् समये न्यायान्वेषणतत्परौ=न्यायस्य निर्णयस्य अन्वेषणमनुसन्धानं विचारकरणमिति तत्परौ=तत्परायणौ शशकपिञ्जलौ द्वावपि, क्षुद्रम्=नीचहृदयम्, अर्थपतिम्=प्रभुम् प्राप्य क्षयङ्गतौ=नाशम्प्राप्तौ विनष्टावित्यर्थ ॥ ८६ ॥

(३) द्वयो=मम चटकस्य चेत्यर्थ । अनेकेति—नानाविधप्रियालापसम्मेलनेनेत्यर्थ । देवर्षीति—तत्र देवर्षयो नारदाद्या, ब्रह्मर्षयो वशिष्ठाद्या, राजर्षयो जनकाद्या, तेषां यत् पुराणचरितं पुराणेषु वर्णितं चरित्रं तस्य कीर्तनेन=कलपनेन । पर्यटनेति—पर्यटनेन परितो भ्रमणेन दृष्टमवलोकित यदनेककौतूहलं विविधाश्चर्यं तस्य प्रकथनेन प्रख्यापनेनेत्यर्थ. ।

यात्रार्थमन्यैश्चटकैः सहान्यं पक्वशालिप्रायं देशं गतः। ततो यावन्निशासमयेऽपि नायातस्तावदहं सोद्विग्नमनास्तद्वियोगदुःखितश्चिन्तितवान्—अहो! किमद्य कपिञ्जलो नायातः। किं केनापि पाशेन बद्धः, आहोस्वित्केनापि व्यापादितः। सर्वथा यदि कुशली भवति तन्मां विना न तिष्ठति। एवं मे चिन्तयतो बहून्यहानि व्यतिक्रान्तानि। ततश्च तत्र कोटरे कदाचिच्छीघ्रगो नाम शशकोऽस्तमनवेलायामागत्य प्रविष्टः। मयापि कपिञ्जलानिराशत्वेन न निवारितः। अथान्यास्मिन्नहनि कपिञ्जलः शालिभक्षणादतीव पीवरतनुः स्वमाश्रयं स्मृत्वा भूयोऽपि तत्रैव समायातः। अथवा साध्विदमुच्यते—

न तादृग्जायते सौख्यमपि स्वर्गे शरीरिणाम्।
दारिद्र्येऽपि हि यादृक्स्यात्स्वदेशे स्वपुरे गृहे॥ ६०॥

अथासौ कोटरान्तर्गतं शशकं दृष्ट्वा(१)साक्षेपमाह-भोः! शशक! न त्वया सुन्दरं कृतं यन्ममावसथस्थाने प्रविष्टोऽसि। तच्छीघ्रं निष्क्रम्यताम्। शशक आह—न तवेदं गृहम्। किंतु ममैव, तत्किं मिथ्या (२) परुषाणि जल्पसि। उक्तं च—

वापीकूपतडागानां देवालयकुजन्मनाम्।
उत्सर्गात्परतः स्वाम्यमपि कर्तुं न शक्यते॥ ६१॥

---

"न" इति—शरीरिणाम्=देहिनां स्वर्गे अपि=नाकलोकेऽपि तादृक्=तादृशं सौख्यम्=आनन्द न जायते=नोत्पद्यते यादृक् यादृशं स्वदेशे=निजे जनपदे स्वपुरे=स्वीये नगरे, तत्रापि गृहे=स्वभवने (स्थितस्य पुरुषस्य) दारिद्र्ये=धनताया सत्यामपि स्याद्=भवति, हि इत्येतन्निश्चितमेवेत्यर्थः॥ ६०॥

(१) साक्षेपम्=सतिरस्कारम्। (२) परुषाणि=कठोराणि।

"वापी" ति—वापी=दीर्घिका, कूपः, तडागः=सरोवरो ह्रद इतिवत् एतेषां द्वन्द्वः। तथा—देवालयाना देवमन्दिराणाम्, कुजन्मना कौ थिव्या जन्मोत्पत्तिर्येषां तेषां महीरुहाणाम्, उत्सर्गात् परतः=प्रतिष्ठाकरणोत्तरम् स्वाम्यम्=आधिपत्यं कर्तुमपि न शक्यते, स्वामिनोऽप्यधिकारो

तथा च—

प्रत्यक्षं यस्य यद्भुक्तं क्षेत्राद्यं दश वत्सरान् ।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा ॥ ६२ ॥
मानुषाणामयं न्यायो मुनिभिः परिकीर्तितः ।
तिरश्चां च विहङ्गानां यावदेव समाश्रयः ॥६३॥

तन्ममैतद् गृहम्, न तव इति । कपिञ्जल आह—भोः! यदि(१) स्मृतिं प्रमाणीकरोषि तदागच्छ मया सह, येन (२) स्मृतिपाठकं पृष्ट्वा स यस्य ददाति स गृह्णातु । तथानुष्ठिते मयापि चिन्तितम्—किमत्र भविष्यति । मया द्रष्टव्योऽयं न्यायः । ततः कौतुकादहमपि (३) तावदनुप्रस्थितः । अत्रान्तरे तीक्ष्णदंष्ट्रो नामारण्यमार्जारस्तयोर्विवादं श्रुत्वा (४) मार्गासन्नं

---

न भवति प्रतिष्ठोत्तरं सर्वेषां समानाधिकारादिति भाव' ॥ ६१ ॥

"प्रत्यक्षम्" इति—दश वत्सरान् व्याप्य यस्य प्रत्यक्षम्=अक्ष्णोः सम्मुखं यत् क्षेत्राद्यम्=भूम्यादिकं भुक्तं येनेति शेष । तत्र=तस्मिन् विषये भुक्ति=दशवार्षिको भोग एव प्रमाणं स्यात्=स्वत्वनिश्चयकारणं भवति, साक्षी=साक्षात् द्रष्टा, अक्षराणि=लेख्यं न=नैव प्रमाणमिति शेष ।

साक्षिलेख्यादिभ्योऽपि दशवार्षिकी भुक्तिरधिकं स्वत्वे प्रमाणमिति भाव ॥ ६२ ॥

"मानुषाणाम्" इति—मुनिभि=तत्त्ववेदिभिः अयं न्याय'=उक्तो देयादानिर्णयपरो मार्गो नय मानुषाणाम्=मनुष्याणा परिकीर्तित=कथित. । तिरश्चाम्=पशूना विहङ्गानाम्=पक्षिणाञ्च यावदेव=यावन्त्यहानि व्याप्य समाश्रय=अवस्थानं तावदेव स्वत्वमिति भाव ॥ ६३ ॥

(१) स्मृतिम्=धर्मशास्त्रम् । प्रमाणीकरोषि=निर्णेतृत्वेन स्वीकरोषि । (२) स्मृतिपाठकम्=धर्मशास्त्राध्येतारम् । (३) तावनु=तयो पश्चात् । "लक्षणेत्थम्भूता०"—(१।४।९०) इति सूत्रेण अनोः कर्मप्रवचनीयसंज्ञाया द्वितीया । (४) मार्गासन्नम्=मार्गे पथि आसन्नं निकटवर्त्तिनम् ।

नदीतटमासाद्य(१) कृतकुशोपग्रहो निमीलितनयन ऊर्ध्वबाहुरर्धपादस्पृष्टभूमिः श्रीसूर्याभिमुख इमां (२)धर्मोपदेशनामकरोत्-अहो! असारोऽयं संसारः। (३) क्षणभङ्गुराः प्राणाः। स्वप्नसदृशः प्रियसमागमः। इंद्रजालवत् कुटुम्बपरिग्रहोऽयम्। तद्धर्मं मुक्त्वा नान्या (४) गतिरस्ति। उक्तं च—

अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं संनिहितो मृत्युः कर्तव्यो धर्मसङ्ग्रहः॥ ६४॥
यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति॥ ६५॥
नाच्छादयति कौपीनं न दंशमशकापहम्।
शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम्॥ ६६॥

---

(१)कृतेति-कृत' कुशाना परिग्रहो येन स कुशासनोपविष्टो दर्भहस्तो वा। निमीलिते नयने नेत्रे येन स. अन्तर्मुख इत्यर्थ.। ऊर्ध्वौ बाहू भुजौ यस्य स। अर्धपादस्पृष्टभूमि.=पादार्धेन स्पृष्टा भूमि. पृथिवी येन स तादृश अग्रपादेन स्थित इत्यर्थ.।

(२) धर्मोपदेशनाम्=धर्मसंहितोपदेशम्। (३) क्षणभङ्गुरा =अचिरस्थायिन.। स्वप्नसदृश =स्वप्नवत् मिथ्या प्रतीत । कुटुम्बपरिग्रह =स्त्रीपुत्रादिसङ्गम । (४) गति'=मार्गे साधनमुपाय इति यावत्।

"अनित्यानी" ति—शरीराणि=देहा अनित्यानि विनश्वराणि, विभव =धनादिसम्पत्ति शाश्वत =निरन्तरस्थायी नैव, मृत्यु =मरणं नित्यम्=सदा सन्निहित =निकटवर्त्ती, अतो हेतो धर्मसङ्ग्रह =धर्मस्य सञ्चय धर्मोपार्जनं कर्त्तव्यः=साधनीय । धर्म एवैकोऽविनश्वर' परलोकेऽपि साहाय्यदिति स एवोपार्जनीय इति भाव ॥ ६४॥

"यस्ये"ति—यस्य=पुरुपस्य दिनानि=अहानि धर्मविहीनानि=धर्मशून्यानि आयान्ति, यान्ति च, स. लोहकारभस्त्रा इव=लोहकारस्य भस्त्रा चर्मप्रसेविकेव श्वसन्=श्वासं गृह्णन् जीवन्नपि न जीवति। धर्महीनो मृततुल्य इत्यर्थ ॥ ६५॥

"नाच्छादयती" ति—य =जन दंशमशकापहम्=दंशो वनमक्षिका

अन्यच्च—

पुलाका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्येषु येषां धर्मो न कारणम् ॥ ६७ ॥
श्रेयः पुष्पं फलं वृक्षाद् दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस्तैलं च पिण्याकाच्छ्रेयान्धर्मस्तु मानुषात् ॥ ६८ ॥
सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम् ।
हीनाः परार्थाय पुरुषाः पशवो यथा ॥ ६६ ॥

---

मशकोऽतिक्षुद्रो जन्तुर्दंशनकर तन्निवारकमपि कौपीनम्=कटिगुह्यवस्त्रं न आच्छादयति=न धारयते नापि च परस्मै ददाति तस्य पुरुषस्य धर्मवर्जितम्=धर्महीनं पाण्डित्यं शुन पुच्छमिव=सारमेयलाङ्गूलमिव व्यर्थम्=वृथैवास्तीत्यर्थ । "यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति" इत्युक्ते ॥ ६६ ॥

"पुलाका" इति—येषा मनुष्याणा धर्मो न कारणम्=प्रमाणं नास्ति अर्थात् ये धार्मिका न सन्ति, ते धान्येषु=धान्याना व्रीह्यादीना मध्ये पुलाका इव=अन्त सारशून्यधान्यविशेषा इव सर्वथा नि सारा इत्यत्र-तात्पर्यम् । तथा पक्षिषु=पतत्रिषु पूतिका=तन्नामकक्षुद्रपक्षिविशेष इव । तथा—मर्त्येषु=मरणधर्मेषु प्राणिषु मशका इव अत्यन्तं क्षुद्रा इत्यर्थ. ॥६७॥

"श्रेय" इति—वृक्षात्=तरो पुष्पं फलञ्च श्रेय =उत्तमम्, दध्न सकाशात् घृतम्=आज्यं श्रेय श्रेष्ठं स्मृतम्, पिण्याकात्=कुट्टिततिलपिण्डात् तिलकल्कादित्यर्थ तैलञ्च श्रेय, मानुषात्=मनुष्यजीवनात् धर्म श्रेयान्=सर्वोत्तम इत्यर्थ ॥ ६८ ॥

"सृष्टा" इति—ये पुरुषा केवलं मूत्रपुरीषार्थम्=मलमूत्रत्यागार्थमेव तथा—आहाराय=भोजनार्थ केवलमुदरभरणमात्रप्रयोजनायैवेत्यर्थः सृष्टा = विधात्रा निर्मिता ते धर्महीना =धर्मानुष्ठानविमुखा पुरुषा. परार्थाय=परप्रयोजनमात्रसाधनाय पशवो यथा=पशव इव सन्तीत्यर्थ । धर्महीनाना पशुतुल्यं जन्मेति भाव ॥ ६६ ॥

स्थैर्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः ।
बह्वन्तराययुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०० ॥
सङ्क्षेपात्कथ्यते धर्मो जनाः किं विस्तरेण वः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥ १०१ ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १०२ ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह—भो! भोः! कपिञ्जल! एष नदीतीरे तपस्वी धर्मवादी तिष्ठति। तदेनं पृच्छावः। कपिञ्जल आह—ननु स्वभावतोऽस्माकं शत्रुभूतोऽ-

---

"स्थैर्य"मिति—नयपण्डिता नीतिविदो जना. सर्वेषु कृत्येषु=सकलेष्वपि कार्येषु=कर्त्तव्येषु स्थैर्यम्=स्थिरता विविच्य कर्त्तव्यता शंसन्ति=स्तुवन्ति, किन्तु बह्वन्तराययुक्तस्य=बहुभिरनेकैरन्तरायैर्विघ्नैर्युक्तस्य प्रतिबद्धस्य सम्भावितानेकविघ्नस्येत्यर्थ., एवम्भूतस्य धर्मस्य त्वरिता=सवेगा गति =अनुष्ठानमित्यर्थ.। धर्मानुष्ठाने कदापि विलम्बो न विधेयोऽन्यथा तत्रानेकविघ्नपातसम्भव इति भाव· ॥१००॥

"सङ्क्षेपात्" इति—हे! जना ! व =युष्मभ्यं सङ्क्षेपात् धर्म कथ्यते, विस्तरेण=व्यासेन बाहुल्येन किम्=किम्प्रयोजनम्। परोपकार =परहितकरणं पुण्याय, परपीडनम्=परहिंसनं (यथा तथा परस्मै दु खप्रदानम्) पापाय भवतीति शेष.। ॥ १०१ ॥

"श्रूयताम्" इति—धर्मसर्वस्वम्=धर्मस्य सारभूतं स्वरूपं श्रूयताम्=आकर्ण्यताम्, श्रुत्वा च एव=आकर्ण्यैव श्रवणसमकाल एवेत्यर्थ अवधार्य- [illegible]=निश्चीयता श्रद्धीयतामित्यर्थ । आत्मन· प्रतिकूलानि=यानि कर्माणि [illegible] येषु कृतेषु स्वस्य पीडा भवति तानि परेषा=अन्येषा कृतेष्वपि न [illegible]रेत्=नैव कुर्यादित्यर्थ.। यत् स्वस्य धनानि वा दारा वा केनापि लुण्ठ्येरन् [illegible] तैराऽऽत्मानि बहु दु खं मन्यते, तदेतानि क्रूराणि कर्माणि परविषयेऽपि कुर्यात् "आत्मवत्सर्वभूतेषु य. पश्यति स पण्डित" इत्युक्तेरिति भावः ॥ १०२ ॥

यमस्ति। तद्दूरे स्थितौ पृच्छावः। कदाचिदस्य (१) व्रतवैकल्यं सम्पद्येत। ततो दूरस्थितावूचतु—भो! भोः! तपस्विन्! धर्मोपदेशक! आवयोर्विवादो वर्तते। तद्धर्मशास्त्रद्वारेणास्माकं (२) निर्णयं कुरु। यो हीनवादी स ते भक्ष्य इति। स आह—भद्रौ! मा मैवं वदतम्। निवृत्तोऽहं (३) नरकपातकमार्गात्। अहिंसैव धर्ममार्गः। उक्तं च—

अहिंसापूर्वको धर्मो यस्मात्सद्भिरुदाहृतः।
यूकमत्कुणदंशादीस्तस्मात्तानपि रक्षयेत् ॥ १०३ ॥
हिंसकान्यपि भूतानि यो हिंसति स निर्घृणः।
स याति नरकं घोरं किं पुनर्यः शुभानि च ॥ १०४ ॥

एतेऽपि ये याज्ञिका (४) यज्ञकर्माणि पशून्व्यापादयन्ति, ते मूर्खाः परमार्थं श्रुतेर्न जानन्ति। तत्र किलैतदुक्तम् (५) अजैर्यष्टव्यम्। अजा व्रीहयस्तावत्सप्तवार्षिकाः कथ्यन्ते। न पुनः पशुविशेषाः।

---

(१) व्रतवैकल्यम्=व्रतभङ्ग। (२) निर्णयम्=सिद्धान्तम्। हीनवादी=मिथ्यावादी। (३) नरकपातकमार्गात्=निरयप्रदात् कर्मानुष्ठानादित्यर्थ।

"अहिंसापूर्वक" इति—यस्मात्=कारणात् सद्भि धर्मशास्त्रवेदिभिः अहिंसापूर्वक=अहिंसामूलक धर्म=सर्वोऽपि धर्म उदाहृत=कथित, तस्मात् हेतो यूकमत्कुणमशकादीन् अतिक्षुद्रानपि जन्तून् रक्षयेत्=पालयेत् नैव हिंस्यादित्यर्थ ॥ १०३ ॥

"हिंसकानी"ति—यो निर्घृण=निर्दय हिंसकानि=हिंसास्वभावान्यपि सिंहव्याघ्रादीनि भूतानि=प्राणिन हिंसति=हन्ति, स घोरम्=भयङ्करं रौरवादिकं नरक याति, य पुन शुभानि=भद्राणि गवादिप्रभृतीनि भूतानि हिंसति तस्य पुन किं वक्तव्यम्, नितान्तमेवासौ कुत्सितो घोरनरकपातीति भाव ॥१०४॥

(४) यज्ञकर्माणि=अग्निष्टोमादियागे इत्यर्थ। पशून्=छागादीन्। व्यापादयन्ति=घ्नन्ति। परमार्थम्=परं तत्त्वम्। श्रुते=वेदस्य। (५) अजै=छागै। यष्टव्यम्=याग कर्त्तव्य। उक्तश्रुतिवाक्ये अजा व्रीहय=धान्यविशेषा एवाजपदेनोच्यन्त इत्यर्थ। सप्तवार्षिका=सप्तवर्षपर्यन्तं स्थापिता अतिपुराणा इत्यर्थ।

उक्तं च—

वृक्षांश्छित्त्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरकं केन गम्यते ॥ १०५ ॥

तन्नाहं भक्षयिष्यामि। परं जयपराजयनिर्णयं करिष्यामि। किंत्वहं वृद्धो दूरात् (१) भाषान्तरं सम्यङ् न शृणोमि। एवं ज्ञात्वा मम समीपवर्तिनौ भूत्वा ममाग्रे न्यायं वदतम्। येन विज्ञाय (२) विवादपरमार्थं वचो वदतो मे परलोकबाधो न भवति। उक्तं च यतः—

मानाद्वा यदि वा लोभात्क्रोधाद्वा यदि वा भयात् ।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः ॥ १०६ ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतं कन्यानृते हन्ति सहस्रं पुरुषानृते ॥ १०७ ॥

---

"वृक्षान्" इति—वृक्षान् छित्त्वा यूपादिप्रयोजनाय, पशून्=छागादीन् हत्वा यागोपकाराय यागस्वरूपनिष्पत्त्यै रुधिरकर्दमम्=तेषां पशूनां रुधिरेण रक्तेन कर्दमं पङ्कं कृत्वा यद्येवं=दर्शितमर्यादया स्वर्गे गम्यते तर्हि नरकं=निरयम् केन=साधनेन कर्मणा गम्यते जनैरिति शेषः। एतान्येव पशुवधादीनि परपीडाकराणि कर्माणि नरकसाधनानि, स्वर्गकामेन परिहेयान्येवेति भावः ॥ १०५ ॥

(१) भाषान्तरम्=वाक्यविशेषम् । (२) विवादपरमार्थम्=विवादं परस्परविरुद्धं वचः तत्र परमार्थम् सिद्धान्तम् ।

न्यायाधिकरणे नियुक्तश्चेत्पक्षपाती तदा निरयभाग् भवेदिति दर्शयति—'मानादि'ति—यो जनः मानाद्वा=सम्मानलाभाद्धेतोः, लोभात्=लिप्सा..., क्रोधात्=कोपाद्वा, यदि वा भयात्=त्रासात् न्यायम्=निर्णयम् अन्यथा=मिथ्या ब्रूते पक्षपातं कृत्वाऽयुक्तं निर्णयं प्रकाशयते स नरकं याति ॥१०६॥

"पञ्च"इति—पश्वनृते=साधारणपशुविषयकमिथ्याकथने पञ्च पुरुषान् हन्ति=पञ्चपुरुषहत्याकरणफलं भुङ्क्ते, एवं गवानृते=गोविषयकमृषाकथने दश पुरुषान् हन्ति, कन्यानृते=कन्याविषयकमिथ्याप्रयोगे शतं पुरुषान्

उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः ।
तस्माद्दूरेण स त्याज्यो न्यायो वा कीर्तयेदृतम् ॥१०८॥

तस्माद् (१) विश्रब्धौ मम कर्णोपान्तिके स्फुटं निवेदयतम् । किं बहुना। तेन (२) क्षुद्रेण तथा तौ तूर्णं विश्वासितौ यथा तस्योत्सङ्गवर्तिनौ सञ्जातौ । ततश्च तेनापि (३) समकालमेवैकः पादान्तेनाक्रान्तः, अन्यो (४) दंष्ट्राक्रकचेन च । ततो गतप्राणौ भक्षिताविति । अतोऽहं ब्रवीमि—"क्षुद्रमर्थपतिं प्राप्य" इति ॥ भवन्तोऽप्येनं दिवान्धं क्षुद्रमर्थपतिमासाद्य रात्र्यन्धाः सन्तः शशकपिञ्जलमार्गेण यास्यन्ति । एवं ज्ञात्वा यदुचितं तद्विधेयमतः परम् । अथ तस्य तद्वचनमाकर्ण्य साध्वनेनाभिहितम् इत्युक्त्वा भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामहे इति ब्रुवाणाः सर्वे पक्षिणो यथाभिमतं जग्मुः । केवलमवशिष्टो (५) भद्रासनोपविष्टोऽभिषेकाभिमुखो दिवान्धः कृकालिकया सहास्ते । आह च—कः कोऽत्र भो ! भोः ! किमद्यापि न क्रियते ममाभिषेकः । इति श्रुत्वा कृकालिकयाभिहितम्—भद्र ! तवाभिषेके कृतोऽयं विघ्नो वायसेन । गताश्च सर्वेऽपि विहगा

---

हन्ति, तथा—पुरुषानृते सहस्र पुरुषान् हन्ति । कदापि मिथ्या न वक्तव्यमिति भाव ॥ १०७ ॥

"उपविष्ट" इति—य पुरुष सभामध्ये=न्यायाधिकरणे उपविष्ट. स्फुटम्=प्रकटं यथाभूत वच =वाक्य न वदति, स =अस्फुटवाक् दूरेण त्याज्य·= परिवर्जनीयः सभास्थानाद्बहिष्करणीय इत्यर्थ । न्यायो वा=तत्कृतो निर्णयोऽपि दूरत एव त्याज्य , तस्माद्धेतो —ऋतम्=सत्यं यथा स्यात्तथा कीर्त्तयेत्= वदेत् ॥ १०८ ॥

(१) विश्रब्धौ=विश्वासमापन्नौ । कर्णोपान्तिके=श्रोत्रसमीपे । (२) क्षुद्रेण= पापाशयेन । उत्सङ्गवर्तिनौ=क्रोडस्थितौ अतिनिकटावित्यर्थ । (३) समकालम्= युगपत् । पादान्तेन=चरणाग्रभागेन । (४) दंष्ट्राक्रकचेन=दंष्ट्रैव क्रकच करपत्रं तेन । (५) भद्रासनोपविष्ट =भद्रासनं नृपासनम्, तत्रोपविष्टः स्थित. ।

(१) यथेप्सितासु दिक्षु। केवलमेकोऽयं वायसोऽवशिष्टः केनापि हेतुना तिष्ठति। तच्चरितमुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयामि। तच्छ्रुत्वा सविषादमुलूको वायसमाह—भो! भो! दुष्टात्मन्! किं मया तेऽपकृतम्, यद्राज्याभिषेको मे विघ्नितः। तदद्यप्रभृति सान्वयमावयोर्वैरं सञ्जातम्। उक्तं च—

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना।
वचो दुरुक्तं वभित्सं न प्ररोहति वाक्क्षतम् ॥ १०९ ॥

इत्येवमभिधाय कृकालिकया सह स्वाश्रयं गतः। अथ भयव्याकुलो वायसो व्यचिन्तयत्—अहो! अकारणं वैरमासादितम्। मया किमिदं (२) व्याहृतम्। उक्तं च—

अदेशकालज्ञमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः।
योऽत्राब्रवीत्कारणवर्जितं वचो
न तद्वचः स्याद्विषमेव तद्वचः ॥ ११० ॥

---

(१) यथेप्सितासु=मनोऽभिलषितासु।

"रोहती"ति—सायकैः=बाणैः विद्धम्=कृतवेधं द्रुमादिकं रोहति= पुनः त्वचा मांसेन पूरितं भवति, असिना=खड्गेन छिन्नं=कृतक्षतमङ्गादिकं रोहति, परन्तु-वाक्क्षतम्=वाचा कृतं क्षतं दुर्वचसा विद्धं हृदयमिति यावत् न प्ररोहति=नैव पूर्णं भवति। तस्माद् दुरुक्तम्=दुष्टं वचः=वाक्यं वीभत्सम्= अत्यन्तमेव घृणितमित्यर्थः। ॥ १०९ ॥

(२) व्याहृतम्=उक्तम्। "व्याहार उक्तिर्लपित" मित्यमरः।

"अदेशे"ति—अत्र=संसारे यः=यो जनः अदेशकालज्ञम्=देशकालज्ञान-विहीनम् देशकालविरोधि, अनायतिक्षमम्=आयतिरुत्तरकाल न आयतिरनायति तत्र क्षमं योग्यं परिणामविरसमित्यर्थः, तथा-अप्रियम्=प्रीतिविवर्जितम्, यल्लोकेषु प्रीतिं न जनयति तत्, तथा च—आत्मनः=स्वस्य लाघवकारि= लघुताजनकम्, तथा—कारणवर्जितम्=निर्हेतुकं यत् वचः=अब्रवीत्=अकथयत् (कथयेत् इति तु विवक्षितोऽर्थः) तस्य पुरुषस्य तद्वचः न स्यात् किन्तु तद्वचः

बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम्।
भिषङ्ममास्तीति विचिन्त्य भक्षये-
दकारणात्को हि विचक्षणो विषम्॥ १११॥

परपरिवादः परिषदि न कथञ्चित्पण्डितेन वक्तव्यः।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति॥ ११२॥

सुहृद्भिराप्तैरसकृद्विचारितं
स्वयं च बुद्ध्या प्रविचारिताश्रयम्।
करोति कार्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्या यशसां च भाजनम्॥ ११३॥

---

विषमेव=विषवदेव मारक भवतीत्यर्थ ॥ ११० ॥

"बलोपपन्न"इति—बुद्धिमान्=धीमान् नरः=मनुष्य· बलोपपन्नोऽपि=शक्तिमान् सन्नपि स्वयमेव=आत्मनैव परम्=अन्यं वैरिताम्=शत्रुता न नयेत्=नैव गमयेत्। तथाहि–विचक्षण=सत्यासत्यविवेकवान् को हि जन मम भिषक्=वैद्योऽस्तीति अर्थात् भक्षितस्य विषस्य प्रतीकारकरणक्षमश्चिकित्सको वर्त्तते इति=एवं विचिन्त्य=विचार्य अकारणात्=प्रयोजनं विनैव विष भक्षयेत्, न कोऽपि विष भक्षयतीत्यर्थः।

प्रथम वैरमुत्पाद्य पश्चाद् बलेन तद्दूरीकरणप्रयत्नो विषं भक्षयित्वा ततस्तस्य विषवैद्यानुसंधानपूर्वकतन्निवारणप्रयत्नसम एवेति भावः। वंशस्थं वृत्तम् ॥ १११ ॥

"परपरिवाद"इति—पण्डितेन=बुद्धिमता नरेण परिषदि=सभाया परपरिवादः=परस्य निन्दावचनं कथञ्चित्=कथमपि न वक्तव्यः=नैव गदनीय। यत् उक्तम्=वचनम् असुखावहम्=दु खप्रदं भवति तत् सत्यमपि=यदि तत्सत्यं स्यात्तथापि न वाच्यम्। "न ब्रूयात् सत्यमप्रियम्" इति स्मरणात्। आर्यावृत्तम् ॥ ११२ ॥

"सुहृद्भि"रिति—य=पुरुष आप्तै=विश्वासपात्रै सुहृद्भिः=हितेच्छुकैर्मित्रप्रभृतिभि सह असकृत्=पुन पुनः विचारितम्=विशेषेण कर्त्तव्यत्व-

एवं विचिन्त्य काकोऽपि प्रयातः। तदा प्रभृत्यस्माभिः सह (१) कौशिनामन्वयगतं वैरमस्ति। मेघवर्ण आह—तात ! एवं गतेऽस्माभिः किं कृतमस्ति। स आह—वत्स ! एवं गतेऽपि (२)पाड्गुण्यादपरः स्थूलोऽभिप्रायोऽस्ति। तमङ्गीकृत्य स्वयमेवाहं तद्विजयाय यास्यामि। रिपून्वञ्चयित्वा वधिष्यामि। उक्तं च यतः—

वहुवुद्धिसमायुक्ताः सुविज्ञाना वलोत्कटान्।
शक्ता वञ्चयितुं धूर्ता ब्राह्मणं छागलादिव ॥ ११४॥

मेघवर्ण आह—कथमेतम्। सोऽब्रवीत्—

## कथा ३।

कस्मिंश्चिदधिष्ठाने मित्रशर्मा नाम ब्राह्मण (३) कृताग्निहोत्र-

---

वुद्धया निर्धारितम्, स्वयञ्च वुद्धया=निजमत्यनुसारेण प्रविचारिताश्रयम्= प्रकर्षेण विचारितो विवेचित आश्रयो विषयो यस्य तत्तादृशं कार्यं करोति, स एव खलु=निश्चयेन वुद्धिमान्=पण्डित. स एव च लक्ष्म्या=सम्पत्ते यशसाञ्च भाजनम्=पात्रं भवितुमर्हतीति शेष । एतादृश पुरुष कदापि विपत्तिं नासादयतीति भाव ॥ ११३ ॥

(१) कौशिकानाम्=उलूकानाम् । "महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिक" इत्यमर । अन्वयगतम्=वंशपरम्पराप्राप्तम् । (२) पाड्गुण्यात्= सन्ध्यादिषट्कात्। स्थूल=महानित्यर्थ । सन्ध्यादीना प्रयोगो वह्वायसकर', तदपेक्षया मयाभ्यूहित प्रकारस्तु तीक्ष्णवुद्धिमात्रसाध्य सुकरश्च । अभिप्राय=उपाय' ।

"वाह्वि"ति—वहुवुद्धिसमायुक्ता=वहुषु नानाविषयेषु वुद्धिर्वहुवुद्धि य समायुक्ता' अनेकविधविषयव्यापकतीक्ष्णमतिसम्पन्ना, तथा— सुविज्ञाना'=सुविचक्षणा' पुरुषाः धूर्ता.=प्रतारकाः ब्राह्मण छागलादिव वलोत्कटान्=वलेनोद्धतानपि शत्रून् वञ्चयितुम्=प्रतारयितुं स्वस्थानात् अध. पातयितुं शक्ता'=समर्थाः भवन्तीति शेष. ॥ ११४ ॥

(३) कृतेति—कृतोऽनुष्ठितोऽग्निहोत्रस्य परिग्रहोऽनुष्ठानं येन स. ।

परिग्रहः प्रतिवसति स्म। तेन कदाचिन्माघमासे (१) सौम्यानिले प्रवाति, मेघाच्छादिते गगने मन्दं मन्दं प्रवर्षति पर्जन्ये, (२) पशुप्रार्थनाय किञ्चिद्ग्रामान्तरं गत्वा कश्चिद्यजमानो याचितः—भो! यजमान! आगामिन्याममावास्यायामहं यक्ष्यामि यज्ञम्। तद्देहि मे पशुमेकम्। अथ तेन तस्य शास्त्रोक्तः (३) पीवरतनुः पशुः प्रदत्तः। सोऽपि तं (४) समर्थमितश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे। अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः संमुखा बभूवुः। तैश्च तादृशं पीवरतनुं स्कन्ध आरूढमवलोक्य मिथोऽभिहितम्—अहो! अस्य पशोर्भक्षणाद् (५) अद्यतनीयो हिमपातो व्यर्थतां नीयेत। तदेनं वञ्चयित्वा पशुमादाय शीतत्राणं कुर्मः। अथ तेषामेकतमो वेषपरिवर्तनं विधाय संमुखो भूत्वापमार्गेण तमाहिताग्निमूचे—भो! भो! (६) बालाग्निहोत्रिन्! किमेवं जनविरुद्धं हास्यकार्यमनुष्ठीयते। यदेष (७) सारमेयोऽपवित्रः स्कन्धाधिरूढो नीयते। उक्तं च यतः—

---

(१) सौम्यानिले=शिशिरे पवने। प्रवाति=वहति सति। (२) पशुप्रार्थनाय=पशोर्यज्ञीयस्य पशो छागस्य प्रार्थनाय याञ्चायै। (३) पीवरतनुः=स्थूलदेह। (४) समर्थम्=बलिष्ठं हृष्टपुष्टाङ्गमित्यर्थ। (५) अद्यतनीयः=अद्यभवः। हिमपातः=शैत्यागम। व्यर्थताम्=नैष्फल्यम्। नीयेत=प्राप्येत। मासस्य भक्षणे क्रियमाणे देहे उष्णताया जाताया शीतबाधा न भविष्यतीत्यर्थ। (६) बालाग्निहोत्रिन्=बालो मूर्खश्चाग्निहोत्रीति तत्सम्बुद्धौ। नायं छाग किन्त्वसौ सारमेय इत्यतस्त्व तेनाग्निहोत्रं चिकीर्षुर्मूर्खस्त्वमिति सम्प्रतारणेयं सम्बोधनोक्तिर्धूर्तानां ब्राह्मणम्प्रति। (७) सारमेय=कुक्कुर। सरमाया अपत्य "सारमेय" इत्यत्र "स्त्रीभ्यो ढक्" (४।१।१२०) इति ढगपत्यार्थे तद्धित।

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः।
रासभोष्ट्रौ विशेषेण तस्मात्तान्नैव संस्पृशेत् ॥ ११५ ॥

ततश्च तेन कोपाभिभूतेनाभिहितम्—अहो! किमन्धो भवान्। यत्पशुं सारमेयं प्रतिपादयसि। सोऽब्रवीत्—ब्रह्मन्! कोपस्त्वया न कार्यः। यथेच्छया गम्यताम् इति। अथ यावत्किञ्चिदध्वनोऽन्तरं गच्छति, तावद्द्वितीयो धूर्तः संमुखे समुपेत्य तमुवाच—भो! ब्रह्मन्! कष्टं कष्टम्। यद्यपि वल्लभोऽयं ते (१) मृतवत्सः, तथापि स्कन्धमारोपयितुमयुक्तम्। उक्तं च यतः—

तिर्यञ्चं मानुषं वापि यो मृतं संस्पृशेत्कुधीः।
पञ्चगव्येन शुद्धिः स्यात्तस्य चान्द्रायणेन वा ॥ ११६ ॥

अथासौ सकोपमिदमाह—भोः! किमन्धो भवान्। यत्पशुं मृतवत्सं वदसि। सोऽब्रवीत्—भगवन्! मा कोपं कुरु। अज्ञानान्मयाभिहितम्। तत्त्वमात्मरुचि समाचर इति। अथ यावत् (२) स्तोकं वनान्तरं गच्छति तावत्तृतीयोऽन्यवेषधारी

---

"श्वाने"ति—श्वाना कुक्कुरा, कुक्कुटाः चरणायुधाः, चाण्डालाश्चेत्येतेषां द्वन्द्वः। एते समस्पर्शा =तुल्यस्पर्शा प्रकीर्त्तिता=कथिता, रासभोष्ट्रौ=रासभो गर्दभ. उष्ट्र. क्रमेलक एतौ द्वौ तु विशेषेण=अत्यन्तमस्पृश्यौ=स्पर्शानर्हौ, तस्मात् हेतो. तान्=एतान् सर्वान् नैव संस्पृशेत्। एतेषा स्पर्शोऽप्यधर्मोत्पत्तिकारणमिति भाव ॥ श्वा एवेति "श्वान" स्वार्थेऽण्॥ ११५॥

(१) मृतवत्स=मृतो गोशिशुक।

"तिर्यञ्च"मिति—यो जनः कुधी =मूढ मृतम्=प्रेतम्, तिर्यञ्चम्=पशुपक्षिप्रभृतिम्, मानुषम्=मानवं वा संस्पृशेत्=परामृशेत् तस्य=तिर्यगादिस्प्रष्टु पुरुषस्य पञ्चगव्येन=पञ्चाना दधिदुग्धघृतगोमयगोमूत्राणा समाहारः पञ्चगव्यं तेन प्राशितेन वा=अथवा चान्द्रायणेन=व्रतविशेषेण धर्मशास्त्रोक्तेन मासैकसाध्येन शुद्धि =तदुत्पन्नपापध्वंसपूर्वकस्पर्शादिव्यवहारयोग्यता स्यात्=भवतीत्यर्थ ॥ ११६ ॥

(२) स्तोकम्=किञ्चित्। वनान्तरम्=वनस्य अध्वानामित्यर्थ.।

धूर्तः संमुखः समुपेत्य तमुवाच—भोः! अयुक्तमेतत्। यत्त्वं रासभं स्कन्धाधिरूढं नयसि। तत्त्यज्यतामेषः। उक्तं च—

यः स्पृशेद्रासभं मर्त्यो ज्ञानादज्ञानतोऽपि वा।
सचैलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये॥ ११७॥

तत्त्यजैनं यावदन्यः कश्चिन्न पश्यति। अथासौ तं पशुं रासभं मन्यमानो भयाद्भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य प्रपलायितः। ततस्ते त्रयो मिलित्वा तं पशुमादाय यथेच्छया भक्षितुमारब्धाः। अतोऽहं ब्रवीमि—"बहुबुद्धिसमायुक्ताः" इति॥ अथवा साध्विदमुच्यते—

अभिनवसेवकविनयैः प्राघुणिकोक्तैर्विलासिनीरुदितैः।
धूर्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति॥११८॥

किंच दुर्बलैरपि बहुभिः सह विरोधो न युक्तः। उक्तं च—

बहवो न विरोद्धव्या दुर्जया हि महाजनाः।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः॥ ११९॥

मेघवर्ण आह—कथमेतत्। स्थिरजीवी कथयति—

---

'य' इति—यो मर्त्यः=मनुष्यः ज्ञानतोऽज्ञानतोऽपि वा रासभम्=गर्दभं स्पृशेत्=परामर्शयेत्, तस्य पापप्रशान्तये=पापक्षयाय सचैलम्=सवस्त्रं स्नानमुद्दिष्टम्=शौचं विहितम्। रासभस्पर्शी सवस्त्रं स्नानं कुर्याच्चेत्तदा शुद्धिमवाप्नुयादित्यर्थः॥ ११७॥

"अभिनवे" ति—इह=अस्मिन् संसारे कश्चित्=कोऽपि मनुष्यः अभिनवः नवागतो यः सेवको भृत्यस्तस्य विनयैः नम्रताव्यवहारैः, प्राघुणिकोक्तैः=प्राघुणिकानामागन्तुकानामुक्तैर्वचनैः, विलासिनीरुदितैः=विलासिनीनां सुन्दरीणां स्त्रीणां विलापैः दुष्टनारीविलापैरित्यत्र तात्पर्यम्, तथा धूर्तजनानां वचननिकरैः=वाक्यसमुदायैः अवञ्चितः=प्रतारणारहितो नास्ति।

एते ह्यभिनवभृत्यादयो निजेष्टसाधनाय विविधैर्मनोरञ्जनवचनैर्लोकान् विश्वासयन्ति प्रतारयन्ति चेति भावः॥ ११८॥

"बहव" इति—बहवः=सङ्घीभूय चरन्तो हीनबला अपि न विरोद्धव्या

## कथा ४ ।

अस्ति कस्मिंश्चिद्वल्मीके महाकायः कृष्णसर्पोऽतिदर्पो नाम । स कदाचिद्विलानुसारिमार्गमुत्सृज्यान्येन लघुद्वारेण निष्क्रामितुमारब्धः । निष्क्रामतश्च तस्य महाकायत्वाद्दैववशतया लघुविवरत्वाच्च शरीरे व्रणः समुत्पन्नः । अथ (१) व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश्च । कति व्यापादयति, कति वा ताडयति । अथ प्रभूतत्वाद्विस्तारितबहुव्रणः क्षतसर्वाङ्गोऽतिदर्पः पञ्चत्वमुपागतः । अतोऽहं ब्रवीमि—"बहवो न विरोद्धव्याः" इति ॥ तदत्रास्ति किंचिन्मे वक्तव्यमेव । तदवधार्य यथोक्तमनुष्ठीयताम् । मेघवर्ण आह—तत्समादिशाय । तवादेशो नान्यथा कर्तव्यः । स्थिरजीवी प्राह—वत्स ! समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः । तन्मां (२) विपक्षभूतं कृत्वाऽतिनिष्ठुरवचनैर्निर्भर्त्स्य यथा विपक्षप्रणिधीनां प्रत्ययो भवति तथा (३) समाहृतरुधिरैरालिप्यास्यैव न्यग्रोधस्याधस्तात्प्रक्षिप्य मां गम्यतां पर्वतमृष्यमूकं प्रति । तत्र सपरिवारस्तिष्ठ यावदहं समस्तान्सपत्नान्सुप्रणीतेन विधिना विश्वास्याभिमुखान् कृत्वा कृतार्थो ज्ञातदुर्गमध्यो दिवसे तानन्धतां प्राप्ताञ्ज्ञात्वा व्यापादयामि । ज्ञातं मया सम्यक् । नान्यथास्माकं सिद्धिरिति । यतो दुर्गमेत (४) दपसाररहितं केवलं वधाय भविष्यति । उक्तं च यतः—

---

न प्रतिकूलनीया , हि=यत महाजना =महान्तो लोका सङ्घीभूता इत्यर्थ । जय्या =जेतुमशक्या । तथाहि—स्फुरन्तम्=फणाटोपं कुर्वाणमपि नागेन्द्रम्= ... पिपीलिका =कीटिकाः भक्षयन्ति=सम्भूय खादन्तीत्यर्थ ॥ ११६ ॥

(१) व्रणेति=व्रणस्य क्षतस्य रुधिरं तद्गन्धानुसारिणीभि । (२) विपक्षभूत ... भूतम् । अतिनिष्ठुरवचनै =अत्यन्तं कटुवाक्यै । निर्भर्त्स्य=धिक्कृत्य । विपक्षप्रणिधीनाम्=शत्रुदूतानाम् । प्रत्यय =विश्वास । (३) समाहृतरुधिरै =कुतश्चित् समानीतै रक्तै । (४) अपसाररहितम्=निर्गमद्वारशून्यम् ।

अपसारसमायुक्तं नयज्ञैर्दुर्गमुच्यते।
अपसारपरित्यक्तं दुर्गव्याजेन बन्धनम्॥ १२०॥

न च त्वया मदर्थे कृपा कार्या। उक्तं च—

अपि प्राणसमानिष्टान् पालितांल्लालितानपि।
भृत्यान् युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनम्॥ १२१॥

तथा च—

प्राणवद्रक्षयेद् भृत्यान् स्वकायमिव पोषयेत्।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसङ्गमः॥ १२२॥

तत्त्वयाहं नात्रविषये प्रतिषेधनीयः। इत्युक्त्वा तेन सह शुष्ककलहं कर्तुमारब्धः। अथान्ये तस्य भृत्याः स्थिरजीविनम् (१) उच्छृङ्खलवचनैर्जल्पन्तमवलोक्य तस्य वधायोद्यता मेघवर्णेनाभिहिताः—अहो! निवर्तध्वं यूयम्। अहमेवास्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करिष्यामि इत्यभिधाय तस्योपरि समारुह्य, लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य, आहृतरुधिरेण प्लावयित्वा, तदुपदिष्टमृष्यमूकपर्वतं सपरिवारो गतः। एतस्मिन्नन्तरे कृकालिकया (२) द्विषत्प्रणिधीभूतया तत्सर्वं

---

"अपसारे"ति—नयज्ञैः=नीतिशास्त्रनिपुणैः दुर्गं=कोट्टं अपसारसमायुक्तम्=अपसारेण पलायनोपायेन समायुक्तं समन्वितं निर्गमार्थं गुप्तद्वारोपेतं विधेयमिति शेषः, उच्यते=कथ्यते। अपसारपरित्यक्तम्=पलायनमार्गविहीनं दुर्गं व्याजेन=छलेन बन्धनम्=कारावास एवेत्यर्थः॥ १२०॥

"अपी"ति—अपि=किञ्च युद्धे=सङ्ग्रामे समुत्पन्ने=जाते सति प्राणसमान्=प्राणतुल्यान् इष्टान्=प्रियान् पालितान्=पोषितान् तथा लालितान् शुष्कम्=अनार्द्रम् इन्धनं=काष्ठमिव पश्येत् राजेति शेषः॥ १२१॥

"प्राणवदि"ति—एकस्य दिवसस्य अर्थे=निमित्ते यत्र=दिवसे रिपुसङ्गमः=शत्रुसमागमः रणं स्यात् तदर्थं भृत्यान्=सेवकान् सदा प्राणवत् रक्षयेत्, तथा स्वकायमिव=स्वशरीरमिव पोषयेत्=पालयेत्॥ ११२॥

(१) उच्छृङ्खलवचनैः=अवमानवाक्यैः। (२) द्विषत्प्रणिधीभूतया=शत्रुपक्षे चारकर्मणि नियुक्तया।

मेघवर्णस्यामात्यस्य व्यसनमुलूकराजस्य निवेदितम् यत्तवारिः संप्रति भीतः क्वचित्प्रचलितः सपरिवारः इति । अथोलूकाधिपस्तदाकर्ण्यास्तमनवेलायां सामात्यः सपरिजनो वायसवधार्थं प्रचलितः । प्राह च—त्वर्यतां त्वर्यताम् । भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते । उक्तं च—

शत्रोः प्रचलने छिद्रमेकमन्यच्च संश्रयम् ।
कुर्वाणो जायते वश्यो व्यग्रत्वे राजसेविनाम् ॥ १२३ ॥

एवं ब्रुवाणः समन्तान्न्यग्रोधपादपमधः परिवेष्ट्य व्यवस्थितः । यावन्न कश्चिद्वायसो दृश्यते, तावच्छाखाग्रमधिरूढो (१) हृष्टमना वन्दिभिरभिष्टूयमानोऽरिमर्दनस्तान्परिजनान्प्रोवाच—अहो ! ज्ञायतां तेषां मार्गः । कतमेन मार्गेण(२)प्रनष्टाः काकाः । तद्यावन्न दुर्गं समाश्रयन्ति, तावदेव पृष्ठतो गत्वा व्यापादयामि । उक्तं च—

वृतिमप्याश्रितः शत्रुरवध्यः स्याज्जिगीषुणा ।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम् ॥ १२४ ॥

---

"शत्रोरि"ति—शत्रो =द्विषत प्रचलने=पलायने एकं छिद्रम्=रन्ध्रम्, अन्यच्च=अपरञ्च संश्रयम्=आवासं प्रकरणात्पलायितस्य शत्रोरेवेत्यर्थ , तृतीयन्तु—राजसेविनाम्=राजभृत्याना व्यग्रत्वे=शत्रुरन्ध्रावन्वेषणतत्परत्वे सति अर्थात् तेषा व्यग्रतारूपं कुर्वाण =जानन् सन् राजा वश्य =तेषामेव वशङ्गतो जायते=भवति । पलायनादिच्छिद्रे सति स्वीयानामेव राजा वश्यो भवतीत्यर्थः ।

अत्रेदं तात्पर्यमुलूकराजस्य यत् पलायने व्यग्रस्य काकराजस्य मेघवर्णस्य छिद्रमावासं राजभृत्याना व्यग्रत्वञ्चानुसन्धाय सत्वरमेव यूयं सर्वे (मम) हितमाचरन्तस्तं (मेघवर्णं) वशीकुर्वन्त्विति ॥ १२३ ॥

(१) हृष्टमना =प्रसन्नचित्त. । वन्दिभि =स्तुतिपाठकै । (२) प्रनष्टा = पलायिता ।

"वृति"मिति—वृतिम्=वेष्टनमपि आश्रित =प्राप्त शत्रु जिगीषुणा=जेतुमिच्छुना विजयकामेन शत्रुणेति शेषः, अवध्य =विनाशयितुम-

अथैतस्मिन् (१) प्रस्तावे स्थिरजीवी चिन्तयामास—यदेतेऽस्मच्छत्रवो (२) ऽनुपलब्धास्मद्वृत्तान्ता यथागतमेव यान्ति। ततो मया न किञ्चित्कृतं भवति। उक्तं च—

अनारम्भो हि कार्याणां प्रथमं बुद्धिलक्षणम्।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम्॥ १२५॥

तद्वरमनारम्भः, न चारम्भविघातः। तदहमेताञ्शब्दं संश्राव्यात्मानं दर्शयामि इति विचार्य मन्दं मन्दं शब्दमकरोत्। तच्छ्रुत्वा ते सकला अप्युलूकास्तद्वधाय प्रजग्मुः। अथ तेनोक्तम्—अहो! अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री। मेघवर्णेनैवेदृशीमवस्थां नीतः। तन्निवेदयतात्मस्वाम्यग्रे। तेन सह बहु वक्तव्यमस्ति। अथ तैर्निवेदितः स उलूकराजो (३) विस्मयाविष्टस्तत्क्षणात्तस्य सकाशं गत्वा प्रोवाच—भो! भोः! किमेतां दशां गतस्त्वम्। तत्कथ्यताम्। स्थिरजीवी प्राह—देव! श्रूयतां तदवस्थाकारणम्। अतीतदिने स दुरात्मा मेघवर्णो

---

शक्य स्यात्, यदि नाम परया=सर्वोत्तमया परिपूर्णया सामग्र्या=विविधशस्त्रादिरूपया युतं=सम्पन्नं दुर्गं साश्रितं स्यात्तदा किम्पुन=किमु वक्तव्यम्, एवं सम्पन्न शत्रुस्त्वजेय एव भवतीति भाव ॥ १२४ ॥

(१) प्रस्तावे=प्रसङ्गे। (२) अनुपलब्धेति—अनुपलब्धोऽज्ञातोऽस्माकं वृत्तान्तो मन्त्रणारहस्यरूपो यैस्ते तादृशाः। यथागतम्=यस्मात्प्रदेशादागतं तत्रैवेत्यर्थ।

"अनारम्भ" इति—कार्याणा=कर्त्तव्याना सम्भावितानेकविघ्नानाम् अनारम्भ=उपक्रमाकरण प्रथमम्=आद्यं बुद्धिलक्षणम्=बुद्धेः प्रज्ञायाश्चिह्नम्, प्रारब्धस्य=कृतारम्भस्य तु यत्-अन्तगमनं=परिपूरणम् समीचीनतया साधनं तत् द्वितीय बुद्धिलक्षणम्।

अनेकविघ्नाशङ्कया तद्विनाशभीत्या च प्रथममेव कार्यं नारम्भणीयम्, यद्यारब्ध तदा तु फलप्राप्तिपर्यन्तं तन्निष्पादनमेव वरं भवतीति भाव ॥१२५॥

(३) विस्मयाविष्ट=चकित।

युष्मद्व्यापादितप्रभूतवायसानां पीडया युष्माकमुपरि (१) कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत्। ततो मयाभिहितम्—स्वामिन्! न युक्तं भवतस्तदुपरि गन्तुम्। बलवन्त एते, बलहीनाश्च वयम्। उक्तं च—

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि वाञ्छेत्।
न वध्यतेऽत्यन्तबलो हि यस्माद्
व्यक्तं प्रणाशोऽस्ति पतङ्गवृत्तेः॥ १२६॥

तत्तस्य (२) उपायनप्रदानेन सन्धिरेव युक्तः। उक्तं च—

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान्।
दत्त्वा हि रक्षयेत्प्राणान् रक्षितैस्तैर्धनं पुनः॥ १२७॥

तच्छ्रुत्वा तेन (३) दुर्जनप्रकोपितेन त्वत्पक्षपातिनं मामाशङ्कमाने·

---

(१) कोपशोकग्रस्त=कोपशोकाभ्या व्याप्त।

"बलीयसे" ति—भूतिकाम=ऐश्वर्याभिलाषुक पुरुष हीनबल=अल्पशक्ति· चेत् तदा— बलीयसा=अत्यन्तबलवता शत्रुणा सह मनसापि=सङ्कल्पेनापि विरोधं न वाञ्छेत्=न कामयेत। यस्मात् कारणात् अत्यन्तबल=बलीयान् पुरुष न वध्यते=नैव हन्यते हीनबलेनेत्यर्थ, किन्तु—पतङ्गवृत्ते=पतङ्गस्य वृत्तिरिव वृत्तिर्यस्य तस्य अतिमात्रं दुर्बलस्य व्यक्तम्=स्फुटं प्रणाश=विध्वंस पराजयो वा अस्ति=भवति "हि" इति निश्चितोऽयमर्थ॥ १२६॥

(२) उपायनप्रदानेन=उपढौकनिका(उपहार)प्रदानेन।

"बलवन्तम्" इति—बुद्धिमान्=धीमान् पुरुष बलवन्तम्=प्रबलं =शत्रुं दृष्ट्वा=विज्ञाय सर्वस्वम्=हस्त्यश्वबलरथादिकं दारप्राणाद्यतिरिक्तं वा प्राणान् रक्षयेत्, हि=यत तै=प्राणै रक्षितै पुन=भूयोऽपि धनं ति शेष॥ १२७॥

(३) दुर्जनप्रकोपितेन=दुर्जनैरन्यैर्धूर्तैर्मन्त्रिप्रभृतिभि क्रोधितेन मद्विये इत्यर्थ।

नेमां दशां नीतः। तत्तव पादौ साम्प्रतं मे शरणम्। किं बहुना विज्ञप्तेन यावदहं प्रचलितुं शक्नोमि तावत्त्वां तस्यावासे नीत्वा सर्ववायसक्षयं विधास्यामि इति।

अथारिमर्दनस्तदाकर्ण्य पितृपितामहक्रमागतमन्त्रिभिः सार्धं मन्त्रयांचक्रे। तस्य च पञ्च मन्त्रिणः। तद्यथा—रक्ताक्षः, क्रूराक्षः,दीप्ताक्षः,वक्रनासः,प्राकारकर्णश्चेति। तत्रादौ रक्ताक्षस्तमपृच्छत्—भद्र! एष तावत्तस्य रिपोर्मन्त्री मम हस्तगतः तत्किं क्रियताम् इति। रक्ताक्ष आह—देव! किमत्र चिन्त्यते। (१) अविचारितमयं हन्तव्यः। यतः।

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान्भवेत्।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः॥ १२८॥

किं च स्वमुपागता (२) श्रीस्त्यज्यमाना शपतीति लोके प्रवादः। उक्तं च—

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम्।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता॥ १२९॥

---

(१) अविचारितम्=विचारं विनैव, सद्य एवेत्यर्थः।

"हीनः" इति—हीनः=क्षीणबलः शत्रुः यावत् बलवान्=प्रबलो न भवेत् तावत् निहन्तव्यः=समूलमुन्मूल्यः। यतः प्राप्तस्वपौरुषबलः=प्राप्तमासादितं स्वपौरुषं स्वीयं पराक्रमः बलं सैन्यञ्च येन स तादृशः पश्चात् दुर्जयः=जेतुमशक्यो भवतीति शेषः॥ १२८॥

(२) श्रीः=लक्ष्मीः। शपति=शापं ददाति। प्रवादः=प्रसिद्धिः।

"काल" इति—यत्=यस्मात् कारणात् कालः=सौभाग्यसमयः कालकाङ्क्षिणम्=शुभवेलार्थिनं नरं सकृत्=एकवारमेव अभ्येति=प्राप्नोति, कालकर्म=काले सुसमये कर्म कार्यम् अचिकीर्षता=कर्तुमनिच्छता तेन=जनेन सः=कालः उदयसमयः पुनर्दुर्लभः=दुष्प्राप्यो भवतीति शेषः। तवोदयवेलेयम् प्राप्तशत्रुरन्ध्रश्च भवानतः क्षिप्रमेनं जहीति रक्ताक्षाशयः॥ १२९॥

श्रूयते च यथा—

चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नाश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्धते ॥ १३० ॥

अरिमर्दनः प्राह—कथमेतत्। रक्ताक्षः कथयति—

## कथा ५।

अस्ति कस्मिंश्चिदधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदैव निष्फलः कालो (१) ऽतिवर्तते। अथैकस्मिन्दिवसे स ब्राह्मण (२) उष्णकालावसाने घर्मार्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तोऽनतिदूरे (३) वल्मीकोपरि प्रसारितं बृहत्फटायुक्तं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास—नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता तेनेदं मे कृषिकर्म विफलीभवति। तदस्या अहं पूजामद्य करिष्यामि—इत्यवधार्य कुतोऽपि क्षीरं याचित्वा (४) शरावे निक्षिप्य वल्मीकान्तिकमुपागम्योवाच—भो! क्षेत्रपाल! मयैतावन्तं कालं न ज्ञातं यत्त्वमत्र वससि। तेन पूजा न कृता। तत्साम्प्रतं क्षमस्व

---

"चितिकाम्" इति—(हे विप्र! इत्यध्याहर्त्तव्यम्) दीपिताम्=जाज्वल्यमाना चितिकाम्=चिता श्मशानभुवोऽग्नि तथा ममैव च भग्नाम्=आमर्दिताम् फटाम्=फणा पश्य=अवलोकय [तव पुत्रो मम शिरसि आघातं कृतवान् तेन मदीया फणा मर्दिता, अतोऽहं तव पुत्रमदशम्, स च चिताया भस्मीभूत इति कथारूपेण फलितार्थ] अतो हेतो भिन्नश्लिष्टा=भिन्ना चासौ श्लिष्टा चेति तथोक्ता आदौ खण्डिता ततो भूयो योजिता या प्रीति सा हेन=पुन प्रकटितेन न वर्धते=वृद्धिं नैव यातीत्यर्थ। "तु" शब्दोऽत्र व्यर्थक ॥ १३० ॥

(१) अतिवर्त्तते=अतिक्रामति। (२) उष्णकालावसाने=उष्णकालस्य ष्मकालस्य अवसाने अपराह्णकाले। घर्मार्त्त=उष्णतापरितप्त। (३) रि=वामलूरोपरि। "वामलूरश्च नाकुश्च वल्मीकं पुन्नपुंसकम्" त्य । (४) शरावे=मृत्तिकारचितपात्रविशेषे।

इति। एवमुक्त्वा दुग्धं च निवेद्य गृहाभिमुखं प्रायात्। अथ प्रातर्यावदागत्य पश्यति, तावद् (१)दीनारमेकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति। एकैकं च दीनारं गृह्णाति। अथैकस्मिन्दिवसे वल्मीके क्षीरनयनाय पुत्रं निरूप्य ब्राह्मणो ग्रामान्तरं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकं च दृष्ट्वा गृहीत्वा च चिन्तितवान्—नूनं सौवर्णदीनारपूर्णो वल्मीकः। तदेनं हत्वा सर्वमेकवारं ग्रहीष्यामि इत्येवं (२) सम्प्रधार्यान्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण सर्पो लगुडेन शिरसि ताडितः। ततः कथमपि दैववशादमुक्तजीवित एव रोषात्तमेव (३) तीव्रविषदशनैस्तथाऽदशत् यथा स सद्यः पञ्चत्वमुपागतः। स्वजनैश्च नातिदूरे क्षेत्रस्य (४) काष्ठसञ्चयैः संस्कृतः। अथ द्वितीयदिने तस्य पिता समायातः। स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा (५) तथैव समर्थितवान्। अब्रवीच्च—

भूतान्यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा ॥ १३१ ॥

पुरुषैरुक्तम्—कथमेतत्। ब्राह्मणः कथयति—

---

(१) दीनारम्=सुवर्णमुद्राविशेषम्। "मोहर" इति पञ्चनदे प्रसिद्धिः। (२) सम्प्रधार्य=निश्चित्य। (३) तीव्रेति—तीक्ष्णविषाक्तैर्दन्तैः। (४) काष्ठसञ्चयैः=काष्ठभारैः। संस्कृत=अग्नौ दग्ध.। (५) तथैव=सत्यमेव निश्चितवानित्यर्थः।

"भूतान्" इति—य जन आत्मन शरणागतान्=स्वशरणं प्राप्तान् भूतान्=प्राणिनः न अनुगृह्णाति=नैवानुकम्पयते, तस्य पुंस· भूतार्था=निश्चिता अर्था विषया नश्यन्ति, पद्मवने हंसा यथा=हसा इवेत्युपमा। "हि" इति निश्चये ॥ १३१

## कथा ६ ।

अस्ति कस्मिश्चिदधिष्ठाने चित्ररथो नाम राजा। तस्य (१) योधैः सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति। तत्र च प्रभूता (२) जाम्बूनदमया हंसास्तिष्ठन्ति। षण्मासे (३) पिच्छमेकैकं परित्यजन्ति। अथ तत्र सरसि (४) सौवर्णो बृहत्पक्षी समायातः। (५) तैश्चोक्तः—अस्माकं मध्ये त्वया न वस्तव्यम्, येन कारणेनास्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत्सरः। एवं च किं बहुना परस्परं (६) द्वैधमुत्पन्नम्। स च राज्ञः शरणं गतोऽब्रवीत्—देव! एते पक्षिण एवं वदन्ति, यदस्माकं राजा किं करिष्यति न कस्याप्यावासं दद्मः। मया चोक्तम्—न शोभनं युष्माभिरभिहितम्। अहं गत्वा राज्ञे निवेदयिष्यामि। एवं स्थिते देवः प्रमाणम्। ततो राजा भृत्यानब्रवीत्—भो! भोः! गच्छत। सर्वान्पक्षिणो गतासून्कृत्वा शीघ्रमानयत। राजादेशानन्तरमेव प्रचेलुस्ते। अथ लगुडहस्तान्राजपुरुषान्दृष्ट्वा तत्रैकेन पक्षिणा वृद्धेनोक्तम्—भोः! स्वजनाः! न शोभनमापतितम्। ततः सर्वैरेकमतीभूय (७) शीघ्रमुत्पतितव्यम्। तैश्च तथानुष्ठितम्। अतोऽहं ब्रवीमि-"भूतान्यो नानुगृह्णाति" इति॥ इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा तत्र गत्वा तारस्वरेण सर्पमस्तौत्। तदा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच—त्वं लोभादत्रागतः पुत्रशोकमपि विहाय। अतः परं तव मम च प्रीतिर्नोचिता। तव पुत्रेण यौवनोन्मदेनाहं ताडितः। मया स दष्टः। कथं मया लगुडप्रहारो विस्मर्तव्यः, त्वया च पुत्रशोकदुःखं विस्मर्तव्यम्। इत्युक्त्वा बहुमूल्यं हीरकमणिं तस्मै दत्त्वा

(१) योधैः=सैनिकैः । (२) जाम्बूनदमया=सुवर्णमया । (३) पिच्छम्=पुच्छं पक्षविशेषः । (४) सौवर्णः=स्वर्णमयः । (५) तैः=जाम्बूनदमयैर्हंसैः । (६) द्वैधम्=शत्रुता । (७) उत्पतितव्यम्=उड्डयनीयम् ।

अतः परं पुनस्त्वया नागन्तव्यम् इति पुनरुक्त्वा विवरान्तर्गतः । ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन्स्वगृहमागतः । अतोऽहं ब्रवीमि--"चितिकां दीपितां पश्य" इति ॥ तदस्मिन्हतेऽयत्नादेव राज्यमकण्टकं भवतो भवति । तस्यैतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ—भद्र ! त्वं तु किं मन्यसे । सोऽब्रवीत्—देव ! निर्दयमेतत् यदनेनाभिहितम् । यत्कारणं शरणागतो न वध्यते । सुष्ठु खल्विदमाख्यातम्—

श्रूयते हि कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ १३२ ॥

अरिमर्दनोऽब्रवीत्—कथमेतत् । क्रूराक्षः कथयति—

## कथा ७ ।

कश्चित्क्षुद्रसमाचारः प्राणिनां कालसन्निभः ।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ १३३ ॥
नैव कश्चित्सुहृत्तस्य न सम्बन्धी न बान्धवः ।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥ १३४ ॥

---

"श्रूयते" इति—कपोतेन=पारावतेन पक्षिणा केनाचित् शरणमागत = आश्रय प्राप्त शत्रु =व्याध यथान्यायम्=यथाविधि पूजित =समर्चित स्वैः=स्वीयैश्च मांसै =पिशितै निमन्त्रित =आमन्त्र्य तर्पितश्च । "हि"इति निश्चये १३२॥

"कश्चिद्" इति—क्षुद्रसमाचार =नीचव्यवहार , प्राणिनाम्=भूताना कालसन्निभ =मृत्युतुल्य मृत्युरेवेत्यर्थ , घोर =क्रूरहृदय., शकुनिलुब्धक॰= शकुनीना पक्षिणा लुब्धक आखेटकृत् महारण्ये=विशाले जङ्गले विचचार= परिबभ्राम ॥ १३३ ॥

"नैवे" ति—तेन=तत्कृतेन शकुनिवधरूपेण रौद्रेण=दारुणेन कर्मणा= कार्येण तस्य कश्चित् सुहृत्=मित्रं नैव आसीदिति शेष , एवमेव—सम्बन्धी= सह विचरणशील न, बान्धव =ज्ञातिरपि न, किन्तु स =व्याध तै. सर्वै = सुहृत्प्रभृतिभि. (दुष्टोऽयमिति मत्वा) परित्यक्तोऽभूदिति शेष ।

दुर्जन सर्वेऽपि त्यजन्तीति भाव ॥ १३४ ॥

अथवा—

ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १३५ ॥
स पञ्जरकमादाय पाशं च लगुडं तथा।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः ॥ १३६ ॥
अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका।
जाता हस्तगता तां स प्राक्षिपत्पञ्जरान्तरे ॥ १३७ ॥
अथ कृष्णा दिशः सर्वा वनस्थस्याभवन् घनैः।
वातवृष्टिश्च महती क्षयकाल इवाभवत् ॥ १३८ ॥
ततः स त्रस्तहृदयः कम्पमानो मुहुर्मुहुः।
अन्वेषयन्परित्राणमाससाद वनस्पतिम् ॥ १३९ ॥

---

**"य"** इति—ये जना नृशंसा =घातुका दुरात्मान =दुर्हृदया· प्राणिनां=जीवतां प्राणनाशकाः=हिंसकाः प्राणहरा ते भूताना=प्राणिना व्यालाः=सर्पा इव उद्वेजनीया =उद्वेगकारिणः त्रासप्रदा भवन्ति ॥ १३५ ॥

**"स"** इति—सः शकुनिव्याधः पञ्जरकम्=लघुपिञ्जरम्, पाशम्=जालम् तथा लगुडम्=दण्डम् आदाय=गृहीत्वा नित्यमेव=प्रतिदिनं वन याति, यतः—सर्वप्राणिविहिंसकः=प्राणिमात्रघातक । प्राणिनामाखेटाय प्रतिदिन वनं यातीत्यर्थः ॥ १३६ ॥

**"अन्येद्यु"**रिति—अन्येद्यु =अन्यस्मिन् दिवसे वने अरण्ये भ्रमतः= तस्य कापि=काचित् कपोतिका=तपस्विनी पारवतस्त्री हस्तगता जाता=पाणौ प्राप्ता तेन गृहीतेत्यर्थः। स =व्याध ता कपोतिका पञ्जरान्तरे=पिञ्जराभ्यन्तरे प्राक्षिपत्=न्यवेशयत् ॥ १३७ ॥

**"अथे"** ति—अथ=तद्ग्रहणानन्तरं वनस्थस्य=वने तिष्ठतः सतस्तस्य घनै =मेघैः सर्वा =पूर्वाद्या दिश· कृष्णा =काला· जाता, प्रावृता इत्यर्थः। वातवृष्टि·=झञ्झावातसहिता वृष्टिश्च महती अभूत्, (स वर्षाकालः) क्षयकाल इव=प्रलयसमय इवाभवत् ॥ १३८ ॥

**"तत"**इति—ततस्तदनन्तरं स त्रस्तहृदय =त्रस्तं भीतं हृदयं मना यस्य स तादृश मुहुर्मुहु =पुन पुन· कम्पमान·=वातवर्षजन्यशैत्य-

मुहूर्तं पश्यते यावद्वियद्विमलतारकम् ।
प्राप्य वृक्षं वदत्येव योऽत्र तिष्ठति कश्चन ॥ १४० ॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति ॥
शीतेन भिद्यमानं च क्षुधया गतचेतसम् ॥ १४१ ॥
अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः ।
भार्याविरहितस्तिष्ठन्विललाप सुदुःखितः ॥ १४२ ॥
वातवर्षो महानासीन्न चागच्छति मे प्रिया ।
तया विरहितं ह्येतच्छून्यमद्य गृहं मम ॥ १४३ ॥
पतिव्रता पतिप्राणा पत्युः प्रियहिते रता ।
यस्य स्यादीदृशी भार्या धन्यः स पुरुषो भुवि ॥१४४॥

---

कारणात् सवेपथुः सन् परित्राणम्=शरणम् अन्वेषयन्=गवेषयन्, वनस्पतिम्=कञ्चन वृक्षम् अससाद=प्राप ॥ १३६ ॥

"मुहूर्तम्" इत्यादि—मुहूर्तम्=अल्पक्षणमात्रेण यावत् ( असौ ) विमला निर्मलास्तारका यत्र तादृशं वियत्=व्योम पश्यते=आलोकते (तावत्) वृक्षं प्राप्य=आसाद्य वदति एव=एवमेवाकथयदित्यर्थः । यः कश्चन=यः कोऽपि अत्र=वृक्षे तिष्ठति, अहं तस्य शरणम्=आश्रयं प्राप्तः स मा परित्रातु=रक्षत्विति, आश्रयान्नयोर्द्वयोर्दानेन मम रक्षां करोत्वित्यर्थः, कथम्भूतं माम्—शीतेन वृष्टिजनितहिमेन भिद्यमानम्=पीड्यमानम्, तथा—क्षुधया=बुभुक्षया गतचेतसम्=विगतसञ्ज्ञम् मूर्च्छन्तमिवेत्यर्थः । "पश्यते" इत्यार्षः प्रयोगः ॥ १४०–१४१ ॥

"अथ" इति—अथ=अनन्तरम् तस्य तरोः=वृक्षस्य स्कन्धे=प्रकाण्डे सुचिरोषितः=बहोः कालात् कृतावासः कपोतः भार्याविरहितः=स्त्रिया वियुक्तः तिष्ठन् सुदुःखितः=प्रचुरं दुःखं प्राप्तः विललाप=रुरोद ॥ १४२ ॥

कपोतस्य विलापं वर्णयति—"वातवर्ष" इति—महान् बलवत्तरः वातवर्षः=वातेन युक्तो वर्षो वातवर्षः आसीत्, मे=मम प्रिया=कान्ता च न आगच्छति=नैवायाति, अद्य तया=प्रियया विरहितम्=वियुक्तं मे=मम एतद् गृहं शून्यम्=जङ्गलमिवास्तीत्यर्थः । "हि" इति अवधारणे ॥ १४३ ॥

"पतिव्रते"ति—पतिव्रता=साध्वी, पतिप्राणा=पतिरेव प्राणो जी-

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम् ॥ १४५ ॥
पञ्जरस्था ततः श्रुत्वा भर्तुर्दुःखान्वितं वचः ।
कपोतिका सुसन्तुष्टा वाक्यं चेदमथाह सा ॥ १४६ ॥
न सा स्त्रीत्यभिमन्तव्या यस्यां भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ १४७ ॥
दावाग्निना विदग्धेव सपुष्पस्तवका लता ।
भस्मीभवतु सा नारी यस्यां भर्ता न तुष्यति ॥१४८॥

---

वनं यस्या सा, अतएव--पत्यु =स्वामिन प्रियहिते=प्रिये इष्टे च रता=संलग्ना, ईदृशी=उक्तविशेषणविशिष्टा भार्या=स्त्री यस्य पुरुषस्य स्यात् सः पुरुषः भुवि=लोके धन्य =पुण्यात्मा वर्त्तते इति शेष ॥ १४४ ॥

"ने"ति--गृहम्=भवनं गृहमिति न आहु =न कथयन्ति प्राज्ञा इति शेष, गृहिणी=भार्या एव गृहमुच्यते=कथ्यते, गृहिणीहीनम्=भार्याशून्यं गृहं तु अरण्यसदृशम्=जङ्गलतुल्यं मतम्=स्वीकृत लोकानुभवशालिभिर्विद्वद्भिरिति । "हि" इति निश्चितमेतत् ॥ १४५ ॥

"पञ्जरस्थे" ति—तत =तदनन्तरं पञ्जरस्था=पञ्जरे तिष्ठतीति पञ्जरस्था व्याधस्य पाशे निगडितेत्यर्थ, सा कपोतिका दु खान्वितम्=दु-खेन कष्टेन अन्वितं विशिष्टं विलापपूर्णं वच =वाक्यं श्रुत्वा=आकर्ण्य सुसन्तुष्टा=अत्यन्तं प्रसन्ना सती अथ च इदं=वक्ष्यमाण वाक्यमाह ।

अत्र कपोतिकाया अनुरागपूर्णत्वेन भर्त्तृवचस सन्तोषो नतु तद्विलापकरणेनेति न विस्मर्त्तव्यम् ॥ १४६ ॥

"ने" ति--सा स्त्रीति न अभिमन्तव्या=नैव वक्तव्या, यस्या=स्त्रिया [illegible]=स्वामी न तुष्यति=प्रसन्नो न भवति । भर्त्तरि=स्वामिनि पत्यौ तुष्टे=प्रसन्ने सति, नारीणाम्=स्त्रीणाम् (उपरि) सर्वदेवताः तुष्टाः स्यु.=प्रसन्ना जायन्त इत्यर्थ । स्त्रिया (कृते) पतिरेव परो देव इति शास्त्ररहस्यम् ॥ १४७ ॥

"दावाग्निने"ति--सा नारी दावाग्निना=वनवह्निना विदग्धा=विशेषेण भस्मीभूता सपुष्पस्तवका=पुष्पाणा कुसुमाना स्तवकैर्गुच्छै· सहितेति सपुष्प-

मितं ददाति हि पिता मितं भ्राता मितं सुतः।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १४९ ॥

पुनश्चाब्रवीत्—

शृणुष्वावहितः कान्त ! यत्ते वक्ष्याम्यहं हितम्।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १५० ॥
एष शाकुनिकः शेते तवावासं समाश्रितः।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥ १५१ ॥

श्रूयते च—

यः सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत्।
तस्यासौ दुष्कृतं दत्त्वा सुकृतं चापकर्षति ॥ १५२ ॥

---

स्तवका लता=वल्लीव भस्मीभूता भवतु=विनाशमुपैतु, यस्या=नार्या भर्त्ता=स्वामी न तुष्यति=प्रसन्नो न भवति। यासु नारीषु भर्त्तुः प्रेमैव नास्ति तासां पुत्रादिसहितानामपि मृत्युरेव श्रेयानिति भावः ॥ १४८ ॥

सर्वेभ्योऽपि भर्त्तैवोत्कृष्ट इत्याचष्टे—"मित" मिति—पिता=जनक मितम्=अल्पमेव ददाति, तथा भ्राताऽपि मितम्, सुतोऽपि मितमेव ददातीत्यनेनान्वयः। "हि" निश्चितमिदम्।

अमितस्य=अपरिमितपदार्थस्य अनल्पस्य धनवस्त्रादेः दातारं भर्त्तारं का स्त्री न पूजयेत्=नार्चयेत्, अपि तु स्त्रीमात्रस्य भर्त्तैव पूज्यो भवतीति भावः॥१४९॥

"शृणुष्वे" ति—हे कान्त! वल्लभ! अहं यत् ते=तुभ्यं हितम्=इष्टं वक्ष्यामि=कथयिष्यामि तत्त्वं अवहितः=सावधानः सन् शृणुष्व=आकर्णय, त्वया शरणागतः=गृहागतः अतिथिः प्राणैरपि=असुभिरपि प्राणव्ययेनापीत्यर्थः, (किमु वक्तव्यमन्यैर्धनादिभिरिति) नित्यं=सदैव संरक्ष्यः=परिपाल्यः। आश्रितसंरक्षणमवश्यमेव विधेयमिति भावः ॥ १५० ॥

"एष" इति—एष शकुनीन् पक्षिणो हन्तीति शाकुनिकः=व्याधः तव आवासम्=गृहं समाश्रितः=प्राप्तः, कथम्भूतः—शीतार्त्तः=शीतेन पीडितः, तथा क्षुधार्त्तश्च=क्षुधया बुभुक्षया आर्तो दुःखितः। अस्मै—एतादृशाय अर्थिने पूजाम्=अन्नादिदानेन सत्कारं समाचर=कुरु ॥ १५१ ॥

"यः" इति—यः=यो जनः सायम्=प्रदोषकाले प्राप्तम्=गृहमायातम्

मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया ।
स्वकृतैरेव बद्धाहं प्राक्तनैः कर्मबन्धनैः ॥ १५३ ॥
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च ।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १५४ ॥
तस्मात्त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम् ।
धर्मे मनः समाधाय पूजयैनं यथाविधि ॥ १५५ ॥
तस्यास्तद्वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम् ॥ १५६ ॥

---

अतिथिं=प्राघुणिकं यथाशक्ति न पूजयेत्=नार्चयेत् अन्नोदकाद्यर्पणेन तस्य सत्कारं न कुर्यादित्यर्थ , असौ=अतिथि तस्य=तस्मै गृहस्वामिने दुष्कृतम्=पापं दत्त्वा सुकृतम्=तस्यैव पुण्यञ्च अपकर्षति=आदाय यातीत्यर्थ ॥१५२॥

"मा चे" ति—किञ्च—अनेन=शाकुनिकेन मत्प्रिया=मम वल्लभा गृहस्वामिनी बद्धा=पञ्जरे निगडिता इति अस्मै त्व द्वेषं=वैरं मा कृथा =न विधेहि,यत·—अहं प्राक्तनैः=पूर्वजन्मभवै· कर्मबन्धनै =कर्मपाशै स्वकृतै = स्वयं सम्पादितैरेव बद्धा । स्वकृतं शुभमशुभं वा कर्मावश्यभोक्तव्यमिति मत्वा पण्डिता शोकं न कुर्वन्तीति भाव ॥ १५३ ॥

"दारिद्र्ये"ति—दारिद्र्यम्=धनाभाव , रोग =शारीरो व्याधि , दु खम्=मानसी व्यथा; एतानि तथा—बन्धनव्यसनानि=कारावासादीनि व्यसनानि अन्या अनेका विपत्तय· इत्यर्थ , एतानि सर्वाणि देहिनाम्=प्राणिनाम् आत्मापराधवृक्षस्य=आत्मापराध स्वकृतं पापकर्मैव वृक्षस्तरु तस्य फलानि=परिपाका· सन्ति । सर्वे· स्वकर्मफलान्येव भुज्यन्त इति भाव ॥ १५४ ॥

"तस्मादि" ति—तस्मात् हेतो मद्बन्धनसमुद्भवम्=मदीयबन्धनो· द्वेषं=वैरभावनाम् उत्सृज्य=त्यक्त्वा, मनश्च धर्मे=शास्त्रविहिते अतिथिजनस्य कर्मविशेषे समाधाय=स्थापयित्वा शास्त्रोक्ते कर्मणि श्रद्धा कृत्वेत्यर्थ , यथाविधि=शास्त्रविधिपूर्वक त्वमेनं=व्याधं पूजय=अभ्यर्चय । एवं कृते सति परलोकहितकृत्तव धर्मो भविष्यतीति भाव. ॥ १५५ ॥

"तस्या" इति—तत·=तदनन्तरम् तस्या =कपोतिकाया निज-

भद्र ! सुस्वागतं तेऽस्तु ब्रूहि किं करवाणि ते।
सन्तापश्च न कर्तव्यः स्वगृहे वर्तते भवान्॥ १५७॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमम्।
कपोत ! खलु शीतं मे हिमत्राणं विधीयताम्॥ १५८॥
स गत्वाङ्गारकं नीत्वा पातयामास पावकम्।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत्॥ १५९॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम्।
सन्तापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः।
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम्॥ १६०॥

---

धर्मपत्न्याः धर्मयुक्तिसमन्वितम्=धर्मयुक्तिभ्यां सहितं तव्=उक्तं वचनम्=वाक्यं श्रुत्वा=समाकर्ण्य लुब्धकम्=शाकुनिकम् उपगम्य=उपसृत्य अधृष्ट= सदाचारपरायण सन् कपोत. प्राह=ब्रूते स्म॥ १५६॥

"भद्र" इति—हे भद्र! ते=तव सुस्वागतमस्तु=शोभनमागमनं भवतु, ब्रूहि=कथय, ते=तव किं करवाणि=साधयानि। त्वया सन्तापश्च=मनसः पीडा च न कर्तव्य. यतो भवान् स्वगृहे=निजनिकेतन एव वर्त्तते।

अत्रारण्येऽप्यात्मानं नि सहायं मा मन्येथा इति भाव॥१५७॥

"तस्ये"ति—तस्य=कपोतस्य तद्वचनं श्रुत्वा विहङ्गमम्=पक्षिणं तं कपोतं व्याध प्रत्युवाच=उत्तरं ददौ। हे ! कपोत ! खलु=निश्चयेन मे=मम शीतम्=शीतपीडा वर्त्तत इति शेष, (अतो हेतो) हिमत्राणम्=हिमात् शीताद् परित्राणं रक्षा विधीयताम्=भवता क्रियतामित्यर्थ॥ १५८॥

"स" इति—स=कपोत गत्वा=क्वचित् प्रदेशान्तरे यात्वा अङ्गारकम्=ज्वलत्खण्डं नीत्वा=कुतश्चित् प्रदेशादादाय पातयामास=स्थापयामास, तत शुष्केषु=अनार्द्रेषु पर्णेषु=पत्रेषु तं पावकम्=आनीतं वह्निं आशु=शीघ्रं समदीपयत्=समज्वालयदित्यर्थ। "अङ्गारक कुजेऽपि स्यादङ्गधकट्टे कुरण्टके' इति मेदिनी॥ १५९॥

"सुसन्दीप्तम्" इति—तत सुसन्दीप्तम्=सम्यक् ज्वलितं वह्नि कृत्वा=विधाय त शरणागतम्=गृहागतं तमतिथिभूतं व्याधम् आह=कथया-

सहस्रं भरते कश्चिच्छतमन्यो दशापरः ।
मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥ १६१ ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ॥ १६२ ॥
तत्तथा साधयाम्येतच्छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥ १६३ ॥

---

मास । किं तदाहेति दर्शयति उत्तरार्धेन—( हे ! अतिथे ! ) अत्र वहां विश्रब्धम्=निश्चिन्तं गाढं यथा तथा स्वगात्राणि=हस्तपादादीन् स्वावयवान् त्वं सन्तापयस्व=उष्णीकुरुष्व, किञ्च—( मत्समीपे ) कश्चित्=कश्चिदपि विभवः=अन्नादिरूपा सम्पदा नास्ति, येन=विभवेन ते=तव क्षुधम्=बुभुक्षा नाशये=अहं निवारये । "विश्रब्धोऽनुद्धटेऽपि स्याद् गाढविश्वस्तयोस्त्रिषु" इति मेदिनी । गाथा ॥ १६० ॥

विभवाभावे हेतुं दर्शयति—"**सहस्र**" मिति—कश्चित्=कोऽपि जन सहस्रं=सहस्रसङ्ख्याकान् प्राणिनो भरते=पालयते, अन्य शतम्, अपरस्तु दशैव, "भरते" इति सर्वत्रान्वेति । अकृतपुण्यस्य=न कृतमनुष्ठितं पुण्य सुकृतं दानयागादि येन तादृशस्याऽधार्मिकस्य अतएव क्षुद्रस्य=नीचस्य आत्मा अपि=स्वदेहादिरपि दुर्भर =पोषयितुमशक्य ।

कृतपुण्या एव धनिनो भूत्वा परेषा स्वेषाञ्च भरणपोषणादिक कर्तुं समर्था नत्वकृतपुण्या , विभवप्राप्तिस्तु सुकृतस्यैव फलमिति भाव ॥१६१॥

सम्प्रति धर्मेच्छोर्निर्धनस्य पश्चात्तापमवतारयति—"**एकस्ये**"ति—य =य कश्चित् जनो गृहस्थ एकस्यापि अतिथे =प्राघुणिकस्य अन्नम्=भक्ष्यं प्रदातुम्=अर्पयितुं शक्तिमान्=समर्थ न=नास्ति, तस्य=तादृशस्य दरिद्रस्य अनेकपरिक्लेशे=अनेके परिक्लेशा विपद्व्राता यत्र तादृशे गृहे=गृहस्थाश्रमे मठादौ वा वसत =निवासं कुर्वत किम्फलम्=न किंचिदपीत्यर्थ । गृहस्थधर्मेष्वतिथिपूजनं महान् धर्म., तत्र चेदशक्तस्तर्हि तस्य गृहेऽवस्थानं वृथैवेति भाव ॥ १६२ ॥

"**तदि**"ति—तत्=तस्मात् कारणात् दु खजीवितम्=दु खमय्या-

स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ १६४ ॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं सम्परिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १६५ ॥
ततस्तं लुब्धको दृष्ट्वा कृपया पीडितो भृशम् ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १६६ ॥
यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १६७ ॥

---

न्निकादिभेदैरनेकविधकष्टोपेतं जीवितं जीवनं यत्र तत् क्लेशबहुलमित्यर्थः, एतादृशमेतत् शरीरं तथा=तादृशविधया साधयामि=सम्पादयामि यथा—अर्थिसमागमे=अर्थिनां याचकानां समागमे उपस्थाने नास्तीति=मम पार्श्वेऽन्नादिकं न वर्तते इति भूयः=पुनः ( कदापि ) न वक्ष्यामि=नैव कथयिष्यामि । निष्फलं देहमेव लप्स्यामीति भावः ॥ १६३ ॥

"स" इति—सः=कपोतः किलेति निश्चये आत्मानं निनिन्द=जगर्हे, पुनस्तु लुब्धकं=व्याधन्तु न=न निनिन्द । हे ! व्याध ! त्वामहं तर्पयिष्ये=स्वशरीरमांसादिप्रदानेन निवृत्तक्षुधं करिष्ये ( इति च ) उवाच=ऊचे जगादेत्यर्थः, त्वं मुहूर्तं=किञ्चित्कालं प्रतिपालय=प्रतीक्षस्व ॥ १६४ ॥

"एव"मिति—स धर्मात्मा=धार्मिकः कपोतः एवमुक्त्वा=उक्तरीत्याऽभिधाय प्रहृष्टेन=प्रसन्नेन अन्तरात्मना=हृदयेन तमग्निम्=व्याधशीतापनयनाय पूर्वप्रज्वालितं वह्निं सम्परिक्रम्य=प्रदक्षिणीकृत्य स्ववेश्मवत्=स्वगृहवत् प्रविवेश=तत्रात्मानं पातयामासेत्यर्थः । स्वगृहवदित्युक्तेस्तस्य देहत्यागेऽभिनिवेशो ( भयं ) नाभूदिति सूचितम् ॥ १६५ ॥

"ततः" इति—ततः=तस्याग्निप्रवेशानन्तरं तम्=अग्नौ पतितं कपोतं दृष्ट्वा=विलोक्य कृपया=दयया भृशम्=अत्यन्तं पीडितः=दुःखितः अग्नौ पतितं कपोतम् एतत्=वक्ष्यमाणं वाक्यं=वचः अभाषत=अवदत् ॥ १६६ ॥

"य" इति—यो नरो मनुष्यः पापं करोति=पापमाचरति तस्य आत्मा स्वात्मा प्रियो न=इष्टं नास्तीति ध्रुवम्=निश्चितम् । हि=यतः

सोऽहं पापमतिश्चैव पापकर्मरतः सदा ।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १६८ ॥
नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।
प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १६९ ॥
अद्यप्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मे शोषयिष्याम्यहं पुनः ॥१७०॥
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमम् ॥ १७१ ॥

---

आत्मना=स्वेन कृतं पापम्=परहिंसादि आत्मना एव स्वैनैव भुज्यते=अनुभूयते ॥ १६७ ॥

"सोऽह"मिति—सोऽहमेतादृश पापमति =पापे पापकर्मणि प्राणिहिंसनादौ मतिः बुद्धि प्रीतिर्यस्य स तथा—सदा पापकर्मरत =पापकर्मानुष्ठाता महाघोरे=महाभयङ्करे रौरवादौ नरके=निरये पतिष्यामि=प्रवेक्ष्यामि । अत्र=अस्मिन्नर्थे संशयो नास्तीत्यर्थः ॥ १६८ ॥

"नून" मिति—नूनं=निश्चितमिदं यत्—स्वमासानि प्रयच्छता=अर्पयता महात्मना=धर्मबुद्धिना कपोतेन नृशंसस्य=घातुकस्य मम ( कृते ) प्रत्यादर्शः=दृष्टान्त सुदर्शितः=प्रकाशितो यदेवंरूपा महात्मानोऽन्येषा हितैषिणो भवन्तीति ॥ १६९ ॥

"अद्ये"ति—अद्यप्रभृति=अद्यदिनादारभ्य पुनरह सर्वभोगविवर्जितम्=सर्वैर्भोगै रस्यैराहारादिभि· शून्यं देहम्=शरीरं विधाय ग्रीष्म =निदाघकालः स्वल्पं तोयं=पानीयं यथा शोषयति तद्वदहमपि (देहम्) शोषयिष्यामि=तनूकरिष्यामि । ... तं चरिष्यामीति भाव ॥ १७० ॥

... उक्तमर्थं स्वाभिप्रायाविष्करणेन स्फुटीकरोति—"शीते"ति—अह ... =शीतोष्णादिद्वन्द्वसहिष्णुः, कृशाङ्गः=शुष्काङ्ग, तथा ...—शरीरसंस्कारशून्यः सन् बहुविधैः=नानाप्रकारै उपवासैः= ...तः उत्तमं धर्मम्=अहिंसारूपं चरिष्ये=विधास्ये । "चरिष्ये" इत्यात्म- ... ॥ १७१ ॥

ततो यष्टिं शलाकां च जालकं पञ्जरं तथा।
बभञ्ज लुब्धको दीनां कपोती च मुमोच ताम् ॥१७२॥
लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिम्।
कपोती विललापार्ता शोकसन्तप्तमानसा ॥ १७३ ॥
न कार्यमद्य मे नाथ! जीवितेन त्वया विना।
दीनायाः पतिहीनायाः किं नार्या जीविते फलम् ॥१७४॥
मनोदर्पस्त्वहङ्कारः कुलपूजा च बन्धुषु।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १७५॥
एवं विलप्य बहुशः कृपणं भृशदुःखिता।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १७६ ॥

---

"तत" इति—ततः=अनन्तरं स लुब्धकः=आखेटकी यष्टिम्=लगुडम्, शलाकाम्=जालसूचिकाम्, जालकम्=पाशम्, तथा पञ्जरञ्च बभञ्ज=त्रोटयामास, ताञ्च दीनाम्=भर्तृशोकेन कातरां कपोतीं मुमोच= जहौ ॥१७२॥

"लुब्धकेन"ति—तत =तदनन्तरं लुब्धकेन=व्याधेन मुक्ता=छिन्नपाशा कपोती पतिम्=स्वकपोतम् अग्नौ=वह्नौ पतितं दृष्ट्वा आर्त्ता=दीना शोकसन्तप्तमानसा=शोकेन शुचा सन्तप्तं ज्वलितं मानसं हृदयं यस्याः सा तादृशी सती, विललाप=रुरोद चक्रन्देति वा ॥ १७३ ॥

"न" इति—हे! नाथ! अद्य त्वया विना मे=मम जीवितेन=प्राणनेन न कार्यं=प्रयोजनं नास्ति, तथाहि—दीनायाः=अनाथायाः पतिहीनायाः= पत्युर्वियुक्ताया विधवाया इत्यर्थः, नार्याः=स्त्रियाः जीविते=प्राणरक्षणे किं फलम्=किम्प्रयोजनम्? न किमपीत्यर्थः ॥ १७४ ॥

"मनोदर्प" इति—वैधव्येन=स्त्रियाः पतिमरणेन मनोदर्पः=मनसोऽभिमानोऽर्थात् मानसं तेजोबलम्, अहङ्कार=धनादिसम्पत्तिहेतुको दर्पः, कुलपूजा=कुले पितृकुले भर्तृकुले वा पूजा आदरः, तथा बन्धुषु=ज्ञातिषु दासभृत्यजनेषु च=दासेषु सेवकेषु भृत्यजनेषु अन्येषु भरणीयेषु जनेषु आज्ञा= तत्तदधिकारपुरःसरं कार्ये नियोगः प्रणश्यति=भर्तुर्विनाशेन सहैव विनाशमुपैति। स्त्रीणामिति शेषः ॥ १७५ ॥

"एवम्" इति—एवमुक्तप्रकारेण कृपणम्=दीनं बहुशः=भूयो भूयो

ततो दिव्याम्बरधरा दिव्याभरणभूषिता।
भर्तारं सा विमानस्थं ददर्श स्वं कपोतिका॥ १७७॥
सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत्।
अहो! मामनुगच्छन्त्या कृतं साधु शुभे! त्वया॥१७८॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति॥ १७८॥
कपोतदेहः सूर्यास्ते प्रत्यहं सुखमन्वभूत्।
कपोतदेहवत्सासीत्प्राक्पुण्यप्रभवं हि तत्॥ १८०॥

---

विलप्य=क्रन्दित्वा भृशदु:खिता=अतिकष्टङ्गता पतिव्रता=पतिधर्मपरायणा सा=कपोती सुसन्दीप्तम्=जाज्वल्यमानं तमेवाग्निम्=भर्त्तुरेव चितानलं विवेश=प्रविष्टा बभूव॥ १७६॥

इदानीं सतीना पतिमनु शरीरत्यागफलं प्रदर्शयति-"तत्"इति-तत=अनले स्वशरीरप्रवेशोत्तरं सा=कपोतिका दिव्याम्बरधरा=दिव्यवस्त्रधारणवती तथा दिव्या०=दिव्यैरलौकिकै स्वर्गीयैरतिहृद्यैराभरणैर्भूषणैर्भूषिता मण्डिता सती विमानस्थम्=व्योमयानवर्त्तिनं स्वम्=स्वकीयं भर्त्तारम्=स्वामिनं ददर्श=लुलोके१७७

"सोऽपी"ति—स. अपि=स्वशरीरमासप्रदानेन परिपालितातिथ्यकर्मा कपोतोऽपि दिव्यतनुः=दिव्यशरीर भूत्वा=देवो भूत्वेत्यर्थ', इदं=वक्ष्यमाणं यथार्थम्=तथ्यं वच अब्रवीत्=अवादीत् अहो! आश्चर्यम्, हे! शुभे!=पातिव्रत्यधर्मपरिपालनपरे! मामनुगच्छन्त्या=मामनुसरन्त्या अनले स्वशरीरं प्रक्षिपन्त्या त्वया साधु कृतम्=पुण्य कर्माऽनुष्ठितम्। स्त्रीणामयमेव मुख्यो धर्मः शास्त्रप्रतिपादितो भर्त्युरनुसरण नामेति भाव॥ १७८॥

"तिस्र"इति—या=नारी भर्त्तारम्=पतिम् अनुगच्छति=पतिशरीर-·त्तरं सती भूत्वा तच्चिताग्नौ स्वकं शरीरं जुहोति, सा—तिस्र कोट्यः ·टि च=सार्धकोटिसङ्ख्यानि मानुषे=मनुष्यशरीरे यानि रोमाणि=·नि सन्ति तावत्कालम्=तावत्कालपर्यन्तं स्वर्गे=नाकलोके वसेत्=देवी-। निवसतीत्यर्थ'॥ १७६॥

"कपोतदेह"इति—कपोतदेह=आतिथ्यधर्मस्य फलरूपेण य इदानीं

हर्षाविष्टस्ततो व्याधो विवेश च वनं घनम् ।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान्भृशम् ॥ १८१ ॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः ।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥ १८२ ॥
अतोऽहं ब्रवीमि—"श्रूयते हि कपोतेन" इति ॥

तच्छ्रुत्वारिमर्दनो दीप्ताक्षं पृष्टवान्—एवमवस्थिते किं भवान् मन्यते । सोऽब्रवीत्—देव ! न हन्तव्य एवायम् । यतः—

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक ! भद्रं ते यन्ममास्ति हरस्व तत् ॥ १८३ ॥

---

स्वर्गीयो देहः संवृत्तः स सूर्यास्ते=सूर्यस्यास्तमनकाले सायं सन्ध्यायामपि रात्रावपीत्यर्थ ( देवभावे प्राप्ते सति रात्रौ दिने च समान एव सुखलाभो भवतीति भाव ) प्रत्यहम्=प्रतिदिनं सुखम्=आनन्दम् अन्वभूत्=बुभुजे । सा=कपोती अपि कपोतदेहवत् आसीत्=कपोतसुखसदृशसुखभोगवती अभूत्, हि=यत तत्=तयोर्द्वयोर्दिव्यशरीरधारणं ( स्वर्गीयसुखहेतु ) प्राक्पुण्यप्रभवम्=प्राचि पूर्वजन्मनि कृतं यत् पुण्यमातिथिसेवारूपो धर्म तत्प्रभवं फलरूपं वर्तत इति शेष । सर्वेषा सुखदु खे कर्मवैचित्र्यादेव भवत इति पर सारः ॥ १८० ॥

"हर्षाविष्ट" इति—तत =तयोर्दिव्यशरीरप्राप्त्यनन्तरम् हर्षाविष्ट.= कपोतयोर्धर्मनिर्देशेन प्रसन्नचित्त , बहुनिर्वेदवान्=परमवैराग्ययुक्तः सन् व्याध.= लुब्धक प्राणिहिंसाम्=जीवहत्या परित्यज्य=सर्वथैव विहाय घनम्=निविडं गह्वरमिति यावत् वनम्=अरण्य विवेश=पापनिवृत्तिहेतुभूतं तपश्चरितुं ययावित्यर्थ ॥ १८१ ॥

"तत्र" इति—विरताशय =निवृत्तविषयवासन स व्याध दावानलम्= वनाग्निं दृष्ट्वा=विलोक्य (तत्राग्नौ) विवेश=स्वदेहं जहावित्यर्थ , निर्दग्धकल्मष = निरत्यन्तं दग्ध भस्मीभूतं कल्मष पापं यस्य स तादृश भूत्वा स्वर्गसौख्यम्=नाकलोकभवमानन्दम् अवाप्तवान्=भेजे । सोऽपि स्वर्गे दिव्यशरीरमवापेत्यर्थ. १८२

"या" इति—या मम=या मदीया स्त्री नित्यम्=प्रत्यहम् उद्विजते=

चौरेण चाप्युक्तम्—

हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ १८४ ॥

अरिमर्दनः पृष्टवान्—का च नावगूहते, कश्चायं चौर इति विस्तरतः श्रोतुमिच्छामि । दीप्ताक्षः कथयति—

कथा ८ ।

अस्ति कस्मिंश्चिदधिष्ठाने कामातुरो नाम वृद्धवणिक् । तेन च (१) कामोपहतचेतसा मृतभार्येण काचिन्निर्धनवणिक्सुता प्रभूतं धनं दत्त्वोद्वाहिता । अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक । युक्तं चैतत् ।

श्वेतं पदं शिरसि यत्तु शिरोरुहाणां
स्थानं परं परिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १८५ ॥

---

मामालोक्य उद्वेगं (भयं) करोति, अद्य सा माम् अवगूहते=आलिङ्गति। हे ! प्रियकारक ! ते=तव भद्रम्=कल्याणम् अस्त्विति शेषः, यत् मम अस्ति=धनादिकं तत् हरस्व=चोरय मम सर्वस्वं गृहाणेत्यर्थः ॥ १८३ ॥

"हर्त्तव्यम्" इति—ते=तव हर्त्तव्यम्=हरणीयं धनादिकं न पश्यामि, चेत्=यदि भविष्यति हर्त्तव्यम्, यदि वा इयं तव नारी त्वा न अवगूहते= नालिङ्गति च तदा पुनरपि=भूयोऽप्यागमिष्यामि ॥ १८४ ॥

(१) कामेति—कामेन मन्मथेन उपहतं नष्टमाक्रान्तं चेतो यस्य स तेन ।

"श्वेतम्" इति—शिरसि=उत्तमाङ्गे यत् शिरोरुहाणाम्=शिरोवाश्वेतं=सितं पदं=चिह्नम् शिरसि धवलिमेत्यर्थः, तदेव पुंसाम्=पुरुषाणां परिभवस्य=तरुणनारीवैमुख्यरूपस्यानादरस्य परं स्थानम्=मुख्यो हेतुरस्तीत्यर्थः । तरुण्यः=नवयौवना नार्यः चाण्डालकूपमिव=चाण्डालजलाशयविशेषमिव आरोपितास्थिशकलम्=आरोपितानि सञ्जातानि अस्थ्ना कीकसाना शकलानि खण्डानि यस्य तादृशमस्थिमात्रावशेषं वृद्धं

तथा च—

गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गता
दृष्टिर्भ्राम्यति रूपमप्युपहतं वक्त्रं च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
धिक्कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते॥ १८६॥

अथ कदाचित्सा तेन सहैकशयने (१) पराङ्मुखी यावत्तिष्ठति तावद्गृहे चौरः प्रविष्टः। सापि तं चौरं दृष्ट्वा भयव्याकुलिता

---

पतिं परिहृत्य=परितस्त्यक्त्वा दूरतरम्=अतिदूरं प्रयान्ति=गच्छन्ति। वृद्धेन पत्या सह भोगं नेच्छन्ति। यथा चण्डालकूपस्य जलं पेयं न भवति तद्वद् वृद्धो भर्त्ता युवतीना भोग्यो न भवतीति भाव॥ १८५॥

"गात्रम्" इति—गात्रम्=अङ्गं सङ्कुचितम्=शिथिलताकारणात् सङ्कोचं प्राप्तं लुलितचर्म जातमित्यर्थ, गति=पदयोर्विन्यास· पदक्रम· विगलिता=स्खलिता, दन्ताश्च=दन्ता अपि नाशं गता=पतिता, दृष्टि=चक्षु· भ्राम्यति=अयथातथा पश्यति, रूपम्, अपि=उपहतम्=विकृतिङ्गतं कुरूपता जातेत्यर्थः, वक्त्र च=मुखञ्च लालायते=लालामुद्वहते, बान्धवजन·=पुत्रादिर्बन्धुलोक वाक्य नैव करोति=आज्ञा न मन्यते, पत्नी=कान्ता या तारुण्येऽत्यन्तं प्रेमाकरोत् सा नारी न शुश्रूषते=सेवा न करोति, धिक् कष्टम्=महद् दुःखमित्यर्थ, यद् जरया=वार्धक्येन अभिभूतम्=तिरस्कृतमाक्रान्तामिति यावत्, पुरुषं पुत्रोऽपि=आत्मजोऽपि (यः पूर्व बहुपालितो लालितश्चासीत्) सोऽपि अवज्ञायते=अवज्ञा करोति। जरावस्थाऽतिमात्रं कष्टप्रदेति भावः।

"लालायते" इति—लालाशब्दात् क्यङि लटि च रूपम्। ननु—"बाष्पोष्मभ्यामुद्वमने" (३।१।१६।) इत्यत्र "लाला" शब्दस्तु न पठित, कथमुद्वमने क्यङ् स्यात्? बाढम्—"लालायते फणी" इति महाभाष्यकारप्रयोगदर्शनाद् "यथोत्तरं मुनीना प्रामाण्यम्" इत्युक्तेरुक्तेऽर्थे स्यादेव क्यङ्। शार्दूलविक्रीडितम्॥ १८६॥

(१) पराङ्मुखी=व्यावृत्तवदना। "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" (४।१।५४) इति सूत्रेण वैकल्पिको ङीप्। "पराङ्मुखा" इत्यपि भवति, यथा—"चन्द्रमुखी, चन्द्रमुखा" इति।

वृद्धमपि तं पतिं गाढं समालिलिङ्ग । सोऽपि विस्मयात्पुलकाङ्कितसर्वगात्रश्चिन्तयामास—अहो ! किमेषा मामद्यावगूहते । यावन्निपुणतया पश्यति, तावद्गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्—नूनमेषास्य भयान्मामालिङ्गति इति ज्ञात्वा तं चौरमाह—

या ममोद्विजते नित्यं सा मामद्यावगूहते ।
प्रियकारक ! भद्रं ते यन्ममास्ति हरस्व तत् ॥१८७॥

तच्छ्रुत्वा चौरोऽप्याह—

हर्तव्यं ते न पश्यामि हर्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ १८८ ॥

(१) तस्माच्चौरस्याप्युपकारिणः श्रेयश्चिन्त्यते, किं पुनर्न शरणागतस्य । अपि चायं तै (२) र्विप्रकृतोऽस्माकमेव (३) पुष्ट्यै भविष्यति (४) तदीयरन्ध्रदर्शनाय चेति । अनेककारणेनायम वध्यः इति ।

एतदाकर्ण्यारिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ—भद्र ! साम्प्रतमेवंस्थिते किं कर्तव्यम् । सोऽब्रवीत्—देव ! अवध्योऽयम् । यतः—

शत्रवोऽपि हितायैव विवदन्तः परस्परम् ।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम् ॥१८९॥

अरिमर्दनः प्राह—कथमेतत् । वक्रनासः कथयति—

---

"या ममे"ति—व्याख्यातमधस्तात् ॥१८७॥

"हर्त्तव्यम्' इति—व्याख्यातमधस्तात् ॥ १८८ ॥

(१) चौरस्य=पापकर्मणोऽपि । उपकारिण =उपकारकर्त्तु । श्रेय =कल्याणम् । (२) विप्रकृत =अपमानित. । (३) पुष्ट्यै=राज्यैश्वर्यलाभाय । (४) तदीयेति—तदीयानां वायससम्बन्धिनां रन्ध्राणां छिद्राणां राज्याङ्गीयदोषाणाम् दर्शनाय ।

"शत्रव" इति—परस्परम्=अन्योन्यं विवदन्त.=मिथ्योक्तिरूपं विवादं

## कथा ६ ।

अस्ति कस्मिंश्चिदधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः (१) प्रतिग्रहधनः सततं (२) विशिष्टवस्त्रानुलेपनगन्धमाल्यालङ्कार-ताम्बूलादिभोगपरिवर्जितः प्ररूढकेशश्मश्रुनखरोमोपचितः शीतोष्णवातवर्षादिभिः (३) परिशोषितशरीरः। तस्य च केनापि यजमानेना (४) ऽनुकम्पया शिशुगोयुगं दत्तम्। ब्राह्मणेन च बालभावादारभ्य (५) याचितघृततैलयवसादिभिः संवर्ध्य सुपुष्टं कृतम्। तच्च दृष्ट्वा सहसैव कश्चिच्चौरश्चिन्तितवान्— अहमस्य ब्राह्मणस्य गोयुगमिदमपहरिष्यामि इति निश्चित्य निशायां बन्धनपाशं गृहीत्वा यावत्प्रस्थितः तावदर्धमार्गे (६) प्रविरलतीक्ष्णदन्तपङ्क्तिरुन्नतनासावंशः प्रकटरक्तान्तनयनः अपचितस्नायुसन्ततिर्नतगात्रः शुष्ककपोलः सुहुतहुतवहपि-

---

कुर्वन्त शत्रव =द्विषन्तोऽपि हितायेष्टायैव भवन्ति, तथाहि—चौरेण जीवितं=प्राणन दत्तम्, राक्षसेन तु गोयुगम्=गोद्वन्द्वं दत्तमित्यनुपङ्ग ॥१८६॥

(१) प्रतिग्रहधन =प्रतिग्रहो दानग्रहणमेव धनं जीविका यस्य सः दानमात्रोपजीवी। (२) विशिष्टेति—विशिष्टैरत्युत्तमै वस्त्रादीना भोगे परिवर्जितो रहित । वस्त्रादीना द्वन्द्व । प्ररूढेति—प्ररूढै प्रकर्षेण वृद्धिं प्राप्तै. केशै शिरोवालै, श्मश्रुभि, नखै करजै, रोमभि लोमाभिश्चोपचित. । (३) परिशोषितशरीर =कृशतनुरित्यर्थ । (४) अनुकम्पया=कृपया । शिशुगोयुगम्=गोवत्सद्वन्द्वम् । (५) याचितेति—याचितै भिक्षितै· घृतै. आज्यै, तैलै सार्षपादिस्नेहै, यवसादिभि =घासादिभिश्च। संवर्ध्य=परिपाल्य । पुष्टम्=दृष्टाङ्गम् । (६) प्रविरलेति--प्रविरला बह्ववकाशा दूरे २ स्थिता दन्ताना पङ्क्ति· राजिर्यस्य स. । उन्नतनासावंश =उच्चघोणः । प्रकटेति--प्रकटे प्रस्फुटे रक्तान्ते=रक्तप्रान्तभागे नयने नेत्रे यस्य सः। अपचिता कार्श्यहेतोर्बहिर्निर्गता स्नायूना शिराणा सन्तति सन्तानो यस्य स·। नतगात्र·=न्युब्जावयव । शुष्ककपोल =शुष्कौ शीर्णौ कपोलौ गण्डौ यस्य स शीर्णगण्डस्थल इत्यर्थ । सुहुतेति—सुहुत सुष्ठुहुत दत्ताहुति· स चासौ हुतवहो वह्नि तद्वत् पिङ्गल कपिशवर्णं श्मश्रुकेशशरीरं यस्य स· तादृशः।

ङ्गलश्मश्रुकेशशरीरः कश्चिद् दृष्टः। दृष्ट्वा च तं तीव्रभयत्रस्तोऽपि चौरोऽब्रवीत्—को भवान् इति। स आह—सत्यवचनोऽहं ब्रह्मराक्षसः। भवानप्यात्मानं निवेदयतु। सोऽब्रवीत्-अहं क्रूरकर्मा चौरः। दरिद्रब्राह्मणस्य गोयुगं हर्तुं प्रस्थितोऽस्मि। अथ जातप्रत्ययो राक्षसोऽब्रवीत्—भद्र! (१) षष्ठाह्नकालिकोऽहम्। अतस्तमेव ब्राह्मणमद्य भक्षयिष्यामि। तत्सुन्दरमिदम्। (२) एककार्यौ्वावाम्। अथ तौ तत्र गत्वैकान्ते कालमन्वेषयन्तौ स्थितौ। प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्—भद्र! नैष (३) न्यायः, यतो गोयुगे मयापहृते पश्चात्त्वमेनं ब्राह्मणं भक्षय। सोऽब्रवीत्—कदाचिदयं ब्राह्मणो गोशब्देन (४) बुध्येत तदानर्थकोऽयं मम (५) आरम्भः स्यात्। चौरोऽप्यब्रवीत्—तवापि यदि भक्षणायोपस्थितस्यान्तर एकोऽप्यन्तरायः स्यात्, तदाहमपि न शक्नोमि गोयुगमपहर्तुम्। अतः प्रथमं मयापहृते गोयुगे पश्चात्त्वया ब्राह्मणो भक्षयितव्यः। इत्थं (६) चाहमहमिकया तयोर्विवदतोः समुत्पन्ने (७) द्वैधे प्रतिरववशाद् ब्राह्मणो जजागार। अथ तं चौरोऽब्रवीत्—ब्राह्मण! त्वामेवायं राक्षसो भक्षयितुमिच्छति इति। राक्षसोऽप्याह—ब्राह्मण! चौरोऽयं गोयुगं तेऽपहर्तुमिच्छति।

---

(१) षष्ठाह्नकालिक=अह्नः षष्ठो भागः इति षष्ठाह्नः, स एव कालः षष्ठाह्नकालः तस्मिन् भुङ्क्ते इति "षष्ठाह्नकालिकः" दिवसस्य षष्ठे प्रहरार्धे एव कृताहारनियम इत्यर्थः। अपराह्णकाल एव राक्षसानां भोजनवेलेति भावः। (२) एककार्यौ=एकं समानं ब्राह्मणगोहरण-ब्राह्मणप्राणहरणरूपं कार्यं ययोस्तौ। (३) न्यायः=नीतिक्रमः, उचितमित्यर्थः। (४) बुध्येत=त्यक्तनिद्रो भवेत्। (५) आरम्भः=उपक्रमः अत्रागमनरूपः। (६) अहमहमिकया=अहम्पूर्विकया। (७) द्वैधे=कलहे। प्रतिरववशात्=परस्परकलहजनितशब्दकारणात्। जजागार=निद्रां जहौ।

एवं श्रुत्वोत्थाय ब्राह्मणः (१) सावधानो भूत्वेष्टदेवतामन्त्रध्यानेनात्मानं राक्षसाद् (२) उद्गूर्णलगुडेन चौराद्गोयुगं च ररक्ष। अतोऽहं ब्रवीमि—"शत्रवोऽपि हितायैव" इति॥

अथ तस्य वचनमवधार्यारिमर्दनः पुनरपि प्राकारकर्णमपृच्छत्—कथय किमत्र मन्यते भवान्। सोऽब्रवीत्—देव! अवध्य एवायम्, यतो रक्षितेनानेन कदाचित्परस्परप्रीत्या कालः सुखेन गच्छति। उक्तं च—

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।
त एव निधनं यान्ति वल्मीकोदरसर्पवत्॥ १६०॥

अरिमर्दनोऽब्रवीत्—कथमेतत्। प्राकारकर्णः कथयति—

## कथा १०।

अस्ति कस्मिंश्चिन्नगरे देवशक्तिर्नाम राजा। तस्य च पुत्रो (३) जठरवल्मीकाश्रयेणोरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते। अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्यापि चिकित्स्यमानो न स्वास्थ्यमाप्नोति। अथासौ राजपुत्रो निर्वेदाद्देशान्तरं गतः। कस्मिंश्चिन्नगरे भिक्षाटनं कृत्वा महति देवालये कालं यापयति। अथ तत्र नगरे बलिर्नाम राजास्ते। तस्य च द्वे दुहितरौ (४) यौवनस्थे तिष्ठतः। ते च प्रतिदिवसमादित्योदये पितुः

---

(१) सावधान=गतित्यक्तालस्य। इष्टेति—इष्टदेवताया मन्त्रस्य ध्यानेन।
(२) उद्गूर्णलगुडेन=उत्थापितेन दण्डेन।

"परस्परस्ये" ति—ये जन्तवः=प्राणिनः परस्परस्य अन्योन्यस्य मर्माणि=रहस्यानि न रक्षन्ति, त एव वल्मीकोदरसर्पवत्=वल्मीकस्य नाकोरुदरे मध्ये स्थितौ यौ सर्पौ तद्वत् निधनम्=मृत्युं यान्ति=प्राप्नुवन्ति॥ १६०॥

(३) जठरेति—जठरमुदरमेव वल्मीकः वामलूरस्तदेव आश्रयो यस्य तेन, उदरस्थितेनेत्यर्थः। उरगेण=सर्पेण। प्रत्यङ्गम्=प्रत्यवयवम्। अनेकोपचारैः=नानाविधैः प्रतीकारैः। सद्वैद्यैः=सुभिषग्भिः। सच्छास्त्रेति—सच्छास्त्रेषु चरकसुश्रुतादिवैद्यकग्रन्थेषु उपादिष्टानि प्रदर्शितानि यानि औषधानि तेषां युक्त्या योगेन। (४) यौवनस्थे=युवत्यौ।

पादान्तिकमागत्य नमस्कारं चक्रतुः । तत्र चैकाब्रवीत्—विजयस्व महाराज ! यस्य प्रसादात्सर्वं सुखं लभ्यते । द्वितीया तु (१) विहितं भुङ्क्ष्व महाराज ! इति ब्रवीति । तच्छ्रुत्वा प्रकुपितो राजाब्रवीत्—भो ! मन्त्रिन् ! एनां (२) दुष्टभाषिणीं कुमारिकां कस्यचिद् (३) वैदेशिकस्य प्रयच्छ । येन निजविहितमियमेव भुङ्क्ते । अथ "तथा" इति प्रतिपद्याल्पपरिवारा सा कुमारिका मन्त्रिभिस्तस्य (४) देवकुलाश्रितराजपुत्रस्य प्रतिपादिता । सापि प्रहृष्टमनसा तं पतिं (५) देववत्प्रतिपद्यादाय चान्यविषयं गता । ततः कस्मिंश्चिद्दूरतरनगरप्रदेशे (६) तडागतटे राजपुत्रमावासरक्षायै निरूप्य स्वयं च घृततैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता । कृत्वा च क्रयविक्रयं यावदागच्छति तावत् स राजपुत्रो वल्मीकोपरि कृतमूर्धा प्रसुप्तः । तस्य च मुखाद्भुजगः फणां निष्क्रम्य वायुमश्नाति । तत्रैव च वल्मीकेऽपरः सर्पो निष्क्रम्य तथैवासीत् । अथ तयोः परस्परदर्शनेन (७) क्रोधसंरक्तलोचनयोर्मध्याद्वल्मीकस्थेन सर्पेणोक्तम्—भो ! भो ! दुरात्मन् ! कथं सुन्दरसर्वाङ्गं राजपुत्रमित्थं (८) कदर्थयसि मुखस्थोऽहिरब्रवीत्—भो ! भोः ! त्वयापि दुरात्मनास्य वल्मीकस्य मध्ये कथमिदं दूषितं (९) हाटकपूर्णं कलशयुगलम्—इत्येवं परस्परस्य (१०) मर्माण्युद्घाटितवन्तौ । पुनर्वल्मीकस्थोऽहिरब्रवीत्—भो ! दुरात्मन् !

---

(१) विहितं=स्वकर्मफलम् । (२) दुष्टभाषिणीम्=अप्रियवादिनीम् । (३) वैदेशिकस्य=विदेशे निवसत । प्रयच्छ=देहि । (४) देवेति—देवकुलं देवम- [illegible] तत्राश्रितोऽवस्थितो यो राजपुत्रस्तस्य । (५) देववत्=देवतुल्यम् । प्रति- [illegible] प्राप्य । अन्याविषयम्=देशान्तरम् । (६) तडागतटे=सरोवरतीरे । (७) [illegible]—क्रोधेन कोपेन संरक्ते बहुशोणिते नयने ययोस्तयोर्मध्यादेकेन वल्मीकस्थेनेत्यर्थः । (८) कदर्थयसि=पीडयसि । (९) हाटकपूर्णम्=सुवर्णभरितम् । कलशयुगलम्=कुम्भद्वयम् । (१०) मर्माणि=रहस्यानि । उद्घाटितवन्तौ=प्रकाशितवन्तौ ।

(१)भेषजमिदं ते किं कोऽपि न जानाति,(२)यज्जीर्णोत्कालितक्ञ्जिकाराजिकापानेन भवान्विनाशमुपयाति। अथोदरस्थोऽहिरब्रवीत्—तवाप्येतद्भेषजं किं कश्चिदपि न वेत्ति यदुष्णतैलेन वा महोष्णोदकेन तव विनाशः स्याद् इति। एवं च सा राजकन्या (३) विटपान्तरिता तयोः (४) परस्परालापान्मर्ममयानाकर्ण्य तथैवानुष्ठितवती। विधाय (५) अव्यङ्गं नीरोगं भर्तारं निधिं च परममासाद्य स्वदेशाभिमुखं प्रायात्। पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेनावस्थिता। अतोऽहं ब्रवीमि—"परस्परस्य मर्माणि" इति॥ तच्च श्रुत्वा स्वयमरिमर्दनोऽप्येवं (६) समर्थितवान्। तथा चानुष्ठितं दृष्ट्वान्तर्लीनं विहस्य रक्ताक्षः पुनरब्रवीत्—कष्टम्। विनाशितोऽयं भवद्भिरन्यायेन स्वामी। उक्तं च—

अपूज्या यत्र पूज्यन्ते पूज्यानां तु विमानना।
त्रीणि तत्र प्रवर्तन्ते दुर्भिक्षं मरणं भयम्॥ १६१॥

---

(१) भेषजम्=औषधम्। (२) जीर्णेति—जीर्णे पुरातने तथा उत्कालिते उत्फालिते आलोडिते इति यावत् ये काञ्जिकराजिके चुक्रसर्षपौ तयो पानेन। काञ्जिकञ्च राजिका चेति द्वयोर्द्वन्द्व.। (३) विटपान्तरिता=वृक्षशाखाया अन्तराले स्थिता। (४) परस्परालापान्=अन्योन्यवार्त्ता। मर्ममयान्=रहस्यभावविशिष्टान्। (५) अव्यङ्गम्=पूर्णाङ्गम्। नीरोगम्=उल्लाघं स्वस्थमित्यर्थ। निधिम्=वल्मीकस्याभ्यन्तरे स्थितं सुवर्णपूर्णकलशयुगलात्मकम्। प्रतिपूजिता=प्रत्यभिनन्दिता सत्कृतेत्यर्थ। (६) समर्थितवान्=शरणागतस्य शत्रो रक्षणमेव कार्यमिति पक्ष युक्तिभि समादधौ। अनुष्ठितम्=शरणागतकाकस्य रक्षणव्यापारम्। अन्तर्लीनम्=अन्तर्गूढम्।

"अपूज्या" इति—यत्र=देशे काले च अपूज्या=सत्कारानर्हा पूज्यन्ते सत्क्रियन्ते, पूज्यानाम्=पूजार्हाणाञ्च विमानना=तिरस्कारो भवतीति शेष। तत्र दुर्भिक्षम्=भिक्षाभाव शस्याद्यभावेनान्नाभाव इत्यर्थः, मरणम्=मृत्यु, भयम्=भीतिश्च महामार्यादिजनिता, एतत्त्रयम्, नराणा जायन्त इति शेष १६१॥

तथा च—

प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति ।
रथकारः स्वकां भार्यां सजारां शिरसावहत् ॥ १६२ ॥

मन्त्रिणः प्राहुः—कथमेतत् । रक्ताक्षः कथयति—

## कथा ११ ।

अस्ति कस्मिंश्चिदधिष्ठाने वीरधरो नाम रथकारः । तस्यास्ति भार्या कामदमिनी । सा च (१) पुंश्चली जनापवादसंयुक्ता । सोऽपि तस्याः परीक्षणार्थं व्यचिन्तयत्—अथ मयास्याः परीक्षणं कर्तव्यम् । उक्तं च यतः—

यदि स्यात्पावकः शीतः प्रोष्णो वा शशलाञ्छनः ।
स्त्रीणां तदा सतीत्वं स्याद्यदि स्याद् दुर्जनो हितः ॥ १६३ ॥

जानामि चैनां लोकवचनादसतीम् । उक्तं च—

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम् ।
तत्सर्वं वेत्ति लोकोऽयं यत्स्याद् ब्रह्माण्डमध्यगम् ॥ १६४ ॥

---

"प्रत्यक्षेऽपी" ति—प्रत्यक्षेऽपि पापे=अनिष्टे कृते सति मूर्ख=मूढ साम्ना=सान्त्वनेनैव प्रशाम्यति=शान्तो भवति शत्रुपातनयोग्यं कोपं परिहरतीत्यर्थ. । तथाहि—रथकार=कश्चन सूत्रधर स्वकाम्=निजा सजाराम्=जारसहिता भार्या=स्त्रिय शिरसा=उत्तमाङ्गेन अवहत्=धारयामास ॥१६२॥

(१) पुंश्चली=व्यभिचारिणी । जनापवादसंयुक्ता=लोके क्रियमाणाया निन्दाया पात्रम् ।

"यदि" इति—यदि पावक=वह्नि शीत=शिशिर', शशलाञ्छन चन्द्रो वा प्रोष्ण=प्रकर्षेण उष्ण, यदि वा दुर्जन=दुष्टो मनुष्य हित=हित- स्यात् तदा स्त्रीणाम्=नारीणा सतीत्वम्=पतिव्रतत्व स्यात् । यथा पावकादीना शैत्यादिकमसम्भवि तथा नारीणा सतीत्वमपीति । इदन्तु प्रायिकमेव वहुधा सावित्र्यादीना सतीत्वोपलब्धे' ॥ १६३ ॥

"यच्चे" ति—वेदेषु=ऋगादिषु, शास्त्रेषु=स्मृतिपुराणेतिहासादिग्रन्थेषु च यत् न दृष्टं न च संश्रुतं ब्रह्माण्डमध्यगम्=ब्रह्माण्डमध्यवर्त्ति यत् स्यात्

एवं सम्प्रधार्य भार्यामवोचत्—प्रिये ! प्रभातेऽहं ग्रामान्तरं यास्यामि । तत्र कतिचिद्दिनानि लगिष्यन्ति । तत्त्वया किमपि (१) पाथेयं मम योग्यं विधेयम् । सापि तद्वचनं श्रुत्वा (२) हर्षितचित्तौत्सुक्यात्सर्वकार्याणि सन्त्यज्य सिद्धमन्नं (३) घृतशर्कराप्रायमकरोत् । अथवा साध्विदमुच्यते—

दुर्दिवसे घनतिमिरे वर्षति जलदे महाटवीप्रभृतौ ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ १६५ ॥

अथासौ (४) प्रत्यूष उत्थाय स्वगृहान्निर्गतः । सापि तं प्रस्थितं विज्ञाय प्रहसितवदना(५)अङ्गसंस्कारं कुर्वाणा कथंचित्तं दिवस(६) मत्यवाहयत् । अथ पूर्वपरिचितविटगृहे गत्वा तं प्रयुक्तवती—स दुरात्मा मे पतिर्ग्रामान्तरं गतः । तत्त्वयास्मद्गृहे प्रसुप्ते जने समागन्तव्यम् । (७) तथानुष्ठिते स रथकारोऽरण्ये दिनमतिवाह्य प्रदोषे स्वगृहेऽपरद्वारेण प्रविश्य शय्याधस्तले

---

अयं लोक=सासारिको जन तत्सर्वं वेत्ति=जानाति । संसारे कस्यचिदपि चरित्रं गुप्तं स्थातुं नार्हति अतो लोका यत्कथयन्ति तन्मयाप्यवश्यं परीक्षणीयमिति भाव ॥ १६४ ॥

(१) पाथेयम्=पथि हितं भक्ष्यादिकम् । (२) हर्षिता=हर्षोऽस्या अस्तीति तारकादित्वादितच् । प्रसन्नेत्यर्थ । औत्सुक्यात्=उत्कण्ठावशात् । एतस्मिन् गते जारेण स्वमनोरथमप्रतिबन्धं पूरयिष्ये इत्यतोऽस्याः उत्कण्ठा । (३) घृतेति – घृतशर्कराबहुलम् ।

"दुर्दिवसे" इति—अयं श्लोक मित्रभेदे प्राक् पृ० ६७ व्याख्यातो द्रष्टव्य ॥ १६५ ॥

(४) प्रत्यूषे=प्रभाते । (५) अङ्गसंस्कारम्=उद्वर्त्तनदन्तधावनकङ्कतिकापादिकादिकम् । (६) अत्यवाहयत्=अगमयत् । (७) तथानुष्ठिते=जारेण सह सङ्केते कृते सतीत्यर्थ । व्यभिचारिण्येति शेष । अतिवाह्य=गमयित्वा । अपरद्वारेण=पश्चद्वारेण, "खिड्की"ति प्रसिद्धेन ।

(१) निभृतो भूत्वा स्थितः। एतस्मिन्नन्तरे स देवदत्तः समागत्य तत्र (२) शरणे उपविष्टः। तं दृष्ट्वा (३) रोषाविष्टचित्तो रथकारो व्यचिन्तयत्—किमेनमुत्थाय हन्मि अथवा (४) हेलयैव प्रसुप्तौ द्वावप्येतौ व्यापादयामि। परं पश्यामि तावदस्याश्चेष्टितम्। शृणोमि चानेन सहालापान्। अत्रान्तरे सा गृहद्वारं निभृतं पिधाय शयनतलमारूढा। अथ तस्यास्तत्रारोहन्त्या रथकारशरीरे पादो विलग्नः। ततः सा व्यचिन्तयत्—नूनमेतेन दुरात्मना रथकारेण मत्परीक्षणार्थं भाव्यम्। ततः (५) स्त्रीचरित्रविज्ञानं किमपि करोमि। एवं तस्याश्चिन्तयन्त्याः स देवदत्तः (६) स्पर्शोत्सुको बभूव। अथ तया कृताञ्जलिपुटयाभिहितम्—भो! महानुभाव! न मे शरीरं त्वया स्पर्शनीयम्, यतोऽहं पतिव्रता महासती च। न चेच्छापं दत्त्वा त्वां भस्मसात्करिष्यामि। स आह—यद्येवं तर्हि त्वया किमहमाहूतः। साऽब्रवीत्—भोः! शृणुष्वैकाग्रमनाः। अहमद्य प्रत्यूषे देवतादर्शनार्थं (७) चण्डिकायतनं गता। तत्राकस्मात् (८) खे वाणी सञ्जाता—पुत्रि! किं करोमि। भक्तासि मे त्वम्। परं षण्मासाभ्यन्तरे (९) विधिनियोगाद्विधवा भविष्यसि। ततो मयाभिहितम्—भगवति! यथा त्वमापदं वेत्सि तथा तत्प्रतीकारमपि जानासि। तदस्ति कश्चिदुपायो येन मे पतिः शतसंवत्सरजीवी भवति। ततस्त-

(१) निभृत = गुप्त। स =तस्या जार। (२) शरणे=गृहे। (३) रोषाविष्टचित्त =रोषेण क्रोधेनाविष्टं व्याप्तं चित्तं मनो यस्य स तादृश क्रोधज्वलितमानस इत्यर्थ.। (४) हेलया=आयासं विनैवेत्यर्थ। तयो .त्व दि भाव.। (५) स्त्रीति—स्त्रीणा नारीणा चरित्रस्य विज्ञानं ... ज्ञानोपायम् कालोचिता स्त्रीस्वभावसिद्धा कामपि युक्तिं रचयामि। (६) स्पर्शोत्सुक =आलिङ्गनचुम्बनाद्युत्कण्ठावान्। कृताञ्जलिपुटया=बद्धहस्तया। (७) चण्डिकायतनम्=चण्डिकामन्दिरम्। (८) खे=आकाशे। वाणी=वाक्। (९) विधिनियोगात्=दैवाज्ञावशात्।

याभिहितम्—वत्से! सन्नपि नास्ति, यतस्तवायत्तः स (१) प्रतीकारः। तच्छ्रुत्वा मयाभिहितम्—देवि! यदि तन्मम प्राणैर्भवति तदादेशय येन करोमि। अथ देव्याभिहितम्—यद्यद्यदिने परपुरुषेण सहैकस्मिञ्छयने समारुह्यालिङ्गनं करोषि तत्तव (२) भर्तृसक्तोऽपमृत्युस्तस्य सञ्चरति। भर्तापि पुनर्वर्षशतं जीवति। तेन त्वं मयाभ्यर्थितः। तद्यत्किंचित्कर्तुमनास्तत्कुरुष्व। न हि देवतावचनमन्यथा भविष्यतीति निश्चयः। ततो (३)ऽन्तर्हासविकासमुखः स तदुचितमाचचार। सोऽपि रथकारो मूर्खस्तस्यास्तद्वचनमाकर्ण्य (४) पुलकाङ्किततनुः शय्याधस्तलान्निष्क्रम्य तामुवाच—साधु पतिव्रते! साधु कुलनन्दिनि! अहं (५) दुर्जनवचनशङ्कितहृदयस्त्वत्परीक्षानिमित्तं ग्रामान्तरव्याजं कृत्वात्र खट्वाधस्तले निभृतं लीनः। तदेहि। आलिङ्गय माम्। त्वं (६) स्वभर्तृभक्तानां मुख्या नारीणाम्, यदेवं (७) ब्रह्मव्रतं परसङ्गेऽपि पालितवती। यदायुर्वृद्धिकृतेऽपमृत्युविनाशार्थं च त्वमेवं कृतवती। तामेवमुक्त्वा सस्नेहमालिङ्गितवान्। स्वस्कन्धे तामारोप्य तमपि देवदत्तमुवाच—भो! महानुभाव! मत्पुण्यैस्त्वमिहागतः। त्वत्प्रसादान्मया प्राप्तं वर्षशतप्रमाणमायुः। तत्त्वमपि मामालिङ्गय मत्स्कन्धे समारोह—इति जल्पन्ननिच्छन्तमपि देवदत्तमालिङ्गय बलात्स्वकीयस्कन्धे आरोपितवान्। ततश्च नृत्यं कृत्वा हे! ब्रह्मव्रतधराणां धुरीण! त्वया-

(१) प्रतीकार=उपाय। (२) भर्तृसक्त=पतिनिष्ठ.। तस्य=आलिङ्गितपुरुषस्य। सञ्चरति=सङ्क्रामति। (३) अन्तरिति—अन्तर्हासेन विकासो मुखे यस्य स स्मेरास्य इत्यर्थः। (४) पुलकेति—पुलकैः रोमाञ्चैः अङ्किता व्याप्ता तनुः शरीरं यस्य स.। कुलनन्दिनि=सद्वंशप्रसूते! (५) दुर्जनेति—दुर्जनानां वचनैः शङ्कितं हृदयं यस्य स दुष्टवाक्यसन्दिग्धचित्त। ग्रामान्तरव्याजम्=अन्यग्रामगमनात्मकं छलम्। (६) स्वभर्तृभक्तानाम्=पतिपरायणानाम्। (७) ब्रह्मव्रतम्=वेदप्रतिपादितं नारीणां पातिव्रत्यम्।

पि मय्युपकृतम् इत्याद्युक्त्वा स्कन्धादुत्तार्य यत्र यत्र स्वजनगृहद्वारादिषु बभ्राम, तत्र तत्र तयोरुभयोरपि तद्गुणवर्णनमकरोत्। अतोऽहं ब्रवीमि—"प्रत्यक्षेऽपि कृते पापे" इति॥ तत्सर्वथा (१) मूलोत्खाता वयं विनष्टाः स्मः। सुष्ठु खल्विदमुच्यते-

मित्ररूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः॥१६६॥

तथा च—

सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान्मन्त्रिणः प्राप्य तमः सूर्योदये यथा॥१६७॥

ततस्तद्वचोऽनादृत्य सर्वे ते स्थिरजीविनमुत्क्षिप्य स्वदुर्गमानेतुमारब्धाः। अथानीयमानः स्थिरजीव्याह—देव! (२) अयाकिंचित्करेणैतदवस्थेन किं मयोपसङ्गृहीतेन, (३) यत्कारणमि-

(१) मूलोत्खाता=मूलमुत्खातं विनष्टं येषा ते समूलं विनष्टा।

"**मित्ररूपा**" इति—ये जना हितम्=इष्टं वाक्यं=वच उत्सृज्य=त्यक्त्वा विपरीतोपसेविन=विपरीतमनिष्टं उपसेवन्ते कथयन्ति ते अहितोपदेशका सन्तीति शेष, विचक्षणै=पण्डितै ते मित्ररूपा=सुहृद्रूपधारिण रिपवः=शत्रव सम्भाव्यन्ते=कल्प्यन्ते। अहितमार्गोपदेशका एव शत्रव, हितमार्गोपदेशका एव सुहृद इति निर्गलितोऽर्थ॥ १६६॥

"**सन्त**" इति—सूर्योदये=भास्करोदये तमो यथा=अन्धकार इव देशकालविरोधिन=देशविरोधिन कालविरोधिनश्च (यत्र देशे काले यत्कर्त्तव्यं तद्विपरीतमाचरत इत्यर्थ) अप्राज्ञान्=दुर्बुद्धीन् मन्त्रिण=अमात्यान् प्राप्य=सङ्गत्य, सन्त=स्वरूपेण उत्तमा अपि अर्था=पदार्था राज्ञो विवेच्यादिरू इत्यर्थ, विनश्यन्ति=विध्वस्ता भवन्ति। मन्त्रिणा सती बुद्धिरेव राष्ट्रस्थिरताहेतुरिति फलितम्। "अन्धकारोऽस्त्रिया ध्वान्तं तमिस्रं तम" इत्यमर॥ १६७॥

(२) अकिञ्चित्करेण=किमपि कर्त्तुमसमर्थेन। (३) यत्कारणम्=यदर्थ हेतो

च्छामि दीप्तं वह्निमनुप्रवेष्टुम् । तदर्हसि मामग्निप्रदानेन (१) समुद्धर्तुम् । अथ रक्ताक्षस्तस्यान्तर्गतभावं ज्ञात्वाब्रवीत्—किमर्थमग्निपतनमिच्छसि । सोऽब्रवीत्—अहं तावद्युष्मदर्थे इमामापदं मेघवर्णेन प्रापितः । तदिच्छामि तेषां (२) वैरयातनार्थमुलूकत्वमिति । तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह—भद्र ! (३) कुटिलस्त्वं कृतकवचनचतुरश्च । तत्त्वमुलूकयोनिगतोऽपि स्वकीयामेव वायसयोनिं बहु मन्यसे । श्रूयते चैतदाख्यानकम्—

सूर्यं भर्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम् ।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥ १६८ ॥

मन्त्रिणः प्रोचुः—कथमेतत् । रक्ताक्षः कथयति—

## कथा १२ ।

अस्ति(४)विषमशिलातलस्खलिताम्बुनिर्घोषश्रवणसन्त्रस्त-

---

(१) समुद्धर्तुम्=परित्रातुम् । मरिष्यामि चेन्मम सर्वं दुःखं नङ्क्ष्यतीति भावः । (२) वैरयातनार्थम्=वैरनिष्कासनाय । उलूकत्वम्=पेचकजन्म । मृतः सन् उलूको भूत्वा स्ववैरमुद्धरिष्य इत्यर्थः । (३) कुटिलः=वक्रः । कृतकेति—कृतकेषु वचनेषु वाक्येषु चतुरो निपुणः चाटुकारकुशलश्चेत्यर्थः । आख्यानकम्=कथा ।

"सूर्य"मिति—मूषिका=काचित् उन्दुरी सूर्यं=भास्करम्, पर्जन्यं=मेघम् मारुतं=पवनम् गिरिं=पर्वतं भर्तारं=पतिम् उत्सृज्य=त्यक्त्वा स्वजातिम्=निजां जातिं मूषिकान्वयम्, अथवा—स्वजातिं=मूषिकं भर्तारं प्राप्ता । (फलितार्थे न विशेषः) स्वजातिः=स्वीया जातिः दुरतिक्रमा=दुस्त्याज्या भवति । स्वजातिप्रीतिः केनापि परित्यक्तुं न शक्यते इति भावः ॥ १६८ ॥

(४) विषमेति—विषमेषु=नतोन्नतेषु शिलातलेषु=पाषाणखण्डेषु स्खलितानि पतितानि प्रतिहतानीति यावत् यानि अम्बूनि पानीयानि, तेषां यो निर्घोषः शब्दः कलरवः, तस्य श्रवणात् सन्त्रस्तानामतिभीतानां मत्स्यानां यत् परिवर्तनं प्रोल्लुण्ठनम्, तेन सञ्जनिताः जाता ये श्वेताः सिताः फेनाः अब्धि-

मत्स्यपरिवर्त्तनसञ्जनितश्वेतफेनशवलतरङ्गाया (१)गङ्गायास्तटे जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः परिपूतपरिमितजलजिघृक्षुभिः कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैर्वल्कलकृतकौपीनमात्रप्रच्छादनैस्तपस्विभिराकीर्णमाश्रमपदम्। तत्र याज्ञवल्क्यो नाम कुलपतिरासीत्। तस्य (२) जाह्नव्यां स्नात्वोपस्प्रष्टुमारब्धस्य करतले श्येनमुखात्परिभ्रष्टा मूषिका पतिता। तां दृष्ट्वा (३) न्यग्रोधपत्रेऽवस्थाप्य पुनः स्नात्वोपस्पृश्य च (४) प्रायश्चित्तादिक्रियां कृत्वा च मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रममानिनाय। (५) अनपत्यां च जायामाह—भद्रे! गृह्यतामियं तव

---

कफा डिण्डीरा, तै शवलाश्चित्रिता तरङ्गा वीचयो यस्यास्तादृश्या।

(१) गङ्गाया=भागीरथ्या। तटे=तीरे। जपेति जपादिक्रियान्ताना द्वन्द्व, तत्र जप=उपांश्वादिभेदेन अनेकविधो मन्त्रपाठविशेष, नियम=इन्द्रियनिग्रह, तप=चान्द्रायणादि, स्वाध्याय=स्ववेदशाखाध्ययनम्, उपवास=एकादश्यादिव्रतविशेष, योग=चित्तवृत्तिनिरोधरूप समाधि, क्रिया=यागदानहोमादिरूपा, एतासामनुष्ठानमाचरणमेव परमविकमयनमाश्रयो येषा तै। परिपूतेति—परिपूतानि अतिपवित्राणि यानि परिमितानि अल्पानि जलानि पानीयानि तेषा जिघृक्षुभि ग्रहीतुमिच्छुकै अल्पस्वपरिग्रहैरित्यर्थ। कन्देति—कन्दा मूलविशेषाः, मूलानि शिफा, फलानि कदल्यादीनि, शैवलानि जलनील्यादीनि, एतेषामभ्यवहारेण भोजनेन कदर्थितानि क्लेशितानि शरीराणि येषा यैर्वा तै। वल्कलेति—वल्कलेन वृक्षत्वचा कृतं सम्पादितं कौपीनमात्रं चीरखण्डमात्रं प्रच्छादनं वासो यैस्तैस्तादृशै। तपस्विभि=साधुभि। आकीर्णम्=व्याप्तम्। आश्रमपदम्=तपोवनम्।

(२) जाह्नव्या=गङ्गायाम्। उपस्प्रष्टुम्=आचमनं कर्त्तुम्। श्येनमुखात्="बाज" नामकपक्षिविशेषस्य मुखात्=चञ्चुपुटात्। (३) न्यग्रोधपत्रे=वटदले। (४) प्रायश्चित्तादिक्रियाम्=अपवित्रवस्तुस्पर्शोत्पन्नाया अशुद्धेर्दूरीकरणार्थं शास्त्रोपदिष्टमनुष्ठानविशेषम्। (५) अनपत्याम्=सन्तानहीनाम्।

दुहितोत्पन्ना । प्रयत्नेन संवर्धनीया इति । ततस्तया संवर्धिता लालिता च यावद्द्वादशवर्षा सञ्जज्ञे । अथ विवाहयोग्यां तां दृष्ट्वा भर्तारमेवं जायोवाच—भो ! भर्तः ! किमिदं नावबुध्यसे यथास्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति । असावाह—साधूक्तम् । उक्तं च—

स्त्रियः पूर्वं सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः ।
भुञ्जते मानुषाः पश्चात्तस्माद्दोषो न विद्यते ॥ १९९ ॥
सोमस्तासां ददौ शौचं गन्धर्वाः शिक्षितां गिरम् ।
पावकः सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥ २०० ॥
असम्प्राप्तरजा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जना भवेत्कन्या कुचहीना च नग्निका ॥ २०१ ॥

---

"स्त्रिय" इति—स्त्रिय =नार्य पूर्व=प्राक् सोमगन्धर्ववह्निभि सुरै = देवै भुक्ता , पश्चात्=अनन्तरम् मानुषा =मानवा भुञ्जते=रमयन्ते, तस्मात्= भोगहेतो ( तासा स्त्रीणा ) दोष =भोगोत्पन्न उच्छिष्टाख्यो दोष न विद्यते= नैव भवतीत्यर्थ ।

अत्र—"स्त्रिय' इत्येकमेव पदं "सुरै" रिति पदेनान्वये प्रथमाबहुवचनम्, "मानुषा" इत्यनेनान्वये द्वितीयाबहुवचनमिति वचनविभक्तिश्लेषो बोध्य ॥ १९९ ॥

"सोम" इति—सोम =चन्द्र तासा=भुक्ताना शौचम्=पवित्रतां (वरं) ददौ, गन्धर्वा तासा शिक्षिताम्=निसर्गादेव संस्कृता गिरम्=वाचं "ददु" इति विभक्तिव्यत्ययेनान्वय , पावक =वह्नि. सर्वमेध्यत्वम्=सर्वेष्वेवाङ्गेषु पवित्रता ददौ, तस्मात्=वरत्रयप्राप्तिकारणात् स्त्रिय. निष्कल्मषा =निष्पापा दोषवर्जिता भवन्तीति शेष ॥ २०० ॥

"असम्प्राप्तरजा" इति—असम्प्राप्तं न प्राप्तमायातं रज आर्त्तवं यस्या सा "गौरी" इत्युच्यते इति शेष , शास्त्रसिद्धेयमप्राप्तार्त्तवाया स्त्रियः सञ्ज्ञेत्यर्थ । एवमग्रेऽपि। रजसि=आर्त्तवे मासिकधर्मे प्राप्ते सति "रोहिणी"। अव्यञ्जना=न व्यञ्जन कुचोद्गमादिकं यस्या सा "कन्या" भवेत् । या तु

व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम्।
पयोधराभ्यां गन्धर्वो रजस्यग्निः प्रतिष्ठितः॥ २०२॥
तस्माद्विवाहयेत्कन्यां यावन्नर्तुमती भवेत्।
विवाहश्चाष्टवर्षायाः कन्यायास्तु प्रशस्यते॥ २०३॥
व्यञ्जनं हन्ति वै पूर्वं परं चैव पयोधरौ।
रतिरिष्टांस्तथा लोकान् हन्याच्च पितरं रजः॥ २०४॥
ऋतुमत्यां तु तिष्ठन्त्यां स्वेच्छादानं विधीयते।
तस्मादुद्वाहयेन्नग्नां मनुः स्वायम्भुवोऽब्रवीत्॥ २०५॥

---

कुचहीना=अनुत्थितस्तनी सा "नग्निका" ज्ञेयेति शेष ॥ २०१॥

"व्यञ्जनै" रिति—सोमः=चन्द्र व्यञ्जनैः=कुचादिभि समुत्पन्नै ईषन्निर्गतै उपलक्षिता कन्यका भुङ्क्ते, गन्धर्वो पयोधराभ्याम्=स्तनाभ्या स्फुटाभ्या कुचाभ्यामुपलक्षिता भुङ्क्ते, रजसि=आर्त्तवे उत्पन्ने सति अग्नि=अग्निदेव. प्रतिष्ठित=भोक्तुं प्रवर्त्तत इत्यर्थ ॥ २०२॥

"तस्मादि" ति—तस्मात्=दर्शितशास्त्रीयसङ्केतहेतो यावत्=यावत्कालपर्यन्तम् ऋतुमती=रजस्वला न भवेत् तावत् कन्यां विवाहयेत्=कन्याया पाणिपीडनं कुर्यात्। अष्टवर्षाया कन्याया, "गौरी"सञ्ज्ञाया विवाह=पाणिपीडनं तु प्रशस्यते=उत्तमो भवति। "तु" एवधारणार्थ ॥२०३॥

उक्तमवधारितमर्थ पोषयति—"व्यञ्जनम्" इति—व्यञ्जनम्=ईषन्निर्गतकुचादिकं चिह वै=निश्चयेन पूर्वं पूर्वजन्मसञ्चितं मातृपितृपुण्यं हन्ति=घातयति, पयोधरौ=स्फुटौ कुचौ तु परं च एव=परजन्मनि प्राप्य पित्रो पुण्यं हन्तीत्यत्र "हत" इति व्यत्ययेनानुषङ्ग। रति=अविवाहिताया एव परपुरुषेण कृता रमणम्=पित्रो इष्टान्=हितान् लोकान्=स्वर्गादीन् हन्ति, रज=आर्त्तवं च =जनकं हन्यात्=घातयेत् पातयेद्वेत्यर्थ। आर्त्तवादियौवनचिह्नात् प्रागेव यादानं शास्त्रसम्मतमुभयलोकहितकरं भवतीति भाव ॥ २०४॥

"ऋतुमत्याम्" इति—ऋतुमत्याम्=रजस्वलाया कन्याया तिष्ठन्त्या=मानाया स्वेच्छादानम्=कन्याया इच्छानुरोधेन दानम्=वराय अर्पण वधीयते, तदा पित्रादिभिर्बहुपात्राऽपात्रपरीक्षा कर्त्तव्या न भवति, कन्या यं

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता ।
अविवाह्या तु सा कन्या जघन्या वृषली स्मृता ॥ २०६ ॥
श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला ।
पित्रा देया विनिश्चित्य यतो दोषो न विद्यते ॥ २०७ ॥

अतोऽहमेनां सदृशाय प्रयच्छामि, नान्यस्मै । उक्तं च—

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ २०८ ॥

तथा च—

कुलं च शीलं च सनाथता च
विद्या च वित्तं च वपुर्वयश्च ।
एतान्गुणान्सप्त विचिन्त्य देया
कन्या बुधैः शेषमचिन्तनीयम् ॥ २०९ ॥

---

वरमिच्छेत् तस्मा एव देयेत्यर्थ । तस्मात् कारणात् नग्नाम्=अनृतुमतीमप्राप्तार्त्तवामिति यावत् उद्वाहयेत्, इति स्वायम्भुव=स्वयम्भूसुतो मनुर्महर्षिरब्रवीत्=उपदिदेश । "नग्निकाऽनागतार्त्तवा" इत्यमर ॥ २०५ ॥

"पितृवेश्मनी" ति—या कन्या=कुमारी पितृवेश्मनि=पितुर्गृहे असंस्कृता=अकृतविवाहसंस्कारा रज=आर्त्तवं पश्यति=ऋतुमती जायते इत्यर्थ, सा कन्या अविवाह्या=द्विजातिभिर्नैव परिणेया, (यत ) सा जघन्या=नीचा, तथा—वृषली=शूद्रतुल्या स्मृता धर्मशास्त्रकारैरिति शेष । धर्मशास्त्रेष्वस्या "वृषली" ति सञ्ज्ञा कृतेत्यत्र तात्पर्यम् ॥ २०६ ॥

"श्रेष्ठेभ्य" इति—यत=यस्माद्धेतो एतादृश्या दशाया दोष=नीचेऽपात्रे कन्याप्रदानरूपो दोषो न विद्यते, तस्मात् पित्रा=जनकेन विनिश्चित्य=विचार्य रजस्वला=ऋतुमती श्रेष्ठेभ्य=स्वतोऽधिकेभ्य, सदृशेभ्यः=स्वतुल्यवंशादिभ्य, तथा जघन्येभ्य=अधमपात्रेभ्यो वा देया, ऋतौ सत्यां यथाकथञ्चित्प्राप्ताय वराय देयैव सेत्यत्र तात्पर्यम् ॥ २०७ ॥

"ययो" रिति—मित्रभेदे पृ० १६६ प्राग्व्याख्यातोऽयं श्लोक. ॥२०८॥

"कुल" मिति—कुलम्=वंश, शीलम्=स्वभावश्चरितं वा, सनाथता=

तद्यद्यस्या रोचते तदा भगवन्तमादित्यमाहूय तस्मै प्रयच्छामि। सा प्राह—इह को दोषः। क्रियतामेतत्। अथ मुनिना रविराहूतः। (१) वेदमन्त्रामन्त्रणप्रभावात्तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच—भगवन्! किमहमाहूतः। सोऽब्रवीत्—एषा मदीया कन्यका तिष्ठति। यद्येषा त्वां वृणोति तर्ह्युद्वहस्व इति। एवमुक्त्वा स्वदुहितरमुवाच—पुत्रि! किं (२) तव रोचत एष (३) भगवांस्त्रैलोक्यदीपको भानुः। पुत्रिकाब्रवीत्—तात! अतिदहनात्मकोऽयम्। नाहमेनमभिलषामि। तदस्मादन्यः (४) प्रकृष्टतरः कश्चिदाहूयताम्। अथ तस्यास्तद्वचनं श्रुत्वा मुनिर्भास्करमुवाच—भगवन्! त्वत्तो (५) ऽप्यधिकोऽस्ति कश्चित्। भास्करः प्राह—अस्ति मत्तोऽप्यधिको मेघो येनाच्छादितोऽहमदृश्यो भवामि। अथ मुनिना मेघमप्याहूय कन्याभिहिता—पुत्रिके! अस्मै त्वां प्रयच्छामि। सा प्राह—कृष्णवर्णोऽयं (६) जडात्मा च। तदस्मादन्यस्य प्रधानस्य कस्यचिन्मां प्रयच्छ। अथ मुनिना मेघोऽपि पृष्टः—भो! भो! मेघ! त्वत्तोऽप्यधिकोऽस्ति कश्चित्। मेघेनोक्तम्—मत्तोऽधिकोऽस्ति वायुः। वायुना हतोऽहं सहस्रधा यामि। तच्छ्रुत्वा मुनिना वायुराहूतः। आह च—पुत्रिके! किमेष वायुस्ते विवाहा-

---

सहायता, विद्या, वित्तम्=धनम्, वपुः=शरीरञ्च, वयः=यौवनञ्च, एतान् सप्त-गुणान् विविच्य=पर्यालोच्यैव बुधैः=पण्डितैः कन्या देया। उक्तसप्तविधगुण-विशिष्टाय वराय कन्या दातव्या, शेषम्=अतोऽन्यत् अचिन्तनीयम्=न विचारणीयम्। अन्ये गुणाः स्युश्चेल्लाभ एव, नस्युश्चेन्नो हानिरिति तात्पर्यम् ॥२०६॥

(१) वेदेति—वेदस्य मन्त्रैर्यदामन्त्रणमाह्वानं तस्य प्रभावात् ...। (२) तव=तुभ्यम्। सम्बन्धविवक्षया षष्ठी। (३) त्रैलोक्य-दीपकः=लोकत्रयप्रकाशकः। भानुः=भास्करः। (४) प्रकृष्टतरः=अत्युत्तमः। (५) अधिकः=विशिष्टशक्तिमान्। (६) जडात्मा=मूर्खः, डलयोरैक्यात् जलात्मा च। अतोऽयमतिशीतलोऽपि मह्यं न रोचत इत्यर्थः।

योत्तमः प्रतिभाति। साब्रवीत्—तात! (१) अतिचपलोऽयम्। तदस्माद्प्यधिकः कश्चिदानीयताम्। मुनिराह—वायो! त्वत्तोऽप्यधिकोऽस्ति कश्चित्। पवनेनोक्तम्—मत्तोऽप्यधिकोऽस्ति पर्वतो येन (२) संस्तभ्य बलवानप्यहं ध्रिये। अथ मुनिः पर्वतमाहूय कन्यामुवाच—पुत्रिके! त्वामस्मै प्रयच्छामि। सा प्राह—तात! (३) कठिनात्मकोऽयं स्तब्धश्च। तदन्यस्मै देहि माम्। मुनिना पर्वतः पृष्टः—भोः! पर्वतराज! त्वत्तोऽप्यधिकोऽस्ति कश्चित्। गिरिणोक्तम्—मत्तोऽप्यधिकाः सन्ति मूषिका ये मच्छरीरं बलाद्विदारयन्ति। ततो मुनिर्मूषिकमाहूय तस्या अदर्शयत्। आह च—पुत्रिके! त्वामस्मै प्रयच्छामि। किमेष प्रतिभाति ते मूषिकराजः। सापि तं दृष्ट्वा स्वजातीय एष इति मन्यमाना (४) पुलकोद्भूषितशरीरोवाच—तात! मां मूषिकां कृत्वास्मै प्रयच्छ। येन (५) स्वजातिविहितं गृहधर्ममनुतिष्ठामि। ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वा तस्मै प्रादात्। अतोऽहं ब्रवीमि—"सूर्यं भर्तारमुत्सृज्य" इति॥ अथ रक्ताक्षवचनमनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गमुपनीतः। नीयमानश्चान्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत्—

हन्यतामिति येनोक्तं स्वामिनो हितवादिना।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित्॥ २१० ॥

---

(१) अतिचपल=अत्यन्ताऽस्थिरस्वभावः। (२) संस्तभ्य=निरोधं प्राप्य। (३) कठिनात्मक=कठोराकृति, क्रूरहृदयश्चेति। स्तब्ध=धृष्ट। (४) पुलकेति—पुलकैः रोमाञ्चैरुद्भूषितं हृष्टं शरीरं यस्याः सा। (५) स्वजातिविहितम्=मूषिकजातिसदृशम्।

"हन्यताम्" इति—स्वामिन=उलूकराजस्य हितवादिना=इष्टवक्त्रा येन=रक्ताक्षेण (अमुं) हन्यताम्=वध्यताम् इत्युक्तम्, स=रक्ताक्ष एवैकोऽत्र=सर्वेषामुलूकानां मध्ये नीतिशास्त्रार्थतत्त्ववित्=नयशास्त्रस्य यथार्थज्ञाताऽस्ति नान्य इति फलितम्॥ २१० ॥

तद्यदि तस्य वचनमकरिष्यन्नेते, ततो न स्वल्पोऽप्यनर्थोऽभविष्यदेतेषाम् । अथ दुर्गद्वारं प्राप्यारिमर्दनोऽब्रवीत्—भो ! भोः ! हितैषिणोऽस्य स्थिरजीविनो (१) यथासमीहितं स्थानं प्रयच्छत । तच्च श्रुत्वा स्थिरजीवी व्यचिन्तयत्—मया तावदेतेषां वधोपायश्चिन्तनीयः, स मया (२) मध्यस्थेन न साध्यते । यतो मदीयम् (३) इङ्गितादिकं विचारयन्तस्तेऽपि (४) सावधाना भविष्यन्ति । तद्दुर्गद्वारमधिश्रितोऽभिप्रेतं साधयामीति निश्चित्योलूकपतिमाह—देव ! युक्तमिदं यत्स्वामिना प्रोक्तम् । परमहमपि नीतिज्ञस्ते (५)ऽहितश्च । यद्यप्यनुरक्तः शुचिस्तथापि दुर्गमध्ये आवासो नार्हः । तदहमत्रैव दुर्गद्वारस्थः प्रत्यहं (६) भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि । तथा इति (७) प्रतिपन्ने प्रतिदिनमुलूकपतिसेवकास्ते प्रकाममाहारं कृत्वोलूकराजादेशात्प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति । अथ कतिपयैरेवाहोभिर्मयूर इव स बलवान् संवृत्तः । अथ रक्ताक्षः स्थिरजीविनं (८) पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानं च प्रत्याह—अहो ! मूर्खोऽयं मन्त्रिजनो भवांश्चेत्येवमहमवगच्छामि । उक्तं च—

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः ।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम् ॥ २११ ॥

ते प्राहुः—कथमेतत् । रक्ताक्षः कथयति—

---

(१) यथासमीहितम्=सुखहेतुभूतं मनोवाञ्छितम । (२) मध्यस्थेन= दुर्गमध्ये स्थितेन । (३) इङ्गितादिकम्=हृदयवर्त्तिचेष्टादिकम् । विचारयन्त = आलोचयन्त । (४) सावधाना =शत्रुपक्षादागतेन पूर्णविश्वासभावात् दत्ता- । (५) अहित =निसर्गवैरी । (६) भवदिति—भवत्पादौ एव पद्म रजसा पवित्रीकृता शुचिता प्राप्ता तनु शरीरं यस्य स तादृश । (७) प्रतिपन्ने=स्वीकृतवति । उलूकराजे इति सम्बन्ध । (८) पोष्यमाणम्= पाल्यमानम्, हृष्टपुष्टाङ्गं क्रियमाणमित्यर्थ. ।

"पूर्वं" मिति—अहं तावत् पूर्वं मूर्ख =प्रथमो मूर्ख इत्यर्थ, पाश-

## कथा १३।

अस्ति कस्मिंश्चित्पर्वतैकदेशे महान्वृक्षः। तत्र च सिन्धुकनामा कोऽपि पक्षी प्रतिवसति स्म। तस्य (१) पुरीषे सुवर्णमुत्पद्यते। अथ कदाचित्तमुद्दिश्य व्याधः कोऽपि समाययौ। स च पक्षी तदग्रत एव (२) पुरीषमुत्ससर्ज। अथ (३) पातसमकालमेव तत्सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयमगमत्—अहो! मम शिशुकालादारभ्य (४) शकुनिबन्धव्यसनिनोऽशीतिवर्षाणि समभूवन्। न च कदाचिदपि पक्षिपुरीषे सुवर्णं दृष्टमिति विचिन्त्य तत्र वृक्षे पाशं बबन्ध। अथासावपि पक्षी मूर्खस्तत्रैव विश्वस्तचित्तो यथापूर्वमुपविष्टः। तत्कालमेव पाशेन बद्धः। व्याधस्तु तं पाशादुन्मुच्य पञ्जरके संस्थाप्य निजावासं नीतवान्। अथ चिन्तयामास—किमनेन (५) सापायेन पक्षिणाहं करिष्यामि। यदि कदाचित्कोऽप्यमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति, तन्नूनं प्राणसंशयो मे भवेत्। अतः स्वयमेव पक्षिणं राज्ञे निवेदयामि इति विचार्य तथैवानुष्ठितवान्। अथ राजापि तं दृष्ट्वा (६) विकसितनयनवदनकमलः परां तुष्टिमुपागतः। प्राह चैवम्—हंहो! रक्षापुरुषाः! एनं पक्षिणं यत्नेन रक्षत।

---

बन्धक=लुब्धक ("व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः" इत्यमरः) द्वितीयो मूर्ख इति सम्बन्ध, ततो राजा च=राजापि, मन्त्री च=अमात्योपि मूर्ख, अत सर्व वै=निश्चयेन मूर्खमण्डलम्=मूढसमाज इत्यर्थ ॥ २११ ॥

(१) पुरीषे=विष्ठायाम्। (२) पुरीषमुत्ससर्ज=मलं तत्याज। (३) पातसमकालमेव=विष्ठाया पतनवेलायामेवेत्यर्थ। तत्=पुरीषम्। सुवर्णीभूतम्=सुवर्णमेव जातम्। (४) शकुनीति—शकुनीना पक्षिणा बन्ध पाशबन्धनमेव व्यसनमस्यास्तीति तस्येत्यर्थ। (५) सापायेन=अपाय. प्रकृते विनाशशङ्का तेन सह वर्त्तत इति "सापायः" तेन संशयविपयीभूतेनेत्यर्थ। (६) विकसितेति—विकसितानि प्रफुल्लितानि नयनवदने नेत्रमुखे एव कमले यस्य सः। पराम्=प्रचुराम्। तुष्टिम्=प्रसन्नताम्।

अशनपानादिकं चास्य यथेच्छं प्रयच्छत। अथ मन्त्रिणाभिहितम्—किमनेन (१) अश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेनाण्डजेन। किं कदाचित्पक्षिपुरीषे सुवर्णं सम्भवति। (२) तन्मुच्यतां पञ्जरबन्धनादयं पक्षी—इति मन्त्रिवचनाद्राज्ञा मोचितोऽसौ पक्षी (३) उन्नतद्वारतोरणे समुपविश्य सुवर्णमयीं विष्ठां विधाय "पूर्वं तावदहं मूर्खः" इति श्लोकं पठित्वा यथासुखमाकाशमार्गेण प्रायात्। अतोऽहं ब्रवीमि--"पूर्वं तावदहं मूर्खः" इति॥ अथ ते पुनरपि (४) प्रतिकूलदैवतया हितमपि रक्ताक्षवचनमनादृत्य (५) भूयस्तं प्रभूतमांसादिविविधाहारेण पोषयामासुः। अथ रक्ताक्षः स्ववर्गमाहूय (६) रहः प्रोवाच—अहो! एतावदेवास्मद्भूपतेः कुशलं दुर्गं च। तदुपदिष्टं मया यत् (७) कुलक्रमागतः सचिवोऽभिधत्ते। तद्वयमन्यत्पर्वतदुर्गं सम्प्रति समाश्रयामः। उक्तं च यतः—

अनागतं य. कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता॥-२१२॥

ते प्रोचुः—कथमेतत्। रक्ताक्षः कथयति—

---

(१) अश्रद्धेयेति--अश्रद्धेयं विश्वासानर्हं यद् व्याधवचनं लुब्धकवाक्य तत्र य प्रत्ययो विश्वास तन्मात्रपरिगृहीतेन। अण्डजेन=पक्षिणा। (२) मुच्यताम्=त्यज्यताम्। (३) उन्नतद्वारतोरणे=उन्नतमुच्चैर्यद् द्वारं तस्य तोरणे बहि प्रदेशविशेषे। "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमर। (४) प्रतिकूल- ॱ. ।=विपरीतभागधेयतया। (५) भूय =पुनरपि। तम्=स्थिरजीविनम्। ॱति—प्रभूत प्रचुरमात्रो यो मासादिर्विविधो नानाप्रकार आहार तेन। (६) रह.=एकान्ते। (७) कुलक्रमागतः=वंशपरम्पराप्राप्त.। सचिव =मन्त्री। अभिधत्ते=कथयति।

"अनागतम्"इति—य =यो जन अनागतम्=न आगतं प्राप्तमना-

## कथा १४।

कस्मिंश्चिद्वनोद्देशे खरनखरो नाम सिंहः प्रतिवसति स्म। स कदाचिदितश्चेतश्च (१) परिभ्रमन् क्षुत्क्षामकण्ठो न किञ्चिदपि सत्त्वमाससाद। ततश्चास्तमनसमये महतीं गिरिगुहामासाद्य प्रविष्टश्चिन्तयामास—नूनमेतस्यां गुहायां रात्रौ केनापि सत्त्वेनागन्तव्यम्। तन्निभृतो भूत्वा तिष्ठामि। एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो नाम शृगालः समायातः। स च यावत्पश्यति तावत् (२) सिंहपदपद्धतिर्गुहायां प्रविष्टा न च निष्क्रमणं गता। ततश्चाचिन्तयत्—अहो! विनष्टोऽस्मि। नूनमस्यामन्तर्गतेन सिंहेन भाव्यम्। तत्किं करोमि। कथं ज्ञास्यामि। एवं विचिन्त्य द्वारस्थः (३) फूत्कर्तुमारब्धः—अहो! बिल! अहो! बिल! इत्युक्त्वा तूष्णींभूय भूयोऽपि तथैव प्रत्यभाषत--भो! किं न स्मरसि यन्मया त्वया सह(४)समयः कृतोऽस्ति। यन्मया बाह्यात्समागतेन त्वं वक्तव्यः। त्वया चाह-(५)आकारणीय इति। तद्यदि मां नाह्वयसि ततोऽहं द्वितीयम् बिलं यास्यामि अथ तच्छ्रुत्वा सिंहश्चिन्तितवान्—नूनमेषा गुहाऽस्य समागतस्य सदा समाह्वानं करोति। परमद्य मद्भयान्न किंचिद् ब्रूते। अथवा साध्विदमुच्यते—

---

गतमनुपस्थितं कुरुते=विधत्ते भाविनीं विपदां शङ्कयित्वा तन्निवारणार्थम्प्रथममेवोपाय चिन्तयतीत्यर्थ, स शोभते=राजते आनन्देन तिष्ठतीत्यर्थ। य अनागतं न करोति स शोच्यते=बन्धुभिरिति शेष विपदा प्राप्तस्य बान्धवा शोकं कुर्वन्त्येव। अत्र=अस्मिन् वने=आरण्ये संस्थितस्य=निवसतो मम जरा=वार्धक्यम्, समागता=प्राप्ता, परन्तु मे=मया बिलस्य=गर्त्तस्य वाणी=वाक् कदापि न श्रुता=आकर्णिता। वंशस्थं वृत्तम् ॥ २१२ ॥

(१) परिभ्रमन्=पर्यटन्। क्षुदिति—क्षुधा बुभुक्षया क्षाम क्षीण शुष्क कण्ठो गलो यस्य स। सत्त्वम्=जीव। (२) सिंहपदपद्धति=पञ्चास्यचरणक्रमणचिह्नम्। (३) फूत्कर्तुम्=आकारयितुम्। (४) समय=सङ्केत। (५) आकारणीय=आह्वातव्य।

भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः ।
प्रवर्तन्ते न वाणी च वेपथुश्चाधिको भवेत् ॥ २१३ ॥

तदहमस्याह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति । एवं सम्प्रधार्य सिंहस्तस्याह्वानमकरोत् । अथ सिंहशब्देन सा गुहा (१) प्रतिरवसम्पूर्णाऽन्यानपि दूरस्थानरण्यजीवांस्त्रासयामास । शृगालोऽपि पलायमान इमं श्लोकमपठत्—

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम् ।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता ॥ २१४ ॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यम् इति । एवमभिधाय (२) आत्मानुयायिपरिवारानुगतो दूरदेशान्तरं रक्ताक्षो जगाम ।

अथ रक्ताक्षे गते स्थिरजीव्यतिहृष्टमना व्यचिन्तयत्—अहो ! कल्याणमस्माकमुपस्थितं यद्रक्ताक्षो गतः । यतः स

---

"भये" ति—भयेन भीत्या सन्त्रस्तं विह्वलीभूतं मनो येषा तेषाम् हस्तपादादिका =हस्तौ च पादौ च हस्तपादम् "द्वन्द्वश्च प्राणि०"—(२।४। २) इत्यनेनैकवद्भावः, तदादि यासां ता ,"हस्तपादादिकक्रिया " इति पाठे तु—तदादि येषा ते, तेषा हस्तपादादिकाना क्रिया व्यापारविशेषा न= प्रवर्त्तन्ते=नैव भवन्ति तथा वाणी=वाक् च न प्रवर्त्तते इत्यनुषङ्ग । वेपथु = कम्पश्च अधिक =भूयान् भवेत्=जायते ॥ २१३ ॥

(१) प्रतिरवसम्पूर्णा=प्रतिरव प्रतिध्वनि तेन सम्पूर्णा भरिता । दूरस्थान्= व[illegible] : । अरण्यजीवान्=जाङ्गलान् प्राणिन । त्रासयामास=भापयामास ।

"अनागतम्" इति—प्राक् पृ० ४३६ व्याख्यातम् ॥ २१४ ॥

(२) आत्मेति—आत्मानुयायी=स्वानुगतो य. परिवारोऽनुचरवर्ग तदनुगत तदनुसृत ।

(१) दीर्घदर्शी एते च मूढमनसः। ततो मम (२) सुखघात्याः सञ्जाताः। उक्तं च यतः—

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः।
क्रमायाता ध्रुवं तस्य न चिरात् स्यात् परिक्षयः ॥२१५॥

अथवा साध्विदमुच्यते—

मन्त्रिरूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः ॥ २१६ ॥

एवं विचिन्त्य(३) स्वकुलाय एकैकां वनकाष्ठिकां गुहादीपनार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका विजानन्ति, यदेष कुलायमस्मद्दाहाय वृद्धिं नयति। अथवा साध्विदमुच्यते—

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च।
शुभं वेत्त्यशुभं पापं भद्रं दैवहतो नरः॥ २१७ ॥

---

(१) दीर्घदर्शी=दूरदर्शी नयशास्त्रनिपुण इत्यर्थ। मूढमनस=नीतेरविवेकिन। (२) सुखघात्या=अनायासेन हन्तव्या.।

"न" ति—यस्य महीपते=राज्ञ क्रमायाता=कुलपरम्परया प्राप्ता तथा—दीर्घदर्शिन=भाव्यर्थविचारकुशला मन्त्रिण=सचिवा. न स्यु: तस्य चिरात्=विलम्बेन परिक्षय=विनाशो न स्यात्, किन्तु दुर्मन्त्री राजा क्षिप्रमेव नश्यतीति भाव ॥ २१५ ॥

"मन्त्रिरूपा"इति—ये सन्तम्=विद्यमानं नयम्=नीतिवर्त्म उत्सृज्य=परिहाय, प्रतिलोमत=विपरीतेन नयेन दुर्नीत्येत्यर्थ राजानमिति शेषः सेवन्ते=भजन्ते, विचक्षणै.=विचारकुशलै ते मन्त्रिरूपा रिपव.=शत्रव सम्भाव्यन्ते=स्वीक्रियन्ते। "हि" इति निश्चितोयमर्थ। नीतिविपर्ययं प्राप्तो मन्त्री राज्ञोऽवश्यमनर्थकरो भवतीति भाव ॥ २१६॥

(३) स्वकुलाये=स्वनीडे। वनकाष्ठिकाम्=वन्यं क्षुद्रं तृणकाष्ठम्। गुहादीपनार्थम्=दुर्गस्य भस्मीकरणार्थमित्यर्थ।

"अमित्र" मिति—दैवहत=दैवेन विनष्टो दुर्भाग्य इति यावत् नर=मनुष्य अमित्रम्=शत्रुं मित्रम्=सुहृदं कुरुते=मन्यते, मित्रं द्वेष्टि=वैरयति,

अथ (१) कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये सञ्जाते सूर्योदयेऽन्धतां प्राप्तेपूलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह—स्वामिन्! दाहसाध्या कृता रिपुगुहा। तत्स-परिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाये प्रक्षिप, येन सर्वे शत्रवः (२) कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते। तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह—तात! कथयात्मवृत्तान्तम्। चिरादद्य दृष्टोऽसि। स आह—वत्स! नायं कथनस्य कालः। यतः कदाचित्तस्य रिपोः कश्चित्प्रणिधिर्ममेहागमनं निवेदयिष्यति, तज्ज्ञानादन्धोऽन्यत्र (३) अपसरणं करिष्यति। तत्त्वर्यताम्। उक्तं च—

शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः।
तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम्॥ २१८॥

तथा च—

यस्य यस्य हि कार्यस्य फलितस्य विशेषतः।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम्॥ २१९॥

---

तथा—हिनस्ति च=घातयत्यपि, शुभम्=कल्याणं हितं मार्गम् अशुभम्=अभद्रं वेत्ति=जानाति, पापम्=पाप्मानं भद्रम्=धर्मरूपं वेत्तीत्यनुषङ्गः। दुर्दैवस्य नरस्य मतिर्विनश्यतीति भाव ॥ २१७॥

(१)कुलायव्याजेन=नीडनिर्माणच्छलेन। (२) कुम्भीपाकनरकप्रायेण=कुम्भीपाको भयङ्करो नरकविशेष, तत्सदृशेन कष्टेनेत्यर्थ। (३) अपसरणम्=गमनं पलायनमिति यावत्।

"शीघ्रे" ति—य। नर शीघ्रकृत्येषु=सत्वरमेव करणार्हेषु कार्येषु=ध्येषु व्यापारेषु विलम्बयति=विलम्बं करोति, तस्य=तादृशस्यालस्योकर्मणि अकुशलस्य तत् कृत्यम्=अभीष्टं साध्यं देवता=देवा ात्=क्रोधात् असंशयम्=सन्देहविहीनं यथा तथा विघ्नन्ति=विध्वंसयन्ति। ालस्योपेतस्य पुरुषस्य कृत्यं निष्फलं सान्तरायञ्च भवतीति भाव. ॥२१८॥

"यस्ये" ति—यस्य यस्य विशेषत=असाधारणरूपेण फलितस्य=

तद्गुहायामायातस्य ते (१) हतशत्रोः सर्वं सविस्तरं निर्व्याकुलतया कथयिष्यामि। अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्यावृतत्वादनिःसरन्तो गुहामध्ये कुम्भीपाकन्यायमापन्ना मृताश्च। एवं शत्रूनिःशेषतां नीत्वा भूयोऽपि मेघवर्णस्तदेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्—तात! कथं त्वया शत्रुमध्ये गतेनैतावत्कालो नीतः। तदत्र कौतुकमस्माकं वर्तते। तत्कथ्यताम्। उक्तं च यतः—

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम्।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः॥ २२०॥

तदाकर्ण्य स्थिरजीव्याह—भद्र! (२) आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तं च यतः—

---

फलम्प्रत्यभिमुखीभूतस्य कार्यस्य=विधेयस्य क्षिप्रम्=शीघ्रम् अक्रियमाणस्य अननुष्ठीयमानस्य चिरं कृत्वाऽनुष्ठानं स्यादिति शेष, काल=विलम्बात्मक सन्‌ तस्य कार्यस्य तत्=इष्टं फलम्=रसपाकं पिबति=निष्फलयतीत्यर्थ। शीघ्रं क्रियमाणे कार्ये विलम्बश्चेत्कार्यहानिसम्भावना, अत क्षिप्रं स्वकार्यं साधनीयमिति भाव ॥ २१९॥

(१) हतशत्रो=विहतवैरिण।

"वर" मिति—पुण्यकर्मणाम्=पुण्यं कर्म येषा तेषा जनाना प्रदीप्ते=प्रज्वलिते अग्नौ=वह्नौ प्रपात=प्रपतनं तु वरम्=श्रेष्ठम्, किन्तु—मुहूर्तमपि=क्षणमात्रमपि सेवित=अनुष्ठित अरिजनसंसर्ग=शत्रुजनसमागमो न च वरमित्यर्थ। अभिकृतदारापेक्षयापि शत्रुजनसङ्गो महाभयङ्कर इति भाव ॥ २२०॥

(२) आगामीति—आगामिनो भविष्यत फलस्य प्रयोजनस्य या वाञ्छा कामना तया। सेवक=हितकारी भृत्य। न जानाति=नैव गणयति। हितकारी भृत्य प्रभोर्भाविधनवशुभ्य तत्साधनाय स्वदु खं किमपि नालोचयत इति तात्पर्यम्।

अथ (१) कुलायव्याजेन दुर्गद्वारे कृते काष्ठनिचये सञ्जाते सूर्योदयेऽन्धतां प्राप्तेषूलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह—स्वामिन्! दाहसाध्या कृता रिपुगुहा। तत्स-परिवारः समेत्यैकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारेऽस्मत्कुलाये प्रक्षिप, येन सर्वे शत्रवः (२) कुम्भीपाकनरकप्रायेण दुःखेन म्रियन्ते। तच्छ्रुत्वा प्रहृष्टो मेघवर्ण आह—तात! कथयात्मवृत्तान्तम्। चिरादद्य दृष्टोऽसि। स आह—वत्स! नायं कथनस्य कालः। यतः कदाचित्तस्य रिपोः कश्चित्प्रणिधिर्ममेहागमनं निवेदयिष्यति, तज्ज्ञानादन्धोऽन्यत्र (३) अपसरणं करिष्यति। तत्त्वर्यताम्। उक्तं च—

शीघ्रकृत्येषु कार्येषु विलम्बयति यो नरः।
तत्कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम्॥ २१८॥

तथा च—

यस्य यस्य हि कार्यस्य फलितस्य विशेषतः।
क्षिप्रमक्रियमाणस्य कालः पिबति तत्फलम्॥ २१९॥

---

तथा—हिनस्ति च=घातयत्यपि, शुभम्=कल्याणं हितं मार्गम् अशुभम्=अभद्रं वेत्ति=जानाति, पापम्=पाप्मानं भद्रम्=धर्मरूपं वेत्तीत्यनुषङ्गः। दुर्दैवस्य नरस्य मतिर्विनश्यतीति भावः॥ २१७॥

(१) कुलायव्याजेन=नीडनिर्माणच्छलेन। (२) कुम्भीपाकनरकप्रायेण=भयङ्करो नरकविशेषः, तत्सदृशेन कष्टेनेत्यर्थः। (३) अपसरणम्=पलायनमिति यावत्।

"शीघ्रे"ति—यः नरः शीघ्रकृत्येषु=सत्वरमेव करणार्हेषु कार्येषु=व्यापारेषु विलम्बयति=विलम्बं करोति, तस्य=तादृशस्यालस्योपेतस्य कर्मणि अकुशलस्य तत् कृत्यम्=अभीष्टं साध्यं देवता=देवाः कोपात्=क्रोधात् असंशयम्=सन्देहविहीनं यथा तथा विघ्नन्ति=विध्वंसयन्ति। आलस्योपेतस्य पुरुषस्य कृत्यं निष्फलं सान्तरायञ्च भवतीति भावः॥२१८॥

"यस्ये"ति—यस्य यस्य विशेषतः=असाधारणरूपेण फलितस्य=

तद्गुहायामायातस्य ते (१) हतशत्रोः सर्वं सविस्तरं निर्व्याकुलतया कथयिष्यामि। अथासौ तद्वचनमाकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्यावृतत्वादनिःसरन्तो गुहामध्ये कुम्भीपाकन्यायमापन्ना मृताश्च। एवं शत्रूनिःशेषतां नीत्वा भूयोऽपि मेघवर्णस्तदेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनमपृच्छत्—तात! कथं त्वया शत्रुमध्ये गतेनैतावत्कालो नीतः। तदत्र कौतुकमस्माकं वर्तते। तत्कथ्यताम्। उक्तं च यतः—

वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम्।
न चारिजनसंसर्गो मुहूर्तमपि सेवितः॥ २२०॥

तदाकर्ण्य स्थिरजीव्याह—भद्र! (२) आगामिफलवाञ्छया कष्टमपि सेवको न जानाति। उक्तं च यतः—

---

फलम्प्रत्यभिमुखीभूतस्य कार्यस्य=विधेयस्य क्षिप्रम्=शीघ्रम् अक्रियमाणस्य अननुष्ठीयमानस्य चिरं कृत्वाऽनुष्ठानं स्यादिति शेष, काल=विलम्बात्मक समय तस्य कार्यस्य तत्=इष्टं फलम्=परीपाकं पिबति=निष्फलयतीत्यर्थ। शीघ्रं क्रियमाणे कार्ये विलम्बश्चेत्कार्यहानिसम्भावना, अत क्षिप्र स्वकार्य साधनीयमिति भाव॥ २१९॥

(१) हतशत्रो=विहतवैरिण।

"वर" मिति—पुण्यकर्मणाम्=पुण्यं कर्म येषां तेषा जनाना प्रदीप्ते=प्रज्वलिते अग्नौ=वह्नौ प्रपात=प्रपतनं तु वरम्=श्रेष्ठम्, किन्तु—मुहूर्तमपि=क्षणमात्रमपि सेवित=अनुष्ठित अरिजनसंसर्ग=शत्रुजनसमागमो न च वरमित्यर्थ.। अग्निकृतदाहापेक्षयापि शत्रुजनसङ्गो महाभयङ्कर इति भाव॥ २२०॥

(२) आगामीति—आगामिनो भविष्यत फलस्य प्रयोजनस्य या वाञ्छा कामना तया। सेवक=हितकारी भृत्य। न जानाति=नैव गणयति। हितकारी भृत्य प्रभोर्भावीष्टमवबुध्य तत्साधनाय स्वदु.खं किमपि नालोचयत इति तात्पर्यम्।

उपनतभयैर्यो यो मार्गो हितार्थकरो भवेत्
स स निपुणया बुद्ध्या सेव्यो महान् कृपणोऽपि वा।
करिकरनिभौ ज्याघाताङ्कौ महार्थविशारदौ
रचितवलयैः स्त्रीवद्बद्धौ करौ हि किरीटिना ॥ २२१ ॥

---

सम्प्रति षड्भि पद्यैं पञ्चपाण्डवीयाज्ञातवाससमयभुज्यमानक्लेशदृष्टान्तेन स्वकार्यसिद्धिहेतुर्दुष्टजनाचारोऽपि सेव्य इति नीतिगर्भमर्थं स्पष्टीकरोति—

"उपनते"त्यादिना—उपनतमुपस्थितं भयं भीतिकारणं येषा तै' पुरुषैरिति शेष , यो यो मार्ग =यो वा को वाऽप्यध्वा उपस्थितभयनिवृत्तिहेतुभूत उपाय हितार्थकर =हित इष्टश्चासावर्थो हितार्थ सुखहेतुर्धनादिपदार्थ हितार्थस्य करो हितार्थकर कल्याणप्रद इत्यर्थ , भवेत्=स्यात् स स =मार्ग निपुणया= चतुरया बुद्ध्या=विज्ञानेन सेव्य =अनुष्ठेय । स कीदृश —महान्=उच्च उत्कृष्ट कृपण =अधमोऽपि वा भवेत् असाववश्यमेवाश्रयणीय इत्यर्थ , उक्तमर्थमर्थान्तरेण समर्थयते—हि=तथाहि किरीटिना=अर्जुनेन करिकरनिभौ=करिणो हस्तिन कर शुण्डादण्ड तत्सदृशौ, ज्याघाताङ्कौ=ज्याया प्रत्यञ्चाया आघातस्य आताडस्य अङ्कश्चिह्नं ययोस्तौ प्रत्यञ्चाकिणलक्षणावित्यर्थ , तथा— महार्थविशारदौ=महान् विशालो योऽर्थ शत्रुपराजयादिरूप तत्र ( तस्य साधने) विशारदौ समर्थौ (यौ) करौ=भुजौ (तौ) नारीवत् रचितवलयै = कृत्रिमकङ्कणै छद्मना परिधृतकटकैरिति यावत् बद्धौ=धृतौ तादृशस्त्रीसाध्यकर्मणि नियोजितौ । विराटस्य गृहेऽर्जुन· स्त्रीवेशधारी बभूवेति भारती कथात्रानुसन्धेया । "स्त्रीवद्" इति तु चिन्त्यमिति भारतीकथ.नुसन्धानज्ञा ।

पुरा पाण्डवाना विपत्कालेऽर्जुनस्तुच्छमपि क्लीवं रूपं धारयित्वा ·कारमकरोत् तथान्योऽपि विपदुद्धारणात्तमं हीनमुत्तमं वा समाच ·नमुष्ठरेदिति नीतिविदा परामर्श ।

अत्र—त्रस्तजनानुष्ठितनीचोत्तमान्यतरमार्गसेवनस्य सामान्यस्य विशे·ुनकृतहानजनोचितकरवलयबन्धनात्मकेन समर्थनात् विशेषेण सामान्यसम·नर्थ·ा·न्तरन्यास । "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति लक्षणेन हरिणीवृत्तम् ॥ २२१ ॥

शक्तेनापि सदा नरेन्द्र ! विदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वाक्यवज्रविषमे क्षुद्रेऽपि पापे जने।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन च
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत् ॥२२२॥
यद्वा तद्वा विषमपतितं साधु वा गर्हितं वा
कालापेक्षी हृदयनिहितं बुद्धिमान् कर्म कुर्यात्।
किं गाण्डीवस्फुरदुरुघनास्फालनक्रूरपाणि-
र्नासील्लीलानटनाविलसन्मेखली सव्यसाची॥ २२३ ॥

---

"शक्तेने" ति—हे ! नरेन्द्र ! राजन् ! ( मेघवर्ण ! ) विदुषा=नीतिविदा पण्डितेन शक्तेनापि=समर्थेनापि सता कालान्तरापेक्षिणा=कालान्तरस्य निजैश्वर्योन्नतिसाधकस्यानुकूलसमयस्य अपेक्षिणा=प्रतीक्षां कुर्वाणेन उदर्के स्वहितेच्छुनेत्यर्थः वाक्यवज्रविषमे=वाक्यं वच एव वज्रमशानिस्तद्वद् विषमे नितान्तदुःखप्रदे हृदयदाहोत्पादककठोरवाक्यप्रयोक्तरीत्यर्थः, क्षुद्रे=तुच्छहृदये, पापे=धर्महीने दुराचारे एतादृशविशेषणविशिष्टेऽपि जने=मानवे सदा=सदैव प्रायेणेत्यर्थः, वस्तव्यं खलु=निश्चयेन वासो विधेयः।

उक्तमर्थं समर्थयति—"दर्वी" त्यादिनोत्तरार्धेन—तथाहि अतिबलेन=महाबलशालिना अर्थात्—दशसहस्रगजपरिमितबलवता गदायुद्धकुशलेन च भीमेन=भीमसेनेन मत्स्यभवने=विराटगृहे दर्वीव्यग्रकरेण=दर्व्या खजाकाया व्यग्रौ व्यापृतौ करौ हस्तौ यस्य तेन, तथा—धूममलिनेन=धूमसंसर्गद्वारा मलिनेन च सता किं सूदवत्=पाचकवत् न उषितम्=न स्थितम्, अपि त्वासितमेव। भीमो हि विराटगृहे सूदकृत्यमकरोत्। "दर्वि ( र्वी ) कम्बि खजाका स्याद्" इत्यमरः। पञ्जाबीभाषाया "कड़च्छी" इत्युच्यते।

अत्रापि पूर्ववत् विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासो बोध्यः। छन्दस्तु—शार्दूलविक्रीडितम् ॥ २२२ ॥

उक्तमर्थं प्रकारान्तरेण समर्थयते—"यद्वा" इति—विषमे=कष्टे आपत्त्या पतितं=निमग्नं अतएव कालापेक्षी=कष्टात्स्वस्योद्धरणसमयं प्रतिपालयन्, बुद्धिमान्=धीमान् जनः साधु=महापुरुषाणां सम्मतम् असाधु=तेषामेव नि-

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्यं प्रकार्यं क्रमात् ।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहच्छ्रीमान्न धर्मात्मजः॥२२४॥

---

न्दितं वा यद्वा तद्वा=यत्तत्कालोचितं तदेव कर्म=नीचोत्तमं हृदयानिहितम् हृदये व्यवसायिन्या बुद्धौ निहितं स्थापितं सम्यक् विवेचितं कृत्यं कुर्यात्= विदधीत, तादृशे विपत्काले स्वाचारानाचारविचारं न कुर्यादित्यर्थ । तथाहि सव्यसाची=अर्जुन किरीटी गाण्डीवस्य निजधनुष स्फुरत्=प्रसरत् सर्वदिक्कं उरु महत् घनं गम्भीरं यदास्फालनं निरन्तरटङ्कार तेन प्रत्यञ्चाया योजनेन तत्र सायकसन्धानेन चेत्यर्थ, क्रूरौ=कठोरौ पाणी हस्तौ यस्य स तादृशोऽपि मेखली=काञ्चीधरः सन् (स्त्रीवेशं कृत्वेत्यर्थः) लीलया विलासेन यन्नटनं नर्त्तनं तेन विलसन्=विहारं कुर्वन् नासीत् अपित्वासीदेव ।

अत्रापि पूर्ववत् विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास । शार्दूलविक्रीडितं छन्दः ॥ २२३ ॥

"**सिद्धि**"मिति--विदुषा=नीतिशास्त्रानुरोधेन कालं जानता पण्डितेन सिद्धिम्=कार्यस्य सफलता प्रार्थयता=इच्छता सत्त्वोत्साहवता=हृदयशरीरसामर्थ्योपेतेनापि स्वकम्=स्वीयं तेज=प्रतापं निगृह्य=निरुध्य स्वतेजप्रकटीकरणेन विनेत्यर्थ, क्रमात् स्थैर्यम्=स्थिरता धैर्य प्रकार्यम्=आश्रयणीयम् । तथाहि--श्रीमान्=राज्यैश्वर्यसम्पन्न धर्मात्मज=धर्मपुत्रो युधिष्ठिर देवेन्द्रद्रविणेश्वरान्तकसमै=इन्द्रकुबेरयमसमै महापराक्रमशालिभिरित्यर्थ, भ्रा- ‸=भीमादिभिः सहोदरै अन्वितोऽपि=परिवारितोऽपि सुचिरम्=बहुसमयं ‸=आपत्त्या पतित. सन् त्रिदण्डम्=त्रयाणा दण्डाना वाङ्मन कायभूताना कष्टाना समाहार त्रिदण्डं त्रिविधं दु खम्, अथवा-त्रयाणा ५९७ । पाशकस्वरूपाणा समाहार त्रिदण्डं विराटगृहे एकवर्षपर्यन्तं पाशकं किं न अवहत्? अपि त्ववहदेव । युधिष्ठिरो ह्यज्ञातवाससमये विराटगृहे कङ्कनामा पाशकक्रीडामकरोऽदिति विराटपर्वणि भारती कथाऽनुसन्धेया ।

अत्रापि पूर्व एवालङ्कार । वृत्तं शार्दूलविक्रीडितम् ॥ २२४ ॥

रूपाभिजनसम्पन्नौ कुन्तीपुत्रौ बलान्वितौ।
गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ॥ २२५॥

रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना
कान्त्या श्रीरिव यात्र सापि विदशां कालक्रमादागता।
सैरन्ध्रीति सगर्वितं युवतिभिः साक्षेपमज्ञातया
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम्॥२२६॥

मेघवर्ण आह—तात! (१) असिधाराव्रतमिदं मन्ये यदरिणा सह संवासः। सोऽब्रवीत्—देव! एवमेतत्। परं न

"रूपेणे" ति—रूपाभिजनसम्पन्नौ=परमरूपवन्तौ कुलीनौ च बलान्वितौ=पराक्रमवन्तौ कुन्तीपुत्रौ=नकुलसहदेवौ (वस्तुतस्तु माद्रीपुत्रौ तथापि कुन्तीहृदये तौ युधिष्ठिरादिनिर्विशेषावभूतामिति—एतादृशेऽपि पाठे न दोष) गोकर्मरक्षाव्यापारे=गोपालककर्मणि अश्वकर्मणि चेत्यर्थ, विराटस्य प्रेष्यताम्=भृत्यताम् गतौ=प्राप्तावित्यर्थ। पथ्यावक्त्रं छन्द॥२२५॥

"रूपेणे"ति—अत्र=संसारे या अप्रतिमेन=निरुपमेण रूपेण, यौवनगुणै=यौवनेन पत्युना पत्नीत्वेऽपि सदैवाऽखण्डितेन दिव्येन तारुण्येन गुणैर्दयादाक्षिण्यादिभिश्च, श्रेष्ठे=उत्तमे कुले=वंशे जन्मना=उत्पत्त्या, तथा—कान्त्या=विशिष्टेन लावण्येन च, एतै सर्वै श्रीरिव=लक्ष्मीरिव आसीदिति शेष। सा अपि द्रौपदी कालक्रमात्=कष्टसमयप्रभावात् विदशाम्=विरुद्धामननुरूपा दशामवस्थाम् आगता=प्राप्ता। तथाहि—युवतिभि=कामिनीभि मत्स्यराजस्य सुन्दरीभि सैरन्ध्रीति=परगृहस्थिता शिल्पकारिणीति सगर्वितम्=साभिमानं साक्षेपम्=सतिरस्कारम् उक्तयेति शेष, अज्ञातया=सुगुप्तया तया द्रौपद्या=द्रुपदराजपुत्र्या याज्ञसेन्या मत्स्यराजभवने=विराट(गृहे) सद्मनि चन्दनं किं न घृष्टम्=नैव मर्दितम्, अपि तु घृष्टं मर्दितमेव।

दुर्भाग्यकारणादुक्तगुणविशिष्टाऽपि द्रौपदी विपन्निवारणप्रतीकारं मन्वाना नीचं कर्माकरोदिति भाव। शार्दूलविक्रीडितम्॥ २२६॥

(१) असिधाराव्रतम्=असिधारासदृशं नियमम्। यथा असिधारोपरि चलनं महत्कठिनमसम्भवप्रायम्, तद्वदतिकठिनं दु साध्यमित्यत्र तात्पर्यम्।

नादृङ्मूर्खसमागमः क्वापि मया दृष्टः। न च (१) महाप्रज्ञमनेकशास्त्रेष्वप्रतिमबुद्धिं रक्ताक्षं विना धीमान्। यत्कारणं तेन मदीयं (२) यथास्थितं चित्तं ज्ञातम्। ये पुनरन्ये मन्त्रिणस्ते महामूर्खा मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशला यैरिदमपि न ज्ञातम्। यतः—

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः।
अपसर्प्यः स धर्मत्वान्नित्योद्वेगी च दूषितः॥ २२७॥
आसने शयने याने पानभोजनवस्तुषु।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु॥ २२८॥

---

(१) महाप्रज्ञम्=धीमतामग्रणीम्। अनेकेति—अनेकेषु नानाविधेषु शास्त्रेषु आगमेषु अप्रतिमा असदृशी बुद्धिर्मतिर्यस्य स तमित्यर्थः। (२) यथास्थितम्=यत्करणार्थमहं गतस्तदवस्थमित्यर्थः। मन्त्रिमात्रेति—मन्त्रिमात्रमेव व्यपदेशः विशिष्टोऽपदेशः तेनोपजीवन्तीति तादृशाः नाम्नैव मन्त्रिणो मन्त्रिपदानर्हाश्चेत्यर्थः।

अथ भृत्यानां दोषमाह—"अरित" इति—अपसर्प्यः=स्वराज्ञः सकाशात् पृथग्भूय अर्थात् गुप्तं चारकर्म स्वीकृत्य अरितः=शत्रोः अभ्यागतः=प्राप्तः अन्तरतः स्वप्रभोरेव कार्यं साधयितुं प्रसिद्धितः शत्रुपक्षे पतित इत्यर्थः, तथा—तत्सङ्गतत्परः=तस्य शत्रोः सङ्गे सहवासे तत्परोऽत्यन्ताभिलाषी तत्सहवासेन स्वात्मलाभमात्रकाम इत्यर्थः, भृत्यः=भृत्यकर्मकारी न तु वस्तुतो भृत्यः अत एव दुष्टः=दुर्जनः सधर्मत्वात्=समानधर्मत्वात् गुप्तचारवत् कार्यकरत्वाद्धेतोः नित्योद्वेगी च=निरन्तरमुद्वेगकरः तथा—दूषितः=निन्दितश्च भवतीति शेषः, एते तु भृत्यपाशाः चारसधर्माणो भवन्ति न तु वस्तुतश्चारा इत्यर्थः, एतादृशा भृत्या राज्ञा परित्याज्या एवेति भावः॥२२७॥

उक्तमर्थं स्पष्टीकरोति—"आसन" इति—अरयः=शत्रवः आसने=स्थितिकाले, शयने=निद्रादशायाम्, याने=गमने, पानभोजनवस्तुषु=जलान्नाद्याहारपदार्थेषु, तथा—दृष्टाऽदृष्टप्रमत्तेषु=दृष्टेषु अदृष्टेषु प्रमत्तेषु=अनवहितेषु (मद्यादिना वा प्रमादङ्गतेषु) अरिषु=शत्रुषु प्रहरन्ति=तदीयभृत्यसाहाय्याद्धरन्तीति शेषः।

तस्मात् सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः।
आत्मानमादृतो रक्षेत् प्रमादाद्धि विनश्यति ॥ २२९ ॥

साधु चेदमुच्यते—

सन्तापयन्ति कमपथ्यभुजं न रोगा
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परिपीडयन्ति ॥ २३० ॥

लुब्धस्य नश्यति यशः पिशुनस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २३१ ॥

---

येन केनापि प्रकारेण शत्रुनिर्यातनस्य करणीयत्वादनेकैः छद्मभिर्गुप्तभृत्यद्वारा शत्रवो निघ्नन्तीति भावः ॥ २२८ ॥

एवं स्थिते आत्मरक्षोपायमाह—"तस्मादि"ति—तस्मात्=कारणात् बुधः=पण्डितः आदृतः=आदरवान् सप्रयत्नः सन् सर्वप्रयत्नेन=उद्योगमात्रेण सर्वैरपि देशकालानुरोधिभिरुपायैरित्यर्थः, त्रिवर्गनिलयम्=धर्मार्थकामाधारभूतम् आत्मानं रक्षेत्, हि=यतः प्रमादात्=अनवधानदानात् हेतोः विनश्यति=प्रणाशमुपैति। सर्वथैव प्रमादस्त्याज्य इति भावः ॥ २२९ ॥

"सन्तापयन्ती"ति—रोगाः=ज्वरादिव्याधयः कम् अपथ्यभुजम्=अपथ्यं भुङ्क्ते इत्यपथ्यभुक् तम् कुपथ्यकारिणं न सन्तापयन्ति=दुःखयन्ति अपि तु सर्वमपि ज्वरयन्ति, नीतिदोषाः=दुष्टा नीतयः कं दुर्मन्त्रिणम्=दुष्टामात्यं राजानं न उपयान्ति=सर्वमपि प्राप्नुवन्त्येवेत्यर्थः, श्रीः=धनादिसम्पत् कं न दर्पयति=दर्पवन्तं करोति सर्वमपि करोत्येवेत्यर्थः, मृत्युः कं न निहन्ति=मारयति, तथा—स्त्रीकृताः=स्त्रीभिर्घटिताः विषयाः=भोगात्मका व्यापाराः कं न परिपीडयन्ति=न व्यथयन्ति, सर्वेऽपि स्त्रीकृता भोगाः सन्तापप्रदा एवेत्यर्थः। वसन्ततिलकं वृत्तम् ॥ २३० ॥

"लुब्धस्ये"ति—लुब्धस्य=लोभवशीभूतस्य जनस्य यशः=कीर्त्ति

तद्राजन्! असिधाराव्रतं मयाचरितमरिसंसर्गादिति यद्भवतोक्तम्, तन्मया साक्षादेवानुभूतम्। उक्तं च—

अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः।
स्वार्थमभ्युद्धरेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ २३२ ॥
स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान्।
महता कृष्णसर्पेण मण्डूका बहवो हताः ॥ २३३ ॥

मेघवर्ण आह—कथमेतत्। स्थिरजीवी कथयति—

## कथा १५।

अस्ति वरुणाद्रिसमीप एकस्मिन्प्रदेशे (१) परिणतवया मन्दविषो नाम कृष्णसर्पः। स एवं चित्ते सञ्चिन्तितवान्—कथं नाम मया सुखोपायवृत्त्या वर्तितव्यमिति। ततो बहु-

---

नश्यति=प्रलुप्तं भवति, पिशुनस्य=सूचकस्य दुष्टस्य मैत्री नश्यतीति पूर्वेण सम्बध्यते, एवमुत्तरत्रापीयं क्रिया लगति। नष्टक्रियस्य=नष्टा क्रिया शौचाद्या-चारो यस्य स तस्य भ्रष्टाचारस्येत्यर्थ, कुलम्=वंश, अर्थपरस्य=धनलिप्सो धर्म, व्यसनिन=परस्त्रीभोगाद्यासक्तस्य विद्याफलम्=विद्याया फलं सद्यव-हारादि, कृपणस्य=मितम्पचस्य सौख्यम्=सुखम्, तथा—प्रमत्तसचिवस्य= प्रमत्ता अवधानशून्या सचिवा मन्त्रिणो यस्य तस्य नराधिपस्य=राज्ञ राज्यं नश्यतीत्यन्वय। वसन्ततिलकावृत्तम् ॥ २३१ ॥

"**अपमान**" मिति—प्राज्ञ=धीमान् अपमानम्=अप्रतिष्ठा पुरस्कृत्य= अग्रत कृत्वा, मानन्तु=सत्कारं स्वाभिमानन्तु पृष्ठत कृत्वा=उपेक्ष्येत्यर्थ, स्वार्थम्=अभीष्टं प्रयोजनम् उद्धरेत्=साधयेत्। हि=यत स्वार्थभ्रंश=स्वप्र-योजनविनाश मूर्खता=मौढ्यमेवास्तीत्यर्थ ॥ २३२ ॥

"**स्कन्धेने**" ति—बुद्धिमान् कालमासाद्य=दु:खसमयं प्राप्य स्क-न्धेन=वहप्रदेशेनापि शत्रुं वहेत्=धारयेत्, तथाहि—महता=महाकायेन कृष्णसर्पेण कालनागेन बहव=अनेके मण्डूका=भेका हता= मारिता ॥ २३३ ॥

(१) परिणतवया'=वृद्ध।

मण्डूकं ह्रदमुपगम्य (१) धृतिपरीतमिवात्मानं दर्शितवान् । अथ तथा स्थिते तस्मिन्नुदकप्रान्तगतेनैकेन मण्डूकेन पृष्टः—माम ! किमद्य यथापूर्वमाहारार्थं न विहरसि । सोऽब्रवीत्—भद्र ! कुतो मे मन्दभाग्यस्याहाराभिलाषः । यत्कारणमद्य रात्रौ प्रदोष एव मयाहारार्थं (२) विहरमाणेन दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया (३) क्रमः सज्जितः । सोऽपि मां दृष्ट्वा मृत्युभयेन (४) स्वाध्यायप्रसक्तानां ब्राह्मणानामन्तरमपक्रान्तो न विभावितो मया क्वापि गतः । (५) तत्सदृशमोहितचित्तेन मया कस्यचिद् ब्राह्मणस्य सूनो (६) ह्रदतटजलान्तःस्थोऽङ्गुष्ठो दष्टः । ततोऽसौ सपदि पञ्चत्वमुपागतः । अथ तस्य पित्रा दुःखितेनाहं (७) शप्तः । यथा—दुरात्मन् ! त्वया निरपराधो मत्सुतो दष्टः । तदनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि । तत्प्रसादलब्धजीविकया (८) वर्तिष्यसे इति । ततोऽहं युष्माकं वाहनार्थमागतोऽस्मि । तेन च सर्वमण्डूकानामिदमावेदितम् । ततस्तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जलपादनाम्नो (९) दर्दुरराजस्य विज्ञप्तम् । अथासावपि मन्त्रिपरिवृतोऽत्यद्भुतमिदमिति मन्यमानः (१०) ससम्भ्रमं ह्रदादुत्तीर्य मन्दविषस्य फणिनः फणाप्रदेशमधिरूढः । शेषा

---

(१) धृतिपरीतम्=धैर्यव्रतिनम् । (२) विहरमाणेन=विचरता । (३) क्रम = गृहीतुमुच्छलनरूप परिकर । सज्ज =सज्जित । (४) स्वाध्यायप्रसक्तानाम्= स्वाध्याये वेदपाठे प्रसक्ताना संलग्नानाम्, वेदाध्ययनरतानामित्यर्थ । अन्तरमपक्रान्त =अभ्यन्तरम्प्रविष्ट । विभावित =प्रतीतो लक्षित इत्यर्थ । (५) तत्सदृशेति—तत्सदृशे मण्डूकतुल्ये ब्राह्मणसूनो विप्रपुत्रस्य अङ्गुष्ठे मोहितं भ्रान्त चित्त यस्य स तेन तादृशेन मया । (६) ह्रदेति—ह्रदस्य सरोवरस्य यस्तट तस्य जलस्यान्तस्थ सरोवरतीरान्तिकस्थजलाभ्यन्तरवर्त्ती । (७) शप्त =अभिसम्पातित क्रुष्ट इत्यर्थ । (८) वर्तिष्यसे=जीविष्यसि । (९) दर्दुरराजस्य= मण्डूकाना राज्ञ । (१०) ससम्भ्रमम्=ससत्वरम् ।

अपि यथाज्येष्टं तत्पृष्ठोपरि समारुरुहुः । किं वहुना । यदुपरि स्थानमप्राप्तवन्तस्तस्यानुपदं धावन्ति । मन्दविपोऽपि तेषां तुष्टयर्थमनेकप्रकारान् गतिविशेषानदर्शयत् । अथ जलपादो (१) लब्धतदङ्गसंस्पर्शसुखस्तमाह—

न तथा करिणा यानं तुरगेण रथेन वा ।
नरयानेन वा यानं यथा मन्दविपेण मे ॥ २३४ ॥

अथान्येद्युर्मन्दविपः (२)छद्मना मन्दं मन्दं विसर्पति । तच्च दृष्ट्वा जलपादोऽब्रवीत्—भद्र ! मन्दविप ! यथापूर्वं किमद्य साधु नोह्यते । मन्दविपोऽब्रवीत्—देव ! अद्य (३) आहारवैकल्यान्न मे वोढुं शक्तिरस्ति । अथासावब्रवीत्—भद्र ! भक्षय क्षुद्रमण्डूकान् । तच्छ्रुत्वा (४) प्रहर्पितसर्वगात्रो मन्दविपः ससम्भ्रममब्रवीत्—ममायमेव विप्रशापोऽस्ति । तत्तवानेन (५) अनुज्ञावचनेन प्रीतोऽस्मि । ततोऽसौ नैरन्तर्येण मण्डूकान् भक्षयन् कतिपयैरेवाहोभिर्वलवान् संवृत्तः । प्रहृष्टश्च (६) अन्तर्लीनमवहस्येदमब्रवीत्—

मण्डूका विविधा ह्येते छलपूर्वोपसादिताः ।
कियन्तं कालमक्षीणा भवेयुः खादिता मम ॥ २३५ ॥

---

(१) लब्धेति—लब्धमनुभूतं तदङ्गसंस्पर्शसुखं येन स ।

"न"इति—मन्दविपेण तदाख्येन सर्पेण मे=मम यथा यानम्=वाहनम् तथा—करिणा=गजेन, तुरगेण=अश्वेन, वा=अथवा रथेन यानं न, वा=किंच नरयानेन=पाल्लङ्कया शिविकया अपि यानं नास्तीत्यर्थ ॥ २३४ ॥

(२) छद्मना=कपटेन । (३) आहारवैकल्यात्=भक्ष्याभावात् । (४) प्रहर्पितसर्वगात्र =विकम्पितसर्वावयव । (५) अनुज्ञावचनेन=आदेशेन । (६) अन्तर्लीनम्=सुगुप्तम् । अवहस्य=मन्दं हसित्वा ।

"मण्डूका"इति—एते "हि" निश्चित छलपूर्वोपसादिता =कपटविधिना प्राप्ता विविधा =नानाप्रकारा मम खादिता =मया भक्षिता अपि मण्डूका भेका कियन्त कालम्=कियत्कालपर्यन्तम् अक्षीणा =क्षयरहिता भवेयु ॥ २३५ ॥

जलपादोऽपि मन्दविषेण (१) कृतकवचनव्यामोहितचित्तः किमपि नावबुध्यते। अत्रान्तरेऽन्यो महाकायः कृष्णसर्पस्तमुद्देशं समायातः। तं च मण्डूकैर्वाह्यमानं दृष्ट्वा विस्मयमगमत्। आह च—वयस्य ! यदस्माकमशनं तैः कथं वाह्यसे। विरुद्धमेतत्। मन्दविषोऽब्रवीत्—

सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किञ्चित्कालं प्रतीक्ष्योऽहं घृतान्धो ब्राह्मणो यथा॥ २३६ ॥

सोऽब्रवीत्—कथमेतत्। मन्दविषः कथयति—

## कथा १६।

अस्ति कस्मिंश्चिदधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः। तस्य भार्या (२) पुंश्चल्यन्यासक्तमना अजस्रं विटाय सखण्डघृतान् घृतपू(व)रान् कृत्वा भर्तुश्चौरिकया प्रयच्छति। अथ कदाचिद्भर्ता

---

(१) कृतकेति—कृतकेन कृत्रिमेन सकपटेन वचनेन वाक्येन व्यामोहित भ्रान्तिमापन्नं चित्तं यस्य स।

"सर्व" मिति—दर्दुरैः=मण्डूकैः अस्माकं भक्ष्यभूतैरपि यथा=येन प्रकारेण वाह्यः=यानभूत अस्मि=अह संवृत्त एतत्सर्वमहं विजानामि, दुरतिक्रमकालहेतोरेतत्सर्वं मया सह्यते। अहं किञ्चित् कालम्=अल्पं यावत्समयं तथा प्रतीक्ष्य =भवता प्रतिपाल्य यथा घृतान्ध =घृतेनान्ध. अर्थात् घृतसंस्कृतद्रव्यभक्षणेन नेत्राभ्यां विहीन संवृत्त कपटेनात्मानमन्धं प्रदर्शयन् ब्राह्मण = विप्रोऽवेक्षणके इति शेष। ममेदं गर्हितमाचरणं कियत्कालोत्तरमेव ज्ञातं भविष्यतीति भाव ॥ २३६ ॥

(२) पुंश्चली=व्यभिचारिणी। अन्यस्मिन् भर्तुर्भिन्ने परपुरुषे आसक्तमनुरक्तं मनो यस्या सा अन्यासक्तमना। अजस्रम्=निरन्तरम्, प्रतिदिनमित्यर्थ। विटाय=धूर्ताय स्वजारायेति यावत्। सखण्डघृतान्=खण्डघृताभ्यां सहितान् संस्कृतानित्यर्थ। घृतपू(व)रान्=पक्वान्नविशेषान्, पञ्जाबीभाषायां "घीवर" इति प्रसिद्धि। "घृतपूर" पाठे तु घृतापूपार्थो ज्ञेय। कृत्वा=संसाध्य। भर्तुः=स्वामिन, भर्तारमनादृत्येत्यर्थ। "षष्ठी चानादरे" (२।३।३८) इत्यनादरे षष्ठी।

दृष्ट्वाब्रवीत्—भद्रे ! किमेतत्परिदृश्यते । कुत्र वाजस्रं नयसीदम्। कथय सत्यम्। सा (१) चोत्पन्नप्रतिभा कृतकवचनैर्भर्तारमब्रवीत्—अस्त्यत्र नातिदूरे भगवत्या देव्या आयतनम्। तत्राह (२)मुपोषिता सती बलिं भक्ष्यविशेषांश्चापूर्वान्नयामि। अथ (३) तस्य पश्यतो गृहीत्वा तत्सकलं देव्यायतनाभिमुखी प्रतस्थे। यत्कारणं देव्या निवेदितेनानेन मदीयो भर्तैवं (४) मंस्यते यन्मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान्नित्यमेव नयतीति। अथ देव्यायतने गत्वा स्नानार्थं नद्यामवतीर्य यावत् स्नानक्रियां करोति, तावद्भर्तान्यमार्गान्तरेणागत्य देव्याः पृष्ठतोऽदृश्यो (५) ऽवतस्थे। अथ सा ब्राह्मणी स्नात्वा देव्यायतनमागत्य स्नानानुलेपनमाल्यधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्—भगवति ! केन प्रकारेण मम भर्तान्धो भविष्यति। तच्छ्रुत्वा (६) स्वरभेदेन देवीपृष्ठस्थितो ब्राह्मणो जगाद—यदि त्वमजस्रं घृतवरादिभक्ष्यं तस्मै भर्त्रे प्रयच्छसि, ततः शीघ्रमन्धो भविष्यति । सा तु (७) बन्धकी कृतकवचनवञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ।

---

चौरिकया=तस्करवृत्त्या। यद्वा—'भर्तु' इति "अन्तर्धौ येनादर्शनमिच्छति" (१।४।२८) इति सूत्रेणात्मादर्शनकर्तृत्वेनेष्टस्य भर्तुरपादानत्वात् पञ्चमी । चौरिकया=चौर्येण भर्तुरपहृत्य भर्ता यथा न पश्यति तथा विधायेत्यर्थो बोध्य । (१) उत्पन्नेति—उत्पन्ना जाता प्रतिभा तात्कालिकी बुद्धिर्यस्या सा, कालोचितसमुपजातमति प्रत्युत्पन्नमतिरिति यावत् । कृतकवचनै=कृत्रिमवाक्यै, छलवचनैरित्यर्थ । (२) उपोषिता=कृतोपवासा। बलिम्=देव्या उपहारम् । अपूर्वान्=प्रतिदिन मया सम्पादितान्। (३) तस्य=भर्तु । पश्यत =पश्यन्तं भर्तारमनादृत्येत्यर्थ ।

(४) मंस्यते=अवगमिष्यति। (५) अवतस्थे=स्थित । (६) स्वरभेदेन=स्वरविकारेण स्वं स्वरमन्यादृशं कृत्वेत्यर्थ । (७) बन्धकी=कुलटा। कृतकेति—कृतकवचनेन वञ्चित प्रतारित मानसं हृदयं यस्या सा ।

अथान्येद्युर्ब्राह्मणेनाभिहितम्—भद्रे ! नाहं सुतरां पश्यामि । तच्छ्रुत्वा चिन्तितमनया—देव्याः प्रसादोऽयं प्राप्त इति । अथ तस्यां (१) हृदयवल्लभो विटस्तत्सकाशमन्धीभूतोऽयं ब्राह्मणः किं मम करिष्यतीति निःशङ्कः प्रतिदिनमभ्येति । अथान्येद्युस्तं प्रविशन्तम् (२) अभ्याशगतं दृष्ट्वा केशैर्गृहीत्वा (३) लगुड-पार्ष्णिप्रभृतिप्रहारैस्तावदताडयत्, यावदसौ पञ्चत्वमाप । तामपि दुष्टपत्नीं भिन्ननासिकां कृत्वा (४) विससर्ज । अतोऽहं ब्रवीमि—"सर्वमेतद्विजानामि" इति ॥ अथ मन्दविषोऽन्तर्लीन-मवहस्य पुनरपि मण्डूका विविधास्वादा इति तमेवमब्रवीत् । अथ जलपादस्तच्छ्रुत्वा सुतरां व्यग्रहृदयः किमनेनाभिहितम् इति तमपृच्छत्—भद्र ! किं त्वयाभिहितमिदं विरुद्धं वचः । अथासावाकारप्रच्छादनार्थं न किंचित् इत्यब्रवीत् । तथैव कृतकवचनव्यामोहितचित्तो जलपादस्तस्य (५) दुष्टाभिसन्धिं नावबुध्यते । किं बहुना । तथा तेन सर्वेऽपि भक्षिता यथा बीज-मात्रमपि नावशिष्टम् । अतोऽहं ब्रवीमि—"स्कन्धेनापि वहे-च्छत्रुम्" इति ॥ अथ राजन् ! यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः, तथा मया सर्वेऽपि वैरिण इति । साधु चेदमुच्यते—

वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति ।
स मूलोन्मूलनं कुर्याद्वायुर्यो मृदुशीतलः ॥ २३७ ॥

---

(१) हृदयवल्लभः=मनःप्रियः । (२) अभ्याशगतम्=समीपे वर्तमानम् । (३) लगुडेति—लगुडो दण्डः, पार्ष्णिः पादयोरधोभागः "तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः" इत्यमरः । लगुडश्च पार्ष्णिश्च लगुडपार्ष्णी तौ प्रभृती आदिभूतौ येषां ते च ते प्रहारा आघातास्तैरित्यर्थः । (४) विससर्ज=तत्याज । (५) दुष्टाभिसन्धिम्=दुष्टमभिप्रायम् । नावबुध्यते=न जानाति ।

"वने" इति—वने=अरण्ये प्रज्वलितः=प्रकर्षेण दीप्तः वह्निः=अनलः दहन्=वनं भस्मीकुर्वन् सन् मूलानि द्रुमाणामिति शेषः, रक्षति=दग्धत्राणा

मेघवर्ण आह--तात ! सत्यमेवैतत्। ये (१) महात्मानो भवन्ति ते महासत्त्वा आपद्गता अपि(२)प्रारब्धं न विसर्जयन्ति । उक्तं च यतः—

महत्त्वमेतन्महतां नयालङ्कारधारिणाम् ।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ २३८ ॥

तथा च—

प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २३९ ॥

---

मूलविनाशने समर्थो न भवतीत्यर्थ । परन्तु यो वायु मृदुशीतल =मृदु कोमल शीतलोऽनुष्णस्पर्शश्च स पुन मूलोन्मूलनम्=वृक्षाणा मूलोत्पाटनं कुर्यात् करोत्येव येन पुनस्तेषा प्ररोहो न भवितुमर्हतीति भाव ॥ २३७ ॥

(१) महात्मान =महाशया. । (२) प्रारब्धम्=आरब्धकार्यम् । विसर्जयन्ति=परित्यजन्ति ।

**"महत्त्वम्"** इति—नयालङ्कारधारिणाम्=नयो नीतिरेवालङ्कारो भूषणं तं धरन्तीति ते तादृशास्तेषा नयनिपुणानामित्यर्थ , एवम्भूताना महताम्=महात्मनाम् एतदेव महत्त्वम्=एष एव महिमा यत् (ते) कृच्छ्रे=कष्टप्रदे व्यसनोदये=विपदामागमनेऽपि आरब्धम्=प्रारब्धं कार्यं न मुञ्चन्ति=नैव परित्यजन्ति । महान्तो हि दृढसङ्कल्पा भवन्तीत्यर्थ ।

आरब्धकार्यस्य फलपर्यन्तमनुष्ठानं महता लक्षणमिति भाव ॥२३८॥

**"प्रारभ्यते"** इति—नीचै =नीचपुरुषै क्षुद्रप्रकृतिभिर्जनै विघ्नभयेन=विघ्नाना प्रत्यूहाना भयेन शङ्कया खलु=निश्चयेन न प्रारभ्यते=कार्यारम्भो न विधीयते, मध्या =मध्यमास्तु जना अधमजनापेक्षया किञ्चिदुन्नता विघ्नविहता =अन्तरायप्रतिरुद्धा विरमन्ति=निवर्त्तन्ते फलमनासाद्यैव विहतं कार्यं मध्य एव पातयन्ति नतु तत्फलाय यत्नान्तरमारभन्ते इत्यर्थ , उत्तमगुणा =उत्तमप्रकृतयस्तु महात्मान सहस्रगुणितै =असङ्ख्यातैरपि विघ्नै =अन्तरायै हन्य-

तत्कृतं निष्कण्टकं मम राज्यं शत्रून्निःशेषतां नयता त्वया। अथवा युक्तमेतन्नयवेदिनाम्। उक्तं च यतः—

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च।
व्याधिशेषं च निःशेषं कृत्वा प्राज्ञो न सीदति ॥२४०॥

सोऽब्रवीत्—देव! भाग्यवांस्त्वमेवासि, यस्यारब्धं सर्वमेव संसिध्यति। तन्न केवलं शौर्यं कृत्यं साधयति, किंतु प्रज्ञया यत्क्रियते तदेव विजयाय भवति। उक्तं च—

शस्त्रैर्हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकं
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ २४१ ॥

तदेवं (१) प्रज्ञापुरुषकाराभ्यां युक्तस्यायत्नेन कार्यसिद्धयः सम्भवन्ति।

---

माना.=प्रतिरुध्यमाना अपि प्रारब्धम्=उपक्रान्तं कार्यं न परित्यजन्ति=नैव जहतीत्यर्थ। एवं मध्यमादिभेदेन त्रिविधा. पुरुषा उक्ता। वसन्ततिलकम्॥२३६॥

"ऋणशेष" मिति—प्राज्ञ=मतिमान् जन ऋणशेषम्, अग्निशेषम्, शत्रुशेषम्, तथैव च व्याधिशेषं=रोगशेषम् नि शेषं कृत्वा=समूलमुन्मूल्य न सीदति=नैव दु खी भवतीत्यर्थ। ऋणादीना शेषभाव. पुनरपि महाकष्टप्रद इति भाव ॥ २४० ॥

बुद्धिबलशस्त्रबलयोर्बुद्धिबलस्य प्राधान्यमाह—"शस्त्रै" रिति—शस्त्रै=प्रहरणबलै हता रिपव=शत्रव नहि हता भवन्ति। (किन्तु) प्रज्ञाहतास्तु=बुद्धिप्रभावेण हतास्तु सुहता=सम्यक् हता विनष्टा भवन्ति, तथाहि—शस्त्रन्तु पुरुषस्य=रिपोर्जनस्य एकं शरीरमेव हन्ति, प्रज्ञा=बुद्धिस्तु कुलं=वंशं विभवम्=ऐश्वर्यम् यश=कीर्त्तिञ्च हन्ति=कुलादिक सर्वमेव विध्वंसयतीत्यर्थ। महता खलु बुद्धिरेव समूलोन्मूलनकरीति भाव ॥ २४१ ॥

(१) प्रज्ञापुरुषकाराभ्याम्=बुद्धिपौरुषाभ्यामित्यर्थ।

प्रसरति मतिः कार्यारम्भे दृढीभवति स्मृतिः
स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥२४२॥

तथा च (१) नयत्यागशौर्यसम्पन्ने पुरुषे राज्यमिति । उक्तं च—

त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥२४३॥

---

"प्रसरती" ति—भविष्यत =ऐश्वर्यं प्राप्स्यत नरस्य=पुरुषस्य प्रज्ञया पौरुषेण च युक्तस्य नरस्येत्यर्थ, कार्यारम्भे=आरब्धकार्यविषये मति प्रसरति प्रवृत्ता भवति स्फुरतीत्यर्थ, स्मृति =स्मरणशक्ति दृढीभवति=परिपक्वा जायेत कुण्ठिता न भवतीत्यर्थ, मन्त्र =मन्त्रणा विचारणा स्वयम्=स्वत एव अर्थान्=साध्यानि वस्तूनि मुख्यफलप्राप्तिहेतुभूतानुपायानित्यर्थ, उपनयन्=प्रापयन् मनस्युद्भावयन् विप्लवम्=विपरीतभावं न गच्छति साध्यसाधनाय कृतो मन्त्रोऽनुकूल एव जायत इत्यत्र तात्पर्यम्, तर्क=ऊहापोहात्मिका विचारशक्ति सफल सन् स्फुरति=आविर्भवति, चित्तम्=हृदयं समुन्नतिम्=ऐश्वर्यलाभम्प्रत्युन्मुखीभूय विशालता निर्मलता वा समश्नुते=धारयते, तथा—श्लाघ्ये=श्लाघनीये प्रशंसार्हे कृत्ये=कार्ये रति =प्रीति अभिनिवेशो वा भवति=जायते ।

सर्वाण्यमूनि लक्षणानि प्रज्ञापौरुषाभ्यामुपेतस्य नरस्य भाविन्या उन्नते सूचकानीत्यत्र तात्पर्यम् । वसन्ततिलकम् ॥ २४२ ॥

(१) नयेति—नयो नीति, त्यागो दानम्, शौर्यम् वीरता, एतै सम्पन्ने । नयसम्पन्ने, त्यागशीले, शूरे चेत्यर्थ ।

नयादिसम्पन्ने राज्यं भवतीत्युक्तमर्थं सतर्कमाह—"त्यागिनी"ति—त्यागिनि=दानशूरे, शूरे=वीर्यवति, तथा च—विदुषि=नीतिविदि उक्तदानादित्रिनयगुणवति महापुरुषे इत्यर्थ, संसर्गरुचि =सम्बन्धकामनावान् प्रीतिमान् जन गुणी=गुणज्ञो भवति । दोषगुणाना संसर्गजन्यत्वादिति भाव । गुणवति=उक्तसद्गुणसमन्विते पुरुषे धनम्=अर्थो वित्तमिति यावत्, धनात्

मेघवर्ण आह—नूनं सद्यःफलानि नीतिशास्त्राणि, यत्त्वया (१) अनुकृत्येनानुप्रविश्यारिमर्दनः सपरिजनो निःशेषितः। स्थिरजीव्याह—

तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थ-
स्तस्याप्यादौ संश्रयः साधुयुक्तः।
उत्तुङ्गाग्रः सारभूतो वनानां
मान्याभ्यर्च्यश्छिद्यते पादपेन्द्रः॥ २४४॥

---

श्री=पुत्रमित्रकलत्रप्रासादादिसम्पत्, श्रीमति=सम्पत्तिशालिनि सति आज्ञा=अव्याहताऽऽदेशरूपा वाक्, तत=अव्याहताज्ञाशक्त्यनन्तरं राज्यं जायते इतीयं क्रिया सर्वत्राध्याहृत्य योज्या। आर्यावृत्तम्॥ २४३॥

(१) अनुकृत्येन=अनुसरणेन। अनुप्रविश्य=अभ्यन्तरीभूय। अरिमर्दन.=शत्रुसंहार। सपरिजन=सपरिवार.। नि शेषित=उन्मूलित।

दण्डनामकोपायेन साध्येऽप्यर्थे प्रथमं सामप्रयोग एवादरणीयो भवतीत्याह—"तीक्ष्णे" ति-–तीक्ष्णेन दण्डाख्येन उपायेन या प्राप्तिः मन्त्रणास्वीकार तया साध्योऽपि य.=कश्चन अर्थ·=शत्रुपराजयादिरूप तस्यापि आदौ=प्रथम संश्रय=सामप्रयोगेन वश्यत्वसम्पादनम्, साधुयुक्त·=साधुभिर्युक्तो नयनैपुण्येन कार्यसाधनदक्षाणा नीतिविदा युक्त सम्मतो मत इत्यर्थ, तथा चोक्तं मनुस्मृतौ सप्तमेऽध्याये—

साम्ना दानेन भेदेन समस्तैरथवा पृथक्।
विजेतु प्रयतेतारीन् न युद्धेन कदाचन॥ (१९८) इति।

तथाचातिकठिनस्याप्यर्थस्य साधनाय प्रथमं सामोपायेनैव व्यवहर्त्तव्यमिति भाव।

उक्तमर्थमुत्तरार्धेन समर्थयते—"उत्तुङ्गेति"ति—उत्तुङ्गमत्युन्नतम् अग्रं पुरोभागो यस्य स तादृश, वनानाम्=अरण्याना सारभूत=श्रेष्ठतरोऽपि पादप=वृक्ष मान्याभ्यर्च्य=आदौ मान्य मानित पश्चात् अभ्यर्च्य=पूजित· सन् छिद्यते=कृत्यते लोकैरिति शेष।

लोका हि कस्यचिन्महातरोरुच्छेदनात्प्राक् तं मानयन्त्यर्चयन्ति च तथैव महारिपोर्विजयायादौ समीचीनतया सान्त्वनमेवाश्रयणीयमिति भाव.। अर्थान्तरन्यास। मालिनीवृत्तम्॥ २४४॥

अथवा स्वामिन् ! किं तेनाभिहितेन यदनन्तरकाले क्रियारहितमसुखसाध्यं वा भवति । साधु चेदमुच्यते--

अनिश्चितैरध्यवसायभीरुभिः
पदे पदे दोषशतानुदर्शिभिः ।
फलैर्विसंवादमुपागता गिरः
प्रयान्ति लोके परिहासवस्तुताम् ॥ २४५ ॥

न च लघुष्वपि कर्तव्येषु धीमद्भि (१) रनादरः कार्यः । यतः--

शक्ष्यामि कर्तुमिदमल्पमयत्नसाध्य-
मत्रादरः क इति कृत्यमुपेक्षमाणाः ।
केचित्प्रमत्तमनसः परितापदुःख-
मापत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ २४६ ॥

---

"अनिश्चितै"रिति--अनिश्चितैः=न निश्चितैः संशयापन्नैः, अध्यवसायभीरुभिः=अध्यवसाय उद्योगः ततो भीरुभिः भीतैः मृतोत्साहैरित्यर्थः, पदे पदे=प्रतिपदं सर्वत्रैवेत्यर्थः, दोषशतानुदर्शिभिः=अनेकविधच्छिद्रानुसन्धानपरैः जनैः कर्तृभूतैः गिरः=प्रयुक्ता वाचः फलैः=परिणामैः विसंवादम्=विरुद्धवादं विपरीतं फलमित्यर्थः, उपागताः=प्राप्ताः सत्यः लोके=जगति परिहासवस्तुताम्=परिहासविषयतां प्रयान्ति ।

येषां मन्त्रिणां विफला वाक्, केवलमाडम्बररूपा ते लघवो न किञ्चित्साधनायालम्भवन्तीति भावः ॥ २४५ ॥

(१) अनादरः=तिरस्कारः ।

"शक्ष्यामि"इति--केचित् पुरुषाः इदम्=एतत्कार्यम् अल्पम्=तुच्छम्, अयत्नसाध्यम्=यत्नं विनापि साध्यम् ईषदुद्योगनिष्पाद्यमित्यर्थः, अतो हेतोः कर्तुम्=साधयितुं शक्ष्यामि=समर्थो भविष्यामि अत्र=एवम्भूते लघुनि कार्ये कः आदरः=सत्कारो यत्नो वा इति=अमुना प्रकारेण कृत्यम्=अवश्यकरणार्हं कार्यविशेषम् उपेक्षमाणाः=अवज्ञया परिजहतः अतएव प्रमत्तमनसः=अनवहितचेतसः आपदां विपत्तीनां प्रसङ्गेन सम्पातेन सुलभम्=अनायासप्राप्यम् परितापदुःखम्=पश्चात्तापक्लेशं प्रयान्ति=अनुभवन्ति । वसन्ततिलकं वृत्तम् ॥ २४६ ॥

तदद्य (१) जितारेर्मद्विभोर्यथापूर्वं निद्रालाभो भविष्यति।
उच्यते चैतत्—

निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखम्।
सदा दृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते॥ २४७॥

तथा च—

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषां
कार्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम्।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदयेऽवकाशविषया तावत्कथं निर्वृतिः॥ २४८॥

---

(१) जितारे=पराजितसपत्नस्य।

"निःसर्पे" इति—निःसर्पे=सर्पशून्ये बद्धसर्पे=कीलितसर्पे वा भवने=गृहे सुखम्=आयासं विनैव सुप्यते=शीयते निद्रासुखमनुभूयत इत्यर्थः। दृष्टभुजङ्गे=दृष्टो विलोकितो भुजङ्गः सर्पो यत्र तादृशे गृहे तु दुःखेन=कष्टेन निद्रा लभ्यते=सुप्यत इत्यर्थः। पक्षे भुजङ्गो विटो धूर्तः शत्रुश्चेति व्यङ्ग्यम्॥२४८॥

अजितशत्रोर्निद्रा नायातीति का कथा किन्तु तस्य कदापि शान्तिर्न भवतीत्याह—"विस्तीर्णे" ति—मानोत्सेकपराक्रमव्यसनिनः=मानस्याहङ्कारस्य य उत्सेक उद्रेकः पराक्रमश्च तयोर्व्यसनिनः आसक्तिभाजः अतिमानिनः बहुपराक्रमिणश्चेत्यर्थः एवम्भूता ये महापुरुषास्ते, विस्तीर्णैः=विशालैः व्यवसायैः=उद्यमैः साध्यानि सम्पाद्यानि तथा महान्ति=प्रचुराणि विशालत्वेनैवायाससाध्यानीत्यर्थः तेषाम्, तथा—स्निग्धैः=स्नेहवद्भिर्बन्धुभिः उपभुक्ताश्चिन्तिता आशिषो मङ्गलवादा येषु तेषां नयसाहसोन्नतिमताम्=नयो नीतिः, उत्साहः उद्योगः, उन्नतिः ऐश्वर्योदयः ते एषां सन्तीति ते नयसाहसोन्नतिमन्तस्तेषाम्, तथा—इच्छापदारोहिणाम्=इच्छापदमभिलषितं स्थानमारोहन्तीति इच्छापदारोहिणस्तेषां वाञ्छितानामित्यर्थः कार्याणाम्=विधेयार्थानाम् पारम्=अवसानं यावत्=यावत्कालपर्यन्तं न गताः=न प्राप्ताः सफलार्था न जाता इत्यर्थः, तावत् सामर्षे=अमर्षोऽक्षमा तेन सह वर्तमाने अक्षमान्वाते अत्यन्तं विह्वलीभूते हृदये अवकाशविषया=अवकाशोऽत्र

(१) तदवसितकार्यारम्भस्य विश्राम्यतीव मे हृदयम्। तदिदमधुना (२) निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेण (३) अचलच्छत्रासनश्रीश्चिरं भुङ्क्ष्व। अपि च—

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः।
अजागलस्तनस्येव तस्य राज्यं निरर्थकम्॥ २४९॥

गुणेषु रागो व्यसनेष्वनादरो
रतिः सुभृत्येषु च यस्य भूपतेः।
चिरं स भुङ्क्ते चलचामरांशुकां
सितातपत्राभरणां नृपश्रियम्॥ २५०॥

---

विश्राम स विषयो यस्याः विश्रमावसाना निर्वृति=आनन्द कथं स्यादिति शेष, कथमपि भवितुं नार्हतीत्यर्थः।

अकृतकार्यावसाना महात्मान फलप्राप्तिपर्यन्तं सोत्साहा सत्वराश्च तिष्ठन्ति, नत्वालस्योपेतं सुख भुञ्जत इति भाव। शार्दूलविक्रीडितम्॥ २४८॥

(१) तदिति—तत् तस्मात् कारणात् अवसितकार्यारम्भस्य अवसित समाप्त कार्यस्यारम्भो यस्य तस्य फलपर्यन्तोद्योगकारिण समाप्तकार्यस्येति निर्गलितोर्थ। विश्राम्यति=सुखयति। (२) निहतकण्टकम्=विनष्टसपत्नम्। (३) अचलेति—अचला स्थिरा छत्रासनयो. श्रियो यस्य स तादृश, स्थिराधिपत्य इत्यर्थ।

"प्रजा" इति—यस्तु राजा=नृपति रक्षादिभि=पालनादिभि गुणै= प्रजा लोकान् न रञ्जयेत्=नैव हर्षयेत् रक्षादिद्वारा लोकाना सन्तोषं न कुर्यादित्यर्थ, तस्य राज्ञ राज्यम्=राष्ट्रम् अजागलस्तनस्य=छाग्या गले लम्बमानस्य स्तनाकारस्य मांसखण्डस्येव जन्म निरर्थकम्=निष्फलं भवतीति शेष॥२४९॥

"गुणेषु" इति—यस्य भूपते=राज्ञ गुणेषु=शौर्योदार्यादिषु राग= प्रीति, व्यसनेषु=मद्यपानादिषु अनादर=अप्रीति, सुभृत्येषु च=उत्तमेषु तत्तत्कार्यसाधनक्षमेषु भृत्येषु=सेवकेषु रति=प्रीतिविशेष, स=राजा चिरम्= बहुकालपर्यन्तं नृपश्रियम्=राज्यलक्ष्मीं भुङ्क्ते=सेवते, कथम्भूता नृपश्रियम्—चलचामरांशुकाम्—चलं चपलं चामरमेवांशुकमम्बरं यस्या सा ताम्, तथा-

नच त्वया प्राप्तराज्योऽहमिति मत्वा (१) श्रीमदेनात्मा व्यंसयितव्यः। यत्कारणं चला हि राज्ञो विभूतयः, (२) वंशारोहणवद्राज्यलक्ष्मीर्दुरारोहा, क्षणविनिपातरता प्रयत्नशतैरपि धार्यमाणा दुर्धरा, प्रशस्ताराधिताप्यन्ते विप्रलम्भिनी, वानरजातिरिव विद्रुतानेकचित्ता, पद्मपत्रोदकमिवाघटितसंश्लेषा, पवनगतिरिवातिचपला, (३) अनार्यसङ्गतमिवास्थिरा, आशीविष इव दुरुपचारा, सन्ध्याभ्रलेखेव मुहूर्तरागा, जलबुद्बुदावलीव स्वभावभङ्गुरा, (४) सीरप्रकृतिरिव कृतघ्ना, स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा। अपि च—

---

सितातपत्राभरणाम्=सितं श्वेतमातपत्रं छत्रमेवाभरणं भूषणं यस्याः सा ताम्। उक्तगुणसम्पन्नस्य राज्ञो राज्यश्रीश्चिरस्थायिनी भवतीति भाव ॥२५०॥

(१) श्रीमदेन=श्रियो राजलक्ष्म्या मदेन गर्वेण। आत्मा व्यंसयितव्य=व्यसनेषु पात्यः। (२) वंशारोहणवत्=वंशो वेणु' तदुपर्यारोहणवदित्यर्थ। दुरारोहा=दुरधिगम्या क्लेशै प्राप्येत्यर्थ। क्षणेति—क्षणविनिपाते क्षिप्रं विनाशे रता प्रीतिमती, क्षणभङ्गुरेत्यर्थ। प्रशस्तेति—प्रशस्तं प्रकृष्टमाराधिता अपि। अन्ते=अवसाने। विप्रलम्भिनी=प्रतारिणी। विद्रुतेति—विद्रुतं विह्वलीभूतमनेकेषा चित्तं यया सा—वानरजातिपक्षे—विद्रुतं चपलम् अनेकं अनेकविषयं चितं यस्या सा। अघटितेति—अप्राप्तसम्बन्धा, पक्षे—जलेन असम्पृक्ता।

(३) अनार्येति—अनार्याणा दुष्टाना सङ्गतमिव मैत्रीव अस्थिरा क्षणस्थायिनी। आशीविष इव=भुजङ्ग इव दुरुपचारा=कष्टोपचारसाध्या। सन्ध्याभ्रलेखा इव=सन्ध्याकालीनमेघमालेव। मुहूर्तरागा=क्षणरक्ता क्षणानुरागिणी। रागो लोहित्यम्, पक्षेऽनुरागश्च। जलबुद्बुदावलीव=जलेषु तोयेषु ये बुद्बुदा स्फोटास्तेषामावली राजिरिव स्वभावभङ्गुरा=स्वभावेन प्रकृत्याऽस्थिरा। अन्यत्र—निसर्गत एव विलयनशीला।

(४) सीरप्रकृतिरिति—लाङ्गलस्वभाव इव कृतघ्ना=अपकारपरायणा क्षेत्रपक्षे—कृष्टक्षेत्रस्य पुन' कर्षणेन पूर्वचिह्नविलोपकारिणीत्यर्थ। "शरीरप्रकृति"

यदैव राज्ये क्रियतेऽभिषेक-
स्तदैव बुद्धिर्व्यसनेषु योज्या। (घाति)
घटा हि राज्ञामभिषेककाले
सहाम्भसैवापदमुद्गिरन्ति ॥ २५१ ॥

न च कश्चिद् (१) अनधिगमनीयो नामास्त्यापदाम्। उक्तं च—

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम्।
नाट्याचार्यकमर्जुनस्य पतनं संचिन्त्य लङ्केश्वरे
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥२५२॥

---

रिति पाठे तु—शरीरस्य प्रकृतिस्त्रिदोषजः स्वभावः तद्वत् कृतघ्ना=अपकारिणी, शरीरपक्षे—कृतेऽपि रोगोपचारे पुनरपि तस्यैव रोगान्तरस्य वा दर्शनात् कृतघ्नता ज्ञेया। **स्वप्नेति**—स्वप्ने लब्धा प्राप्ता द्रव्यराशिर्धनराशिरिव, क्षणदृष्टनष्टा= क्षणं दृष्टा क्षणं नष्टा चेति अस्थिरेत्यत्र तात्पर्यम्।

**"यदे"**ति—यदा एव=यस्मिन्नेव काले अभिषेकः=राज्यतिलकं क्रियते तदैव=तस्मिन्नेव काले व्यसनेषु=मृगयादिषु बुद्धिर्योज्या=क्षेपणीयेति कुनृपतीनां स्वभाव इत्यर्थः। राज्यवैभवं प्राप्य कुनृपतयो मत्ताः स्वच्छन्दाश्च जायन्त इति भावः। तथाहि—राज्ञाम्=भूपतीनाम् अभिषेककाले घटाः= अभिषेकं कर्त्तुमनेकतीर्थजलपरिपूर्णाः कुम्भाः अम्भसा=जलेन सह आपदम्= विपत्तिम् उद्गिरन्तीव तेषामभिषिक्ते शिरसि पातयन्तीवेत्युत्प्रेक्षा।

अभिषेकसमसमयमेव विपन्ना भवन्ति राजान इति सारः॥ २५१ ॥

(१) अनधिगमनीयः=अविषयः।

**"रामस्ये"**ति—रामस्य=दाशरथेः व्रजनम्=वनवासम्, बलेः=बलिनाम्नो दैत्येन्द्रस्य नियमनम्=वामनावतारद्वारा पाताले नियन्त्रणम्, पाण्डोः सुतानाम्=युधिष्ठिरादीनां वनम्=वनवासः, वृष्णीनाम्=यादवानां महाबलोद्धतानामपि निधनम्=परस्परविमर्देन समूलं विनाशम्, नलस्य नृपते राज्यात् परिभ्रंशनम्=परिच्युतिम्, अर्जुनस्य=महाबलशालिनो दुर्धर्षगाण्डीवस्यापि नाट्याचार्यकम=नृत्यकलाशिक्षणम्, तथा—लङ्केश्वरे=रावणे त्रिभुवनविजय-

क्व स दशरथः स्वर्गे भूत्वा महेन्द्रसुहृद्गतः
क्व स जलनिधेर्वेलां बद्ध्वा नृपः सगरस्तथा।
क्व स करतलाज्जातो वैन्यः क्व सूर्यतनुर्मनु-
र्ननु बलवता कालेनैते प्रबोध्य निमीलिताः ॥२५३॥
मान्धाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रतो
देवानां नृपतिर्गतः क्व नहुषः सच्छास्त्रवान् केशवः।
मन्यन्ते सरथाः सकुञ्जरवराः शक्रासनाध्यासिनः
कालेनैव महात्मना त्वनुकृताः कालेन निर्वासिताः ॥२५४॥

---

कारिण्यपि पतन सञ्चिन्त्य=पर्यालोच्य अत्र=जगति जन कालवशात्= कालाधीनताहेतो सर्वम्=निखिलमपि प्राप्त कष्टं सहते=भुङ्क्ते इत्यर्थ, अत —को जन क जन परित्रायते=रक्षति, न कोऽपि कमपीत्यर्थ।

ईदृशा महामहिमशालिनोऽपि प्रच्युतैश्वर्याश्चेदितरेषा तु कैव कथा, तस्माद्राज्ञा प्रमादं विहाय प्रजापालनपरेण धार्मिकेण भाव्यमिति फलितम्। शार्दूलविक्रीडितम् ॥ २५२ ॥

भूयो मन्वन्तरेण ससारैश्वर्यस्याऽस्थिरता प्रदर्शयन् तमेवार्थमाचष्टे—

"क्व स" इति—स्वर्गे=नाकलोके महेन्द्रसुहृद्=सुरपतिमित्रं भूत्वा स दशरथ क्व गत ? तथा—जलनिधे=सागरस्य वेलाम्=मर्यादा बद्ध्वा= विभज्य नियम्य वा सागरान्तां पृथिवीं परिशासदित्यर्थ, स. सत्ययुगादौ प्रसिद्ध सगरो नाम राजा क्व ? करतलाज्जात=वेननृपते. करमन्थना- दुद्भूत स वैन्य=पृथुः क्व ? तथा—सूर्यतनु सूर्यस्य पुत्र सूर्य एव "आत्मा वै जायते पुत्र" इत्युक्ते स सावर्णिनामको मनु क्व ? गत इति सर्वत्र अनुषज्यते। ननु=निश्चितमिद यद् बलवता=प्रबलेनाऽनिवार्येण कालेन एते=उक्ता दशरथप्रभृतयो राजान प्रबोध्य=उत्पाद्य निमीलिता= निद्रता क्षयारोपता नीता। "कालो हि दुरतिक्रम" इति भाव ॥ २५३ ॥

"मान्धाता" इति—त्रिलोकविजयी=त्रिलोक्या. परिजेता राजा मान्धाता नाम क्व गत ? सत्यव्रत=भीष्मः पितामह क्व ? देवाना नृपति= इन्द्रपदवीं प्राप्त नहुष क्व ? सच्छास्त्रवान्=सकलवेदोपनिषत्सारभूतगीता-

अपि च—

स च नृपतिस्ते सचिवास्ताः प्रमदास्तानि काननवनानि।
स च ते च ताश्च तानि च कृतान्तदृष्टानि नष्टानि ॥२५५॥

एवं (१) मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीमवाप्य न्यायैकनिष्ठो भूत्वोपभुङ्क्ष्व।

## इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके काकोलूकीयं नाम तृतीयं तन्त्रं समाप्तम्।

---

दिशास्त्रोपदेष्टा केशव=कृष्णो भगवान् क ? गत इत्यन्वेतव्यम्। महात्मना=अनन्तपारेण बलवता कालेनैव सरथा=रथै सहिता गकुञ्जरवरा=महागजरूपैर्वाहनैरुपेता· शक्रासनाध्यासिन=शक्र इन्द्र नेन गर्हकस्मिन्नेवासने स्थितवन्त· एते अनुकृता=रचिता, तु=पुन कालेनैव निर्वासिता·=विध्वंसिताश्च मन्यन्ते=ज्ञायन्ते लोकैरिति शेप। शार्दूलविक्रीडितम् ॥ २५४ ॥

"स चे"ति—स च नृपति=राजा, ते सचिवा=अमात्या, ता· प्रमदा=सुन्दर्य, तानि काननवनानि=काननानि वनानि नानाविधवृक्षवल्लीगुल्माद्युपेतानि उद्यानानि वा, स च=राजा, ते च=मन्त्रिण, ता=कान्ता तानि च काननानि, सर्वाण्येवैतानि कृतान्तदृष्टानि=कालेनैव दृष्टानि विलोकितानि रचितानीत्यर्थ, तथा नष्टानि=तेनैव नाशितानि, अनिवार्या कालस्य गतिरिति भाव ॥ २५५ ॥

(१) मत्तेति—मत्त मदवान् य करी गजस्तस्य कर्णाविव चञ्चला चपलाम। "न्यायैकनिष्ठ" इति कथनेन न्यायो नाम राज्ञ परमो धर्म इति सूचितमिति।

इति श्रीकवितार्किक-नृसिंहदेवशास्त्रि-दर्शनाचार्य-विरचितायां पञ्चतन्त्रस्य "सुबोधिनी" टीकायां काकोलूकीयं नाम तृतीयं तन्त्रम्।

---

# लब्धप्रणाशं नाम चतुर्थ तन्त्रम्।

अथेदमारभ्यते (१) लब्धप्रणाशं नाम चतुर्थं तन्त्रम्। यस्यायमादिमः श्लोकः—

समुत्पन्नेषु कार्येषु बुद्धिर्यस्य न हीयते।
स एव दुर्गं तरति जलस्थो वानरो यथा॥ १॥

तद्यथानुश्रूयते—अस्ति कस्मिंश्चित् (२) समुद्रोपकण्ठे महाञ्जम्बूपादपः (३) सदाफलः। तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। तत्र च तस्य तरोरधः कदाचित्करालमुखो

---

अशेषलाभदातारमप्रणाशप्रणाशकम्।
विश्वसम्भारकर्त्तारं भजे तं मधुसूदनम्॥ १॥
व्याख्याय त्रीणि तन्त्राणि सरलैः सरसैः पदैः।
तन्त्रं तुरीयं व्याख्यामि प्राज्ञबुद्धिप्रसादजम्॥ २॥
लब्धप्रणाशमित्याख्यं लब्धवस्तुप्रणाशनम्।
वर्ण्यते यत्र तन्नाम तन्त्रं कविभिरीरितम्॥ ३॥

(१) लब्धप्रणाशम्=लब्धस्य प्राप्तस्य वस्तुनः प्रणाशो यत्र (तन्त्रे) तत् "लब्धप्रणाशम्" इति। अस्य फलन्तु यथा लब्धं वस्तु सुरक्षितं तिष्ठेत् तथैव सावधानेन भाव्यम्, अन्यथाचरणे मनुष्यो मूढ एव भवतीति बोध्यम्।

"समुत्पन्नेष्वि" ति—समुत्पन्नेषु=उपस्थितेषु कार्येषु=कर्त्तव्येषु यस्य=पुरुषस्य बुद्धिः=मतिः न हीयते=क्षीणा कुण्ठिता वा न भवति, स एव जनः दुर्गम्=कष्टं तरति=पारयते विनष्टकष्टो जायत इत्यर्थः, अत्रार्थे कथानकम्—यथा जलस्थः=जले स्थितः मकरेण गृहीतो वानरः=कपिः स्वबुद्ध्या (प्रत्युत्पन्नमत्या) दुर्गमतारीदित्यर्थः।

प्रत्युत्पन्नमतिः पुरुषः सर्वत्र सर्वथा सर्वदैव विजयी भवतीति भावः॥१॥

(२) समुद्रोपकण्ठे=सागरतीरे। (३) सदाफलः=सदैव फलानि यस्य सः अक्षयफलः, सर्वर्तुफलप्रद इत्यर्थः। रक्तमुखः=रक्तं शोणितं मुखं यस्य सः व्युत्पत्तिमात्रमिदम्, वस्तुतस्तु तन्नामेति ग्रन्थकर्त्तुः सङ्केतः।

नाम मकरः समुद्रसलिलान्निष्क्रम्य (१) सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत् । ततश्च रक्तमुखेन स प्रोक्तः—भोः! भवान् समभ्यागतोऽतिथिः। तद्भक्षयतु मया दत्तानि (२) अमृततुल्यानि जम्बूफलानि । उक्तं च—

प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः ।
वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसङ्क्रमः ॥ २ ॥
न पृच्छेच्चरणं गोत्रं न च विद्यां कुलं न च ।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥ ३ ॥
दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम् ।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम् ॥ ४ ॥

---

(१) सुकोमलवालुकासनाथे=मृदुसिकतामये । तीरोपान्ते=तीरप्रान्तभागे । न्यविशत्=अस्थात् । (२) अमृततुल्यानि=अतिमधुराणीत्यर्थ ।

"प्रिय" इति—प्रियो वा=प्रीतिपात्रं वा, यदि वा=अथवा द्वेष्य =शत्रु, मूर्खो वा=किंवा मूर्खो मूढ , पण्डितो वा, यदि वैश्वदेवान्तम्=बलिवैश्वदेवकर्मणोऽवमाने आपन्न =आगत स अतिथि स्वर्गसङ्क्रम =नाकलोकप्राप्तिसोपानभूतो भवतीत्यर्थ । सङ्क्रम =सोपानम् । विश्वेभ्यो देवेभ्यो देयो बलि- "वैश्वदेव" इत्युच्यते । अस्य प्रपञ्चो मानवादिधर्मशास्त्रेषु द्रष्टव्य ॥ २ ॥

"न" इति—वैश्वदेवान्ते=बलि वैश्वदेवकर्मणोऽवसाने, तथा श्राद्धे=पितृकर्मणि अतिथिम्=प्राप्तमभ्यागतम् चरणम्=वेदशाखा न, गोत्रं=पित्रादिरु न, विद्या न, तथा कुलं=वंशं च न पृच्छेत् किन्तु अविचारितमेवान्नादिना तस्य सत्कार कुर्यात्—इति मनुरब्रवीत्=मनोरादिधर्मशास्त्रकारस्य मतमिदमित्यर्थ ॥ ३ ॥

"दूरमार्ग" ति—यस्तु=य पुरुष सद्गृहस्थ दूरमार्गश्रमश्रान्तम्=दूरमार्गेण महता अध्वना य श्रम तेन श्रान्त=ग्लानम्, वैश्वदेवान्तमागतमतिथि पूजयेत्=अन्नादिना अर्चयेत् स परमाम्=उत्तमा गतिम्=स्वर्गादिक यातीति स्पष्टम् ॥ ४ ॥

अपूजितोऽतिथिर्यस्य गृहाद् याति विनिश्वसन्।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः ॥ ५ ॥

एवमुक्त्वा तस्मै जम्बूफलानि ददौ। सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि स्वभवनमगात्। एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति। अथान्यतमे दिवसे तया स पृष्टः—नाथ ! क्व (१) एवंविधान्यमृतफलानि प्राप्नोषि। स आह—भद्रे ! ममास्ति परमसुहृद् रक्तमुखो नाम वानरः। स प्रीतिपूर्वमिमानि फलानि प्रयच्छति। अथ तयाभिहितम्—यः सदैवामृतप्रायाणीदृशानि फलानि भक्षयति तस्य हृदयममृतमयं भविष्यति। तद्यदि मया भार्यया ते प्रयोजनम्, ततस्तस्य हृदयं मह्यं प्रयच्छ। येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान् (२) भुनज्मि। स आह—भद्रे ! मा मैवं वद। यतः स प्रतिपन्नोऽस्माकं भ्राता। अपरं फलदाता। ततो व्यापादयितुं न शक्यते। तत् त्यजैनं (३) मिथ्याग्रहम्। उक्तं च—

एकं प्रसूयते माता द्वितीयं वाक् प्रसूयते।
वाग्जातमधिकं प्रोचुः सोदर्यादपि बन्धुवत् ॥ ६ ॥

---

"अपूजित" इति—अपूजितः=अनर्चितः अतिथिः यस्य गृहिणो गृहात्=भवनात् विनिश्वसन्=मनाशतया दीर्घं श्वासं मुञ्चन् सन् याति, तस्य देवताः=गृहदेवाः पितृभिः=अग्निष्वात्तादिभिः पित्राद्यधिष्ठातृदेवैः सहैव विमुखाः=व्यावृत्तमुखाः क्रुद्धाः सन्तः गच्छन्ति ॥ ५ ॥

(१) एवंविधानि=अलौकिकानि। अमृतफलानि=सुधातुल्यानि अतिमधुराणीत्यर्थः। (२) भुनज्मि=भुञ्जे। अत्र परस्मैपदं चिन्त्यम्, पूर्ववद्वा समाधेयम्। (३) मिथ्याग्रहम्=दुष्टं हठमित्यर्थः।

"एकं" मिति—माता=जननी एकम्=एकं समानोदरं प्रसूते=उत्पादयति,

अथ मकर्याह—त्वया कदाचिदपि मम वचनं नान्यथा कृतम्। तन्नूनं सा वानरी भविष्यति, यतस्तया (१) अनुरागतः सकलमपि दिनं तत्र गमयसि। तत्त्वं ज्ञातो मया सम्यक्। यतः—

साह्लादं वचनं प्रयच्छसि न मे नो वाञ्छितं किञ्चन
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु।
कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराच्चुम्बसे
तत्ते धूर्त! हृदि स्थिता प्रियतमा काचिन्ममेवापरा ॥७॥

सोऽपि पत्न्याः (२) पादोपसङ्ग्रहं कृत्वाङ्कोपरि निधाय तस्याः (३) कोपकोटिमापन्नायाः सुदीनमुवाच—

---

वाक्=वाणी द्वितीयं भ्रातरं प्रसूते वाचापि भ्राता भवतीत्याशय, किन्तु—सोदर्यादपि=सहोदराद् भ्रातुरपि वन्धुवत् वाग्जातम्=वाचा कृतं भ्रातरम् अधिकम्=उत्तमं प्रोचु=कथयन्ति स्म शिष्टा इत्यर्थ ॥ ६ ॥

(१) अनुरागत=तस्या वानर्या प्रीतिवशात।

"साह्लादम्" इति—हे धूर्त्त!=शठ! मे=मम साह्लादं=आह्लादो हर्षविशेष तेन सह वर्त्तमानं वहुसुखजनकं वचनं न प्रयच्छसि=नो वदसि, तथा—किञ्चन=किमपि वाञ्छितम्=अभीष्टं भक्ष्यभोज्यादिकं न प्रयच्छसीत्यन्वय.। रात्रिषु=निशासु हुतवहोऽनल तस्य ज्वाला अर्चय तत्समं तत्तुल्यं वह्निज्वालसदृशमित्यर्थ, द्रुतं=शीघ्रं प्राय=वाहुल्येन प्रोच्छ्वसिषि=ऊर्ध्वान् श्वासान् गृह्णासि, तथा च—कण्ठाश्लेषपरिग्रहे=कण्ठस्याश्लेष आलिङ्गनं तस्य परिग्रह आदर तस्मिन् कण्ठालिङ्गनावसरे इत्यर्थ, (तव) शिथिलता=शैथिल्यं वर्त्तत इति शेष। यत्=यस्माद्धेतो आदरात्=प्रीत्या न चुम्वसे=वक्त्रसयोगं न करोषि तस्मात् कारणात् मम इव काचित्=अपरा प्रियतमा=परकीया वल्लभा तव हृदि=मनसि स्थिता वर्त्तत इति शेष। "चुम्वसे" इत्यात्मनेपदं चिन्त्यम्, समाधानान्तरं वा मृग्यम् ॥ ७ ॥

(२) पादोपसङ्ग्रहम्=पादपतनम्, कामवशित्वादिति भाव। (३) कोपकोटिम्=कोपस्य क्रोधस्य कोटिं परा काष्ठाम्।

मयि ते पादपतिते किङ्करत्वमुपागते।
त्वं प्राणवल्लभे! कस्मात् कोपने! कोपमेष्यसि॥ ८॥

सापि तद्वचनमाकर्ण्य (१) अश्रुप्लुतमुखी तमुवाच—

सार्धं मनोरथशतैस्तव धूर्त! कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या।
अस्माकमस्ति न कथञ्चिदिहावकाश-
स्तस्मात् कृतं चरणपातविडम्बनाभिः॥ ९॥

अपरं सा यदि तव वल्लभा न भवति, तत्किं मया भणितेऽपि तां न व्यापादयासि। अथ यदि स वानरस्तत्कस्तेन सह तव स्नेहः। तत्किं वहुना। यदि तस्य हृदयं न भक्षयामि, तन्मया (२) प्रायोपवेशनं कृतं विद्धि। एवं तस्यास्तन्निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः सः प्रोवाच। अथवा साध्विदमुच्यते—

"मयि" इति—हे! कोपने!=भामिनि! प्राणवल्लभे!=प्राणप्रिये! ते=तव पादपतिते=चरणगृहीतरि, तथा किङ्करत्वम्=दासभावम् उपागते= प्राप्ते सति मयि कस्मात् कारणात् त्वं कोपमेष्यसि=क्रोधं करिष्यासि। एव त्वदायत्ते मयि कोपो न युक्त इति भाव॥ ८॥

(१) अश्रुप्लुतमुखी=अश्रुभिरस्रैः प्लुतं व्याप्तं मुखं वदनं यस्या. सा, विलपन्तीत्यर्थ।

"सार्धं" मिति—हे! धूर्त! सैव कान्ता=मनोरमा रामा मनोरथशतैः= असङ्ख्यैर्भोगविलासादिसङ्कल्पै सहैव तव मनसि=हृदये स्थिता=वर्त्तते, कथम्भूता सा कान्ता—कृत्रिमभावरम्या=कृत्रिमैर्वाह्याडम्बररूपैर्भावै स्त्रीणा विलासैः रम्या सुन्दरी, इह=तव चेतसि अस्माकन्तु कथञ्चिदपि अवकाश अवसरो नास्ति, नाहं (वयं) तव प्रिया इत्यर्थः। तस्मात्=कारणात् चरणपात- विडम्बनाभि=चरणयो पादयो पात पतनं चरणपात तस्य विडम्बनाभि अनुकरणैर्मिथ्याप्रपञ्चनापराभिश्चेष्टाभिरित्यर्थ, कृतम्=अलम्, एतादृश्यो विड- म्बना न कार्या इति भाव। इय मध्या अधीरा नायिका। वसन्ततिलकं वृत्तम्॥ ९॥

(२) प्रायोपवेशनम्=अनशनव्रतम्।

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च ।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ १० ॥

तत्किं करोमि । कथं स मे वध्यो भवति—इति विचिन्त्य वानरपार्श्वमगमत् । वानरोऽपि चिरादायान्तं तं सोद्वेगमवलोक्य प्रोवाच—भो ! मित्र ! किमद्य चिरवेलायां समायातोऽसि । कस्मात् साह्लादं नालपसि । न सुभाषितानि पठसि । स आह—मित्र ! अहं तव भ्रातृजायया (१) निष्ठुरतरैर्वाक्यैरभिहितः—भोः ! कृतघ्न ! मा मे त्वं स्वमुखं दर्शय, यतस्त्वं प्रतिदिनं (२) मित्रमुपजीवसि । न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि करोषि । तत्ते प्रायश्चित्तमपि नास्ति । उक्तं च—

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ११ ॥

तत्त्वं मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहमानय । नो चेत्त्वया सह मे (३) परलोके दर्शनमिति । तदहं तयैवं प्रोक्तस्तव सकाशमागतः । तदद्य तया सह त्वदर्थं कलहायतो ममेयती वेला विलग्ना । तदागच्छ मे गृहम् । तव भ्रातृपत्नी

---

"वज्रलेपस्ये" ति—व्याख्यातोऽयं श्लोक प्राक् प्रथमतन्त्रे १५७ पृ० ॥ १० ॥

(१) निष्ठुरतरै=अतिक्रूरै । (२) मित्रमुपजीवसि=स्वोपकाराय मित्रमाश्रयसे ।

"ब्रह्मघ्न" इति—ब्रह्मघ्ने=ब्रह्महत्याकारिणि, सुरापे च=मद्यपे, चौरे=तस्करे भग्नव्रते=परिभ्रष्टनियमे, शठे=धूर्त्ते च सद्भि=शिष्टैर्धर्मशास्त्रकारै निष्कृति=प्रायश्चित्तं विहिता=कथिता, कृतघ्ने=अकृतज्ञे परोपकारस्य अमन्तरि जने निष्कृति नास्ति=नैव वर्त्तते इत्यर्थ । कृतघ्नता तु सर्वेभ्योऽपि पापेभ्यो ज्याय पापमिति भाव ॥ ११ ॥

(३) परलोके दर्शनम्=अन्यथाऽहं मरिष्यामीति भाव ।

(१) रचितचतुष्का प्रगुणितवस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति। मर्कट आह—भो! मित्र! युक्तमभिहितं मद्भ्रातृपत्न्या। उक्तं च—

वर्जयेत् कौलिकाकारं मित्रं प्राज्ञतरो नरः ।
आत्मनः सम्मुखं नित्यं य आकर्षति लोलुपः ॥ १२ ॥

तथा च—

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ १३ ॥

परं वयं वनचराः, युष्मदीयं च जलान्ते गृहम्। तत्कथं शक्यते तत्र गन्तुम्। तस्मात्तामपि मे भ्रातृपत्नीमत्रानय येन प्रणम्य तस्या आशीर्वादं गृह्णामि। स आह—भो! मित्र! अस्ति(२) समुद्रान्तरे सुरम्ये पुलिनप्रदेशेऽस्मद्गृहम्। तन्मम

---

(१) रचितचतुष्का=रचितं निर्मितं चतुष्कं चतुस्तम्भोपेतं मण्डपं (तव सत्कारार्थं) यया सा। प्रगुणितेति—प्रगुणितानि बहुमूल्यानि यानि वस्त्राणि मणिमाणिक्यादीनि तानि एवोचितानि योग्यान्याभरणानि यस्या सा। द्वारदेशे बद्धा वन्दनमाला तोरणमाला यया सा।

"वर्जयेदि" ति—यः=यो जनो लोलुपः=लुब्धः सन् आत्मनः सम्मुखम्=स्वाभिमुखं नित्यमाकर्षति=मित्रं प्रतार्य तदीयं सर्वं वस्तु स्वाधीनं कर्तुमिच्छति, प्राज्ञतरः=विशिष्टबुद्धिमान् नरः तादृशं कौलिकाकारम्=कौलिकस्य तन्तुवायस्याकार इवाकारो यस्य स तं तन्तुवायसदृशं ( सर्वथा स्वार्थपरमित्यत्र तात्पर्यम् ) वर्जयेत्=परित्यजेत्।

अत्रायमाशयः—कौलिको हि वस्त्रवयनार्थं प्रगुणितान् तन्तून् स्वात्मपक्षे बहु कृत्वा स्वेष्टं साधयति परहितन्तु न पश्यति, एवमेव यो मित्रं भूत्वा मित्रस्य वस्तुजातमाच्छेत्तुमेव कामयतेऽसौ सर्वथैव परिहेय इति ॥ १२ ॥

"ददाति" इति—अयं श्लोको मित्रसम्प्राप्तिनाम द्वितीयतन्त्रे काकहिरण्यककथाप्रसङ्गे ५१ सङ्ख्याकः पूर्वं व्याख्यातः ॥ १३ ॥

(२) समुद्रान्तरे=सागरमध्ये। सुरम्ये=मनोहरे। पुलिनप्रदेशे=नीरोत्थितप्रदेशे।

पृष्ठमारूढः सुखेन (१) अकृतभयो गच्छ। सोऽपि तच्छ्रुत्वा सानन्दमाह—भद्र! यद्येवं तत्किं विलम्ब्यते। त्वर्यताम्। एषोऽहं तव पृष्ठमारूढः। तथानुष्ठितेऽगाधे जलधौ गच्छन्तं मकरमालोक्य (२) भयत्रस्तमना वानरः प्रोवाच—भ्रातः! शनैः शनैर्गम्यताम्। (३) जलकल्लोलैः प्लाव्यते मे शरीरम्। तदाकर्ण्य मकरश्चिन्तयामास—असावगाधं जलं प्राप्तो मे वशः सञ्जातः। मत्पृष्ठगतस्तिलमात्रमपि चलितुं न शक्नोति। तस्मात् कथयाम्यस्य निजाभिप्रायम्, येनाभीष्टदेवतास्मरणं करोति। आह च—मित्र! त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य। तत् स्मर्यतामभीष्टदेवता। स आह—भ्रातः! किं मया तस्यास्तवापि चापकृतं येन मे वधोपायश्चिन्तितः। मकर आह—भोः! तस्यास्तावत्तव हृदयस्य (४) अमृतमयफलरसास्वादनमृष्टस्य भक्षणे दोहदः सञ्जातः। तेनैतदनुष्ठितम्। प्रत्युत्पन्नमतिर्वानर आह—भद्र! यद्येवं तत्किं त्वया मम तत्रैव न व्याहृतम्। येन स्वहृदयं (५) जम्बूकोटरे सदैव मया सुगुप्तं कृतम्, तद् भ्रातृपत्न्या अर्पयामि। त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः। तदाकर्ण्य मकरः सानन्दमाह—भद्र! यद्येवं तदर्पय मे हृदयम्। येन सा दुष्टपत्नी तद्भक्षयित्वानशनादुत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि। एवमुक्त्वा

---

(१) अकृतभयः=निर्भयः। (२) भयत्रस्तमना=भयेन त्रस्तं विह्वलं मनो यस्य सः। (३) जलकल्लोलैः=महावीचीभिः। प्लाव्यते=वाह्यते आर्द्रीक्रियत इति यावत्। (४) अमृतेति—अमृतमयं यत् फलं (तव प्रत्यहं दत्तं जम्बूफलम्) तस्य यद् रसास्वादनं रसानुभवनं तेन मृष्टस्य शुद्धस्य मिष्टास्वादस्येत्यर्थः। (५) जम्बूकोटरे=जम्बूवृक्षविले। सुगुप्तम्=गुप्तरीत्या स्थापितम्। भ्रातृपत्न्यै=भ्रातृजायायै। "भ्रातृपत्न्या" इति षष्ठ्यन्तं वा बोध्यम्। दुष्टपत्नी=दुराग्रहा चासौ पत्नी मम स्त्री मकरी। अनशनात्=प्रायोपवेशनात्।

निवर्त्य जम्बूतलमगात्। वानरोऽपि कथमपि (१) जल्पितविविधदेवतोपचारपूजस्तीरमासादितवान्। ततश्च (२) दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास--अहो! लब्धास्तावत्प्राणाः। अथवा साध्विदमुच्यते--

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥ १४॥

तन्ममैतदद्य पुनर्जन्मदिनमिव सञ्जातम्—इति चिन्तयमानं मकर आह—भो! मित्र! अर्पय तद्धृदयं यथा ते भ्रातृपत्नी भक्षयित्वानशनादुत्तिष्ठति। अथ विहस्य निर्भर्त्सयन् वानरस्तमाह—धिग्धिङ्मूर्ख! विश्वासघातक! किं कस्यचिद्धृदयद्वयं भवति। तदाशु गम्यताम्। जम्बूवृक्षस्याधस्तान्न भूयोऽपि त्वयात्रागन्तव्यम्। उक्तं च यतः—

सकृद्दुष्टं च यो मित्रं पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ १५॥

तच्छ्रुत्वा मकरः (३) सविलक्षं चिन्तितवान्—अहो! मया-

---

(१) जल्पितेति—जल्पिता=मनसा कल्पिता यद्यहं मकराज्जीविष्ये तदा एतैरुपचारैर्देवतानर्चयिष्यामि इति सङ्कल्पिता विविधा नानाप्रकारा देवताया उपचारैरुपकरणैः पूजा अर्चना येन स तादृशः। (२) दीर्घतरचङ्क्रमणेन=शीघ्रतरोत्प्लवनेन।

"न" इति—अविश्वस्ते=विश्वासस्यापात्रीभूते जने न विश्वसेत्=कदापि विश्वासं न कुर्यात्, विश्वस्तेऽपि=विश्वासविषयीभूतेऽपि बन्ध्वादौ न विश्वसेत्, यत विश्वासात् हेतो उत्पन्नं=जातं भयं मूलानि=मर्मस्थलान्यपि निकृन्तति=छिनत्ति। अतिविश्वासकरणेन अवधानशून्यता जायते तस्मात्सदैव सावधानेन भाव्यमित्यत्र तात्पर्यम्॥ १४॥

"सकृदि"ति—यो जन सकृत्=एकवारं दुष्टम्=विकृतं मित्रम्=सुहृद पुन=भूयोऽपि सन्धातुम्=सहितं कर्तुम् इच्छति=कामयते चेष्टते वा स मृत्युम्=मरणं उपगृह्णाति यथा—अश्वतरी गर्भम्=अश्वतरी गर्भमिव मृत्यु प्राप्नोतीत्यर्थः॥ १५॥

(३) सविलक्षम्=सविस्मयम्।

तिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदित', तद्यद्यसौ पुनरपि कथञ्चिद्विश्वासं गच्छति, तद् भूयोऽपि विश्वासयामि। आह च—मित्र! हास्येन मया तेऽभिप्रायो लब्धः। तस्या न किंचित्तव हृदयेन प्रयोजनम्। तदागच्छ प्राघुणिकन्यायेनास्मद्गृहम्। तव भ्रातृपत्नी सोत्कण्ठा वर्तते। वानर आह—भो! दुष्ट! गम्यताम्। अधुना नाहमागमिष्यामि। उक्त च—

बुभुक्षितः किं न करोति पापं
क्षीणा जना निष्करुणा भवन्ति।
आख्याहि भद्रे! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम्॥ १६॥

मकर आह—कथमेतत्। स आह—

कथा १।

कस्मिंश्चित् कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म। स कदाचिद् (१) दायादैरुद्वेजितोऽरघट्टघटीमारुह्य निष्क्रान्तः। अथ तेन चिन्तितम्—यत्कथं तेषां दायादानां मया प्रत्यपकारः कर्तव्यः। उक्तं च—

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये॥ १७॥

---

"बुभुक्षित" इति—बुभुक्षित =क्षुधार्त्तो जन किं? पापं न करोति=किन्तु क्षुन्निवृत्त्यै करोत्येवेत्यर्थ'। क्षीणा =धनादिना भक्ष्यभोज्यादिना कृशा जना'=लोका निष्करुणा =दयाशून्या भवन्ति। हे! भद्रे! प्रियदर्शनस्य=प्रियदर्शननाम्नः सर्पस्य आख्याहि=कथय—गङ्गदत्त =गङ्गदत्तनामा मण्डूक, पुन कूपं न एति=नैवायाति। उपजाति ॥ १६ ॥

(१) दायादै =दायं पैतृकं धनमाददते इति दायादा ज्ञातय तै। उद्वेजित =दु खित तत्प्रदत्तदु खेन विरक्त इत्यर्थ.। अरघट्टघटीम्=कूपोपरिनिबद्ध क्षुद्रं घटम्। आरुह्य=आश्रित्य। निष्क्रान्त =निर्यात।

"आपदि" इति—येन जनेन बन्धुप्रभृतिना आपदि=विपत्काले अप-

एवं चिन्तयन् विले प्रविशन्तं कृष्णसर्पमपश्यत् । तं दृष्ट्वा भूयोऽप्यचिन्तयत्—यदेनं तत्र कूपे नीत्वा (१) सकलदायादानामुच्छेदं करोमि । उक्तं च—

शत्रुभिर्योजयेच्छत्रुं वलिभिर्वलवत्तरम् ।
स्वकार्याय यतो न स्यात्काचित्पीडात्र तत्क्षये ॥ १८ ॥

तथा च—

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ॥ १९ ॥

---

कृतम्=अनिष्टमापादितम्, येन च विषमासु=सङ्कटवतीषु दशासु हसितम्=हास्यमाचरितम्, तयो उभयो=द्वयो अपकृतहसितकारिणो अपकृत्य=अपकारं कृत्वा पुनरपि=भूयोऽपि नरम्=मनुष्य जातम्=उत्पन्नं मन्ये=सम्भावयामि ।

अपकारनिर्यातनमवश्यमेव कर्त्तव्यमिति भाव । आर्या ॥ १७ ॥

(१) सकलदायादानाम्=सर्वबन्धूनाम् । उच्छेदम्=विनाशम् ।

"शत्रुभि"रिति—स्वकार्याय=स्व कार्यं साधयितुम् वलिभि=प्रवलै शत्रुभि सह वलवत्तरम्=प्रवलमेव शत्रुं योजयेत्=मिश्रयेत् सङ्गमयेदिति यावत्, एवं द्वयोरेकतरविनाशे जायमानेऽपि स्वाभीष्टं सिद्ध्यत्येवेति भाव । अत्र=इह लोके तत्क्षये=तयोर्द्वयो क्षये विनाशे सति काचित् पीडा=व्यथा न स्यात्, प्रत्युत सुखमेव फलतीति भाव ॥ १८ ॥

"शत्रुम्"इति—प्राज्ञ=धीमान् तीक्ष्णेन=क्रूरेण अतिवलवता शत्रुणा तीक्ष्ण शत्रुम्=स्वं द्विषन्तम् उन्मूलयेत्=उत्खातयेत् कथम्भूतं शत्रुम्—व्यथाकरम्=पीडाप्रदम् कस्मै प्रयोजनाय उन्मूलयेत्—सुखार्थाय=भावि सुखं भोक्तुम्, केन किमिव उन्मूलयेत्—कण्टकेन कण्टकमिव=यथैकेन कण्टकेनापर कण्टक उन्मूल्यते उद्ध्रियते तद्वदित्यर्थ । कण्टकपक्षे एवं योजना—कथम्भूतेन कण्टकेन—तीक्ष्णेन=खरेण, कीदृश कण्टकम्—तीक्ष्णम्=खर सूक्ष्माग्रमित्यर्थ, पुन कीदृशम्—व्यथाकरम्=तोदजनकम्, कस्मै प्रयोजनाय—सुखार्थाय, अर्थस्तु पूर्ववदेव, किन्तु एकस्मिन् पक्षे शत्रुविनाशात् सुखम् परत्र

एवं स विभाव्य बिलद्वारं गत्वा तमाहूतवान्—एह्येहि प्रिय-दर्शन ! एहि । तच्छ्रुत्वा सर्पश्चिन्तयामास—य एष मामाह्वयति स स्वजातीयो न भवति। यतो नैषा सर्पवाणी। अन्येन केनापि सह मम मर्त्यलोके (१) सन्धानं नास्ति। तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोऽयं भविष्यति । उक्तं च—

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥ २० ॥

कदाचित् कोऽपि (२) मन्त्रवाद्यौषधचतुरो वा मामाहूय बन्धने क्षिपति । अथवा कश्चित् पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थे मामाह्वयति । आह च—भोः ! को भवान् । स आह—अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमभ्यागतः । तच्छ्रुत्वा सर्प आह—भो ! अश्रद्धेयमेतत्, यत्तृणानां वह्निना सह सङ्गमः । उक्तं च—

यो यस्य जायते वध्यः स स्वप्नेऽपि कथञ्चन ।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि ॥ २१ ॥

---

कण्टकनि सरणात् शरीरसुखमिति बोध्यम् । [ अयं व्याख्याप्रकार प्रायो जैनग्रन्थेषु दृश्यते ते हि अतिसरलरीत्या व्याकुर्वन्तीति ममानुभव ] ॥१६॥

(१) सन्धानम्=मेलाप ।

"यस्ये"ति—यस्य=पुरुषस्य कुलं न, शीलं न, संश्रय =वासो न ज्ञायते=बुध्यते तेन सह सङ्गतिं न कुर्यात्, इति बृहस्पति =देवगुरु उवाच=(इन्द्रम्प्रति) प्रतिपादयाम्बभूव ॥ २० ॥

(२) मन्त्रवादी=गारुडिक सर्पमन्त्रसिद्ध । औषधचतुर =सर्पदष्टस्य विषापहरणनिपुणो विषवैद्य ।

"य"इति—य =प्राणी यस्य=प्राणिन वध्य =घात्यो भक्ष्य इति यावत् स. स्वप्नेऽपि किमु वक्तव्यं जागरणे इत्यर्थ , कथञ्चन=कथमपि तत्समीपम्=तस्य सन्निधिं न अभ्येति=नैवाऽऽयाति, तत्=तस्मात् कारणात् किम् एव प्रजल्पसि= एवं निरर्थकं वच कथयसि यदहं तव मैत्र्यर्थमभ्यागत इत्यर्थ. ॥ २१ ॥

गङ्गदत्त आह—भोः ! सत्यमेतत् । स्वभाववैरी त्वमस्माकम् । परं (१) परपरिभवात् प्राप्तोऽहं ते सकाशम् । उक्तं च—

सर्वनाशे च सञ्जाते प्राणानामपि संशये ।
अपि शत्रुं प्रणम्यापि रक्षेत् प्राणान् धनानि च ॥ २२ ॥

सर्प आह—कथय कस्मात्ते परिभवः । स आह—(२) दायादेभ्यः । सोऽप्याह—क्व त (३) आश्रयो वाप्यां कूपे तडागे ह्रदे वा । तत्कथय स्वाश्रयम् । तेनोक्तम्—(४) पाषाणचयनिबद्धे कूपे । सर्प आह—अहो ! (५) अपदा वयम् । तन्नास्ति तत्र मे प्रवेशः । प्रविष्टस्य च स्थानं नास्ति । यत्र स्थितस्तव दायादान् व्यापादयामि । तद्गम्यताम् । उक्तं च—

यच्छक्यं ग्रसितुं यस्य ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत् तदद्यं भूतिमिच्छता ॥ २३ ॥

---

(१) परपरिभवात्=अत्यन्तं तिरस्कारप्राप्ते । यद्वा–परैः शत्रुभिः कृतो च परिभवोऽनादरः तस्मात्कारणात् ।

"सर्वनाश" इति—सर्वनाशे=धनादिसर्वक्षये सञ्जाते सम्पन्ने=प्राप्ते तथा–प्राणानाम्=असूनामपि संशये=सङ्कटे प्राप्ते सति शत्रुम्=वैरिणं प्रणम्यापि=नमस्कृत्यापि वैरिपादयोः पतित्वाऽपि प्राणान् धनानि च रक्षेत्=पालयेत् ।

धनप्राणादिरक्षायै स्वगौरवक्षयकरमपि कार्यं कुर्यादिति भावः ॥ २२ ॥

(२) दायादेभ्यः=सपत्नेभ्यः स्वज्ञातिभ्य इति यावत् । (३) आश्रयः=वासः । वाप्याम्=दीर्घिकायाम् । कूपे=अन्धौ । तडागे=सरोवरे । ह्रदे=महासरोवरे "झील" इति प्रसिद्धे । (४) पाषाणचयनिबद्धे=अश्मेष्टकासङ्घचिते । (५) अपदाः=अचरणाः पादरहिताः ।

"यच्छक्यम्" इति—यस्य=प्राणिनः यत्=वस्तु ग्रसितुम्=खादितुं शक्यम्=योग्यम्, तथा ग्रस्तं=भक्षितं सत् यत् च परिणमेत्=जीर्येत् परिणामे=रसपरिपाके च यत् हितं=शरीरोपचयकरं भवेदिति शेषः, भूतिम्=ऐश्वर्यं स्वशरीरारोग्यं दीर्घजीवनम् इच्छता=अभिलषता प्राणिना तत्=तदेव अद्यम्=भक्षणीयम्, नान्यदित्यर्थः ॥ २३ ॥

गङ्गदत्त आह—भोः! समागच्छ त्वम्। अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति। तत्र स्थितस्त्वं (१) लीलया दायादान् व्यापादयिष्यसि। तच्छ्रुत्वा सर्पो व्यचिन्तयत्—अहं तावत् (२) परिणतवयाः कदाचित् कथञ्चिन्मूषकमेकं प्राप्नोमि। तत्सुखावहो जीवनोपायोऽयमनेन (३) कुलाङ्गारेण मे दर्शितः। तद्गत्वा तान् मण्डूकान् भक्षयामि इति। अथवा साध्विदमुच्यते--

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः।
स हि सर्वसुखोपायां वृत्तिमारचयेद् बुधः॥ २४॥

एवं विचिन्त्य तमाह—भो! गङ्गदत्त! यद्येवं तदग्रे भव। येन तत्र गच्छावः। गङ्गदत्त आह—भोः! प्रियदर्शन! अहं त्वां सुखोपायेन तत्र नेष्यामि, स्थानं च दर्शयिष्यामि। परं त्वयास्मत्परिजनो रक्षणीयः। केवलं यानहं तव दर्शयिष्यामि त एव भक्षणीया इति। सर्प आह—साम्प्रतं त्वं मे मित्रं जातम्। तन्न भेतव्यम्। तव वचनेन भक्षणीयास्ते दायादाः। एवमुक्त्वा विलान्निष्क्रम्य तमालिङ्गय च तेनैव सह प्रस्थितः। अथ कूपमासाद्य (४) अरघट्टघाटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः। ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः। ते शनैःशनैर्भक्षिताः। अथ मण्डूकाभावे सर्पेणाभि-

---

(१) लीलया=सुखेन आयासं विनेत्यर्थ। (२) परिणतवया=जरठो वृद्ध इति यावत्। (३) कुलाङ्गारेण=कुलेषु वंशीयेषु अङ्गार इव (विनाशकरत्वात्) इति "कुलाङ्गार" तेन स्ववंशविध्वंसकारिणा पापिष्ठेन।

"य" इति—यो बुध=प्राज्ञ प्राणपरिक्षीण=प्राणै इन्द्रियै परिक्षीण. कृश दुर्बल इते यावत्, तथा—सहायपरिवर्जित=बन्धुविहीन. स हि=स तु सर्वसुखोपायाम्=सकलसुखसाधनभूतामनायासप्राप्या वृत्तिम्=जीविकाम् आरचयेत्=कुर्यात्। "हि" इति योग्योऽयमर्थ॥ २४॥

(४) अरघट्टघाटिकामार्गेण=अरघट्टाख्यकूपविशेषघटवर्त्मना।

हितम्—भद्र ! निःशेषितास्ते रिपवः । तत्प्रयच्छान्यन्मे किञ्चिद्भोजनम । यतोऽहं त्वयात्रानीतः। गङ्गदत्त आह—भद्र ! कृतं त्वया मित्रकृत्यम् । तत्साम्प्रतमनेनैव घाटिकायन्त्रमार्गेण गम्यताम् इति । सर्प आह—भोः ! गङ्गदत्त ! न सम्यगभिहितं त्वया । कथमहं तत्र गच्छामि । (१) मदीयबिलदुर्गमन्येन रुद्धं भविष्यति । तस्मादत्रस्थस्य मे मण्डूकमेकैकं (२) स्ववर्गीयं प्रयच्छ । नो चेत् सर्वानपि भक्षयिष्यामि इति । तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत्—अहो ! किमेतन्मया कृतं सर्पमानयता । तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति । अथवा युक्तमुच्यते—

योऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः।
स करोति न सन्देहः स्वयं हि विषभक्षणम् ॥ २५ ॥

तत्प्रयच्छाम्यस्यैकैकं प्रतिदिनं सुहृदम् । उक्तं च—

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः।
तोषयन्त्यल्पदानेन वाडवं सागरो यथा ॥ २६ ॥

---

(१) मदीयबिलदुर्गम्=मम खातरूप कोट्ट । (२) स्ववर्गीयम्=स्वसम्बन्धिनम् ।

"य" इति—यो जन. आत्मन=स्वस्य वीर्याभ्यधिकम्=वीर्यात् बलादधिक बलवत्तरम् अमित्रम्=शत्रुं मित्रम्=सुहृदं कुरुते स (मूढ) हि=निश्चयेन स्वयम्=स्वयमेव विषभक्षणम्= विषाशन करोति, न सन्देहः= अस्मिन्नर्थे संशयो नास्ति ।

अत्र—अमित्रमैत्रीकरणविषभक्षणरूपयो. सदृशयोर्वाक्यार्थयोरैक्यारोपात् निदर्शनालङ्कार । 'वाक्यार्थयो सदृशयोरैक्यारोपो निदर्शना" इति तल्लक्षणम् । यदमित्रमैत्रीकरणं तद्विषभक्षणसदृशमिति लक्षणसङ्गति ॥ २५ ॥

"सर्वस्वहरण" इति—बुद्धियुता =धीमन्त नरा =मनुष्या सागर = समुद्र वाडवं यथा=वडवानलमिव सर्वस्वहरणे=धनपुत्रकलत्रादिसर्वस्वविनाशने युक्तम्=कृतोद्योग शत्रुम्=वैरिणम् अल्पप्रदानेन=यत्किञ्चित्स्वपदार्थार्पणेन तोषयन्ति=प्रसन्नयन्ति ( इति नयविदा परामर्श ) "सर्वनाशे

तथा च—

योे दुर्बलोऽणूनपि याच्यमानो बलीयसा यच्छति नैव साम्ना।
प्रयच्छते नैव च दर्श्यमानं खारीं स चूर्णस्य पुनर्ददाति ॥२७॥

तथा च—

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः ॥ २८ ॥
न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः।
एतदेव हि पाण्डित्यं यत्स्वल्पाद्भूरिरक्षणम् ॥ २९ ॥

---

समुत्पन्ने अर्धं त्यजति पण्डित" इत्युक्तेरिति भाव ॥ २६ ॥

"य" इति—यो दुर्बल=अल्पशक्ति बलीयसा=स्वापेक्षया प्रबलेन शत्रुणा याच्यमान=प्रार्थ्यमान साम्ना=सान्त्वनेन अणूनपि=अल्पानपि पदार्थान् नैव प्रयच्छति=नो ददाति, तथा—दर्श्यमानम्=एतद् वस्तु मह्यं देहीति दृष्ट्या विपर्यीक्रियमाण च न प्रयच्छति=नैवार्पयति, स (मूर्ख) पुन प्रबलाक्रमणात् चूर्णस्य=सुधाया खारीम्=खारीपरिमाणं सुधाद्रव्यं ददाति। "खारी" परिमाणविशेष। तथा चोक्तम्—

अष्टमुष्टिर्भवेत्कुञ्च कुञ्चाष्टकमथाढकम्।
अष्टाढकं भवेद् द्रोण खारी द्रोणचतुष्टयम् ॥ इति।

दुर्बलश्चेत् सान्त्वनेन याचमानाय बलवतेऽल्पं वस्तु न ददाति, तत क्रुद्धाय तस्मै गतोऽपि बह्वेव दद्यात्, अतस्तस्मै प्रागेव सर्वनाशादवश्य किञ्चिद्देयमिति भाव ॥ २७ ॥

एतस्मिन् प्रसङ्गे बुद्धिमत कर्त्तव्यमाह—"सर्वनाश"इति—पण्डित=विवेकी नीतिकुशल पुरुष सर्वनाशे=सर्वस्य धनादेर्नाशे समुत्पन्ने=उपस्थिते सति अर्धं त्यजति=जहाति, अर्धेन कार्यम्=(स्वीयं) साध्यं कुरुते=सम्पादयति, हि=यत सर्वनाश दुस्तर=असह्यो लोकैरिति शेष।

अर्द्धेऽवशिष्टे भूयोऽपि तेन प्रचुरं सम्पादयितुं शक्यत इति भाव. ॥२८॥

"न" इति—मतिमान्=प्राज्ञ नर स्वल्पस्य=न्यूनस्य वस्तुन कृते भूरि=प्रचुरं न नाशयेत्=नैव हापयेत्, हि=यत एतदेव पाण्डित्यम्=चातुर्यं

एवं निश्चित्य नित्यमेकैकमादिशति । सोऽपि तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति । अथवा साध्विदमुच्यते—

यथा हि मलिनैर्वस्त्रैर्यत्रतत्रोपविश्यते ।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति ॥ ३० ॥

अथान्यदिने तेनापरान् मण्डूकान् भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः । तं भक्षितं ज्ञात्वा गङ्गदत्तस्तारस्वरेण धिग्धिक्प्रलापपरः कथञ्चिदपि न विरराम । ततः स्वपत्न्याभिहितः—

किं क्रन्दसि दुराक्रन्द ! स्वपक्षक्षयकारक ! ।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ॥ ३१ ॥

तदद्यापि विचिन्त्यतामात्मनो (१) निष्क्रमणम्, अस्य वधोपायं च । अथ गच्छता कालेन सकलमपि (२) कवलितं

---

यन् स्वल्पात्=स्वल्पमपेक्ष्य भूरिरक्षणम्=प्रचुरद्रव्यपरिपालनम् इति ॥२६॥

"यथा" इति—यथा मलिनैः=दूषितैः वस्त्रैः=वासोभिरुपलक्षितैर्जनैः यत्र तत्र=मलिने मलिनतरे वा स्थाने उपविश्यते=आस्यते उपवेष्टुं शक्यते इति विवक्षितोऽर्थः । एवम्=तद्वत्, चलितवित्तः तु=चलितं बहुव्ययेन नष्टं वित्तं यस्य स व्ययितसर्वधनः पुरुषः वित्तशेषम्=वित्तस्य धनस्य शेषमवशिष्टमंशं न रक्षति=किञ्चिन्मात्रमपि धनं नावशेषयति, पश्चात् स आत्मानमवसादयतीति तुना बोधितम् ।

यथा—मलिनवासाः पुरुषो भूयो वासोमालिन्यशङ्काविरहाद्यत्रतत्रावस्थाने शङ्का न करोति, एवमेव व्ययितसर्वधनोऽपि यत्किञ्चिन्मात्रलाभोऽपि तस्य रक्षा न करोतीति तात्पर्यम् ॥ ३० ॥

"किमि" ति—हे ! दुराक्रन्द != वृथाविलापकारिन् ! स्वपक्षक्षयकारक ! = स्वबन्धुवर्गविध्वंसक ! किं=किमर्थं क्रन्दसि=रोदिषि, स्वपक्षस्य= स्वबन्धुजातस्य क्षये=विध्वंसे जाते सति कः=जनः नः=अस्माकं त्राता=परिपालयिता भविष्यति, न कोपीत्यर्थः ।

विपत्पातेऽन्ततो यथा स्वजातिस्त्राणं करोति न तथाऽन्य इति भावः ॥३१॥

(१) निष्क्रमणम्=निर्गमनं स्थानत्यागमित्यर्थः । (२) कवलितम्=खादितम् ।

मण्डूककुलम्। केवलमेको गङ्गदत्तस्तिष्ठति। ततः प्रियदर्शनेन भणितम्—भो! गङ्गदत्त! बुभुक्षितोऽहम्। निःशेषिताः सर्वे मण्डूकाः तद्दीयतां मे किंचिद्भोजनं यतोऽहं त्वयात्रानीतः। स आह—भो! मित्र! न त्वयात्र विषये मयावस्थितेन कापि चिन्ता कार्या। तद्यदि मां प्रेषयसि ततोऽन्यकूपस्थानपि मण्डूकान् विश्वास्यात्रानयामि। स आह—मम तावत्त्वमभक्ष्यो भ्रातृस्थाने। तद्यद्येवं करोषि तत्साम्प्रतं पितृस्थाने भवसि। तदेवं क्रियताम् इति। सोऽपि तदाकर्ण्यारघट्टघाटिकामाश्रित्य (१) विविधदेवतोपकल्पितपूजोपचायितस्तस्मात्कूपाद् विनिष्क्रान्तः। प्रियदर्शनोऽपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति। अथ चिरादनागते गङ्गदत्ते प्रियदर्शनो (२) ऽन्यकोटरनिवासिनीं गोधामुवाच—भद्रे! क्रियतां स्तोकं साहाय्यम्। यतश्चिरपरिचितस्ते गङ्गदत्तः। तद्गत्वा तत्सकाशं कुत्रचिज्जलाशयेऽन्विष्य मम सन्देशं कथय। येनागम्यतामेकाकिनापि भवता द्रुततरं यद्यन्ये मण्डूका नागच्छन्ति। अहं त्वया विना नात्र वस्तुं शक्नोमि। तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम्। गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह—भद्र! गङ्गदत्त! स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति। तच्छीघ्रमागम्यतामिति। अपरं च तेन तव (३) विरुद्धकरणे सुकृतमन्तरे धृतम्। तन्निःशङ्केन मनसा समागम्यताम्। तदाकर्ण्य गङ्गदत्त आह—

---

(१) विविधेति—विविधाभ्योऽनेकाभ्यो देवताभ्य उपकल्पिता अर्पिता या पूजा अर्चा तया उपचायितो रक्षित। "उपयाचित" इति पाठेऽपि अयमेवार्थ फलति। (२) अन्यकोटरनिवासिनीम्=गर्त्तान्तरनिवासिनीम्। गोधाम्=गोधिकाम्।

(३) विरुद्धकरणे=विपरीतानुष्ठाने मारणे इत्यर्थ। सुकृतम्=पुण्यम्। अन्तरे=मध्ये कृतम्, शपथ कृत इत्यर्थ।

बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ।
आख्याहि भद्रे ! प्रियदर्शनस्य न गङ्गदत्तः पुनरेति कूपम् ॥३२॥

एवमुक्त्वा स तां विसर्जयामास । तद् भो ! दुष्टजलचर ! अहमपि गङ्गदत्त इव त्वद्गृहे न कथञ्चिदपि यास्यामि । तच्छ्रुत्वा मकर आह—भो ! मित्र ! नैतद्युज्यते । सर्वथैव मे कृतघ्नतादोषमपनय मद्गृहागमनेन । अथवात्राहमनशनात्प्राणत्यागं तवोपरि करिष्यामि । वानर आह—मूढ ! किमहं लम्बकर्णो मूर्खः । (१)दृष्टापायोऽपि स्वयमेव तत्र गत्वात्मानं व्यापादयामि ।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम् ।
अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः ॥ ३३ ॥

मकर आह—भद्र ! स को लम्बकर्णः । कथं दृष्टापायोऽपि मृतः । तन्मे निवेद्यताम् । वानर आह—

## कथा २ ।

कस्मिंश्चिद्वनोद्देशे करालकेसरो नाम सिंहः प्रतिवसति स्म । तस्य च धूसरको नाम शृगालः सदैव (२) अनुयायी परिचारकोऽस्ति । अथ कदाचित्तस्य हस्तिना सह (३) युध्यमानस्य शरीरे गुरुतराः प्रहाराः सञ्जाताः, यैः पदमेकमपि चलितुं

---

"बुभुक्षित" इति—अधस्ताद् व्याख्यातम् ॥ ३२ ॥

(१) दृष्टापाय =दृष्टो विलोकित अपायो विनाशकारिणी विपत्तिर्येन स ।

"आगत" इति—आगत =लोभवशीभूत सन् सिंहान्तिकमागत. पश्चात् सिंहपराक्रमम्=सिंहस्य पराक्रमं वल दृष्ट्वा=विलोक्य गत च एव=गतोऽपि पलायित इत्यर्थ , स एवम्—अकर्णहृदय =कर्णौ च हृदयञ्च कर्णहृदयं (द्वन्द्वैकत्वम्) न कर्णहृदयं यस्य स तादृश , लम्वकर्णत्वेऽपि श्रुतिशक्तिहीन , हृदयवत्त्वेऽपि विचारशून्य , अत एव मूर्खः=मूढ य गत्वा=पलायित्वाऽपि पुनरागत =भूयोऽप्यायात ,। स "लम्बकर्ण किमह" मिति पूर्वसम्बन्ध ॥३३॥

(२) अनुयायी=अनुगत. । परिचारक.=भृत्य. । (३) युध्यमानस्य=सङ्ग्रामं कुर्वतः । प्रहारा =आघाता ।

न शक्नोति। तस्याचलनाच्च धूसरकः क्षुत्क्षामकण्ठो दौर्बल्यं गतः। अन्यस्मिन्नहनि तमवोचत्-स्वामिन्! बुभुक्षया पीडितोऽहम्। पदात्पदमपि चलितुं न शक्नोमि। तत्कथं ते शुश्रूषां करोमि। सिंह आह—भोः! गच्छ। अन्वेषय किंचित्सत्त्वम्, येनेमामवस्थां गतोऽपि व्यापादयामि। तदाकर्ण्य शृगालोऽन्वेषयन् कञ्चित्समीपवर्तिनं ग्राममासादितवान्। तत्र लम्बकर्णो नाम गर्दभ (१)स्तडागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्रादास्वादयन् दृष्टः। ततश्च समीपवर्तिना भूत्वा तेनाभिहितः—माम! नमस्कारोऽयं मदीयः सम्भाव्यताम्। चिराद् दृष्टोऽसि। तत्कथय किमेवं दुर्बलतां गतः। स आह—भो! भगिनीपुत्र! किं कथयामि। रजकोऽतिनिर्दयोऽतिभारेण मां पीडयति। (२) घासमुष्टिमपि न प्रयच्छति। केवलं दूर्वाङ्कुरान् धूलिमिश्रितान् भक्षयामि। तत्कुतो मे शरीरे पुष्टिः। शृगाल आह—माम! यद्येवं तदस्ति (३) मरकतसदृशशष्पप्रायो नदीसनाथो रमणीयतरः प्रदेशः। तत्रागत्य मया सह सुभाषितगोष्ठीसुखमनुभवंस्तिष्ठ। लम्बकर्ण आह—भो! भगिनीसुत! युक्तमुक्तं भवता। परं वयं ग्राम्याः पशवोऽरण्यचारिणां वध्याः। तत्किं तेन भव्यप्रदेशेन। शृगाल आह—माम! मैवं वद। (४) मद्भुजपञ्जरपरिरक्षितः स देशः। तन्नास्ति कस्यचिदपरस्य तत्र प्रवेशः। परमनेनैव दोषेण (५) रजककदर्थितास्तत्र तिस्रो (६) रासभ्योऽनाथाः

(१) तडागोपान्ते=सरःसमीपे। प्रविरलेति—प्रविरला अल्पाल्पा दूर्वाणामङ्कुरा नूतनाः प्ररोहास्तान्। आस्वादयन्=भक्षयन्। (२) घासमुष्टिम्=मुष्टिमितं घासम्। (३) मरकतेति—मरकतैर्हरिन्मणिभिः सदृशानि शष्पाणि बालतृणानि तत्प्रायस्तद्बहुलः। नदीसनाथः=सरित्सहितः। रमणीयतरः=अतिमनोरमः। (४) मदिति—मद्भुजौ मदीयौ बाहू एव पञ्जरं तेन परिरक्षितः। (५) रजककदर्थिताः=रजकेन दुःखिताः। (६) रासभ्यः= गर्दभ्यः। अनाथाः=स्वामिविहीनाः।

सन्ति। ताश्च (१) पुष्टिमापन्ना यौवनोत्कटा इदं मामूचुः—यदि त्वमस्माकं सत्यो मातुलस्तदा किञ्चिद् ग्रामान्तरं गत्वास्मद्योग्यं कञ्चित् पतिमानय। तदर्थं त्वामहं तत्र नयामि। अथ शृगालवचनानि श्रुत्वा (२) कामपीडिताङ्गस्तमवोचत्—भद्र! यद्येवं तदग्रे भव, येनागच्छामि। अथवा साध्विदमुच्यते—

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम्।
यस्याः सङ्गेन जीव्येत म्रियेत च वियोगतः॥ ३४॥

तथा च—

यासां नाम्नापि कामः स्यात्सङ्गमं दर्शनं विना।
तासां दृक्सङ्गमं प्राप्य यन्न द्रवति कौतुकम्॥ ३५॥

तथानुष्ठिते शृगालेन सह सिंहान्तिकमागतः। सिंहोऽपि व्यथाकुलितस्तं दृष्ट्वा यावत् समुत्तिष्ठति, तावद्रासभः पलायितुमारब्धवान्। अथ तस्य पलायमानस्य सिंहेन (३) तलप्रहारो दत्तः। स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः।

---

(१) पुष्टिमापन्ना=हृष्टपुष्टशरीरा। यौवनोत्कटा=यौवनेन तारुण्येनोत्कटा उद्धता परिपूर्णयौवनसम्पन्ना इत्यर्थः। (२) कामपीडिताङ्ग=मन्मथमथितावयव।

"नामृतम्" इति—एकाम्=केवलां नितम्बिनीम्=सुन्दरीं मुक्त्वा=परित्यज्य किञ्चिदपि अमृतं=पीयूषं न, तथा विषं=हालाहलं न, यस्या=नितम्बिन्याः सङ्गेन=सम्भोगेन जीव्येत=प्राण्येत, वियोगेन=विरहेण म्रियेत=नश्येत च कामिना जनेनेति शेषः॥ ३४॥

"यासाम्" इति—यासाम्=सुन्दरीणां सङ्गमम्=सम्भोगं सम्मेलनं वा तथा दर्शनं विनापि नाम्नापि=नाममात्रेणापि कामः=मन्मथः स्यात्=समुद्भवेत् तासां दृक्सङ्गमम्=दृशोः सम्बन्धं प्राप्य यत् पुरुषो न द्रवति=नैवार्द्रीभवति तत् कौतुकम्=आश्चर्यम्।

स्त्रीदर्शनमात्रेणापि येषां हृदयं विकृतिं न याति तेऽश्मसारहृदया इति भावः॥ ३५॥

(३) तलप्रहारः=चपेटापातः। सचेति—स तलप्रहारः मन्दभाग्य-

अत्रान्ते शृगालः कोपाविष्टस्तमुवाच—भोः ! किमेवंविधः प्रहारस्ते । यद्गर्दभोऽपि तव पुरतो बलाद्गच्छति । तत्कथं गजेन सह युद्धं करिष्यसि । तद् दृष्टं ते बलम् । अथ (१) विलक्षस्मितं सिंह आह—भोः ! किमहं करोमि । मया न (२) क्रमः सज्जीकृत आसीत् । अन्यथा गजोऽपि मत्क्रमाक्रान्तो न गच्छति । शृगाल आह—अद्याप्येकवारं तवान्तिके तमानेष्यामि । परं त्वया सज्जीकृतक्रमेण स्थातव्यम् । सिंह आह—भद्र ! यो मां प्रत्यक्षं दृष्ट्वा गतः स पुनः कथमत्रागमिष्यति । तदन्यत्किमपि सत्त्वमन्विष्यताम् । शृगाल आह--किं तवानेन (३) व्यापारेण । त्वं केवलं सज्जितक्रमस्तिष्ठ । तथानुष्ठिते शृगालोऽपि यावद्रासभमार्गेण गच्छति तावत्तत्रैव स्थाने चरन्दृष्टः । अथ शृगालं दृष्ट्वा रासभः प्राह—भो ! भगिनीसुत ! शोभनस्थाने त्वयाहं नीतः । द्राङ्मृत्युवशं गतः । तत्कथय किं तत्सत्त्वम्, यस्य (४) अतिरौद्रवज्रसदृशकरप्रहारादहं मुक्तः । तच्छ्रुत्वा प्रहसञ्शृगाल आह—भद्र ! रासभी त्वामायान्तं दृष्ट्वा (५) सानुरागमालिङ्गितुं समुत्थिता । त्वं च (६) कातरत्वान्नष्टः । सा पुनर्न शक्ता त्वां विना स्थातुम् । तया तु (७) नश्यतस्तेऽवलम्बनार्थं हस्तः क्षिप्तः । नान्यकारणेन । तदागच्छ । सा त्वत्कृते प्रायोपवेशनोपविष्टा तिष्ठति । एतद्वदति—यल्लम्बकर्णो यदि मे भर्ता न भवति तदहमग्नौ जले वा प्रविशामि । पुनस्तस्य

---

स्य दुर्भाग्यस्य पुरुषस्य व्यवसाय इव उद्योग इव व्यर्थताङ्गत विफलोऽभूत्, तेन तलप्रहारेण गर्दभो न ममारेत्यर्थः । (१) विलक्षस्मितम्=विस्मयसाहितहास्योपेतम्, क्रियाविशेषणमिदम् । (२) क्रम =कटिबन्ध आक्रमितुं स्थानपरिपाटीत्यर्थः । (३) व्यापारेण=पर्यालोचनया । (४) अतिरौद्रेति—अतिरौद्रोऽत्यन्तं भयङ्करोऽतएव वज्रसदृशोऽशनितुल्यो य कर पाणि तस्य प्रहारा-
ाघातात् । (५) सानुरागम्=सप्रेम यथा तथा । (६) कातरत्वात्=अधीरत्वात् ।
) नश्यत =पलायमानस्य ।

वियोगं सोढुं न शक्नोमि इति । तत्प्रसादं कृत्वा तत्रागम्यताम् । नो चेत्तव स्त्रीहत्या भविष्यति । अपरं भगवान् कामः कोपं तवोपरि करिष्यति । उक्तं च—

स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ३६ ॥

अथासौ तद्वचनं श्रद्धेयतया श्रुत्वा भूपोऽपि तेन सह प्रस्थितः । अथवा साध्विदमुच्यते—

जानन्नपि नरो दैवात् प्रकरोति विगर्हितम् ।
कर्म किं कस्यचिल्लोके गर्हितं रोचते कथम् ॥ ३७ ॥

---

"स्त्रीमुद्राम्" इति—ये मूढाः=मूर्खाः कुधियः=दुर्बुद्धयो जना मकरध्वजस्य=कामस्य जयिनीम्=जयसाधनभूतां वशीकरणीं तथा—सर्वार्थसम्पत्करीम्=सर्वार्थाः सर्वप्रयोजनसाधिका या सम्पत् श्रीः तां कर्तुं शीलमस्या इति सर्वार्थसम्पत्करी तां प्रचुरतरसुखभोगसाधनधनादिकरीमित्यर्थः, एवम्भूतां स्त्रीमुद्राम्=स्त्रियो मुद्रा स्त्रीमुद्रा योषागुप्तेन्द्रियस्थानमित्यर्थः, तां प्रविहाय=परित्यज्य मिथ्याफलान्वेषिणः=मिथ्याफलं स्वर्गादिरूपं तस्यान्वेषिणस्तदर्थिनः सन्तो यान्ति=वनादौ विविक्ते स्थाने तपश्चरितुं गच्छन्ति, ते मूढाः तेनैव=स्त्रियस्त्यागेनैव निर्दयतरम्=अतिक्रूरं यथा तथा निहत्य=आघातं प्राप्य केचित् नग्नीकृताः=विवसना कृता दिगम्बराः सञ्जाता इत्यर्थः । केचित्—मुण्डिताः=मुण्डितशिरस्काः, केचित्तु—रक्तपटीकृताः=रक्तवसना बौद्धाः कृताः, केचित् जटिलाः=जटाधारिणो वानप्रस्थाः कृताः, अपरे—कापालिकाः=श्मशानवासिनो नरास्थिमालिनो भूत्वा शैवविशेषाः कृताः कामदेवेनेति सर्वत्र शेषः योजनीयम् ।

दिगम्बरादयः सर्वेऽपि सम्प्रदायाः स्त्रीमुद्रातिरस्कारजनितपापेन कामदेवशापं प्राप्ता एव परिभ्रमन्ति, वस्तुतस्तु स्त्रीमुद्रार्चनभक्तिमुक्तिभाज एव परं योगिन इति तात्पर्यम् । शार्दूलविक्रीडितम् ॥ ३६ ॥

"जानन्नि"ति—नरः=मनुष्यः जानन् अपि=इदं मत्कृते इष्टमनिष्टं

अत्रान्तरे सञ्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः। ततस्तं हत्वा शृगालं रक्षकं निरूप्य स्वयं स्नानार्थं नद्यां गतः। शृगालेनापि (१) लौल्यौत्सुक्यात्तस्य कर्णहृदयं भक्षितम्। अत्रान्तरे सिंहो यावत्स्नात्वा (२) कृतदेवार्चनः प्रतर्पितपितृगणः समायाति तावत् कर्णहृदयरहितो रासभस्तिष्ठति। तं दृष्ट्वा (३)कोपपरीतात्मा सिंहः शृगालमाह—पाप ! किमिदमनुचितं कर्म समाचरितम्। यत् कर्णहृदयभक्षणेनायमुच्छिष्टतां नीतः। शृगालः साविनयमाह—स्वामिन्! मा मैवं वद। (४)यत्कर्णहृदयरहितोऽयं रासभ आसीत्, तेनेहागत्य त्वामवलोक्य भूयोऽप्यागतः। अथ तद्वचनं श्रद्धेयं मत्वा सिंहस्तेनैव सह संविभज्य (५) निःशङ्कितमनास्तं भक्षितवान्। अतोऽहं

---

वेति बुध्यन् अपि दैवात्=दिष्टकारणात् (दैवप्रेरित इत्यर्थ) विगर्हितम् निन्दितं प्रकरोति=साधयति स्वस्य दु खप्रदमपि कर्म करोतीत्याशय। लोके=संसारे कस्यचित्=कस्यापि जन्तो गर्हितं=निन्दितं कर्म कथं केनापि प्रकारेण रोचते=प्रीयते किम्? न रोचते इत्यर्थः।

यज्जानन्नपि दु खमनिच्छन्नपि नरो गर्हिते कर्मणि प्रवर्त्तते तत्र दैवमेव हेतुरिति भाव।

अत्र मूले "कर्म" इति पदे विद्यमानेऽपि "कर्मेति शेष" इति वदन् कश्चिच्छेषाभ्यासी शिष्टैरेव प्रष्टव्य॰ ॥ ३७ ॥

(१) लौल्यौत्सुक्यात्=लोभाद्, क्षुधाजनितोत्कण्ठावशाच्च। तस्य= लम्बकर्णस्य। कर्णहृदयम्=कर्णौ च हृदयञ्चेति। (२) कृतदेवार्चन =कृतं देवस्यार्चनं पूजनं येन सः कृतनित्यक्रिय इत्यर्थ। (३) कोपपरीतात्मा= क्रोधप्लुष्टमना। (४) कर्णहृदयरहित =अस्य कर्णौ हृदयञ्च न स्त, तथाहि— यदि कर्णौ स्याता तर्हि सिंहगर्जनां श्रुत्वा पुनर्न कदाप्यागच्छेत्, हृदयं स्याच्चेत्तदा सिंहस्य तलप्रहारपातं कदापि न विस्मरेत्, पुनश्च नागच्छेत्, तस्मात्कर्णहृदयशून्य एवायमिति शब्दशक्तिमूलो ध्वनि॰। (५) निःशङ्कितमना = शङ्कित संशयरहितं मनो यस्य स॰।

ब्रवीमि—"आगतश्च गतश्चैव" इति। तन्मूर्ख ! कपटं कृतं त्वया। परं (१) युधिष्ठिरेणेव सत्यवचनेन विनाशितम्। अथवा साध्विदमुच्यते—

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः ।
स स्वार्थाद्भ्रश्यते नूनं युधिष्ठिर इवापरः ॥ ३८ ॥

मकर आह—कथमेतत्। स आह—

## कथा ३।

कस्मिंश्चिदधिष्ठाने कुम्भकारः प्रतिवसति स्म। स कदाचित् (२) प्रमादादर्द्धभग्नघटखर्परतीक्ष्णाग्रस्योपरि महता वेगेन धावन् पतितः। ततः (३) खर्परकोट्या पाटितललाटो रुधिरप्लाविततनुः कृच्छ्रादुत्थाय स्वाश्रयं गतः। ततश्चापथ्यसेवनात् स

---

(१) युधिष्ठिरेणेव=युधिष्ठिरो नाम कश्चित् कुम्भकार नतु धर्मसुत पाण्डव। सत्यवचनेन=यथार्थवचसा। विनाशितम्=निष्फलीकृतं "त्वया" पूर्वतोऽनुषङ्ग। पूर्वं भवता मा हन्तु कपटेनाह नीत, पश्चात्स्वसत्यकथनेन कृतोप्यसौ प्रयासो विफलीकृत। "युधिष्ठिर" नामकेन कुलालेनेत्येतदग्रे कथया स्पष्टीभविष्यति।

"स्वार्थम्" इति—यो दम्भी=छली सुमन्दधी =अतिमूर्ख स्वार्थम्=स्वप्रयोजनम् उत्सृज्य=त्यक्त्वा विस्मृत्येत्यर्थ, सत्यम्=यथार्थ ब्रूते=कथयति स अपर =पाण्डवादन्यो युधिष्ठिर इव नूनं=निश्चयेन स्वार्थात्=स्वाभिलषितात् भ्रश्यते=भ्रष्टो भवति। यदर्थं तेन कपटमाचरितं तन्न प्राप्नोति, लब्धप्रणाशयतीत्यर्थ ॥ ३८ ॥

(२) प्रमादात्=अनवधानात्। अर्धेति—अर्धं यथा तथा भग्नो यो घट कुम्भस्तस्य य खर्पर कपाल तस्य घटावयवस्य यत् तीक्ष्णमग्रं तस्योपरीत्यर्थ। (३) खर्परकोट्या=कपालस्याग्रभागेणेत्यर्थ। पाटितललाट=पाटित स्फोटित ललाटं मस्तकं यस्य स तादृश। रुधिरप्लाविततनु =रुधिरेण शोणितेन (रक्तेन) प्लाविता व्याप्ता तनु शरीरं यस्य स। करालताम्=भीषणताम्। गत =प्राप्त विकृतवदनो जात इत्यर्थः।

प्रहारस्तस्य करालतां गतः कृच्छ्रेण नीरोगतां नीतः। अथ कदाचिद् दुर्भिक्षपीडिते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चिद्राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव। सोऽपि राजा तस्य ललाटे (१) विकरालं प्रहारक्षतं दृष्ट्वा चिन्तयामास— यद् (२) वीरः पुरुषः कश्चिदयम्। नूनं तेन (३) ललाटपट्टे संमुखप्रहारः। अतस्तं सम्मानादिभिः सर्वेषां राजपुत्राणां मध्ये (४) विशेषप्रसादेन पश्यति स। तेऽपि राजपुत्रास्तस्य तं (५)प्रसादातिरेकं पश्यन्तः परमीर्ष्याधर्मं वहन्तो राजभयान्न किञ्चिदूचुः। अथान्यस्मिन्नहनि तस्य (६) भूपतेर्वीरसम्भावनायां क्रियमाणायां विग्रहे समुपस्थिते प्रकल्प्यमानेषु गजेषु, संनह्यमानेषु वाजिषु, योधेषु प्रगुणीक्रियमाणेषु, तेन भूभुजा स कुम्भकारः प्रस्तावानुगतं पृष्टो निर्जने— भो! राजपुत्र! किं ते नाम। का च जातिः। कस्मिन् सङ्ग्रामे प्रहारोऽयं ते ललाटे लग्नः। स आह—देव! नायं शस्त्रप्रहारः। युधिष्ठिराभिधः कुलालोऽहं प्रकृत्या। मद्गेहेऽनेकखर्पराण्यासन्। अथ कदाचिन्मद्यपानं कृत्वा निर्गतः प्रधावन् खर्परोपरि पतितः। तस्य प्रहारविकारोऽयं मे ललाट एवं विकरा-

---

(१) विकरालम्=विशेषेण करालं विकटम्। (२) वीर=शूर योद्धा। (३) ललाटपट्टे=मस्तकफलके। सम्मुखप्रहार=सङ्ग्रामे सम्मुख प्रहारो यस्य स। (४) विशेषप्रसादेन=अनुग्रहातिरेकेण। (५) प्रसादातिरेकम्=पारितोषकादिप्रदानेनानुग्रहाधिक्यम्। परम्=अधिकम्। ईर्ष्याधर्मम्=विद्वेषोत्पन्नं हार्दं विकारम्। (६) वीरसम्भावनायाम्=वीरपरीक्षायामित्यर्थ। विग्रहे=युद्धे। समुपस्थिते=प्राप्ते। प्रकल्प्यमानेषु=सज्ज्यमानेषु। गजेषु=हस्तिषु। सन्नह्यमानेषु=बध्यमानपल्ययनेषु। वाजिषु=अश्वेषु। योधेषु=शूरेषु। प्रगुणीक्रियमाणेषु=समरार्थं सज्जीक्रियमाणेषु। भूभुजा=राज्ञा। कुम्भकार=कुलाल। प्रस्तावानुगतम्=अवसरोचितं यथा तथा।

लतां गतः । तदाकर्ण्य राजा सव्रीडमाह—अहो ! (१) वञ्चितोऽहं राजपुत्रानुकारिणानेन कुलालेन । तद्दीयतां द्रागेतस्य चन्द्रार्द्धः । तथानुष्ठिते कुम्भकार आह—मा मैवं कुरु । पश्य मे रणे (२) हस्तलाघवम् । राजा आह—भोः ! सर्वगुणसम्पन्नो भवान् । तथापि गम्यताम् । उक्तं च—

शूरश्च कृतविद्यश्च दर्शनीयोऽसि पुत्रक ! ।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ३६ ॥

कुलाल आह—कथमेतत् । राजा कथयति—

## कथा ४ ।

कस्मिंश्चिद् (३) उद्देशे सिंहदम्पती प्रतिवसतः स्म । अथ सिंही पुत्रद्वयमजीजनत् । सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति । अथान्यस्मिन्नहनि तेन किमपि नासादितम् । येन भ्रमतोऽपि तस्य रविरस्तं गतः । अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः । (४) स च वालकोऽयमित्यवधार्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान् । ततः सिंह्याऽभिहितम्—भोः ! कान्त ! त्वयानीतं किञ्चिदस्माकं भोजनम् । सिंह आह—प्रिये ! मयाद्यैनं शृगालशिशुं परित्यज्य न किञ्चित्सत्त्वमासादितम् । स च मया बालोऽयमिति

---

(१) वञ्चित =प्रतारित । द्राक्=शीघ्रम् । एतस्य=कुलालस्य । चन्द्रार्ध = अर्धचन्द्र गलहस्त । (२) हस्तलाघवम्=लघुहस्तताम् रणे शत्रुपराजयाय शीघ्रकारित्वमित्यर्थ ।

"शूरश्चे" ति—हे ! पुत्रक ! त्वं शूर =वीर असि, तथा—कृतविद्यः= आखेटकक्रियाया पण्डित असि, दर्शनीयः=सुन्दर असि, तथापि यस्मिन् कुले=वंशे त्वमुत्पन्न =सञ्जात तत्र तस्मिन् कुले उत्पन्नेनेति शेष , गज = हस्ती न हन्यते=हन्तु न शक्यते ॥ ३६ ॥

(३) उद्देशे=प्रदेशविशेषे । सिंहदम्पती=सिंही सिंहश्चेत्यर्थ ।(४) स च= मया प्राप्त शृगालशिशुरित्यर्थ ।

मत्वा न व्यापादितो विशेषात् (१) स्वजातीयश्च। उक्तं च—

स्त्रीविप्रलिङ्गिबालेषु प्रहर्तव्यं न कर्हिचित्।
प्राणत्यागेऽपि सञ्जाते विश्वस्तेषु विशेषतः॥ ४० ॥

इदानीं त्वमेनं भक्षयित्वा पथ्यं कुरु। प्रभातेऽन्यत्किञ्चिदुपार्जयिष्यामि। सा प्राह—भोः! कान्त! त्वया बालकोऽयं विचिन्त्य न हतः। तत्कथमेनमहं स्वोदरार्थे विनाशयामि। उक्तं च—

अकृत्यं नैव कर्तव्यं प्राणत्यागेऽपि संस्थिते।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः॥ ४१ ॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति। इत्येवमुक्त्वा तमपि (२) स्वस्तनक्षीरेण परां पुष्टिमनयद्। एवं ते त्रयोऽपि शिशवः परस्परम् (३) अज्ञातजातिविशेषा एकाचारविहारा बाल्यसमयं निर्वाहयन्ति। अथ कदाचित्तत्र वने भ्रमन्नरण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति

---

(१) स्वजातीय=श्वापदत्वेन स्वजातिसम।

"स्त्रीविप्रे" ति—प्राणत्यागे=प्राणविनाशे सञ्जाते=समुपस्थितेऽपि स्त्रीविप्रलिङ्गिबालेषु=स्त्रीषु योषासु, विप्रेषु ब्राह्मणेषु, लिङ्गिषु संन्यासादियतिषु, बालेषु शिशुषु, कर्हिचित्=कदाचिदपि न प्रहर्त्तव्यम्=प्रहारो न दातव्य, विश्वस्तेषु=विश्वासमापन्नेषु तु विशेषत=विशेषेण नैव प्रहार कर्त्तव्य इत्यर्थ॥ ४०॥

"अकृत्यम्" इति—प्राणत्यागे=प्राणविनाशे संस्थिते=प्राप्तेऽपि अकृत्यम्=नीचं कर्म नैव कर्त्तव्यम्, कृत्यम्=करणीयं कर्म धर्मात्मकन्तु न च परित्याज्यम्=नैव परित्यक्तव्यम्। एष=एष एव सनातन=वैदिको धर्म।

एतज्जानता मयाऽसौ शृगालशिशुर्न हत इति भाव॥ ४१॥

(२) स्वस्तनक्षीरेण=निजस्तनदुग्धेन। (३) अज्ञातजातिविशेषा=अपरिचितस्वस्वगोत्रा। एकाचारविहारा=समानखानपानविहरणा इत्यर्थ। ल्यसमयम्=शैशवं वय.। निर्वाहयन्ति=गमयन्ति।

प्रचलितौ यावत्, तावत्तेन शृगालसुतेनाभिहितम्—अहो! गजोऽयं युष्मत्कुलशत्रुः। तन्न गन्तव्यमेतस्याभिमुखम्। एवमुक्त्वा गृहं प्रधावितः। तावपि (१) ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ। अथवा साध्विदमुच्यते—

एकेनापि सुधीरेण सोत्साहेन रणं प्रति।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात्॥ ४२॥

तथा च—

अत एव हि वाञ्छन्ति भूपा योधान् महाबलान्।
शूरान् वीरान् कृतोत्साहान् वर्जयन्ति च कातरान्॥ ४३॥

अथ तौ द्वावपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुः। यथा गजं दृष्ट्वा दूरतोऽपि नष्टः। सोऽपि तदाकर्ण्य कोपाविष्टमना (२) प्रस्फुरिताधरपल्लवस्ताम्रलोचनस्त्रिशिखां भृकुटिं कृत्वा तौ निर्भर्त्सयन् परुषतरवचनान्यु-

---

(१) ज्येष्ठेति—ज्येष्ठ प्रधानो यो बान्धवो भ्राता तस्य भङ्गात् पलायनात्। निरुत्साहताम्=निरुद्योगताम्।

"एकेनापी"ति—एकेनापि सुधीरेण=बुद्धिबलशालिना रणे=सङ्ग्रामं प्रति सोत्साहेन=सोद्योगेन महासत्त्ववतेत्यर्थ, सैन्यम्=योद्धृवृन्दं सोत्साहं जायते, भग्ने=मुख्यस्य वीरस्य त्रुटिते पलायिते सति भङ्गम्=पलायनम् अवाप्नुयात्=प्राप्नोतीत्यर्थ।

प्रधाने सेनाया नेतरि स्थिते सर्वे रणे स्थिरा अस्थिरे चाऽस्थिरा भवन्तीति भाव॥ ४२॥

"अत एव" इति—अत एव=प्रधानस्य महाबलित्वेनापेक्षणाद्धेतोरेव हि=निश्चयेन भूपा=राजान, महाबलान्=अप्रतिहतशक्तिसम्पन्नान्, शूरान्=पराक्रमण[परावस्कन्दन]शालिन, वीरान्=वीर्यवत, कृतोत्साहान्=सदैव दृढ़योद्योगिन, योधान्=सैनिकान् वाञ्छन्ति=कामयन्ते, कातरान्=रणभीरूंश्च वर्जयन्ति=त्यजन्ति॥ ४३॥

(२) प्रस्फुरिताधरपल्लव=प्रकम्पिताधरकिसलय। ताम्रलोचन=रक्तनेत्रः। त्रिशिखाम्=तिस्र शिखा कोटयो यस्या सा ताम्। त्रिशूलवत्प्रतीयमा-

वाच। ततः सिंह्यैकान्ते नीत्वा प्रबोधितोऽसौ—वत्स! मैवं कदाचिज्जल्प। भवदीयलघुभ्रातरावेतौ। अथासौ प्रभूतकोपाविष्टस्तामुवाच—किमहमेताभ्यां शौर्येण रूपेण विद्याभ्यासेन कौशलेन वा हीनो येन मामुपहसतः। तन्मयावश्यमेतौ व्यापादनीयौ। तदाकर्ण्य सिंही तस्य जीवितमिच्छन्त्यन्तर्विहस्य प्राह—

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक!।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ४४ ॥

तत्सम्यक्शृणु। वत्स! त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः। तद्यावदेतौ मत्पुत्रौ शिशुत्वात्त्वां शृगालं न जानीतः, तावद् द्रुततरं गत्वा स्वजातीयानां मध्ये भव। नो चेदाभ्यां हतो मृत्युपथं समेष्यसि। सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैः शनैरपसृत्य स्वजात्या मिलितः। तस्मात्त्वमपि यावदेते राजपुत्रास्त्वां कुलालं न जानन्ति, तावद् द्रुततरमपसर। नो चेदेतेषां सकाशाद्विडम्बनां प्राप्य मरिष्यसि। कुलालोऽपि तदाकर्ण्य सत्वरं प्रनष्टः। अतोऽहं ब्रवीमि—"स्वार्थमुत्सृज्य यो दम्भी" इति॥ धिङ्मूर्ख! यत्त्वया स्त्रियोऽर्थ एतत्कार्यमनुष्ठातुमारब्धम्। न हि स्त्रीणां कथञ्चिद्विश्वासमुपगच्छेत्। उक्तं च—

यदर्थे स्वकुलं त्यक्तं जीवितार्धं च हारितम्।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ॥४५॥

मकर आह—कथमेतत्। वानर आह—

---

नामित्यर्थ। भृकुटीम्=भ्रूभङ्गीम्।

"शूरोऽसी"ति—व्याख्यातमधस्तात् ४६१ पृ०। पाठे तु किञ्चिदेवान्तरं क्वाचित्कम् ॥ ४४ ॥

"यदर्थे" इति—यदर्थे=यस्या भार्यायाः कृते स्वकुलं=स्ववंशः त्यक्तम्=रहितम्, जीवितार्धञ्च=तथा जीवितस्य आयुषः अर्धं हारितम्=विसृष्टम् निःस्नेहा=प्रीतिशून्या सती मां तत्परवशमपि त्यजति=जहाति, अतः

## कथा ५।

अस्ति कस्मिंश्चिदधिष्ठाने कोऽपि ब्राह्मणः। तस्य च भार्या प्राणेभ्योऽप्यतिप्रियासीत्। सापि प्रतिदिनं कुटुम्बेन सह कलहं कुर्वाणा न विश्राम्यति। सोऽपि ब्राह्मणः कलहमसहमानो (१) भार्यावात्सल्यात् स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह (२) विप्रकृष्टं देशान्तरं गतः। अथ महाटवीमध्ये ब्राह्मण्याभिहितः—आर्यपुत्र! (३) तृष्णा मां बाधते। तदुदकं क्वाप्यन्वेषय। अथासौ तद्वचनानन्तरं यावदुदकं गृहीत्वा समागच्छति, तावत्तां मृतामपश्यत्। (४) अतिवल्लभतया विषादं कुर्वन् यावद्विलपति तावदाकाशे वाचं शृणोति। तथा हि—यदि ब्राह्मण! त्वं स्वकीयजीवितस्यार्धं ददासि ततस्ते जीवति ब्राह्मणी। तच्छ्रुत्वा ब्राह्मणेन (५) शुचीभूय तिसृभिर्वाचाभिः स्वजीवितार्धं दत्तम्। वाक्समेव च ब्राह्मणी जीविता सा। अथ तौ जलं पीत्वा वनफलानि भक्षयित्वा गन्तुमारब्धौ। ततः क्रमेण कस्यचिन्नगरस्य प्रदेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्यामभिहितवान्—भद्रे! यावदहं भोजनं गृहीत्वा समागच्छामि तावदत्र त्वया स्थातव्यमित्यभिधाय ब्राह्मणो नगरमध्ये जगाम। अथ तस्यां पुष्पवाटिकायां (६) पङ्गुररघट्टं

---

च नरः=मनुष्यः स्त्रीणां=स्त्रीषु विश्वसेत्=विश्वासं कुर्यात्, न कोऽपि बुद्धिमान् करोतीत्यर्थः। एतादृशीषु विश्वासी महामूढ एवेति भावः। स्त्रीणां विश्वसेत्' इत्यत्र "गुरुविप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः" रितिवत् सम्बन्धविवक्षया षष्ठी ॥ ४५ ॥

(१) भार्यावात्सल्यात्=भार्यायाः प्रीतिकारणात्। (२) विप्रकृष्टम्=दूरतरम्। (३) तृष्णा=पिपासा। बाधते=पीडयति। (४) अतिवल्लभतया=अतिप्रीतिमत्तया। विषादं=विलापं खेदमिति यावत्। (५) शुचीभूय=आचम्येत्यर्थः। (६) पङ्गुः=श्रोणः, जङ्घाविकल इत्यर्थः। "श्रोणपङ्गौ" इत्यमरः। अरघट्टम्=कूपोपरिखचितजलोद्धरणदारुखण्डम्। खेलयन्=जलनिष्कासनरज्जुं हस्तेन तोलयन् क्षिपन्वा।

खेलयन्दिव्यगिरा गीतमुद्गिरति । तच्च श्रुत्वा (१) कुसुमेषुणार्दितया ब्राह्मण्या तत्सकाशं गत्वाभिहितम्—भद्र ! यदि मां न कामयसे तन्मत्सक्ता स्त्रीहत्या तव भविष्यति । पङ्गुरब्रवीत्—किं व्याधिग्रस्तेन मया करिष्यसि । साब्रवीत्--किमनेनोक्तेन । अवश्यं त्वया सह मया सङ्गमः कर्तव्यः । तच्छ्रुत्वा तथा कृतवान् । सुरतानन्तरं साब्रवीत्—इतः प्रभृति यावज्जीवं मयात्मा भवते दत्तः, इति ज्ञात्वा भवानप्यस्माभिः सहागच्छतु । सोऽब्रवीत्—"एवमस्तु"। अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुमारब्धः । साब्रवीत्—एष पङ्गुर्बुभुक्षितः । तदेनस्यापि कियन्तमपि ग्रासं देहि इति । तथानुष्ठिते ब्राह्मण्याभिहितम्—ब्राह्मण ! सहायहीनस्त्वं यदा ग्रामान्तरं गच्छसि तदा मम वचनसहायोऽपि नास्ति । तदेनं पङ्गुं गृहीत्वा गच्छावः । सोऽब्रवीत्—न शक्नोम्यात्मानमप्यात्मना (२) वोढुम् । किं पुनरेनं पङ्गुम् । साब्रवीत्—(३) पेटाभ्यन्तरस्थमेनमहं नेष्यामि । अथ (४)तत्कृतकवचनव्यामोहितचित्तेन तेन प्रतिपन्नम् । तथानुष्ठितेऽन्यस्मिन् दिने कूपोपकण्ठे विश्रान्तो ब्राह्मणस्तया च पङ्गुपुरुषासक्तया सम्प्रेर्य कूपान्तः पातितः। सापि पङ्गुं गृहीत्वा कस्मिंश्चिन्नगरे प्रविष्टा । तत्र (५) शुल्कचौर्यरक्षानिमित्तं राजपुरुषैरितस्ततो भ्रमद्भिस्तन्मस्तकस्था पेटा दृष्टा, बलादाच्छिद्य राजाग्रे नीता। राजा च यावत्तामुद्घाटयति, तावत्तं पङ्गुं ददर्श । ततः सा

---

(१) कुसुमेषुणा=कामबाणेन । (२) वोढुम्=ऊढ्तुं वहनं कर्त्तुमित्यर्थः । (३) पेटेति—मञ्जूषामध्यस्थितम् । (४) तदिति—तस्या दुष्टाया भार्याया कृतकवचनैर्व्यामोहितं भ्रान्तं चित्तं हृदयं यस्य स तेन। प्रतिपन्नम्=विश्वस्तम्। (५) शुल्केति—शुल्कं राज्ञो देयं करस्तस्य यत् चौर्यं हरणं वञ्चनापूर्वकमदानम्, तद्रक्षानिमित्तम् ।

ब्राह्मणी विलापं कुर्वती राजपुरुषानुपदमेव तत्रागता। राज्ञा पृष्टा—को वृत्तान्तः इति। साऽब्रवीत्—ममैष भर्ता (१) व्याधिबाधितो दायादसमूहैरुद्वेजितो मया स्नेहव्याकुलितमानसया शिरसि कृत्वा भवदीयनगर आनीतः। तच्छ्रुत्वा राजाऽब्रवीत्—ब्राह्मणि! त्वं मे भगिनी। ग्रामद्वयं गृहीत्वा भर्त्रा सह भोगान् भुञ्जाना सुखेन तिष्ठ। अथ स ब्राह्मणो दैववशात् केनापि साधुना (२) कूपादुत्तारितः परिभ्रमंस्तदेव नगरमायातः। तया दुष्टभार्यया दृष्टो राज्ञे निवेदितः—राजन्! अयं मम भर्तुर्वैरी समायातः। राज्ञापि वध आदिष्टः। सोऽब्रवीत्—देव! अनया मम सक्तं किञ्चिद् गृहीतमस्ति। यदि त्वं धर्मवत्सलः तद्दापय। राजाऽब्रवीत्—भद्रे! यत्त्वयास्य सक्तं किञ्चिद् गृहीतमस्ति तत्समर्पय। सा प्राह—देव! मया न किञ्चिद् गृहीतम्। ब्राह्मण आह—यन्मया (३) त्रिवाचिकं स्वजीवितार्धं दत्तम्, तद्देहि। अथ सा राजभयात्तत्रैव त्रिवाचिकमेव जीवितार्धमनेन दत्तम् इति जल्पन्ती प्राणैर्विमुक्ता। ततः सविस्मयं राजाऽब्रवीत्—किमेतद् इति। ब्राह्मणेनापि पूर्ववृत्तान्तः सकलोऽपि तस्मै निवेदितः। अतोऽहं ब्रवीमि—"यदर्थे स्वकुलं त्यक्तम्" इति॥ वानरः पुनराह—साधु चेदमुपाख्यानकं श्रूयते—

न किं दद्यान्न किं कुर्यात् स्त्रीभिरभ्यर्थितो नरः।
अनश्वा यत्र हेषन्ते शिरः पर्वणि मुण्डितम्॥ ४६॥

मकर आह—कथमेतत्। वानरः कथयति—

(१) व्याधिबाधित=रोगपीडित। दायादसमूहै=दायादा पितृधनाशभागिन सपत्नास्तेषा सङ्घै समुदायै सपत्नसङ्घै। उद्वेजित=क्लेशितः। (२) कूपादुत्तारित=कूपादुद्धृत। (३) त्रिवाचिकम्=वारत्रयं "ददामि" इत्युक्त्वा यद्दत्तम्।

"ने" ति—स्त्रीभि=नारीभि. अभ्यर्थित=प्रार्थित नर=मनुष्य. किं

## कथा ६ ।

अस्ति (१) प्रख्यातबलपौरुषोऽनेकनरेन्द्रमुकुटमरीचिजालजटिलीकृतपादपीठः शरच्छशाङ्ककिरणनिर्मलयशाः समुद्रपर्यन्तायाः पृथिव्या भर्ता नन्दो नाम राजा । तस्य (२) सर्वशास्त्राधिगतसमस्ततत्त्वः सचिवो वररुचिर्नाम । तस्य च प्रणयकलहेन जाया कुपिता । सा चातीव वल्लभानेकप्रकारं (३) परितोष्यमाणापि न प्रसीदति । ब्रवीति च भर्ता—भद्रे ! येन प्रकारेण तुष्यसि तं वद । निश्चितं करोमि । ततः कथञ्चित्तयोक्तम्—यदि शिरो मुण्डयित्वा मम पादयोर्निपतसि,

---

न दद्यात्, किं न कुर्यात् अपितु सर्वमपि दद्यात् कुर्याच्चेत्यर्थः, यत्र= यस्मिन् देशे यस्या दशाया वा अनश्वा =अश्वादन्येऽपि हेषन्ते=अश्ववद् हेषाशब्दं कुर्वन्ति, तत्र=तस्मिन् देशे तस्या दशाया पर्वणि=पर्वदिने शिर = उत्तमाङ्गं मुण्डितं मयेति शेष । एतत्तात्पर्यमग्रे कथया स्फुटीभविष्यति ।

सङ्क्षिप्तसारस्तु—स्त्रीणा वशङ्गता कार्याकार्यं किमपि न विवेचयन्ते, कामातुरतयाऽनाचर्यमप्याचरन्तीति बोध्यम् ॥ ४६ ॥

(१) **प्रख्यातेति**—प्रख्यातं प्रसिद्ध बलं सैन्यं पौरुषं पराक्रमश्च यस्य स । **अनेकेति**—अनेके नाना ये राजानस्तेषा यद् वृन्दं सङ्घ तस्य मुकुटाना किरीटाना मरीचिजालं किरणपुञ्जै जटिलीकृतं कर्वुरित व्याप्तमिति यावत् पादपीठं सिंहासनं यस्य स तादृश, प्रह्वीभूतभूपव्रातकिरीटमणिगणगुणितचरणस्थापनासन इत्यर्थ । **शरदिति**—शरच्छशाङ्कस्य शारदचन्द्रस्य किरणवत् मयूखवन्निर्मलं धवलं यशः कीर्त्तिर्यस्य स इत्यर्थ । समुद्रपर्यन्ताया =सागरमेखलाया. । भूमे =पृथिव्या । भर्त्ता= शासक पालकश्च, समुद्रान्तभूमेरधिपतिश्चक्रवर्त्तीति फलितम् । (२) **सर्वेति**—सर्वेषु सकलेषु शास्त्रेषु शब्दादिषु अधिगतं ज्ञातं समस्तं पूर्णं तत्त्वं सारो येन स तादृश परमनीतिविदा धौरेय इत्यर्थ । (३) परितोष्य- ।१ ।=प्रसन्नीक्रियमाणा ।

तदा प्रसादाभिमुखी भवामि । तथानुष्ठिते प्रसन्नासीत् । अथ नन्दस्य भार्यापि तथैव रुष्टा प्रसाद्यमानापि न तुष्यति । तेनोक्तम्—भद्रे ! त्वया विना मुहूर्तमपि न जीवामि । पादयोः पतित्वा त्वां प्रसादयामि । साब्रवीत्—यदि (१) खलीनं मुखे प्रक्षिप्याहं तव पृष्ठे समारुह्य त्वां धावयामि । धावितस्तु यदि(२)अश्ववद् ह्रेषसे, तदा प्रसन्ना भवामि । राज्ञापि तथैवानुष्ठितम् । अथ प्रभातसमये सभायामुपविष्टस्य राज्ञः समीपे वररुचिरायातः । तं च दृष्ट्वा राजा पप्रच्छ—भो ! वररुचे !(३) किं पर्वणि मुण्डितं शिरस्त्वया । सोऽब्रवीत्—

न किं दद्यान्न किं कुर्यात् स्त्रीभिरभ्यर्थितो नरः ।
अनश्वा यत्र ह्रेषन्ते शिरः पर्वणि मुण्डितम् ॥ ४७ ॥

तद् भो ! दुष्टमकर ! त्वमपि नन्दवररुचिवत् स्त्रीवश्यः । ततो भद्र ! आगतेन त्वया मां प्रति (४) वधोपायप्रयासः प्रारब्धः ।

---

(१) खलीनम्=कविकाम् । (२) अश्ववत्=वाजिवत् । ह्रेषसे=शब्दायसे । (३) किमिति—किमर्थं त्वया पर्वणि पर्वदिवसे शिरो मुण्डितमिति राज्ञ प्रश्न । पर्वाणि—

चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र ! रविसङ्क्रान्तिरेव च ॥

इति शास्त्रोक्तानि । एषु क्षौरकर्म निषिद्धम् ।

सोऽब्रवीदिति—वररुचिरवोचादित्यर्थ । वररुचिना स्वज्योति शास्त्रज्ञता-प्रभावेण राज्ञोऽपि चेष्टित ज्ञातमत "न किं" मित्याद्युत्तरमदायि ।

"न किं"मिति—व्याख्यातमधस्तात् ।

अत्र मकर प्रति वानरस्यायमभिसन्धि—यत्र नन्दसदृशो राजानो, वररुचिसदृशो महान्त पण्डिताश्चापि स्त्रीभिरेतादृशीं दशा नीता', तत्र भवादृशस्य क्षुद्रस्य तु कैव कथेति ॥ ४७ ॥

(४) वधोपायप्रयास =मारणप्रकारोद्योग । प्रारब्धः=प्रक्रान्तः ।

परं(१)स्ववाग्दोषेणैव प्रकटीभूतः। अथवा साध्विदमुच्यते—

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम्॥ ४८॥

तथा च—

सुगुप्तं रक्ष्यमाणोऽपि दर्शयन् दारुणं वपुः।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः॥४९॥

मकर आह—कथमेतत्। वानरः कथयति—

## कथा ७।

कस्मिंश्चिदधिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म। तस्य च गर्दभ एकोऽस्ति। सोऽपि घासाभावादतिदुर्बलतां गतः। अथ तेन रजकेनाटव्यां परिभ्रमता मृतव्याघ्रो दृष्टः। चिन्तितं च—अहो! शोभनमापतितम्। अनेन व्याघ्रचर्मणा (२) प्रतिच्छाद्य रासभं रात्रौ (३) यवक्षेत्रेषूत्स्रक्ष्यामि। येन

(१) स्ववाग्दोषेण=स्वस्य आत्मनो या वाक् वाणी स्वाभिप्रायतथ्यकथनरूपा तद्दोषेण। प्रकटीभूत =स्फुटताङ्गत ।

"आत्मन"इति—शुकसारिका पक्षिण आत्मन =स्वस्य मुखदोषेण=मधुरभाषणरूपेण बध्यन्ते=यम्यन्ते पञ्जरे स्थाप्यन्ते शाकुनिकैर्जनैरिति शेष, तत्र=तेषु पक्षिषु मध्ये बका =धवलाङ्गत्वेन रम्या अपि न बध्यन्ते, एतद्वीजन्तु—मौनम्=तूष्णीम्भाव सर्वार्थसाधनम्=सर्वेषामर्थाना प्रयोजनाना साधनमुपायो वर्त्तते। प्राज्ञ एतस्यैवालम्बनं कुर्यादिति भाव ॥४८॥

"सुगुप्त"मिति—व्याघ्रचर्मप्रतिच्छन्न =व्याघ्रस्य चर्मणा त्वचा प्रतिच्छन्न प्रावृतशरीर सुगुप्तम्=निगूढं यथा तथा (स्वस्वामिना रजकेन) रक्ष्यमाण =स्थाप्यमानोऽपि रासभ =गर्दभ दारुण=दर्शनानर्हं भीतिजनकं वपु =शरीरं दर्शयन्=प्रकटीकुर्वन् वाक्कृते=स्वजातिशब्दनिमित्तं स्वशब्देनैवेत्यर्थ, हत =पञ्चत्वमगमत्॥ ४९॥

(२) प्रतिच्छाद्य=प्रावार्य। (३) यवक्षेत्रेषु=यव-(दीर्घशूक)-शस्येषु। [उत्स्र]क्ष्यामि=त्यक्ष्यामि। निष्कासयिष्यन्ति=निकालयिष्यन्ति।

व्याघ्रं मत्वा समीपवर्तिनः क्षेत्रपाला एनं न निष्कासयिष्यन्ति। तथानुष्ठिते रासभो यथेच्छया यवभक्षणं करोति । प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति । एवं गच्छता कालेन स रासभः (१) पीवरतनुर्जातः कृच्छ्राद्बन्धनस्थानमपि नीयते। अथान्यस्मिन्नहनि स मदोद्धतो दूराद्रासभीशब्दमशृणोत्। तच्छ्रवणमात्रेणैव स्वयं शब्दयितुमारब्धः। अथ ते क्षेत्रपाला रासभोऽयं व्याघ्रचर्मप्रतिच्छन्न इति ज्ञात्वा लगुडशरपाषाण-प्रहारैस्तं व्यापादितवन्तः। अतोऽहं ब्रवीमि—"सुगुप्तं रक्ष्यमाणोऽपि" इति॥ अथैवं तेन सह वदतो मकरस्य जलचरेणैकेनागत्याभिहितम्—भो! मकर! त्वदीया भार्यानशनोपविष्टा त्वयि (२) चिरयति प्रणयाभिभवाद्विपन्ना। एवं (३) तद्वज्र-पातसदृशवचनमाकर्ण्यातीव व्याकुलितहृदयः प्रलपितमेवं चकार—अहो! किमिदं सञ्जातं मे मन्दभाग्यस्य। उक्तं च—

माता यस्य गृहे नास्ति भार्या च प्रियवादिनी।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्॥ ५०॥

तन्मित्र! क्षम्यताम्। मया तेऽपराधः कृतः। सम्प्रत्यहं तु स्त्रीवियोगाद् (४) वैश्वानरप्रवेशं करिष्यामि। तच्छ्रुत्वा वानरः प्रहसन् प्रोवाच—भो! ज्ञातो मया प्रथममेव यत्त्वं (५) स्त्रीवश्यः

(१) पीवरतनु=स्थूलकाय। (२) चिरयति=विलम्बयति सति। प्रणयाभिभवात्=प्रीत्यवमाननात्। विपन्ना=प्रेता मृतेत्यर्थ। (३) तदिति—तस्य जलचरस्य वज्रपातसदृशम् अशनिपतनतुल्यम्। वच=वाक्यम्। व्याकुलितहृदय=विह्वलितान्त करण।

"माता" इति—यस्य=जनस्य गृहे माता=जननी नास्ति, प्रियवादिनी मधुरवाक् भार्या=नारी च नास्ति, तेन अरण्यम्=जङ्गलं गन्तव्यम्=यातव्यम्, भिक्षुणा सता जङ्गलस्यैवाश्रयो ग्रहीतव्य कुत—मातुरभावे भार्याभावे च यथा अरण्यं तथा=तद्वदेव तस्य गृहमित्यर्थ॥ ५०॥

(४) वैश्वानरप्रवेशम्=अनलप्रवेशम्। (५) स्त्रीवश्य=योषाधीन।

स्त्रीजितश्च। साम्प्रतं च प्रत्ययः सञ्जातः। तन्मूढ! आनन्देऽपि जाते त्वं विषादं गतः। तादृग्भार्यायां मृतायामुत्सवः कर्तुं युज्यते। उक्तं च यतः—

या भार्या दुष्टचारित्रा सततं कलहप्रिया।
भार्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा ॥ ५१ ॥
तस्मात् सर्वप्रयत्नेन नामापि परिवर्जयेत्।
स्त्रीणामिह हि सर्वासां य इच्छेत् सुखमात्मनः ॥ ५२ ॥
यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः।
यद्बहिस्तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥ ५३ ॥
के नाम न विनश्यन्ति मिथ्याज्ञानान्नितम्बिनीम्।
रम्यां य उपसर्पन्ति दीपाभां शलभा यथा ॥ ५४ ॥

---

"या" इति—या दुष्टचारित्रा=दुष्टं पापिष्ठं चारित्रं चरितं यस्याः सा व्यभिचारिणीत्यर्थ, तथा सततं=निरन्तरं कलहप्रिया=कलहकारिणी भार्या=गृहिणी अस्तीति शेष, विदग्धै.=पण्डितै सा भार्यारूपेण=स्त्रीरूपेण परिणता दारुणा=कठोरा भयजनिका जरा=वृद्धावस्था ज्ञेया=बोद्धव्या ॥ ५१ ॥

"तस्मादि" ति—तस्मात्=स्त्रीणा दुश्चारित्र्यस्य नैसर्गिकत्वाद्धेतो· इह संसारे हि=निश्चयेन य आत्मन =स्वस्य सुखम्=आनन्दम् इच्छेत्=अभिलषेत्, स =पुरुष सर्वप्रयत्नेन=प्रयत्नमात्रेण अशेषप्रकारेणेति यावत्, सर्वासामेव स्त्रीणा=नारीणा नामाऽपि परिवर्जयेत्=परिहरेदित्यर्थ·, प्रसङ्गस्य (सम्भोगादे.) परिवर्जनस्य तु कैव कथेति भाव ॥ ५२ ॥

अद्भुतरचना स्त्रियो भवन्तीत्याह—"यदन्त" इति—आसां स्त्रीणा यद् अन्त =मनसि वर्तते तत् जिह्वाया=वाचि न, यद् जिह्वाया तद् बहि =

अन्तर्विषमया ह्येता बहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥ ५५ ॥
ताडिता अपि दण्डेन शस्त्रैरपि विखण्डिताः ।
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ ५६ ॥
आस्तां तावत् किमन्येन दौरात्म्येनेह योषिताम् ।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा ॥ ५७ ॥

---

उपसर्पन्ति=श्रयन्ते विषयेन्द्रियसंसर्गजन्यक्षणिकसुखलाभाय सेवन्ते, ते के नाम न विनश्यान्ति=नाशमुपयान्ति अपितु सर्वेऽपि विनष्टा भवन्ति ।

यथा शलभा दीपप्रभा दृष्ट्वाऽज्ञानात्तत्र पतित्वा म्रियन्ते एवमेव रुधिरास्थिमांसपुत्तलिकामपि स्त्रियं सुन्दरीं मत्वा मोहादेव ता सेवमाना विशिष्टाज्ञतयोभयलोकपरिभ्रष्टा भवन्तीति भाव ॥ ५४ ॥

"अन्त" रिति—एता योषित =स्त्रिय स्वभावादेव=निसर्गादेव प्रकृत्येति यावत् अन्तर्विषमया =हृदये हालाहलविषतुल्या. वहिश्चैव=वाह्यत एव गुञ्जाफलसमाकारा =गुञ्जाफलै रक्तिकाभि समस्तुल्य आकारो मूर्त्तिर्यासा ता मनोरमा =चेतोहारिण्यो भवन्ति ।

गुञ्जाफलानि वहिरेव मनोहृन्ति रक्तवर्णत्वात्, भक्ष्यमाणानि तु विषरूपत्वात् जीवन हरन्ति, एवमेव स्त्रियोऽपि सेव्यमाना प्राणघातिन्यो भवन्तीति प्रत्यक्षसिद्धमेतत् लोकव्यवहारकुशलानामिति भाव ॥ ५५ ॥

"ताडिता" इति—दण्डेन=यष्ट्या ताडिता अपि=दत्ताघाता अपि शस्त्रै =खड्गादिभि खण्डिता =छेदिता अपि योषित =नार्यो वशम्=आधीनता न यान्ति=नैव प्राप्नुवन्ति, तथा—दानै =अन्नवस्त्रभूषणादिदानै·, संस्तवै =सम्यक् नानाप्रकाराभि स्तुतिभिरपि अर्थादनेकैरादरैरपि "न वशं यान्ति" इत्यनुषञ्जनीयम् ॥ ५६ ॥

"आस्ताम्"इति—इह लोके योषिताम्=नारीणाम् अन्येन=निरूपयिष्यमाणादितरेण दौरात्म्येन=दुष्टभावेन निरूपितेन सता किम् ? आसा किमन्यद् दौरात्म्यं निगाद्यम्, आस्ता तावत्=तिष्ठतु नामान्यद् दुरात्मतावर्णनम्, एता स्वोदरेण=स्वेन निजेन उदरेण जठरेण विधृतम्=धारितं निजं=स्वीयं

रूक्षायां स्नेहसद्भावं कठोरायां सुमार्दवम् ।
नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ५८ ॥

मकर आह—भो ! मित्र ! अस्त्वेतत् । परं किं करोमि । ममानर्थद्वयमेतत् सञ्जातम् । एकस्तावद् गृहभङ्गः, अपरस्त्वाद्विधेन मित्रेण सह चित्तविश्लेषः । अथवा भवत्येवं दैवयोगात् । उक्तं च यतः—

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव ।
नाभूज्जारो न भर्ता च किं निरीक्षसि नग्निके ! ॥ ५९ ॥

वानर आह—कथमेतत् । मकरोऽब्रवीत्—

---

पुत्रं=सुतमपि रुषा=कोपेन घ्नन्ति=मारयन्ति ।

यासा दुष्टाना स्वौरसेषु सुतादिष्वेव न स्नेह , तासामन्यत्र स्नेहविषये किं वक्तव्यमिति सन्त सन्तु साक्षिण इति भाव ॥ ५७ ॥

"रूक्षाया"मिति—बाल =मन्दमति पुरुष बालिकायाम्=स्त्रिया रुक्षाया=कर्कशाया स्नेहसद्भावम्=प्रीतिसत्ताम्, तथा–कठोराया=निष्ठुराया सुमार्दवम्=परमकोमलताम्, तथा—नीरसायाम्=शुष्कायामनुरागहीनायामित्यर्थ , रसम्=अनुरागं विकल्पयेत्=विभावयेत् विपरीता कल्पना कुर्यादित्यर्थ ।

अस्यायमाशय —स्त्रिया रुक्षायामपि स्नेहबुद्धि , कठोराया कोमलमति , नीरसायामनुरागधीरिति विकल्पना बालाना मूर्खाणामेव जायते नतु विवेकिनामिति ॥ ५८ ॥

"यादृशम्"इति—मम पाण्डित्यम्=प्राज्ञत्वं ( बुद्धिमत्ता ) यादृशम् यद्रूपावच्छिन्नं तव=तवापि पाण्डित्यं द्विगुणम्=द्विरावृत्तं तादृशं=तद्रूपावच्छिन्नमेव ।

जार =उपपत्ति न अभूत्=नासीत्, भर्त्ता च नाभूदिति पूर्वसम्बन्ध , अर्थात् जारो भर्त्ता चैतौ द्वावपि हारितौ । हे ! नग्निके=दिगम्बरे वस्त्रविहीनत्वात्, किं निरीक्षसि=किमालोकसे ? ।

अत्र "निरीक्षसे" इत्यात्मनेपदे भाव्ये परस्मैपदं चिन्त्यम्, पूर्वदर्शिता-[illegible] समाधेयम् ॥ ५९ ॥

## कथा ८।

कस्मिंश्चिदधिष्ठाने (१) हालिकदम्पती प्रतिवसतः स्म। सा च हालिकभार्या पत्युर्वृद्धभावात्सदैव (२) अन्यचित्ता न कथञ्चिद् गृहे स्थैर्यमालम्बते। केवलं परपुरुषानन्वेषमाणा परिभ्रमति। अथ केनाचित् परवित्तापहारकेण धूर्तेन सा लक्षिता विजने प्रोक्ता च—सुभगे! मृतभार्योऽहम्। त्वद्दर्शनेन स्मरपीडितश्च। तद्दीयतां मे (३) रतिदक्षिणा। ततस्तयाभिहितम्—भोः! सुभग! यद्येवं तदस्ति मे पत्युः प्रभूतं धनम्। स च वृद्धत्वात् प्रचलितुमप्यसमर्थः। ततस्तद्धनमादायाहमागच्छामि। येन त्वया सहान्यत्र गत्वा यथेच्छया रतिसुखमनुभविष्यामि। सोऽब्रवीत्—रोचते ममाप्येतत्। तत् (४) प्रत्यूषेऽत्र स्थाने शीघ्रमेव समागन्तव्यम्, येन शुभतरं किञ्चिन्नगरं गत्वा त्वया सह (५) जीवलोकः सफलीक्रियते। सापि 'तथा' इति प्रतिज्ञाय प्रहसितवदना स्वगृहं गत्वा रात्रौ प्रसुप्ते भर्तरि सर्वं वित्तमादाय प्रत्यूषसमये तत्कथितस्थानम् (६) उपाद्रवत्। धूर्तोऽपि तामग्रे विधाय दक्षिणां दिशमाश्रित्य सत्वरगतिः प्रस्थितः। एवं तयोर्व्रजतोर्योजनद्वयमात्रेणाग्रतः काचिन्नदी समुपस्थिता। (७) तां दृष्ट्वा धूर्तश्चिन्तयामास—किमहमनया यौवनप्रान्ते वर्तमानया करिष्यामि। किञ्च कदाप्यस्याः पृष्ठतः कोऽपि

---

(१) हालिकदम्पती=हालिक कृषीवल तयोर्दम्पती मिथुनम्, हालिको हालिकपत्नी चेत्यर्थ। (२) अन्यचित्ता=परपुरुषासक्तहृदया। (३) रतिदक्षिणा=रमणमित्यर्थ। (४) प्रत्यूषे=प्रात काले। (५) जीवलोक= ससारः। (६) उपाद्रवत्=अधाविष्ट। (७) ताम्=नदीम्। यौवनप्रान्ते=यौवनस्य तारुण्यस्य प्रान्तभागे प्रौढावस्थायामित्यर्थ। वर्त्तमानया=विद्यमानया विगतनवयौवनयेत्यर्थ। अनया=हालिकभार्यया। अस्याः पृष्ठत=एनामनुसृत्येत्यर्थ।

समेष्यति, तन्मे महान्(१)अनर्थः स्यात्। तत्केवलमस्या वित्तमादाय गच्छामीति निश्चित्य तामुवाच—प्रिये ! (२) सुदुस्तरेयं महानदी। तदहं द्रव्यमात्रं पारे धृत्वा समागच्छामि। ततस्त्वामेकाकिनीं स्वपृष्ठमारोप्य सुखेनोत्तारयिष्यामि। सा प्राह—सुभग! एवं क्रियताम्—इत्युक्त्वाऽशेषवित्तं तस्मै समर्पयामास। अथ तेनाभिहितम्—भद्रे! परिधानाच्छादनवस्त्रमपि समर्पय येन जलमध्ये निःशङ्का व्रजसि। तथानुष्ठिते धूर्तो वित्तं वस्त्रयुगलं चादाय यथाचिन्तितविषयं गतः। सापि (३) कण्ठनिवेशितहस्तयुगला सोद्वेगा नदीपुलिनदेश उपविष्टा यावत्तिष्ठति, तावदेतस्मिन्नन्तरे काचिच्छृगालिका मांसपिण्डगृहीतवदना तत्राजगाम। आगत्य च यावत्पश्यति, तावन्नदीतीरे महान् मत्स्यः सलिलान्निष्क्रम्य बहिःस्थित आस्ते। एतं च दृष्ट्वा सा मांसपिण्डं समुत्सृज्य तं मत्स्यं प्रत्युपाद्रवत्। अत्रान्तर आकाशादवतीर्य कोऽपि गृध्रस्तं मांसपिण्डमादाय पुनः खमुत्पपात। मत्स्योऽपि शृगालिकां दृष्ट्वा नद्यां प्रविवेश। सा शृगालिका व्यर्थश्रमा गृध्रमवलोकयन्ती तया नग्निकया सस्मितमभिहिता—

गृध्रेणापहृतं मांसं मत्स्योऽपि सलिलं गतः।
मत्स्यमांसपरिभ्रष्टे! किं निरीक्षसि जम्बुके! ॥ ६० ॥

---

(१) अनर्थ=आपत्ति। वित्तमात्रम्=धनमात्रम् केवलं धनमित्यर्थ। (२) सुदुस्तरा=गम्भीरत्वात्तरीतुमशक्या। (३) कण्ठेति—कण्ठे गले (उर स्थले) निवेशितं हस्तयुगल करद्वयं यया सा सर्ववस्त्रापहारा दिगम्बरा भूतेत्यर्थ। सोद्वेगा=खिन्ना।

"गृध्रेणे"ति—हे! जम्बुके=शृगालि! गृध्रेण मासम् अपहृतम्, मत्स्य = मीन अपि सलिलं=जल गत =प्रविष्ट, अतो हे! मत्स्यमासपरिभ्रष्टे! मीनमांसपिण्डाभ्यां प्रतारिते! जम्बुके! किं निरीक्षसि? अतिमात्रं लोभकरदुभाभ्यामेव प्रतारितासीति भाव। क्वचित्तु—"जम्बुकि" इति पाठ ॥६०॥

तच्छ्रुत्वा शृगालिका तामपि (१) पतिधनजारपरिभ्रष्टां दृष्ट्वा सोपहासमाह—

याद्दशं मम पाण्डित्यं ताद्दशं द्विगुणं तव ।
नाभूज्जारो न भर्ता च किं निरीक्षसि नग्निके ! ॥ ६१ ॥

एवं तस्य कथयतः पुनरन्येन जलचरेणागत्य निवेदितम्—यदहो ! त्वदीयं गृहमप्यपरेण महामकरेण गृहीतम्। तच्छ्रुत्वासावतिदुःखितमनास्तं गृहान्निःसारयितुमुपायं चिन्तयन्नुवाच—अहो ! पश्यतां मे (२) दैवोपहतत्वम्—

मित्रं ह्यमित्रतां यातमपरं मे प्रिया मृता ।
गृहमन्येन च व्याप्तं किमद्यापि भविष्यति ॥ ६२ ॥

अथवा युक्तमिदमुच्यते—

क्षते प्रहारा निपतन्त्यभीक्ष्णमन्नक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति वामे विधौ सर्वमिदं नराणाम्॥६३॥

---

(१) पतीति—पतिश्च, धनञ्च, जारश्च, तेभ्य परिभ्रष्टा प्रच्युता हीना तानित्यर्थ ।

"याद्दशम्" इति—व्याख्यातमधस्तात् ॥ ६१ ॥

(२) दैवोपहतत्वम्=दिष्टविघात ।

"मित्र" मिति—मित्र=सुहृद् अमित्रतां=शत्रुता यातम्, अपरम्=द्वितीयञ्च मे=मम प्रिया=भार्या मृता, गृह च=आवासस्तु अन्येन=अपरेण केनचिन्मकरेण व्याप्तम्=आक्रान्तम्, अद्यापि=इतोऽधिकमग्रेऽपि किं भविष्यति=किमनिष्ट भावीत्यर्थ ॥ ६२ ॥

"क्षते" इति—क्षते=व्रणे अभीक्ष्णम्=पुनः पुन प्रहारा =आघाता निपतन्ति=लगन्ति, अन्नक्षये=भक्ष्यभोज्याद्यभावे जाठराग्नि =उदरानल वर्धति=एधते, आपत्सु=विपत्तिषु वैराणि=शात्रवाणि समुद्भवन्ति=आविर्भवन्ति इदम्=एतच्च पूर्वोक्त सर्व विधौ=भाग्ये वामे=विपरीते सति नराणाम्=मनुष्याणा कृते ( उपरि ) भवतीति शेष ।

व्याख्यातं प्रागपि । उपजातिवृत्तम् ॥ ६३ ॥

तत्किं करोमि । किमनेन सह युद्धं करोमि । किं वा साम्नैव सम्बोध्य गृहान्निःसारयामि । किं वा भेदं दानं वा करोमि । अथवामुमेव वानरमित्रं पृच्छामि । उक्तं च—

यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान् स्वहितान् गुरून् ।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ६४ ॥

एवं सम्प्रधार्य भूयोऽपि तमेव जम्बूवृक्षमारूढं कपिमपृच्छत—भो ! मित्र ! पश्य मे मन्दभाग्यताम् । यत्सम्प्रति गृहमपि मे बलवत्तरेण मकरेण रुद्धम् । तदहं त्वां प्रष्टुमभ्यागतः । कथय किं करोमि । सामादीनामुपायानां मध्ये कस्यात्र विषयः । स आह—भोः ! कृतघ्न ! पापचारिन् ! मया निषिद्धोऽपि किं भूयो मामनुसरसि । नाहं तव मूर्खस्योपदेशमपि दास्यामि । तच्छ्रुत्वा मकरः प्राह—भोः ! मित्र ! सापराधस्य मे पूर्वस्नेहमनुस्मृत्य हितोपदेशं देहि । वानर आह—नाहं ते कथयिष्यामि । यद्भार्यावाक्येन भवताहं समुद्रे प्रक्षेप्तुं नीतः । तदेवं न युक्तम् । यद्यपि भार्या सर्वलोकादपि वल्लभा भवति तथापि न मित्राणि बान्धवाश्च भार्यावाक्येन समुद्रे प्रक्षिप्यन्ते । तन्मूर्ख ! मूढत्वेन नाशस्तव प्रागेव निवेदित आसीत् । यतः—

सतां वचनमादिष्टं मदेन न करोति यः ।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम् ॥ ६५ ॥

मकर आह—कथमेतत् । सोऽब्रवीत्—

---

"य" इति—य =जन प्रष्टव्यान्=प्रश्नयोग्यान् स्वहितान्=स्वस्य आत्मन हितान् हितकरान् बन्धुप्रभृतीन् अथवा गुरून्=उपदेष्टृन् स्वापेक्षया महत पूज्यान् पृष्ट्वा कार्यं कुरुते तदनुमत्या विधत्ते, तस्य पुरुषस्य कस्मिंश्चिदपि कर्मणि=साध्ये कार्ये व्यापारे विघ्न =अन्तरायो न जायते ॥ ६४ ॥

"सताम्" इति—यो जन सताम्=महापुरुषाणाम् आदिष्टम्=कथित वचन=वाक्यं मदेन=प्रमादेन न करोति=नैव पालयति, स सत्वरं=शीघ्रं घण्टोष्ट्र इव विनाशमवाप्नोतीति स्पष्टम् ॥ ६५ ॥

## कथा ६ ।

कस्मिंश्चिदधिष्ठान उज्ज्वलको नाम रथकारः प्रतिवसति स्म। स चातीव (१) दारिद्र्योपहतश्चिन्तितवान्—अहो ! धिगियं दरिद्रतास्मद्गृहे। यतः सर्वोऽपि जनः स्वकर्मण्येव रतास्तिष्ठति। अस्मदीयः पुन (२) र्व्यापारो नात्राधिष्ठानेऽर्हति। यतः सर्वलोकानां (३) चिरन्तनाश्चतुर्भूमिका गृहाः सन्ति। मम च नात्र। तत्किं मदीयेन रथकारत्वेन प्रयोजनमिति चिन्तयित्वा देशान्निष्क्रान्तः। यावत्किञ्चिद्वनं गच्छति तावद् (४) गह्वराकारवनगहनमध्ये सूर्यास्तमनवेलायां स्वयूथाद्भ्रष्टां प्रसववेदनया पीडयमानामुष्ट्रीमपश्यत्। स च दासेरकयुक्ता-मुष्ट्रीं गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः गृहमासाद्य रज्जुं गृहीत्वा तामुष्ट्रिकां बबन्ध। ततश्च तीक्ष्णं (५) परशुमादाय तस्याः कृते (६) पल्लवानयनार्थं पर्वतैकदेशे गतः। तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्त्वा शिरसि समारोप्य तस्या अग्रे निचिक्षेप। तया च तानि शनैः शनैर्भक्षितानि। पश्चात्पल्लवभक्षणप्रभावादहर्निशं (७) पीवरतनुरुष्ट्री सञ्जाता। सोऽपि दासेरको महानुष्ट्रः सञ्जातः। ततः स नित्यमेव दुग्धं गृहीत्वा स्वकुटुम्बं परिपालयति। अथ रथकारेण वल्लभत्वा-द्दासेरकग्रीवायां महती घण्टा प्रतिबद्धा। पश्चाद्रथकारो व्य-चिन्तयत्—अहो ! किमन्यैर्दुष्कृतकर्मभिः, यावन्ममैतस्मा-

---

(१) दारिद्र्येति—दारिद्र्येण निर्धनतया उपहतो विनष्ट दुःखित इत्यर्थ। (२) व्यापार=सूत्रधारवृत्ति। अधिष्ठाने=नगरे। (३) चिरन्तना=प्राक्तना। चतुर्भूमिका=चतु कोष्ठिका, अथवा—उपर्युपरिनिर्मितचतुच्छ-दय। (४) गह्वरेति—गह्वरस्याकार इवाकारो यस्य तादृशं यद् वनगहनं घन वन तन्मध्ये। दासेरकयुक्ताम्=करभशिशुसहिताम्। (५) परशुं=कुठारम्। (६) पल्लवानयनार्थम्=कोमलवृक्षपत्राण्यानेतुमित्यर्थः। (७) पीवरतनु= स्थूल।

दैवोष्ट्रीपरिपालनादस्य कुटुम्बस्य भव्यं सञ्जातम् । तत्किमन्येन व्यापारेण । एवं विचिन्त्य गृहमागत्य प्रियामाह— भद्रे ! समीचीनोऽयं व्यापारः । तव संमतिश्चेत्कुतोऽपि धनिकात्किंचिद्द्रव्यमादाय मया गुर्जरदेशे गन्तव्यं (१) कलभग्रहणाय । तावत्त्वयैतौ यत्नेन रक्षणीयौ । यावदहमपरामुष्ट्रीं क्रीत्वा समागच्छामि । ततश्च गुर्जरदेशं गत्वोष्ट्रीं गृहीत्वा स्वगृहमागतः । किं बहुना । तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्राः करभाश्च सम्मिलिताः । ततस्तेन महदुष्ट्रयूथं कृत्वा रक्षापुरुषो धृतः । तस्य वर्षं प्रति वृत्त्या करभमेकं प्रयच्छति । अन्यच्चाहर्निशं दुग्धपानं तस्य निरूपितम् । एवं रथकारोऽपि नित्यमेवोष्ट्रीकरभव्यापारं कुर्वन् सुखेन तिष्ठति । अथ ते दासेरका अधिष्ठानोपवन आहारार्थं गच्छन्ति । (२) कोमलवल्लीर्यथेच्छया भक्षयित्वा महति सरसि पानीयं पीत्वा सायन्तनसमये मन्दं मन्दं लीलया गृहमागच्छन्ति । स च (३) पूर्वदासेरको मदातिरेकात् पृष्ठ आगत्य मिलति । ततस्तैः कलभैरभिहितम्— अहो ! मन्दमतिरयं दासेरको यथा यूथाद्भ्रष्टः पृष्ठे स्थित्वा घण्टां वादयन्नागच्छति । यदि कस्यापि (४) दुष्टसत्त्वस्य मुखे पतिष्यति, तन्नूनं मृत्युमवाप्स्यति । अथ तस्य तद् (५) वनं गाहमानस्य कश्चित् सिंहो घण्टारवमाकर्ण्य समायातः यावदवलोकयति, तावदुष्ट्रीदासेरकाणां यूथं गच्छति । एकस्तु पुनः पृष्ठे (६)क्रीडां कुर्वन् वल्लरीश्चरन् यावत्तिष्ठति,ताव-

---

(१) कलभग्रहणाय=( करिशावक )उष्ट्रशावकग्रहणाय । "करभ शिशु" रित्यमर । "कलभ करिशावक" इत्यमरश्च । (२) कोमलवल्ली= मृदुलता । द्वितीयाबहुवचनान्तम् । (३) पूर्वदासेरक =प्रथमानीत उष्ट्र । मदातिरेकात्=गर्वाधिक्यात् । पृष्ठे=पश्चात् इतरेषामुष्ट्राणामनन्तरम् । (४) दुष्टसत्त्वस्य=सिंहादे । (५) वनं गाहमानस्य=वने परिभ्रमत इत्यर्थ । (६) क्रीडा कुर्वन्=विलासं विदधान । वल्लरी =मञ्जरी । चरन्=भक्षयन् ।

दन्ये दासेरकाः पानीयं पीत्वा स्वगृहे गताः। सोऽपि वनाद्विक्रम्य यावद्दिशोऽवलोकयति, तावन्न कञ्चिन्मार्गं पश्यति वेत्ति च। यूथाद्भ्रष्टो मन्दं मन्दं (१) बृहच्छब्दं कुर्वन् यावत् कियद् दूरं गच्छति तावत् तच्छब्दानुसारी सिंहोऽपि क्रमं कृत्वा (२) निभृतोऽग्रे व्यवस्थितः। ततो यावदुष्ट्रः समीपमागतः, तावत् सिंहेन (३) लम्भयित्वा ग्रीवायां गृहीतो मारितश्च। अतोऽहं ब्रवीमि — "सतां वचनमादिष्टम्" इति ॥ अथ तच्छ्रुत्वा मकरः प्राह—भद्र !

प्राहुः साप्तपदं मैत्रं जनाः शास्त्रविचक्षणाः।
मित्रतां च पुरस्कृत्य किञ्चिद् वक्ष्यामि तच्छृणु ॥ ६६ ॥
उपदेशप्रदातॄणां नराणां हितमिच्छताम्।
परस्मिन्निहलोके च व्यसनं नोपपद्यते ॥ ६७ ॥

तत्सर्वथा कृतघ्नस्यापि मे कुरु प्रसादमुपदेशप्रदानेन। उक्तं च—

---

(१) मार्गं न पश्यति=सूर्यास्तमनकारणादित्यर्थः। बृहच्छब्दम्=घण्टाशब्दम्। (२) निभृत=सुगुप्त। (३) लम्भयित्वा=उत्फाल्येत्यर्थः। "लम्फयित्वा" इति पाठेऽपि स एवार्थः।

"प्राहु"रिति—शास्त्रविचक्षणाः=आगमकुशलाः पण्डिता जनाः साप्तपदम्=सप्तानां पदानां समाहारः "साप्तपदम्" पदन्तु वचनरूपं परस्परसप्तवाक्यव्यवहारे जाते सति सिद्धम्, अथवा सप्तपदचलनमात्रादपि निष्पन्नं मैत्रम्=मित्रताम् आहुः=कथयन्ति, अतः—मित्रतां च=तादृशसम्बन्धजातां मैत्रीं पुरस्कृत्य=अग्रे कृत्वा किञ्चित्=वाक्यजातं वक्ष्यामि=कथयिष्यामि, तत् त्वं शृणु=आकर्णय ॥ ६६ ॥

"उपदेशे"ति—उपदेशप्रदातॄणाम्=उपदेशकानां धर्मं न्यायञ्चोपदिशतां हितम्=परकल्याणम् इच्छताम्=अभिलषतां च नराणाम्=मनुष्याणां परस्मिन् लोके=परलोके स्वर्गादौ इह च=अस्मिन् लोकेऽपि व्यसनम्=कष्टं न उपजायते=नैव भवतीत्यर्थः ॥ ६७ ॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ६८ ॥

तदाकर्ण्य वानरः प्राह—भद्र ! यद्येवं तर्हि तत्र गत्वा तेन सह युद्धं कुरु । उक्तं च—

हतस्त्वं प्राप्स्यसि स्वर्गं जीवन् गृहमथो यशः ।
युध्यमानस्य ते भावि गुणद्वयमनुत्तमम् ॥ ६९ ॥
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ७० ॥

मकरः प्राह—कथमेतत् । सोऽब्रवीत्—

---

"**उपकारिषु**"इति—यो जन उपकारिषु=उपकारकर्तृषु साधु=साध्वाचार हितकर, तस्य साधुत्वे=साधुभावे क गुण=उपकाररूप न कोऽपीत्यर्थ, तेन तु स्वोपकारपरिवर्त्तनरूप प्रत्युपकार कृत नतु किञ्चिदधिकमाचरितमिति भाव । अपकारिषु=अपकारकर्तृषु य साधु, सद्भि=महात्मभिस्तु स=स एव साधु=साध्नोति परकार्याणि इति व्युत्पत्त्या अन्वर्थरूपेण साधु परोपकारी उच्यते=कथ्यते ॥ ६८ ॥

"**हत**" इति—त्वं हत=युद्धे मृतश्चेत् स्वर्गम्=सुरेन्द्रभवनं प्राप्स्यसि=लम्भयिष्यसे, जीवन्=प्राणान् सस्तु गृहम्=स्वावासस्थानम्, अथो=अथ च यश=कीर्तिं प्राप्स्यसीति अनुषङ्ग । एवं कृते सति—युध्यमानस्य=सङ्ग्रामं कुर्वत ते=तव अनुत्तमम्=नास्ति उत्तममधिक यस्मात् तदनुत्तम गुणद्वयं=लाभद्वयं भावि=भविष्यतीत्यर्थ. ॥ ६९ ॥

"**उत्तमम्**"इति—उत्तमं=साध्वाचारं बलाधिक जनं प्रणिपातेन=नम्रभावेन सान्त्वेत्यर्थ, शूरम्=बलिनं भेदेन=उपजापेन, स्वीयै सह विभेदकरणेन, नीचम्=दुष्टं शत्रुं ( बहुबाहुबलेनापि साधयितुमशक्यं ) अल्पप्रदानेन=किञ्चिद्दानेन अल्पमात्र दत्त्वा सन्तोषोत्पादनेन तथा—समशक्तिम्=समा स्वसमाना शक्ति सैनिकादिसामर्थ्यं यस्य स तं तुल्यपराक्रमं पराक्रमै=शूरताव्यवहारप्रदर्शनै योजयेत्=सम्बन्धयेत् वशीकुर्यादित्यर्थ ॥७०॥

## कथा १० ।

आसीत्कस्मिंश्चिद्वनोद्देशे महाचतुरको नाम शृगालः । तेन कदाचिदरण्ये स्वयं मृतो गजः समासादितः । तस्य समन्तात् परिभ्रमति, परं कठिनां त्वचं भेत्तुं न शक्नोति । अथात्रावसर इतश्चेतश्च विचरन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ । अथ सिंहं समागतं दृष्ट्वा स (१) क्षितितलविन्यस्तमौलिमण्डलः संयोजितकरयुगलः सविनयमुवाच—स्वामिन् ! त्वदीयोऽहं (२) लागुडिकः स्थितस्त्वदर्थे गजमिमं रक्षामि । तदेनं भक्षयतु स्वामी । तं प्रणतं दृष्ट्वा सिंहः प्राह—भोः ! नाहमन्येन हतं सत्त्वं कदाचिदपि भक्षयामि । उक्तं च—

वनेऽपि सिंहा मृगमांसभक्षा
बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता
न नीतिमार्गं परिलङ्घयन्ति ॥ ७१ ॥

तत्तवैव गजोऽयं मया प्रसादीकृतः । तच्छ्रुत्वा शृगालः सानन्दमाह—युक्तमिदं स्वामिनो निजभृत्येषु । उक्तं च यतः—

---

(१) क्षितितलेति—क्षितितले पृथिव्या विन्यस्तं स्थापित मौलिमण्डलं ललाटप्रदेशो येन स । संयोजितकरयुगल =संयोजितं पुटीकृतं करयुगलं पाणिद्वन्द्वं येन स सिताञ्जलिरित्यर्थ । (२) लागुडिक =याष्टिधारी । लगुड प्रहरणमस्येति लागुडिक । प्रहरणम् (४।४।५७) इति प्रहरणार्थे ठक् ।

"वनेऽपी" ति—वने=अरण्ये मृगमासभक्षा =पशुमांसखादिन सिंहा बुभुक्षिता =क्षुधार्ता अपि तृणम्=घासं नैव चरन्ति=भक्षयन्ति, एवम्—कुलीना =उच्चवंशप्रसूता जना: व्यसनाभिभूता =व्यसनैरापद्भि· अभिभूता तिरस्कृता हीना दशा प्राप्ता सन्तोऽपि नीतिमार्गम्=न्याय्यं वर्त्म स्वकुलाचारस्वजात्यभिमानादिकं न=नैव परिलङ्घयन्ति=परिजहति । तस्मादहमन्यहतं न भक्षयामीत्याशय सिंहस्य ॥ ७१ ॥

अन्त्यावस्थोऽपि महान् स्वामिगुणान्नो जहाति शुद्धतया।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तिमुक्तोऽपि ॥ ७२ ॥

अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ। तमपि दृष्ट्वासौ व्यचिन्तयत्—अहो ! एकस्तावद्(१)दुरात्मा प्रणिपातेनापवाहितः। तत्कथमिदानीमेनमपवाहयिष्यामि। नूनं शूरोऽयम्। न खलु (२) भेदं विना साध्यो भविष्यति। उक्तं च यतः—

न यत्र शक्यते कर्तुं साम दानमथापि वा।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥ ७३ ॥

किञ्च सर्वगुणसम्पन्नोऽपि भेदेन वध्यते। उक्तं च यतः—

अन्तःस्थेन विरुद्धेन सुवृत्तेनातिचारुणा।
अन्तर्भिन्नेन सम्प्राप्तं मौक्तिकेनापि बन्धनम् ॥ ७४ ॥

---

"अन्त्यावस्थ"इति—महान्=उच्चाशय कुलीनो जन अन्त्यावस्थ= अन्त्या चरमा दु खस्य अवस्था परा काष्ठा यस्य स परं दु खं प्राप्तोऽपीत्यर्थ, शुद्धतया=निर्मलतया स्वामिगुणान्=स्वामिन प्रभो गुणान् औदार्यादीन् न जहाति=न त्यजति। तथाहि—शिखिभुक्तिमुक्तोऽपि=शिखी अग्नि· तस्य भुक्तिर्दाहेन भस्मीकरणं तथा मुक्तोऽपि अग्निद्वारा भस्मीभूतोऽपि शङ्ख=कम्बुः श्वेतभावम्=नैसर्गिक ( स्वाभाविकं ) निजं श्वेतिमानं शुक्लता न उज्झति=नैव परित्यजति।

भस्मीभूतोऽपि शङ्खो यथा पूर्ववत् शुद्धवर्ण एव तिष्ठति तद्वदेव विपन्ना अपि महात्मानो निजगुणगणगुणिता एव दृश्यन्त इति भाव।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास। आर्यावृत्तम् ॥७२॥

(१) दुरात्मा=दुष्ट। अपवाहित=दूरीकृत। (२) भेदं विना=उपजापमन्तरेण। साध्य=वश्यः।

"ने" ति—यत्र साम=सान्त्वनप्रयोग, अथवा दानम्, अपि कर्त्तुं न शक्यते, तत्र भेद=उपजाप प्रयोक्तव्य, यतो हेतो स=भेद एव तृतीय ोग (तस्य) वशकारक=वशीकरणसमर्थ ॥ ७३ ॥

"अन्तःस्थेने"ति—अन्त स्थेन=दुर्गा (कोट्टा) भ्यन्तरस्थन, अन्यत्र—

एवं (१) सम्प्रधार्य तस्याभिमुखो भूत्वा गर्वादुन्नतकन्धरः ससम्भ्रममुवाच—माम ! कथमत्र भवान् मृत्युमुखे प्रविष्टः । येनैष गजः सिंहेन व्यापादितः । स च मामेतद्रक्षणे नियुज्य नद्यां स्नानार्थं गतः । तेन च गच्छता मम समादिष्टम्—यदि कश्चिदिह व्याघ्रः समायाति, त्वया सुगुप्तं ममावेदनीयम् । येन वनमिदं मया निर्व्याघ्रं कर्तव्यम् । यतः पूर्वं व्याघ्रेणैकेन मया व्यापादितो गजः शून्ये भक्षयित्वोच्छिष्टतां नीतः । तद्दिनादारभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि । तच्छ्रुत्वा व्याघ्रः सन्त्रस्तस्तमाह—भो ! भागिनेय ! देहि मे प्राणदक्षिणाम् । त्वया तस्यात्र चिरायायातस्यापि मदीया कापि वार्ता नाख्येया । एवमभिधाय सत्वरं पलायाञ्चक्रे । अथ गते व्याघ्रे तत्र कश्चिद् (२) द्वीपी समायातः । तमपि दृष्ट्वासौ व्यचिन्तयत्—(३) दृढदंष्ट्रोऽयं चित्रकः । तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति तथा करोमि । एवं निश्चित्य तमप्युवाच—भो ! भगिनीसुत ! किमिति चिराद् दृष्टोऽसि । कथं च वुभुक्षित इव लक्ष्यसे । तदतिथिरसि मे । एष गजः सिंहेन

---

शुक्त्यादीनां मध्यवर्तिना विरुद्धेन=विरोधवता, अन्यत्र—विशेषत रुद्धेनावरणादिना, सुवृत्तेन=सुचरित्रेण, अन्यत्र—सुवर्तुलेन, अतिचारुणा=लोकरञ्जकेन, अन्यत्र—अत्यन्त मनोरमेण, अन्तर्भिन्नेन=प्रकृतिभिरुपजापं नीतेन, अन्यत्र—अन्तर्मध्यभागे भिन्नेन कृतच्छिद्रेण, मौक्तिकेन=मुक्ताफलेनापि बन्धनम्=शत्रुपक्षे—शत्रुभिर्वश्यत्वम्, मुक्तापक्षे-सूत्रसंयमनत्वं सम्प्राप्तम्=लब्धं भवतीति शेष ।

अत्र समादप्रस्तुतान्मौक्तिकात् तत्समस्य प्रस्तुतस्य शत्रोर्गम्यमानतया अप्रस्तुतप्रशंसालङ्कार । स च श्लेषानुप्राणित ॥ ७४ ॥

(१) सम्प्रधार्य=निश्चित्य । गर्वात्=गर्वमाश्रित्य निर्भीक इत्यर्थ । उन्नतकन्धर=उदग्रीव । (२) द्वीपी=चित्रकनामा व्याघ्रभेद । (३) दृढेति—दृढा कठिना दंष्ट्रा दाढा यस्य स ।

हतस्तिष्ठति। अहं चास्य तदादिष्टो रक्षपालः। परं तथापि यावत् सिंहो न समायाति, तावदस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज। स आह—माम! यद्येवं तन्न कार्यं मे मांसाशनेन, यतः—"जीवन्नरो भद्रशतानि पश्यति"। उक्तं च-

यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं परिणमेच्च यत्।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ ७५ ॥

तत्सर्वथा तदेव भुज्यते यदेव परिणमति, तदहमितोऽपयास्यामि। शृगाल आह—भो! अधीर! विश्रब्धो भूत्वा भक्षय त्वम्। तस्यागमनं दूरतोऽपि तवाहं निवेदयिष्यामि। तथानुष्ठिते द्वीपिना भिन्नां त्वचं विज्ञाय जम्बूकेनाभिहितम्—भो! भगिनीसुत! गम्यताम्। एष सिंहः समायाति। तच्छ्रुत्वा चित्रको दूरं प्रनष्टः। अथ यावदसौ (१) तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति, तावदतिसङ्क्रुद्धोऽपरः शृगालः समाययौ। अथ तमात्मतुल्यपराक्रमं दृष्ट्वैनं श्लोकमपठत्—

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ७६ ॥

(२) तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिस्तं (३) विदार्य दिशोभागं कृत्वा स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे। एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन परिभूय दिशोभागं कुरु। नो चेत्पश्चाद् (४) बद्धमूलादस्मात्त्वमपि विनाशमवाप्स्यसि। उक्तं च यतः—

---

"यच्छक्यम्" इति—व्याख्यातं प्राक् ॥७५॥

(१) तदिति—तेन द्वीपिना कृतो यो भेदो दंष्ट्रया छेदस्तद्द्वारेण।

"उत्तमम्" इति—व्याख्यातमधस्तात् ॥ ७६ ॥

(२) तदिति—तस्य शृगालस्याभिमुखं सम्मुखं कृतं प्रयाणं सङ्ग्राम कर्त्तुं गमनं येन स तथाविध। (३) विदार्य=छेदयित्वा। दिशोभागम्=दशदिग्भ्यो बलिं दत्त्वेत्यर्थः। (४) बद्धमूलात्=दृढमूलात्, चिरकालपर्यन्तं दृढ कृताधिकारकारणादित्यर्थः।

सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः ।
सम्भाव्यं स्त्रीषु चापल्यं सम्भाव्यं जातितो भयम् ॥ ७७ ॥

अन्यच्च—

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥ ७८ ॥

मकर आह—कथमेतत् । वानरोऽब्रवीत्—

## कथा ११ ।

अस्ति कस्मिंश्चिदधिष्ठाने चित्राङ्गो नाम सारमेयः । तत्र च चिरकालं दुर्भिक्षं पतितम् । अन्नाभावात् सारमेयादयो (१) निष्कुलतां गन्तुमारब्धाः । अथ चित्राङ्गः क्षुत्क्षामकण्ठस्तद्भयाद्देशान्तरं गतः । तत्र च कस्मिंश्चित्पुरे कस्यचिद् (२) गृहमेधिनो गृहिण्याः (३) प्रमादेन प्रतिदिनं गृहं प्रविश्य विविधान्नानि भक्षयन्परां तृप्तिं गच्छति । परं तद्गृहाद्बहिर्नि-

---

"सम्भाव्यम्" इति—गोषु=सौरभेयीषु सम्पन्नम्=सम्पत्ति सम्भाव्यम्=मन्तव्यम् पूजिता गाव ऐश्वर्यमाधापयन्तीत्यत्र तात्पर्यम्, ब्राह्मणे=विप्रे तप=तपश्चरणं सम्भाव्यम्, प्रायो ब्राह्मणास्तपस्विनो भवन्तीत्याशय, स्त्रीषु=नारीषु चापल्यम्=चपलस्वभावत्व सम्भाव्यम्, तथा—जातित=स्वसपत्नवर्गात् भयं=भीति सम्भाव्यम् स्वजातय प्राय परस्परमुत्कर्षं न सहन्त इत्यर्थ । तस्माद् भवता स्वपराक्रमेणासौ जय्य इति मकरम्प्रति वानराशय ॥ ७७ ॥

"सुभिक्षाणि" इति—(विदेशे) विचित्राणि=नानाविधानि भक्ष्यभोज्यानि सुभिक्षाणि=आयासं विनैव प्राप्यानि, पौरयोषित=नगरनार्य शिथिला=अवधानशून्या तेन विनायासं नेत्रोत्सव शक्यते कर्तुमित्याशय । परन्तु—विदेशस्य एक=एक एव दोष यत् स्वजाति=एकजातीयो जन विरुध्यते=विपरीतमाचरतीत्यर्थ ।

अनेनैव तात्पर्यमस्य श्लोकस्य यत्स्वजातय उत्कर्षं न सहन्त इति ॥ ७८ ॥

(१) निष्कुलताम्=निर्वंशताम् । (२) गृहमेधिन.=गृहस्थस्य । (३) प्रमादेन=अनवधानदानेन ।

प्कान्तोऽन्यैर्मदोद्धतसारमेयैः सर्वदिक्षु परिवृत्य सर्वाङ्गं दंष्ट्राभिर्विदार्यते। ततस्तेन विचिन्तितम्—अहो! वरं स्वदेशो यत्र दुर्भिक्षेऽपि सुखेन स्थीयते। न च कोऽपि युद्धं करोति। तदेवं स्वनगरं व्रजामि इत्यवधार्य स्वस्थानं प्रति जगाम। अथासौ देशान्तरात्समायातः सर्वैरपि स्वजनैः पृष्टः—भोः! चित्राङ्ग! कथयास्माकं देशान्तरवार्ताम्। कीदृग्देशः। किं चेष्टितं लोकस्य। क आहारः। कश्च व्यवहारस्तत्र इति। स आह—किं कथ्यते विदेशस्य स्वरूपविषयः।

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते॥ ७९॥

सोऽपि मकर (१) स्तदुपदेशं श्रुत्वा कृतमरणनिश्चयो (२) वानरमनुज्ञाप्य स्वाश्रयं गतः। तत्र च तेन स्वगृहप्रविष्टेन (३) आततायिना सह विग्रहं कृत्वा (४) दृढसत्त्वावष्टम्भनाच्च तं व्यापाद्य स्वाश्रयं च लब्ध्वा सुखेन चिरकालमतिष्ठत्। अतः साध्विदमुच्यते—

अकृत्य पौरुषं या श्रीः किं तयापि सुभोग्यया।
जरद्गवः समश्नाति दैवादुपगतं तृणम्॥ ८०॥

---

"सुभिक्षाणि" इति—व्याख्यामधस्तात्॥ ७९॥

(१) तदुपदेशम्=वानरदत्ता शिक्षाम्। (२) वानरमनुज्ञाप्य=वानरस्याज्ञा नीत्वा। (३) आततायिना=दुष्टेन परदारक्षेत्रापहारिणा।

(४) दृढेति—दृढस्य उग्रस्य सत्त्वस्य बलस्य अवष्टम्भनात् आश्रयणात्। तं=स्वशत्रुम्। व्यापाद्य=हत्वा।

"अकृत्ये" ति—पौरुषम्=पराक्रमम् अकृत्वा=अविधाय या श्री=सम्पत् प्राप्यते सुभोग्यया=आयासमन्तरेणापि लभ्यया तया=श्रिया किम्? न किञ्चिदपि प्रयोजनमित्यर्थ, जरद्गव=वृद्धो वृषभोऽपि दैवात्=[illegible]त् यतस्तत उपगतं=प्राप्तं (शुष्कमशुष्कं वा) तृणं=घासं सम-[illegible]=खादत्येवेत्यर्थ।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके लब्धप्रणाशं
नाम चतुर्थं तन्त्रं समाप्तम् ।



ये स्वीयं पुरुषार्थं विना परभाग्यमात्रोपजीविनस्ते केवलं शक्तिशून्य-
जरद्गववद् विज्ञेया इति भावः ॥ ८० ॥

इति श्रीकवितार्किक-नृसिंहदेवशास्त्रि-दर्शनाचार्य-
विरचितायां पञ्चतन्त्रस्य "सुबोधिनी" टीकायां
लब्धप्रणाशं नाम चतुर्थं तन्त्रम् ।

# अपरीक्षितकारकं नाम पञ्चमं तन्त्रम् ।

अथेदमारभ्यते (१)अपरीक्षितकारकं नाम पञ्चमं तन्त्रम्। यस्यायमादिमः श्लोकः—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥ १ ॥

तद्यथानुश्रूयते—अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम्। तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म। तस्य च (२) धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशाद्

---

अशेषविघ्नोपशमं परं महो भक्तेष्टदं कष्टपिशाचनाशकम् ।
नमाम्यहं पर्वतपुत्रिकाङ्गजं सुरासुरैश्चार्चितपादपङ्कजम् ॥ १ ॥
अपरीक्षितकर्त्तारो यत्र कष्टं गता जना॰ ।
दर्शिता पञ्चमं तन्त्रं ह्यपरीक्षितकारकम् ॥ २ ॥

(१)अपरीक्षितेति—परित ईक्षा परीक्षा विचार्य कार्यकारित्वम्, परीक्षा जाताऽस्येति परीक्षित विचार्य कार्यकारी पुरुप । न परीक्षिता अपरीक्षिता· कारका यत्र तद् अपरीक्षितकारकम् ।

"कुदृष्टम्" इति—अत्र=इह लोके यत्—कुदृष्टम्=कुत्सितं दृष्ट कुदृष्टं सम्यङ् न विलोकितम्, कुपरिज्ञातम्=अज्ञातरहस्यवृत्तम्, कुश्रुतम्=समीचीनतया न श्रुतम्, यस्याऽभिप्राय सम्यङ् न ज्ञातस्तदित्यर्थ, तथा—कुपरीक्षितम्=यस्य परीक्षा उत्तमरीत्या न कृता असमीक्षितमित्यर्थ, तत्=तादृशं कर्म नरेण=मनुष्येण न कर्त्तव्यम्=कदापि न विधातव्यम्, यत्=यादृशं नापितेन=क्षौरकर्मकारिणा केनापि मूढेन कृतम्=अनुष्ठितम् ॥ १ ॥

(२) धर्मेति—धर्म "वेदप्रतिपाद्य प्रयोजनवदर्थो धर्म" इति लक्षणक ऐहिकामुष्मिकलोकद्वयकल्याणसाधनमित्यर्थ, अर्थ=धनम्, काम=येष्टलाभ स्त्र्यादिविपयभोग, मोक्ष=दु खात्यन्तनिवृत्तिपरानन्दावाप्ति-रूपवर्ग:, एतेपा द्वन्द्व, तेपा कर्माणि=तत्तत्साधनरूपान् व्यापारानित्यर्थ ।

(१) धनक्षयः सञ्जातः। ततो विभवक्षयाद् (२) अपमानपरम्परया परं विषादं गतः। अथान्यदा रात्रौ सुप्तश्चिन्तितवान्—अहो! धिगियं (३) दरिद्रता। उक्तं च—

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म।
न विराजन्ति हि सर्वे वित्तविहीनस्य पुरुषस्य ॥ २ ॥
मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा।
सर्वं प्रणश्यति समं वित्तविहीनो यदा पुरुषः ॥ ३ ॥
प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः।
बुद्धिर्बुद्धिमतामपि कुटुम्बभरचिन्तया सततम् ॥ ४ ॥

---

(१) धनक्षयः=अर्थविनाशः। (२) अपमानपरम्परया=निरन्तरतिरस्कारप्राप्त्या। परम्=अत्यन्तम्। विषादम्=खेदम्। (३) दरिद्रता=निर्धनता।

अथ दरिद्रतामेव निन्दति नवभिरार्याभिः—"शील" मित्यादिभिः—वित्तविहीनस्य=धनरहितस्य पुरुषस्य=नरस्य शीलम्=चरितम्, शौचम्=बाह्याभ्यन्तररूपेण द्विप्रकारा शुद्धिः पवित्रता, क्षान्तिः=क्षमा, दाक्षिण्यम्=चातुर्यम् उदारता वा, मधुरता=प्रियभाषित्वम्, तथा—कुले जन्म=कुलीनता आभिजात्यमिति यावत्, एते सर्वे=सकला अपि गुणा न=नैव विराजन्ति=शोभन्ते, विद्यमाना अप्येते लोकेषु प्रतीता न भवन्तीत्यर्थः। आर्यावृत्तम् ॥ २ ॥

"मान" इति—यदा=यस्मिन् काले पुरुषः वित्तविहीनः=निर्धनः भवेदिति शेषः, तदा—मानो वा=चित्तसमुन्नतिः सम्मानं वा, दर्पः वा=अहमुत्तमकुले जातो महानस्मीत्यादिरूपो गर्वः, विज्ञानं वा=कलाकुशलित्वम्, विभ्रमः=नानाविधासु खेलासु विलासशीलता, सुबुद्धिः वा=शोभना प्रज्ञा च, सर्वम्=एतन्मानादिकं सर्वमेव समम्=युगपदेव प्रणश्यति=विनाशमुपैति ॥३॥

"प्रतिदिवसम्" इति—वसन्तवातेन=वसन्तकालभवेन मलयमरुता आहता=तिरस्कृता शिशिरश्रीरिव=शिशिरस्य ऋतोः श्रीः शिशिरश्रीरिव शिशिरर्तुशोभेव बुद्धिमताम्=धीमतामपि बुद्धिः सततं=निरन्तरं कुटुम्बभरचिन्तया=परिवारपरिपालनभावनया लयम्=क्षयं याति=प्राप्नोति। ?

नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य ।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥
गगनमिव नष्टतारं शुष्कमिव सरः श्मशानमिव रौद्रम् ।
प्रियदर्शनमपि रूक्षं भवति गृहं धनविहीनस्य ॥ ६ ॥
न विभाव्यन्ते लघवो वित्तविहीनाः पुरोऽपि निवसन्तः ।
सततं जातविनष्टाः पयसामिव बुद्बुदाः पयसि ॥ ७ ॥
सुकुलं कुशलं सुजनं विहाय कुलकुशलशीलविकलेऽपि ।
आढ्ये कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥ ८ ॥

---

धीमन्तोऽपि निर्धनाश्चेत् हतबुद्धयो जायन्तेऽतो महतीय कुटुम्बभर-यन्त्रणेति भाव. । उपमालङ्कार ॥ ४ ॥

"**नश्यति**" इति—विपुलमतेरपि=विपुला विशाला सर्वकार्यसाधन-दक्षा मतिर्यस्य तादृशस्यापि मन्दविभवस्य=मन्द क्षीणो विभवो धना-दिसम्पद् यस्य स तस्य निर्धनस्य पुरुषस्य बुद्धि =विचारशक्ति सततम्= निरन्तरम्, घृतलवण०=घृतमाज्यं, लवणं सैन्धवादिकम्, तैल तिलस्नेह सार्षपो वा, तण्डुल =शालिषष्टिकादिभेदेनानेकविधोऽन्नविशेष , वस्त्र वास , इन्धनं वह्निदीपनं काष्ठादि, एतेषा चिन्तया कथमेतानि द्रव्याणि सम्पा-दयेय येन मे कुटुम्बभरणं भवेदिति भावनया नश्यति=लुप्ता भवति ॥ ५ ॥

"**गगन**" मिति—धनविहीनस्य=निर्धनस्य नरस्य गृहं=भवनं प्रिय-दर्शनमपि=प्रियं नेत्रप्रीतिकरं दर्शनमवलोकनं यस्य तत्तादृशमपि नष्ट-तारम्=नष्टा अदर्शनङ्गता तारा नक्षत्राणि यस्मात् तादृशं गगनमिव= व्योमेव, तथा शुष्कं=विगतजलं सर =तडाग इव, तथा रौद्रं=भयङ्करं श्म-शानं=प्रेतावास इव रूक्षम्=कर्कशं हतश्रीकं भवति । मालोपमा ॥ ६ ॥

"**न**" इति—वित्तविहीना =वित्तैर्धनैर्विहीना रहिता अत एव लघव = क्षुद्रता गता जना सततं पुर =अग्रत निवसन्तोऽपि=विद्यमाना अपि, पयसि=जले जातविनष्टा =जाता सन्त एव लीना पयसाम्=जलाना बुद्बुदा = ०विकृतय इव न विभाव्यन्ते=कैश्चिदपि सादरं नालोक्यन्ते ॥ ७ ॥

"**सुकुलम्**" इति—जननिवहा =जनाना निवहा. सङ्घा लोकव्राता

विफलमिह पूर्वसुकृतं विद्यावन्तोऽपि कुलसमुद्भूताः।
यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥ ९ ॥
लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम्।
सर्वमलज्जाकरमिह यत्कुर्वन्तीह परिपूर्णाः ॥ १० ॥

एवं सम्प्रधार्य भूयोऽप्याचिन्तयत्—तदहम् (१) अनशनं कृत्वा प्राणानुत्सृजामि। किमनेन नो (२) व्यर्थजीवितव्यसनेन।

---

सुकुलम्=सद्वंशोत्पन्नम्, कुशलम्=कर्मनुदक्षम, सुजन=सज्जनं विहाय=परित्यज्य कुलकुशलशीलविकले अपि=कुल वंश, "कुशल" मिति भावप्रधानो निर्देश कुशलतेत्यर्थ, शीलं=सुस्वभाव एतैर्विकले विहीने ऽकुले कुल्हीने, चातुर्यहीने, दु शीले अपि आढ्ये=धनिनि जने कल्पतरावेव=कल्पवृक्ष इव नित्यम्=सदाऽनारतं रज्यन्ति=प्रीतिभाजो भवन्ति ॥ ८ ॥

"विफलम्" इति—इह=लोके पूर्वसुकृतम्=पूर्वस्मिन् जन्मनि उपार्जितं पुण्यं विफलम्=फलशून्य भवतीति मन्य इत्यध्याहार्यम्। यत—यस्य पुरुषस्य यदा=यस्मिन् काले विभव=ऐश्वर्य धनादिसम्पत्ति स्यात् तस्य कुलसमुद्भूता=सद्वंशोत्पन्ना विद्यावन्त=विद्वांसोऽपि दासताम्=दासभावं भृत्यत्वं यान्ति=प्राप्नुवन्ति ॥ ९ ॥

"लघु" रिति—लोक=जन कामं=यथेच्छं गर्जन्तम्=उच्छलनाशब्द कुर्वन्तमपि पयसा पतिम्=समुद्रम् अय लघु=तुच्छ इति न आह=न ब्रूते।

समुद्रो हि रत्नाकरो वृथाभाषी बहुगर्जनापरस्तथापि लोकैरयं लघुरिति नोच्यते एवमेव वृथावागाडम्बरमपि धनिनं कोपि "अयं लघुरिति" न कथयति। तत्रोपेक्षामेव करोति इति पूर्वार्धस्य तात्पर्यम्।

इह=संसारे परिपूर्णा=आढ्या यत्=न्याय्यमन्याय्यं वा कुर्वन्ति तत् तेषां सर्वम् अलज्जाकरम्=लज्जाकरं न भवतीत्यर्थ।

धनिनो निर्लज्जा अपि लोकैर्न केवलमुपेक्ष्यन्ते प्रत्युत स्तूयन्तेऽपीति प्रत्यक्षदृष्टचरमेतत् ॥ १० ॥

(१) अनशनम्=उपवासम्। (२) व्यर्थेति—व्यर्थ धनशून्यं जीवितमेव व्यसनं तेन किम्, न किञ्चित्फलमिति भाव।

एवं निश्चयं कृत्वा सुप्तः। अथ तस्य स्वप्ने (१) पद्मनिधिः क्षपणकरूपी दर्शनं गत्वा प्रोवाच—भोः! श्रेष्ठिन्! मा त्वं वैराग्यं गच्छ। अहं पद्मनिधिस्तव पूर्वपुरुषोपार्जितः। तदनेनैव रूपेण प्रातस्त्वद्गृहमागमिष्यामि। तत्त्वयाहं लगुडप्रहारेण शिरसि ताडनीयः, येन कनकमयो भूत्वाक्षयो भवामि। अथ प्रातः प्रबुद्धः सन् स्वप्नं स्मरंश्चिन्ताचक्रमारूढस्तिष्ठति—अहो! सत्योऽयं स्वप्नः किंवा असत्यो भविष्यति, न ज्ञायते। अथवा नूनं मिथ्या भाव्यम्, यतोऽहं केवलं वित्तमेव चिन्तयामि। उक्तं च—

व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना।
कामार्तेनाथ मत्तेन दृष्टः स्वप्नो निरर्थकः॥ ११॥

एतस्मिन्नन्तरे तस्य भार्यया कश्चिन्नापितः (२) पादप्रक्षालनायाहूतः। अत्रान्तरे च यथानिर्दिष्टः (३) क्षपणकः सहसा प्रादुर्बभूव। अथ स तमालोक्य प्रहृष्टमना (४) यथासन्नकाष्ठदण्डेन तं शिरस्यताडयत्। (५) सोऽपि सुवर्णमयो भूत्वा

---

(१) पद्मनिधि=कश्चिद्धनाधिष्ठातृदेवविशेष, यः पूर्वजैरुपासित, उत्तरेषां दारिद्र्ये सति पूर्वजानामेव तप प्रभावाद् धनदानद्वारा साहाय्यकृत्।

"व्याधितेन" इति—व्याधितेन=ज्वरादिरोगपीडितेन, सशोकेन=शोकसहितेन, चिन्ताग्रस्तेन=इष्टस्य पदार्थस्य अलाभे तत्प्राप्त्यर्थमन्त करणस्य भावनाविशेषो व्यापार चिन्ता तया ग्रस्तेन व्याप्तेन, कामार्त्तेन=मन्मथपीडितेन, अथ=अथवा मत्तेन=मद्यादिना क्षीबेण जन्तुना=पुरुषेण प्राणिनेत्यर्थ, दृष्ट=विलोकित स्वप्न शयनकाले निद्राया विषयविशेषानुभव निरर्थक=अर्थशून्यो निष्फलो भवतीति शेष॥ ११॥

(२) पादप्रक्षालनाय=पादयो शोधनाय अर्थात् नखकर्त्तन-यावकरमादिद्वारा चरणरञ्जनाय। (३) क्षपणक=बौद्धसंन्यासी "श्रमण" पदवाच्य। (४) यथासन्नकाष्ठदण्डेन=यथाप्राप्तसमीपवर्त्तिदारुखण्डेन (यष्टिविशेषेण)। (५) सोऽपि=प्रादुर्भूत क्षपणकोऽपीत्यर्थ। सुवर्णमय=काञ्चनमय।

तत्क्षणाद् भूमौ निपतितः। अथ स श्रेष्ठी निभृतं स्वगृहमध्ये कृत्वा नापितं सन्तोष्य प्रोवाच—तदेतद्धनं वस्त्राणि च मया दत्तानि गृहाण। भद्र! पुनः कस्यचिन्नाख्येयो वृत्तान्तः। नापितोऽपि स्वगृहं गत्वा व्यचिन्तयत्—नूनमेते सर्वेऽपि (१) नग्नकाः शिरसि दण्डहताः काञ्चनमया भवन्ति। तदहमपि प्रातः प्रभूतानाहूय लगुडैः शिरसि हन्मि, येन प्रभूतं (२) हाटकं मे भवति। एवं चिन्तयतो महता कष्टेन (३) निशातिचक्राम। अथ प्रभातेऽभ्युत्थाय बृहल्लगुडमेकं (४) प्रगुणीकृत्य क्षपणकविहारं गत्वा जिनेन्द्रस्य प्रदक्षिणत्रयं विधाय जानुभ्यामवनिं गत्वा (५) वक्त्रद्वारन्यस्तोत्तरीयाञ्चलस्तारस्वरेणेमं श्लोकमपठत्—

जयन्ति ते जिना येषां केवलज्ञानशालिनाम्।
आजन्मनः स्मरोत्पत्तौ मानसेनोपरायितम्॥ १२॥

---

(१) नग्नका=क्षपणकाः। (२) हाटकम्=सुवर्णम्। (३) निशा=रात्रिः। अतिचक्राम=उल्लङ्घे। (४) प्रगुणीकृत्य=सज्जीकृत्य। क्षपणकविहारम्=क्षपणकानां विहारमाश्रमस्थानम् "उपासाश्रय" इत्याख्यं मठविशेषम्। 'विहारो भ्रमणे स्कन्धे लीलायां सुगतालये" इति मेदिनी। जिनेन्द्रस्य=प्रधानबौद्धस्य बौद्धानां महन्तस्य, बौद्धाचार्यस्येति यावत्। (५) वक्त्रेति--वक्त्रस्य मुखस्य द्वारे आरम्भरन्ध्रे न्यस्तः स्थापितः उत्तरीयाञ्चलः उत्तरीयवस्त्रस्य प्रान्तभागो येन स तथाभूतः।

( जीवविनाशशङ्कया वसनद्वारा मुखप्रावरणलक्षण आचारस्तु आर्हतेष्वद्यापि दृश्यते तेषामाचारग्रन्थेषु पठ्यते च, परमस्मद्दृष्टबौद्धग्रन्थेषु नोपलब्धः कदाचिद् भवेदयमपि तेषामाचारः द्वयोरपि सम्प्रदाययोरहिंसाधर्मस्य मुख्यत्वादिति सुधियो विवेचयन्तु ) तारस्वरेण=उच्चैः शब्देन।

"जयन्ती"ति—ते जिनाः=बुद्धाः जयन्ति=सर्वोत्कर्षेण वर्तन्ते। ते के—येषां केवलज्ञानशालिनाम्=केवलज्ञानेन "सर्वं शून्यं शून्यम्" "सर्वं क्षणिकं क्षणिकम्' इत्याकारेण स्वमतसिद्धमोक्षहेतुज्ञानविशेषेण शालन्ते

अन्यच्च—

सा जिह्वा या जिनं स्तौति तच्चित्तं यज्जिने रतम् ।
तावेव च करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ १३ ॥

तथा च—

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बौद्धो जिनः पातु वः ॥१४॥

---

शोभन्त इति केवलज्ञानशालिन तेषा केवलज्ञानशालिना मानसेन=स्वान्तेन आजन्मन =जन्मारभ्य स्मरोत्पत्तौ=कामदेवस्योत्थाने ऊपरायितम्=ऊपरेणेव क्षारभूमिकयेवाचरितम् ।

यथा क्षाराया भूमौ उप्तं बीजं किमपि न प्ररोहति, तद्वत् येषा चित्ते कदापि स्त्रीभोगवासनात्मक कामो नोत्पद्यते ते जिना सर्वोत्कृष्टाः सन्तीति निर्गलितार्थ ।

**आर्हत**रीत्या व्याख्याने तु—केवलज्ञानशालिनाम्=मतिश्रुतावधि-मन पर्यायकेवलानि ज्ञानमित्यादिषूक्तं यदन्यासंसर्गि ज्ञानं तत् "केवल"मिति भण्यते तद्वतामित्यर्थ, शिष्टन्तु समानम् । "जिना" इति पदस्य अर्हन्तो भगवन्त इत्यपि विशेष, अधिकन्तु मत्प्रणीतग्रन्थान्तरेषु द्रष्टव्यम् ॥ १२ ॥

**"सा"** इति—सा जिह्वा=सैव जिह्वेत्यर्थ, या जिनम्=बुद्धं भगवन्तं (अर्हन्तं भगवन्तं वा) स्तौति=गुणयति जिनस्य स्तोत्रपाठान् पठतीत्यर्थ., तत् चित्तं=तदेव चित्तं नान्यत् यत् जिने=बुद्धे रतम्=प्रीतिमत्, करौ=पाणी च तावेव श्लाघ्यौ=प्रशंसनीयौ यौ करौ तत्पूजाकरौ=तस्य जिनस्य पूजा तत्पूजा तस्या करौ करणशीलौ जिनार्चनातत्परावित्यर्थ, अन्यौ तु शवभूताविति तात्पर्यम् ॥ १३ ॥

**"ध्याने"**ति—ध्यानव्याजम्=ध्यान चित्तवृत्तिनिरोधात्मक. समाधि तस्य व्याजं कपटं मिथ्यासमाधिमित्यर्थ, उपेत्य=आश्रित्य काम्=कमनीया योषा चिन्तयसि=आलोचयसि, क्षणं चक्षु =नेत्रम् उन्मील्य=उद्घाट्य अन-

एवं (१) संस्तुत्य ततः प्रधानक्षपणकमासाद्य क्षितिनिहित-जानुचरणः "नमोऽस्तु, वन्दे" इत्युच्चार्य लब्धधर्मवृद्ध्याशीर्वादः सुखमालिकानुग्रहलब्धव्रतादेश उत्तरीयनिबद्धग्रन्थिः (२) सप्रश्रयमिदमाह—भगवन्! अद्य (३) विहरणक्रिया समस्त-मुनिसमेतेनास्मद्गृहे कर्तव्या। स आह—भोः! श्रावक! धर्मज्ञोऽपि किमेवं वदसि। किं वयं ब्राह्मणसमानाः यत आम-

---

शरातुरम्=अनङ्गस्य कामस्य शरैर्बाणैरातुरं विद्धं मन्मथबाणव्यथितम् इमं जनम्=कामकान्तारूपं पश्य=निरीक्षस्व, त्वं त्राता अपि=रक्षणसमर्थोऽपि नो रक्षसि=नैव त्रायसे, अस्मान् कामबाणपीडितानित्यर्थः, अनस्त्व निष्कारुणिक=अलीकदयालुरसि, "जिनो दयालु" रिति लोकानां कथनं मिथ्यैवेत्यर्थः त्वत्त अन्यः=भिन्नः पुमान्=पुरुषः निर्घृणतरः=नितान्तदयाविहीनः कः? न कुत्रापीत्यर्थः इति=अनया रीत्या मारवधूभिः=कामस्त्रीभिः सेर्ष्यम्=ईर्ष्यया सह विद्यमानं यथा स्यात्तथा अभिहितः=कथितः बौद्धः=बौद्ध-धर्मप्रवर्तको जिनः=बुद्धदेवः वः=युष्मान् रक्षस्थान् पातु=संसारसागरात्तारय-त्वित्यर्थः। इयं कस्यचिन्नाटकस्य नान्दी। क्वचित्तु—"बुद्धो जिनः पातु वः" इत्येवं पाठः।

एतादृशीभिः सुन्दरीभिरपि स्वयं प्रार्थ्यमानो यः कामवशं न गतः। कथं नासौ वन्द्यः स्तुत्यः प्रार्थ्य इति भावः। शार्दूलविक्रीडितम् ॥ १४ ॥

(१) संस्तुत्य=नम्यक् स्तुतिं विधाय। प्रधानक्षपणकम्=बुद्धाचार्यम्। आसाद्य=प्राप्य। क्षितीति—क्षितौ पृथिव्यां निहितं स्थापितं जानुचरणं येन स तथाविधः। लब्धेति—लब्धः प्राप्तो धर्मवृद्ध्यै आशीर्वादो येन सः। "तव धर्मे मतिर्भवतु" इत्येवंरूप आशीर्वादो येन बौद्धाचार्यात्प्राप्त इत्यर्थः। सुखेति—सुखमालिकया सुखप्रदया पुष्पदाम्ना योऽनुग्रहः तेन लब्धः प्राप्तो व्रतस्य ब्रह्मचर्यादिरूपस्यादेश आज्ञा येन सः। उत्तरीयेति—उत्तरीये निबद्धो ग्रन्थिर्येन सः। गलाधोभागनिबद्धोत्तरीयैकदेश इत्यर्थः। (२) सप्रश्रयम्=नम्रतासहितम्। (३) विहरणक्रिया=भिक्षाटनक्रिया।

न्त्रणं करोपि । वयं सदैव (१) तत्कालपरिचर्यया भ्रमन्तो भक्तिभाजं श्रावकमवलोक्य तस्य गृहे गच्छामः । तेन कृच्छ्राद्भ्यर्थितास्तद्गृहे प्राणधारणमात्रामशनक्रियां कुर्मः । तद्गम्यताम् । नैवं भूयोऽपि वाच्यम् । तच्छ्रुत्वा नापित आह— भगवन्! वेद्म्यहं युष्मद्धर्मम् । परं (२) भवतो बहुश्रावका आह्वयन्ति । साम्प्रतं पुनः (३) पुस्तकाच्छादनयोग्यानि कर्पटानि बहुमूल्यानि प्रगुणीकृतानि । तथा पुस्तकानां लेखनाय लेखकानां च (४) वित्तं सञ्चितमास्ते । तत्सर्वथा (५) कालोचितं कार्यम् । ततो नापितोऽपि स्वगृहं गतः । तत्र च गत्वा (६) खादिरमयं लगुडं सज्जीकृत्य कपाटयुगलं द्वारि समाधाय सार्धप्रहरैकसमये भूयोऽपि विहारद्वारमाश्रित्य सर्वान् क्रमेण (७) निष्क्रामतो गुरुप्रार्थनया स्वगृहमानयत् । तेऽपि सर्वे (८) कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान् परित्यज्य प्रहृष्टमनसस्तस्य पृष्ठतो ययुः । अथवा साध्विदमुच्यते—

(१) तत्कालेति—तत्काले आहारोपयोगिनि काले या परिचर्या सेवा तयेत्यर्थः । भ्रमन्त =भिक्षार्थमटन्त । भक्तिभाजम्=सेवकम् । श्रावकम्=स्वशिष्यं बौद्धधर्मसेविनम् । तेन=श्रावकेन । कृच्छ्रात्=कष्टात् महान्तमाग्रहं कृत्वेत्यर्थः । अभ्यर्थिता =प्रार्थिता । प्राणधारणमात्राम्=उदरपूर्त्तिमात्राम् अत्यल्पामित्यर्थः । अशनक्रियाम्=भोजनमभ्यवहरणमिति यावत् । (२) भवत =युष्मान् । (३) पुस्तकेति—पुस्तकानामाच्छादनस्य प्रावरणस्य योग्यानि पुस्तकबन्धनोपयोगीनि । कर्पटानि=पटखण्डानि । बहुमूल्यानि=अनर्घ्याणि । प्रगुणीकृतानि= प्रस्तुतानि बहुलीकृतानि वा, मद्भवन इति शेष । (४) वित्तम्=धनम् । (५) कालोचितम्=समयानुरूपम् । (६) खादिरमयम्=खदिरकाष्ठमयम् । लगुडम्= महायष्टिम् । सज्जीकृत्य=प्रगुणीकृत्य, स्वकार्यसाधनक्षमं निर्मायेत्यर्थ । (७) निष्क्रामत =स्वविहारस्थानाद् बहिर्निर्यातान् । गुरुप्रार्थनया=गुर्वी चासौ प्रार्थना गुरुप्रार्थना तया अत्यादरेणेत्यर्थ । (८) कर्पटवित्तलोभेन=वस्त्रखण्डात्मकधनलिप्सया । भक्तियुक्तान्=अतिभक्तान् । परिचितश्रावकान्=पूर्वसंश्रुतबुद्धधार्मिकान् । तस्य=नापितस्य । पृष्ठत.=पश्चात् । ययु =जग्मु' ।

एकाकी गृहसन्त्यक्तः पाणिपात्रो दिगम्बरः।
सोऽपि संवाह्यते लोके तृष्णया पश्य कौतुकम् ॥ १५ ॥
जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते ॥ १६ ॥

अपरं गृहमध्ये तान् प्रवेश्य द्वारं निभृतं पिधाय लगुडप्रहारैः शिरस्यताडयत्। तेऽपि (१) ताड्यमाना एके मृताः, अन्ये भिन्नमस्तकाः फूत्कर्तुम् (२) उपचक्रमिरे। अत्रान्तरे (३) तमाक्रन्दमाकर्ण्य कोटरक्षपालेनाभिहितम्—भो! भोः!

"एकाकी" ति—य एकाकी=एकल गृहसन्त्यक्तः=परित्यक्तगृहाश्रम स्त्रीसंसर्गरहित इत्यर्थः, पाणिपात्रः=पाणिः कर एव पात्रममत्रं भिक्षाभाजनभूत यस्य स, दिगम्बरः=दिग् दिशैव अम्बरं वासो यस्य स तथाविधः नग्नो वस्त्रोपकरणहीन, स अपि=उक्तविशेषणविशिष्टोऽप्येवंविध लोके=संसारे तृष्णया=लोभेन संवाह्यते=नीयते परिभूयत इति यावत् इति त्व कौतुकम्=आश्चर्य लोभमाहात्म्यं पश्य=विचारय।

वस्तुमात्रपरित्यागप्रतिज्ञया चरममाश्रमं प्राप्ता अपि साधवो धनलोभाक्रान्ता सञ्जायन्त इत्याश्चार्य लोभादिदोषाणा सामर्थ्यमिति भाव ॥१५॥

"जीर्यन्त" इति—जीर्यत=जरा प्राप्तवतो जनस्य केशा=शिरोवाला जीर्यन्ते=शुक्लीभवन्ति, तथा-जीर्यत दन्ता जीर्यन्ति=अन्नचर्वणे असमर्था जायन्ते स्वस्थान परिजहतीत्यर्थ, चक्षु श्रोत्रे=नेत्रकर्णावपि जीर्येते=स्वस्वविषयग्रहणाय नालं भवत, चक्षुरिन्द्रियं रूपं द्रष्टुं, श्रोत्रेन्द्रियञ्च शब्दं श्रोतुमशक्तं जायते इत्यर्थ, तथापि—एका=केवला तृष्णा=विषयभोगलिप्सा (तु) तरुणायते=नवनवीभवति ॥ १६ ॥

(१) ताड्यमाना=हन्यमाना खादिरेण लगुडेन। भिन्नमस्तका=स्फुटितललाटा। फूत्कर्तुम्=हा! हता वयमिति क्रन्दितुम्। (२) उपचक्रमिरे=प्रारेभिरे। (३) तमाक्रन्दम्=लगुडाहतिकृत फूत्कारपूर्वकं रोदनम्। कोटरक्षपालेन=नगररक्षिपुरुषाध्यक्षेण। "कोटरक्षपालै." इति पाठे तु बहुत्वं नगरकक्षाभेदेन विवक्षितम्।

किमयं महान् कोलाहलो नगरमध्ये । तद्गम्यतां गम्यताम् । (१) ते च सर्वे तदादेशकारिणस्तत्सहिता वेगात्तद्गृहं गता यावत् पश्यन्ति तावद् (२) रुधिरस्रावितदेहाः पलायमाना (३) नग्नका दृष्टाः । पृष्टाश्च—भोः ! किमेतत् । ते प्रोचुर्यथावस्थितं नापितवृत्तान्तम् । तैरपि स नापितो बद्धो हतशेषैः सह धर्माधिष्ठानं नीतः । तैर्नापितः पृष्टः—भोः ! किमेतद्भवता (४) कुकृत्यमनुष्ठितम् । स आह—किं करोमि । मया श्रेष्ठिमणिभद्रगृहे दृष्ट एवंविधो (५) व्यतिकरः । सोऽपि सर्वं मणिभद्रगृहवृत्तान्तं यथादृष्टमकथयत् । ततः श्रेष्ठिनमाहूय भणितवन्तः—भोः ! श्रेष्ठिन् ! किं त्वया कश्चित् क्षपणको व्यापादितः । ततस्तेनापि सर्वः क्षपणकवृत्तान्तस्तेषां निवेदितः । अथ तैरभिहितम्—अहो ! शूलमारोप्यतामसौ दुष्टात्मा (६) कुपरीक्षितकारी नापितः । तथानुष्ठिते तैरभिहितम्—

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्तव्यं नापितेनात्र यत्कृतम् ॥ १७ ॥

अथवा साध्विदमुच्यते—

अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम् ।
पश्चाद्भवति सन्तापो ब्राह्मण्या नकुलार्थतः ॥ १८ ॥

मणिभद्र आह—कथमेतत् । ते धर्माधिकारिणः प्रोचुः—

---

(१) ते च=नगररक्षिपुरुषा "सिपाही" इति ख्याता । तदादेशकारिण = कोटपाला (कोतवाल)ऽऽज्ञाधारिण । (२) रुधिरस्रावितदेहा =प्रवहद्रक्ताक्तशरीरा । (३) नग्नका =क्षपणका ।(४) कुकृत्यम्=अनर्थं कर्म। (५) व्यतिकर =व्यवसायो व्यापार(क्रिया)विशेष ।(६) कुपरीक्षितकारी=पूर्वापरवस्तुस्वरूपविचारमकृत्वैव साहसकर्मकर्त्ता ।

"कुदृष्टम्"इति—व्याख्यातमिदं पद्यमधस्तात् ॥ १७ ॥

"अपरीक्ष्य"इति—अपरीक्ष्य=परीक्षा विवेकमविधाय न कर्त्तव्यम्=किञ्चिदपि कार्यं न कुर्यादित्यर्थ, किन्तु सुपरीक्षितम्=सम्यक परीक्षितं

## कथा १।

कस्मिंश्चिदधिष्ठाने देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म। तस्य भार्या प्रसूता सुतमजनयत्। तस्मिन्नेव दिने नकुली नकुलं प्रसूता। अथ सा सुतवत्सला (१) दारकवत् तमपि नकुलं (२) स्तन्यदानाभ्यङ्गमर्दनादिभिः पुपोष। परं तस्य न विश्वसिति यत्कदाचिदेष (३) स्वजातिदोषवशादस्य दारकस्य (४) विरुद्धमाचरिष्यतीति। एवं जानाति स्वचित्ते। उक्तं च—

कुपुत्रोऽपि भवेत् पुंसां हृदयानन्दकारकः।
दुर्विनीतः कुरूपोऽपि मूर्खोऽपि व्यसनी खलः॥ १९॥
एवं च भाषते लोकश्चन्दनं किल शीतलम्।
पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते॥ २०॥

---

विवेचितं कर्तव्यम्=विधेयम्. अत्र परीक्षा विना कर्मकरणे दोषप्रदर्शने दृष्टान्तो यथा—"पश्चादि"ति—ब्राह्मण्याः=विप्रपत्न्या नकुलार्थेन =नकुलनिमित्तं पश्चात्=अविचार्यकरणोत्तरं सन्तापो भवति=अनुतापो जायत इत्यर्थः।

यथा क्यापि ब्राह्मण्या अपरीक्ष्य करणेऽनुताप एव भुक्तः, तथाऽन्योऽप्येवमनुतप्तो भवत्यतः कोऽप्यविचार्य न कुर्यादित्याशयः।

"ब्राह्मण्याम्" इति—सप्तम्यन्तपाठेऽपि फले न विशेषः॥ १८॥

(१) दारकवत्=निजशिशुवत्। (२) स्तन्येति—स्तन्यदानं दुग्धपायनम्, अभ्यङ्गमर्दनं तैलादिनावयवानामुद्वर्तीकरणं (सवाटनं) तदादिभिर्बालशरीरपुष्टिकरैः पालनकर्मविशेषैः। पुपोष=पालयामास। (३) स्वजातिदोषवशात्=तिर्यग्जातिदोषकारणात्। (४) विरुद्धम्=अनिष्टं नखदन्तप्रहारादिकम्।

"कुपुत्र" इति—दुर्विनीतः=दुःशिक्षितः, कुरूपः=कुत्सितरूपवान् असुन्दरः, मूर्खः अपि=मूढोऽपि, व्यसनी=द्यूतमद्यादिहीनकर्मरतः, तथा—खलः=कुकर्मभ्यो वारितोऽपि शठो दुर्जनः कुपुत्रोऽपि=कुत्सितोऽपि पुत्रः पुंसां=मनुष्याणां हृदयानन्दकारकः=चित्ताह्लादजनकः भवेत्=भवतीत्यर्थः॥ १९॥

"एवम्" इति किञ्च—चन्दनं=मलयजं किल=निश्चयेन शीतलम्=

सौहृदस्य न वाञ्छन्ति जनकस्य हितस्य च ।
लोकाः प्रपालकस्यापि यथा पुत्रस्य बन्धनम् ॥ २१ ॥

अथ सा कदाचिच्छय्यायां पुत्रं शाययित्वा जलकुम्भमादाय पतिमुवाच—ब्राह्मण ! जलार्थमहं तडागे यास्यामि, त्वया पुत्रोऽयं नकुलाद्रक्षणीयः। अथ तस्यां गतायां पृष्ठे ब्राह्मणोऽपि शून्यं गृहं मुक्त्वा भिक्षार्थं क्वचिन्निर्गतः। अत्रान्तरे दैववशात् कृष्णसर्पो बिलान्निष्क्रान्तः। नकुलोऽपि तं स्वभाववैरिणं मत्वा (१) भ्रातृ रक्षणार्थं सर्पेण सह युद्ध्वा सर्पं खण्डशः कृतवान्। ततो रुधिराप्लावितवदनः (२) सानन्दं स्वव्यापारप्रकाशनार्थं मातुः संमुखो गतः। मातापि तं (३) रुधिरक्लिन्नमुखमवलोक्य शङ्कितचित्ता यदनेन दुरात्मना दारको भक्षित इति विचिन्त्य कोपात्तस्योपरि तं जलकुम्भं चिक्षेप। एवं नकुलं व्यापाद्य यावत् प्रलपन्ती गृह आगच्छति,

---

शिशिरं दाहविनाशकमस्तीति शेप, एव लोक=जन भापते=कथयति, परन्तु—पुत्रगात्रस्य=सुतावयवस्य संस्पर्श=संसर्ग चन्दनात् अतिरिच्यते अधिको भवति। वेदोऽप्याह—"आत्मा वै पुत्रनामासी"ति (कौपी० शा०) पुत्रस्य स्वात्मरूपाऽभिन्नताम् ॥ २० ॥

"**सौहृदस्य**"इति—लोका=सासारिका जना सौहृदस्य=मित्रताया जनकस्य=जन्मदातु पितु, हितस्य=अन्यस्य वा यस्य कस्यापि हितमाचरत, तथा—प्रपालकस्य=जीविकाप्रदस्यापि तथा बन्धनम्=स्नेहपाशं न=नैव वाञ्छन्ति=कामयन्ते मन्वत इत्यर्थ, यथा=यद्वत् पुत्रस्य=सुतस्य बन्धनं वाञ्छन्तीत्यनुपङ्ग ।

पुत्रस्नेह सर्वस्नेहादप्यधिक इति भाव ॥ २१ ॥

(१)"भ्रातृ रक्षणार्थम्"अत्र—**ढ्रलोपे**—(६।३।१११) इत्यनेन सन्धि'। (२) सानन्दम्=सहर्षम्। **स्वेति**—स्वव्यापारस्य कृष्णसर्पं हत्वा निजभ्रातृ रक्षणकर्मण प्रकाशनार्थम् बोधनार्थम्। मातु=ब्राह्मण्या । (३) रुधिरक्लिन्नमुखम्=रक्ताक्तास्यम्।

तावत् सुतस्तथैव सुप्तस्तिष्ठति । समीपे कृष्णसर्पं खण्डशः कृतमवलोक्य (१)पुत्रवधशोकेनात्मशिरो वक्षःस्थलं च ताडयितुमारब्धा । अत्रान्तरे ब्राह्मणो (२) गृहीतनिर्वापः समायातो। यावत्पश्यति, तावत्पुत्रशोकाभितप्ता ब्राह्मणी प्रलपति—भो ! भो ! लोभात्मन् ! लोभाभिभूतेन त्वया न कृतं मद्वचः । तदनुभव साम्प्रतं पुत्रमृत्युदुःखवृक्षफलम् । अथवा साध्विदमुच्यते—

अतिलोभो न कर्तव्यो लोभं नैव परित्यजेत् ।
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके ॥ २२॥

ब्राह्मण आह—कथमेतत् । सा प्राह—

## कथा २ ।

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रतां गता वसन्ति स्म । ते चापि (३) दारिद्र्योपहताः परस्परं मन्त्रं चक्रुः—अहो ! धिगियं दरिद्रता । उक्तं च—

वरं वनं व्याघ्रगजादिसेवितं
जनेन हीनं बहुकण्टकावृतम् ।
तृणानि शय्या परिधानवल्कलं
न बन्धुमध्ये धनहीनजीवितम् ॥ २३ ॥

---

(१) पुत्रेति—पुत्रस्य=पुत्रतुल्यस्य नकुलस्य यो वधो हत्या तच्छोकेन । कलिकात्तामुद्रितपुस्तके मूलपाठोऽन्यथापि वर्त्तते परं कथातात्पर्ये त्रुटेरभावं मत्वाऽस्माभिरुपेक्षित ।

"अतिलोभ" इति—अतिलोभ =महान् लोभ. लिप्सा न कर्त्तव्य , लोभं नैव परित्यजेत्=सर्वथाऽपि लोभो न त्याज्य , अन्यथा गृहव्यवहार एव न सिद्ध्येदिति भाव , अतिलोभाभिभूतस्य=अतिमात्रं लोभेन आक्रान्तस्य जनस्य मस्तके=ललाटे चक्रं भ्रमति=एकस्य लोभाक्रान्तस्य मस्तके घूर्णयित्वाऽपरस्यातिलोभिनो मस्तके घूर्णत इत्यर्थ , अधिकमग्रे कथया स्पष्टीभविष्यति २२

(२) गृहीतेति—गृहीत प्राप्तो निर्वापो दानं येन स. । (३) दारिद्र्योपहता =दारिद्र्येण निर्धनतया उपहता नष्टा ।

"वरम्" इति—व्याघ्रगजादिसेवितम्=व्याघ्राश्चित्रकविशेषा , गजा

तथा च--

स्वामी द्वेष्टि सुसेवितोऽपि सहसा प्रोज्झन्ति सद्बान्धवा
राजन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः।
भार्या साधु सुवंशजापि भजते नो यान्ति मित्राणि च
न्यायारोपितविक्रमाण्यपि नृणां येषां न हि स्याद्धनम्॥२४॥

---

हस्तिन आदिना सिंहखड्गिप्रभृतीना ग्रहणम् एतै सेवितमाश्रितम्, जनेन=मनुष्येण हीनम्=मनुष्यविवर्जितं निर्जनमित्यर्थ, वहुभिर्नानाविधै कण्टकै तोदकशूकै आवृतं कीर्ण वनम्=अरण्यं वरम्=मनाक् प्रियमित्यर्थ, तथा—तृणानि=घासा एव शय्या=खट्वा परिधानवल्कलम्=परिधानार्थं वृक्षत्वगपि वरमिति पूर्वानुपङ्ग, परन्तु--वन्धुमध्ये=वन्धूना स्वज्ञातीना मध्ये धनहीनजीवितम्=धनेन वित्तेन हीनं रहितं जीवितं जीवनं न=नैव वरमित्यर्थ ।

धनिना वन्धूना मध्ये निर्धनस्य जीवनमत्यन्तं कष्टभुग् भवतीति भाव ॥२३॥

"**स्वामी**"ति—येषा नृणा=मनुष्याणा धनं=वित्तं न स्यात्, तेषा सुसेवित =सम्यक् सेवाधर्मेण कृतोपासनोऽपि स्वामी=प्रभु द्वेष्टि=वैरायते, सद्बान्धवा =सन्तोऽपि वान्धवा ज्ञातय सहसा=वलादेव कारणं विनैवेत्यर्थ, प्रोज्झन्ति=परित्यजन्ति, गुणा =दयादाक्षिण्यादय न राजन्ते=नैव प्रकाशन्ते, तनुजा =पुत्रा त्यजन्ति=जहति, आपद =विपत्तय स्फारीभवन्ति=वर्धन्ते, सुवंशजा=उत्तमकुलप्रसूता भार्या=स्त्री गृहिणी अपि साधु=सादरं, नो भजते=सेवा नैव करोति, न्यायारोपितविक्रमाणि=न्यायेन उचितेन नयमार्गेण आरोपिता सञ्चालिता विक्रमा पुरुषार्था यैस्तादृशि न्यायपराणि मित्राणि=सुहृदोऽपि यान्ति=परित्यज्य दूरीभवन्तीत्यर्थ । "हि" इति पदमास्मिन्नर्थे सन्देहाभावं वोधयति—उक्तेऽर्थे न कोपि सन्देह इति । "येषा"मित्युक्ते "तेषा"मिति लभ्यं यत्तदोर्नित्यसम्बन्धात् । सम्बन्धविवक्षया च षष्ठी ।

सर्वासा विपत्तीना निर्धनता मूलमन्त्र इति भाव । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

शूरः सुरूपः सुभगश्च वाग्मी शस्त्राणि शास्त्राणि विदाङ्करोति।
अर्थं विना नैव यशश्च मानं प्राप्नोति मर्त्योऽत्र मनुष्यलोके॥२५॥

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।
अर्थोष्मणा विरहितः पुरुषः स एव
बाह्यः क्षणेन भवतीति विचित्रमेतत्॥ २६॥

तद्भच्छामः कुत्रचिदर्थाय—इति सम्मन्त्र्य स्वदेशं पुरं च स्वसुहृत्सहितं बान्धवयुतं गृहं च परित्यज्य प्रस्थिता.।
अथवा साध्विदमुच्यते—

सत्यं परित्यजति मुञ्चति बन्धुवर्गं
शीघ्रं विहाय जननीमपि जन्मभूमिम्।
सन्त्यज्य गच्छति विदेशमभीष्टलोकं
चिन्ताकुलीकृतमतिः पुरुषोऽत्र लोके॥ २७॥

---

"शूर" इति—(यद्यपि) अत्र मनुष्यलोके=अस्मिन् संसारे मर्त्यः= मानव शूर=शौर्योपेतो बलिष्ठ इति यावत्, सुरूप=सुन्दराकृति, सुभग= सकललोके प्रियोऽपि, वाग्मी=प्रशस्तवाक् व्याख्यानकुशल इत्यर्थ, अथवा- शस्त्राणि=धनुरादीनि शास्त्राणि=वेदादीनि विदाङ्करोति=जानाति (तथापि) अर्थं विना=धनमन्तरेण यश=कीर्तिम्, मानञ्च=सत्कारञ्च न प्राप्नोति=नैव लभते। लोके धनवानेव यशोमानभागी भवतीति सार। इन्द्रवज्रावृत्तम्॥२५॥

"तानि" इति—तानि=ऐश्वर्यसमये यथा भवन्ति तादृशि एव इन्द्रियाणि=चक्षुरादीनि अविकलानि=विकारमप्राप्तानि निर्धनतावस्थायामपीत्यर्थ, नाम=अभिधानमपि देवदत्तादिकं तदेव, सा एव अप्रतिहता=अविकृता बुद्धि=प्रज्ञा, वचनम्=वाक्यमपि तदेव=सर्वमिदं पूर्ववदेव भवति यद्यपि, तथापि—अर्थोष्मणा=वित्तजन्यप्रतापेन विरहित=शून्य स पुरुष क्षणेन=अल्पेनापि कालेन बाह्य=तुच्छ भवति इत्येतद् विचित्रम्=आश्चर्यम्। सकलगुणसागरशोषकोऽयं दारिद्र्यवडवानल इति भाव। वसन्ततिलकं वृत्तम्॥ २६॥

"सत्यम्" इति—इह=अस्मिन् लोके=संसारे चिन्ताकुलीकृतमति.=

एवं क्रमेण गच्छन्तो (१) ऽवन्तीं प्राप्ताः। तत्र (२) सिप्राजले कृतस्नाना (३) महाकालं प्रणम्य यावन्निर्गच्छन्ति तावद्भैरवानन्दो नाम योगी संमुखो बभूव। ततस्तं ब्राह्मणोचितविधिना (४) सम्भाव्य तेनैव सह तस्य मठं जग्मुः। अथ तेन ते पृष्टाः—कुतो भवन्तः समायाताः। क यास्यथ। किं प्रयोजनम्। ततस्तैरभिहितम्—वयं (५) सिद्धियात्रिकाः। तत्र यास्यामो यत्र धनाप्तिर्मृत्युर्वा भविष्यतीत्येव निश्चयः। उक्तं च—

दुष्प्राप्याणि बहूनि च लभ्यन्ते वाञ्छितानि द्रविणानि।
अवसरतुलिताभिरलं तनुभिः साहसिकपुरुषाणाम् ॥२८॥

---

चिन्तया धनवासनया आकुलीकृता विह्वलीभूता मतिर्बुद्धिर्यस्य स तादृश सत्यम्=सत्यव्यवहारं परित्यजति=जहाति अर्थात् धनलिप्सया न्यायाधिकरणादिस्थनेष्वपि मिथ्यासाक्ष्यादिकं प्रकटीकरोति, बन्धुवर्गम्=ज्ञातिसङ्घं मुञ्चति=परिहरति, जननीम् अपि=मातरमपि, जन्मभूमिम्=स्वदेश तथा—अभीष्टलोकम्=स्वप्रियं पुत्रमित्रकलत्रादिकमपि सन्त्यज्य=परिहृत्य विदेशम्=परदेशं गच्छति=याति। वसन्ततिलकं वृत्तम् ॥ २७ ॥

(१) अवन्तीम्=तदाख्या नगरीम् । ( २ ) सिप्राजले=सिप्रानामकनद्या जले। (३) महाकालम्=महाकालाभिधं शिवमूर्त्तिम्। (४) सम्भाव्य=सम्पूज्य। मठम्=आश्रमम् । (५) सिद्धियात्रिका =सिद्धये कार्यसाधनाय यात्रा सिद्धियात्रा सा प्रयोजनमेषा ते सिद्धियात्रिका । "प्रयोजनम्" (५।१।१०६) इति सूत्रेण ठक् प्रत्यय ।

"दुष्प्राप्याणि" इति—साहसिकपुरुषाणाम्=बलसाध्यकर्मकारिणाम् उद्यमिनामिति यावत्, नराणाम्=पुरुषाणाम् अवसरे=समये अर्थात् साहसोपयोगिनि काले, तुलिताभि =समीकृताभि "अहो! ईदृक् मे तनुरस्ति कथमहं तत्सदृशं कर्म कर्त्तुं न पारये" इत्यालोच्य कर्मणि प्रयोजिताभि तनुभि =शरीरै दुष्प्राप्याणि=दुर्लभानि बहूनि=प्रचुराणि वाञ्छितानि=अभीष्टानि द्रविणानि=धनानि अलम्=पर्याप्तं यथेष्ट लभ्यन्ते=प्राप्यन्ते ।

अत्रेदमाकूतकम्—कदाचित् गगनतलाद्देवाधीनतया [illegible]

पर कदाचित् वैदिकरुद्राध्याय-वरुणदेवताक-मन्त्रजपादि[illegible]

द्वारापि सा शीघ्रमेव साध्यते। कदाचित् पर्वतादिप्रदेशे [illegible]

रादिभ्यो जलं स्रवति, कदाचित्तु निजेनोद्योगेन यन्त्रादिद्वाराऽपि [illegible]-

न्ध्रादपि जलमुद्धार्यते, एव यदि दैवस्य बलवत्त्वं ननु नाम तदा [illegible]

तदस्त्येवेति सर्वथा भूति वाञ्छता पुरुषेण पुरुषकारोऽप्यादरणीय एवेति ॥ [illegible]

"**अभिमते**"ति—पुरुषकारेण=उद्योगेन हि पुरुषस्य=साधकस्य [illegible]

अशेषा=सकला (अपि) अभिमतासिद्धि=अभिमतस्येष्टस्य वस्तुन [illegible]

प्राप्तिरिष्टलाभ इत्यर्थो भवतीति शेष ।

( हे! पुरुष ! ) यदपि त्व "दैव" मिति नाम कथयसि सोऽपि [illegible]-

स्य=अदृष्टाभिधान पुरुषस्य=कर्तुरेव जीवात्मन गुण=धर्म । प्राग्[illegible]

जन्मनि कृतमेव शुभमशुभं वा कर्म "दैव"पदेनोच्यते, अतस्तस्यापि पुरुष

प्रयत्नसाध्यतया पुरुषगुणत्व बलवत्त्वञ्चेति भाव । पुरुषार्थः कदापि न [illegible]

इति तु सार । आर्या ॥ ३० ॥

भयमतुलं गुरुलोकात् तृणमिव तुलयन्ति साधुसाहसिकाः ।
प्राणानद्भुतमेतच्चरितं चरितं ह्युदाराणाम् ॥ ३१ ॥
क्लेशस्याङ्गमदत्त्वा सुखमेव सुखानि नेह लभ्यन्ते ।
मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ ३२ ॥
तस्य कथं न चला स्यात् पत्नी विष्णोर्नृसिंहकस्यापि ।
मासांश्चतुरो निद्रां यः सेवति जलगतः सततम् ॥ ३३ ॥

---

"भय"मिति—साधुसाहसिका =साधौ साध्ये कर्मणि साहसिका उद्यमिन गुरुलोकात्=पूजनीयात् पित्रादे भयम्=भीतिम्, तथा प्राणान्=निजजीवितञ्च तृणमिव=घासमिव तुलयन्ति=समीकुर्वन्ति ।

सङ्कटे समुपस्थिते तन्निवारणाय सन्मार्गे प्रवृत्ता साधव उद्यमिन प्राणादिकं सर्वं तुच्छं मन्वत इति भाव ।

तथाहि —उदाराणाम्=महाशयानाम् एतत्=महोद्यमशालित्वं नाम अद्भुतम्=आश्चर्यजनकं चरितम्=चरित्र प्रकृतिर्वा वर्त्तत इति शेष ।

आश्चर्यचरिता हि महान्त इति निष्कर्ष । "साधु" इत्यस्य पृथक्पदत्वे क्रियाविशेषणं भाव्यम् ॥३१॥

"क्लेशस्ये"ति—इह संसारे अङ्गम्=हस्तपादादिक क्लेशस्य=कष्टस्य अदत्वा=हस्तपादादिकमङ्गं कर्मण्यव्यापार्येत्यर्थ , सुखम्=( आयासं विना ) अनायासं सुखानि=ऐहिका भोगा न लभ्यन्ते=नैव प्राप्यन्ते कैरपि नरैरिति शेष , तथाहि—मधुभिद्=मधुसूदनो हरि मथनायस्तै =मन्दराचलद्वारा क्षीरसमुद्रमथनेन आयस्तै आयासं प्राप्तै बाहुभि =बाहुभिर्भुजै लक्ष्मीम्=श्रियम् आश्लिष्यति=आलिङ्गति ।

यत्र लोकत्रयनाथो भगवान् विष्णुरपि हस्तपादादिसञ्चालनात्मकश्रममन्तरेण लक्ष्मीप्राप्तिसुखं नाशिश्रियत्, तत्रेतरेषा लोकानान्तु कैव कथा । सर्वथापि—"नहि सुख दु खैर्विना भाव्यते" इति भाव । आर्या ॥ ३२ ॥

"तस्ये"ति—य =यो विष्णुर्भगवान् जलगत =जलस्थित सन् अर्थात् क्षीरसमुद्रशायी भूत्वा चतुरो मासान्=आषाढादीन् ( अभिव्याप्य ) सततम्=नैरन्तर्येण निद्रा सेवति=शेते तस्य नृसिंहकस्यापि=नृसिंहावतारशालिनोऽपि

दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम्।
जयति तुलामधिरूढो भास्वानिह जलदपटलानि ॥ ३४ ॥
तत्कथ्यतामस्माकं कश्चिद्धनोपायो। (१) विवरप्रवेश-शाकि-
नीसाधन-श्मशानसेवन-महामांसविक्रय-साधकवर्त्ति-प्रभृ-

महापुरुषस्यापीत्यर्थः, पत्नी=लक्ष्मी कथं चला=चपला न स्यात्। ... द्वितीयं नाम "चपले"ति। विष्णोः शयनम्—"... च विबुध्यते" इति शास्त्रोक्तम्।

उद्योगविहीनस्य सम्पत् स्थिरतां न भजत इत्यत्र तात्पर्यम्। ...

"दुरधिगम" इति—पुरुषेण=नरेण यावत्=यावत्कालं ... सम्=उद्योग पौरुषं न कृतम्=नैवानुष्ठितं तावत् परभाग= ... दुरधिगम =दुष्प्राप, भवतीति शेष.। तथाहि—इह तुलाम= ... अधिरूढ =सङ्क्रान्त भास्वान्=रविः जलदपटलानि= ... मेघाना पराभव करोतीत्यर्थ ।

तुलामधिरुह्यैव सूर्योऽतितेजस्वी भूत्वा मेघं ... स्वपौरुषेण, इतरेषा तु कैव कथा । अत्रोपमानोपमेययो... विम्बभावापन्नत्वाद् दृष्टान्तालङ्कार । आर्या ॥ ३४ ॥

(१) विवरेति—विवरप्रवेश =मणिमन्त्रौषधादिभि पाताल... गमनम्। एतेनापि भूमेरधोभागवर्त्तीनि विविधानि धनानि प्राप्तुं श... ।

शाकिनीसाधनम्=शाकिनी तन्त्रशास्त्रसिद्धा काचित् योगिनी तस्या साधनं तदीयमन्त्रादिद्वारा तन्त्रशास्त्रोक्तविधया वशीकरणम्। वशीकृता ... उपासकस्येष्टसिद्धिं विधत्ते।

श्मशानसेवनम्=श्मशाने प्रेतावासे स्थित्वा मन्त्रादिसिद्धिलाभ । महामांसविक्रय =महामांसं नरमांसं तस्य विक्रय मूल्यं गृहीत्वा बलि-कर्मपरेभ्य. कापालिकेभ्योऽर्पणम्। एतेनापि धनलाभ। श्रुतिविरुद्धोऽयमाचारो भारते श्रीकृष्णजरासन्धप्रस्तावेन प्रदर्शितः। व्याख्यानान्तरन्तु सम्भवदपि बहूपयोगाभावाच्च नादर्शि।

नामेकतम इति। अद्भुतशक्तिर्भवाञ्छ्रूयते। वयमप्यतिसाहसिकाः। उक्तं च—

महान्त एव महतामर्थं साधयितुं क्षमाः।
ऋते समुद्रादन्यः को बिभर्ति वडवानलम् ॥ ३५ ॥

भैरवानन्दोऽपि तेषां सिद्ध्यर्थं (१)बहूपायं सिद्धवर्तिचतुष्टयं कृत्वार्पयत्। आह च—गम्यतां हिमालयदिशि। (२) तत्र सम्प्राप्तानां यत्र वर्तिः पतिष्यति, तत्र (३) निधानमसान्दिग्धं प्राप्स्यथ। तत्र स्थानं खनित्वा निधिं गृहीत्वा (४) व्याघुट्यताम्। तथानुष्ठिते तेषां गच्छतामेकतमस्य हस्ताद्वर्तिर्निपपात। अथासौ यावत्तं प्रदेशं खनति तावत्ताम्रमयी भूमिः। ततस्तेनाभिहितम्—अहो! गृह्यतां स्वेच्छया ताम्रम्। अन्ये प्रोचुः--भो! मूढ! किमनेन क्रियते। तत्प्रभूतमपि दारिद्र्यं न नाशयति। तदुत्तिष्ठ। अग्रतो गच्छामः। सोऽब्रवीत्--यान्तु भवन्तः। नाहमग्रे यास्यामि। एवमभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः। ते त्रयोऽप्यग्रे प्रस्थिताः। अथ किञ्चिन्मात्रं गतस्याग्रेसरस्य वर्तिर्निपपात। सोऽपि यावत् खनितुमारब्धस्तावद् (५) रूप्यमयी क्षितिः। ततः प्रहर्षितः

---

साधकवर्त्ति =भूगर्भस्थितानिधिप्रदर्शिका वर्त्तिकाविशेष। तत्प्रभृतीनामन्यतमं धनार्जनोपायं गृहीत्याशय।

"महान्त" इति—महान्त =महापुरुषा एव महताम् अर्थम्=प्रयोजनं साधयितुम्=सम्पादयितुं क्षमा =समर्था भवन्तीति शेष। तथाहि—समुद्रात्=सागरात् ऋते=विना अन्य =अपर क वडवानलम्=वाडवाग्नि बिभर्त्ति=धारयति न कोऽपीत्यर्थ। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास ॥३५॥

(१) बहूपायम्=प्रशस्तं साधनम्। सिद्धवर्त्तिचतुष्टयम्=सिद्धा अमोघा चासौ वर्त्ति वर्त्तिका तस्या चतुष्टयम्। (२) तत्र=हिमालये। सम्प्राप्तानाम्=तानाम्। (३) निधानम्=निधि रत्नानामिति शेष। (४) व्याघुट्यताम्=प्रत्यावर्त्यताम्। (५) रूप्यमयी=रजतमयी।

प्राह—यद्भो! भोः! गृह्यतां यथेच्छया रूप्यम्। नाग्रे गन्तव्यम्। तावूचतुः—भोः! पृष्ठतस्ताम्रमयी भूमिः, अग्रतो रूप्यमयी। तन्नूनमग्रे सुवर्णमयी भविष्यति। तदनेन प्रभूतेनापि दारिद्र्यनाशो न भवति। तदावामग्रे यास्यावः। एवमुक्त्वा द्वावप्यग्रे प्रस्थितौ। सोऽपि स्वशक्त्या रूप्यमादाय निवृत्तः। तयोरपि गच्छतोरेकस्याग्रे वर्तिः पपात। सोऽपि प्रहृष्टो यावत् खनति, तावत् सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह—भो! गृह्यतां स्वेच्छया सुवर्णम्। सुवर्णादन्यन्न किञ्चिदुत्तमं भविष्यति। स प्राह—मूढ! न किञ्चिद्वेत्सि। प्राक्ताम्रम्, ततो रूप्यम्, ततः सुवर्णम्। तन्नूनमतः परं रत्नानि भविष्यन्ति। येषामेकतमेनापि दारिद्र्यनाशो भवति। तदुत्तिष्ठ। अग्रे गच्छावः। किमनेन भारभूतेनापि प्रभूतेन। स आह—गच्छतु भवान्। अहमत्र स्थितस्त्वां (१) प्रतिपालयिष्यामि। तथानुष्ठिते सोऽपि गच्छन्नेकाकी (२) ग्रीष्मार्कप्रतापसन्तप्ततनुः पिपासाकुलितः सिद्धिमार्गच्युत इतश्चेतश्च बभ्राम। अथ भ्राम्यन् स्थलोपरि पुरुषमेकं रुधिरप्लावितगात्रं (३) भ्रमच्चक्रमस्तकमपश्यत्। ततो द्रुततरं गत्वा तमवोचत्—भोः! को भवान्। किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि। तत्कथय मे यदि कुत्रचिज्जलमस्ति। एवं तस्य प्रवदतस्तच्चक्रं तत्क्षणात्तस्य शिरसो ब्राह्मणमस्तके (४) चटितम्। स आह—भद्र! किमेतत्। स आह—ममाप्ये-

---

(१) प्रतिपालयिष्यामि=प्रतीक्षिष्ये। (२) ग्रीष्मेति—ग्रीष्मार्कस्य (निदाघ)घर्मकालीनसूर्यस्य प्रतापेन सन्तापेन सन्तप्ता प्लुष्टा तनुः शरीरं यस्य स तादृशः। सिद्धिमार्गच्युत=सिद्धिमार्गात् सिद्धिवर्त्मनः च्युतः परिभ्रष्टः स्खलित इति यावत्। निदाघकालजनितसन्तापवशाद् भ्रान्तमतेरस्य मार्गपरिभ्रष्टता ज्ञेया। (३) भ्रमच्चक्रमस्तकम्=भ्रमत् चक्रं यस्मिन् तादृशं मस्तकं ललाटं यस्य स तथाविधः। (४) चटितम्=पतितम्।

वमेवैतच्छिरसि चटितम् । स आह—तत्कथय कदैतदुत्तरिष्यति । महती मे वेदना वर्तते । स आह—यदा त्वमिव कश्चिद् (१) धृतसिद्धिवर्तिरेवमागत्य त्वाम् (२) आलापयिष्यति, तदा तस्य मस्तके चटिष्यति । स आह—कियान् कालस्तवैवं स्थितस्य । स आह—साम्प्रतं को राजा धरणीतले । स आह—वीणावत्सराजः । स आह—अहं तावत्कालसङ्ख्यां न जानामि । परं यदा रामो राजासीत्तदाहं दारिद्र्योपहतः सिद्धिवर्तिमादायानेन पथा समायातः । ततो मयान्यो नरो मस्तकधृतचक्रो दृष्टः पृष्टश्च । ततश्चैतज्जातम् । स आह—भद्र ! कथं तवैवं स्थितस्य भोजनजलप्राप्तिरासीत् । स आह—भद्र ! (३) धनदेन निधानहरणभयात् सिद्धानामेतद्भयं दर्शितम् । तेन कश्चिदपि नागच्छति । यदि कश्चिदायाति स क्षुत्पिपासानिद्रारहितो जरामरणवर्जितः केवलमेवं वेदनामनुभवतीति । तदाज्ञापय मां स्वगृहाय—इत्युक्त्वा गतः । अथ तस्मिंश्चिरयति स (४) सुवर्णसिद्धिस्तस्यान्वेषणपरस्तत्पदपङ्क्त्या यावत् किञ्चिद्वनान्तरमागच्छति, तावद्रुधिरप्लावितशरीरस्तीक्ष्णचक्रेण मस्तके भ्रमता (५) सवेदनः क्वणन्नुपविष्टस्तिष्ठति । तत्समीपवर्तिना भूत्वा सवाष्पं पृष्टः—भद्र ! किमेतत् । स आह—विधिनियोगः । स आह—कथं तत् । कथय कारणमेतस्य । सोऽपि तेन पृष्टः सर्वं चक्रवृत्तान्तमकथयत् । तच्छ्रुत्वासौ तं विगर्हयन्निदमाह—भोः ! निषिद्धस्त्वं मयानेकशो न शृणोषि

(१) धृतसिद्धिवर्ति=धृता सिद्धिवर्त्तिर्येन सः । (२) आलापयिष्यति=कथयिष्यति । (३) धनदेन=यक्षाधिपतिना कुबेरेण । निधानहरणभयात्=निधिस्तेयत्रासात् । (४) सुवर्णसिद्धिः=भैरवानन्ददत्तसिद्धिवर्त्तिद्वारा प्रचुरसुवर्णप्राप्त्या तन्नामा संवृत्तः । तस्य=चतुर्थस्य । अन्वेषणपरः=गवेषणापरः । तत्पदपङ्क्त्या=चतुर्थब्राह्मणपुत्रस्य पदरेखामनुरुध्य । (५) सवेदनः=वेदनया पीडया सह वर्त्तमानः । क्वणन्=शब्दायमानः । (६) विधिनियोगः=दुर्दैवाज्ञा ।

तथा च—

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ३८ ॥

तदागच्छत्वेपोऽपि इति । तथानुष्ठिते (१) तैर्मार्गाश्रितैरटव्यां मृतसिंहस्यास्थीनि दृष्टानि । ततश्चैकेनाभिहितम्—अहो ! अद्य (२)विद्याप्रत्ययः क्रियते । किञ्चिदेतत् सत्त्वं मृतं तिष्ठति । तद्(३) विद्याप्रभावेण जीवनसहितं कुर्मः।अहमस्थिसञ्चयं करोमि । ततश्चैकेनौत्सुक्यादस्थिसञ्चयः कृतः । द्वितीयेन (४) चर्ममांसरुधिरं संयोजितम् । तृतीयोऽपि यावज्जीवनं सञ्चारयति तावत्सुबुद्धिना निपिद्धः—भोः ! तिष्ठतु भवान् एप सिंहो निष्पाद्यते । यद्येनं सजीवं करिष्यसि ततः सर्वानपि व्यापादयिष्यति इति तेनाभिहितः । स आह--धिङ् मूर्ख ! नाहं विद्याया विफलतां करोमि । ततस्तेनाभिहितम्—तर्हि(५)प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि। तथानुष्ठिते यावत् सजीव-

---

केवला वधूरिव=पुत्रस्त्री इव पुत्रमात्रभोग्या, या=लक्ष्मी सामान्या=साधारणी नायिका वेश्या=पण्यस्त्री इव पथिकैः=सर्वैर्बन्धुभिरपि न भुज्यते=सेव्यते । यया लक्ष्म्या सर्वस्यापि यथायोगमुपकार शक्येत कर्तुं सैव श्रेष्ठेति भाव ॥३७॥

"अयम्" इति—अयं=जनो निज =स्वीय परो वा=अयमन्य इति वा गणना=विचार लघुचेतसाम्=क्षुद्रहृदयाना पुंसा भवति । उदारचरितानाम्=महेच्छानान्तु वसुधा=सकला भूमिरेव कुटुम्बकम्=परिवार ।

पण्डिता आत्मवदेव सर्वभूतेषु दृष्टिभाजो भवन्ति नेतर इति भाव ॥३८॥

(१) मार्गाश्रितै =पथि चलद्भि । अटव्याम्=जङ्गले, कानने इति यावत्। (२) विद्याप्रत्यय =अधीतस्य शास्त्रस्य ज्ञानपरीक्षा । (३) विद्याप्रभावेण=अधीतसामर्थ्येन । जीवनसहितम्=सजीवम् । अस्थिसञ्चयम्=अस्थ्ना सञ्चयं राशिं योजनं वा । औत्सुक्यात्=औत्कण्ठ्यात् । (४) चर्ममासरुधिरम्=चर्म च मासञ्च रुधिरञ्चेत्येपा द्वन्द्वे एकवद्भाव । (५) प्रतीक्षस्व=प्रतिपालय, विलम्बं कुर्वित्यर्थ ।

कृतस्तावत्ते त्रयोऽपि सिंहेनोत्थाय व्यापादिताः। स च पुनर्वृक्षादवतीर्य गृहे गतः। अतोऽहं ब्रवीमि—"वरं बुद्धिर्न सा विद्या" इति॥ अतः परमुक्तं च—

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः॥३६॥

चक्रधर आह—कथमेतत्। सोऽब्रवीत्—

## कथा ४।

कस्मिंश्चिदधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वमापन्ना वसन्ति स्म। बालभावे तेषां मतिरजायत—भोः! देशान्तरं गत्वा विद्याया उपार्जनं क्रियते। अथान्यस्मिन् दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः। तत्र च (१) विद्यामठे गत्वा पठन्ति। एवं द्वादशाब्दानि यावदेकचित्ततया विद्याकुशलास्ते सर्वे सञ्जाताः, ततस्तैश्चतुर्भिर्मिलित्वोक्तम्—वयं सर्वविद्यापारे गताः। तदुपाध्यायम्(२)उत्कलापयित्वा स्वदेशे गच्छामः। तथैव क्रियताम्—इत्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वानुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिताः। यावत् किञ्चिन्मार्गं यान्ति तावद् द्वौ पन्थानौ समायातौ। उपविष्टाः सर्वे। तत्रैकः प्रोवाच—केन मार्गेण गच्छामः। एतस्मिन् समये तस्मिन् पत्तने

---

"अपी" ति—ये शास्त्रेषु=आगमेषु कुशला=निपुणा अपि लोकाचारविवर्जिता=लोकानामाचारे व्यवहारे विवर्जिता शून्याः अज्ञातलोकव्यवहाराः भवन्तीति शेष, ते=सर्वे एवंविधा मूढा. हास्यताम्=उपहासविषयता यान्ति=प्राप्नुवन्ति, यथा—ते मूर्खपण्डिता=मूर्खाश्च पण्डित पण्डिता शास्त्राण्यधीत्यापि अपरित्यक्तमौढ्या इत्यर्थ॥३६

(१) विद्यामठे=विद्यामन्दिरे। (२) उत्कलापयित्वा=स्व गुरोरग्रे प्रार्थना कृत्वा उपाध्यायादनुमतिं गृहीत्वा वेत्यर्थ।

कश्चिद्वणिक्पुत्रो मृतः। तस्य दाहार्थं (१) महाजनो गतोऽभूत्। ततश्चतुर्णां मध्यादेकेन पुस्तकमवलोकितम्—

महाजनो येन गतः स पन्थाः।

इति। तन्महाजनमार्गेण गच्छामः। अथ ते पण्डिता यावत् (२) महाजनमेलापकेन सह यान्ति तावद्रासभः कश्चित् तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकमुद्घाट्यावलोकितम्—

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥ ४०॥

(३) तदहो! अयमस्मदीयो बान्धवः। ततः कश्चित्तस्य (४) ग्रीवायां लगति। कोऽपि पादौ (५) प्रक्षालयति। अथ यावत्ते

---

(१) महाजनः=बहुसङ्ख्यो लोकः।

"**महाजन**" इति—महान् जनः महापण्डितसङ्घः, "साधुजन" इति यावत्, येन मार्गेण=यादृशेनाचारव्यवहारेण गतः=संसारे प्रचलितो भवति सः=स एव पन्थाः=मार्गः इहलोकपरलोककल्याणकारी आचारविशेष इति तु परमार्थः।

मूर्खपण्डितेन त्वन्या कल्पना कृता। तथाहि—महान् प्रभूतो जनो मृतवणिक्पुत्रदाहकरणार्थं सङ्घीभूय गच्छञ्जनो महाजनो येन मार्गेण (दाहार्थं) गतः स एव पन्थाः, अस्माभिरपि तेनैव मार्गेण गन्तव्यम्।

(२) महाजनमेलापकेन=महाजनानां (वणिजां) मेलापकेन सङ्घेन।

"**उत्सव**" इति—यः=यो जनः प्राप्ते=उपस्थिते उत्सवे=विवाहादौ मङ्गलके कर्मणि, व्यसने=आपदि, दुर्भिक्षे=अन्नक्षयकष्टावसरे, शत्रुसङ्कटे=शत्रुभ्य आगते कलहादौ, राजद्वारे=राजपार्श्वे न्यायाधिकरणे विवादे, तथा-श्मशाने=मृतबन्धोः शवदाहार्थं प्रेतावासे च यः तिष्ठति=सहैव विद्यमानो भवति साहाय्यं करोतीत्यर्थः, स बान्धवः=स एव बन्धुर्गण्यत इति शेषः॥४०॥

(३) अहो! तत्=तस्मात् श्मशानेऽवस्थानात् हर्षोऽस्तीत्यर्थः। अयं=रासभः। अस्मदीयः बान्धवः=अस्माकं बन्धुः सुहृद्। (४) ग्रीवायाम्=कन्धरायाम्। (५) प्रक्षालयति=धावयति शोधयति।

पण्डिता दिशामवलोकनं कुर्वन्ति, तावत् कश्चिदुष्ट्रो दृष्टः। तैश्चोक्तम्—एतत्किम्। तावत् तृतीयेन पुस्तकमुद्घाट्योक्तम्—

धर्मस्य त्वरिता गतिः।

एष धर्मस्तावत्। चतुर्थेनोक्तम्—

इष्टं धर्मेण योजयेत्।

अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः। केनचिद्रजकस्याग्रे कथितम्। यावद्रजकस्तेषां मूर्खपण्डितानां प्रहारकरणाय समायातस्तावत्ते (१) प्रनष्टाः। यावदग्रे किञ्चित्स्तोकं मार्गं यान्ति, तावत्काचिन्नदी समासादिता। तत्तस्या जलमध्ये पलाशपत्रमायातं दृष्ट्वा पण्डितेनैकेनोक्तम्—

आगमिष्यति यत् पत्रं तदस्मांस्तारयिष्यति।

एतत्कथयित्वा तत्पत्रस्योपरि पतितो यावन्नद्या नीयते तावत्तं नीयमानमवलोक्यान्येन पण्डितेन केशान्तं गृहीत्वोक्तम्—

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः॥ ४१॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः। अथ तैश्च पश्चाद्गत्वा

---

"धर्मस्ये"ति—धर्मस्य=वेदादिशास्त्रविहितकर्मजन्यस्य अदृष्टस्य त्वरिता=शीघ्रं गतिः=गमनं सद्यः फलप्रदातृत्वमभिमतफलदायकत्वं वेति वास्तवोऽर्थः। मूर्खैस्तु उष्ट्रस्य सत्वरं गमनमात्रमेव निश्चितम्।

(१) प्रनष्टाः=पलायिताः।

"आगमिष्यती"ति—यत् पत्रं=वाहनं नौकादि आगमिष्यति अस्माकं समीपे तत् अस्मान् तारयिष्यति=पारे नेष्यतीति वास्तवोऽर्थः मूर्खैस्तु—पत्रस्य पलाशमात्रमेवार्थोऽवबुद्धः।

"सर्वनाश" इति—पण्डितः=चतुरो जनः सर्वनाशे=सर्वस्य वस्तुनः नाशे समुपस्थिते सति अर्धं त्यजति=परिहरति, अर्धेन कार्यं स्वाभीष्टमाहारादिकं साधयति, हि=यतः सर्वनाशः दुःसहः=सं. वास्तवोऽर्थः। मूर्खेण तु अन्यथैव ज्ञातम्, तथैवाचरितम्॥ ४१

काश्चिद् ग्राम आसादितः। तेऽपि (१) ग्रामीणैर्निमन्त्रिताः पृथक्पृथग्गृहेषु नीताः। तत एकस्य (२) सूत्रिका घृतखण्ड-संयुक्ता भोजने दत्ता। ततो विचिन्त्य पण्डितेनोक्तम्। यतः--

दीर्घसूत्री विनश्यति।

एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य (३) मण्डका दत्ताः। तेनाप्युक्तम्—

अतिविस्तारविस्तीर्णं तद्भवेन्न चिरायुषम्।

स च भोजनं त्यक्त्वा गतः। अथ तृतीयस्य (४) वटिकाभोजनं दत्तम्। तत्रापि पण्डितेनोक्तम्--

छिद्रेष्वनर्था बहुलीभवन्ति।

एवं तेऽपि त्रयः पण्डिताः (५) क्षुत्क्षामकण्ठा लोकैर्हास्यमानास्ततः स्थानात् स्वदेशं गताः। अथ सुवर्णसिद्धिराह--

---

(१) ग्रामीणै=ग्राम्यैर्हालिकादिभि। (२) सूत्रिका=सूत्राकृतिर्दीर्घाकारोऽपूपविशेष। घृतेति—घृतेन आज्येन खण्डेन शर्करया संयुक्ता मिश्रीकृता। पण्डितेन=मूर्खपण्डितेन।

"दीर्घसूत्री"ति—दीर्घसूत्री=दीर्घकालेन कार्यसमापक विनश्यति=विनाशमुपयाति इति वास्तवोऽर्थ। मूर्खेण तु सूत्रिका बुद्ध्वा भोजनं त्यक्तम्।

(३) मण्डका =अन्नविशेषा "फुल्लका" इति प्रसिद्धा।

"अती"ति—अतिविस्तारेण विस्तीर्णं विशालं बृहदाकारं यदन्नं भवेत् तत् चिरायुषं=दीर्घकालजीवनहेतुभूतं न भवेत् अर्थात् बहुकालपर्यन्तं भोजनकरणे विलम्बो हितो न भवतीति वैद्यकप्रक्रियाया प्रसिद्धम्, मूर्खेणान्यथा आकलितम्।

(४) वटिका=पिष्टकपाचितो द्रव्यविशेष "पीठी वडा" इति पञ्जावी भाषा।

"छिद्रेष्वि" ति—छिद्रेषु=रन्ध्रेषु=विपत्सु अनर्था =दु खानि बहुलीभवन्ति=प्रचुरायन्ते, अनर्था. प्रायोऽनर्थानुबन्धिन इति वास्तवोऽर्थ। मूर्खेण तु वटिकाच्छिद्र दृष्ट्वा तथाकलितम्।

(५) क्षुत्क्षामकण्ठा =बुभुक्षिता.। हास्यमाना =उपहासं नीयमाना·।

यत्त्वं (१) लोकव्यवहारमजानन् मया वार्यमाणोऽपि न स्थित-
तत ईदृशीमवस्थामुपगतः। अतोऽहं ब्रवीमि—"अपि शास्त्रेषु
कुशलाः" इति॥ तच्छ्रुत्वा चक्रधर आह—अहो! अकारण-
मेतत्। बहुबुद्धयोऽपि विनश्यन्ति दुर्दैवेन नाशिताः। स्वल्प-
बुद्धयोऽप्येकस्मिन् कुले नन्दन्ति सन्ततम्। उक्तं च—

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति॥ ४२॥

तथा च—

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे! क्रीडामि विमले जले॥ ४३॥

सुवर्णसिद्धिराह—कथमेतत्। स आह—

कथा ५।

कस्मिंश्चिज्जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः स्म। अथ तयोरेकबुद्धिर्नाम मण्डूको मित्रतां गतः। एवं ते त्रयोऽपि जलतीरे कञ्चित्कालं वेलायां च सुभाषितगोष्ठीसुखमनुभूय भूयोऽपि सलिलं प्रविशन्ति। अथ कदाचित्तेषां गोष्ठीगतानां जालहस्तधीवराः प्रभूतैर्मत्स्यैर्व्यापादितैर्मस्तके विधृतैरस्तमनवेलायां तस्मिञ्जलाशये समायाताः। ततः सलि-

(१) लोकव्यवहारम्=लोके संसारे प्रसिद्धमाचारम्, अत्यन्तलोभादिपरित्यागरूपमित्याशय।

"अरक्षितम्"इति—व्याख्यातमिदं प्राक् २२ पृ० ॥ ४२

"शतबुद्धि"रिति—हे! भद्रे! अयं शतबुद्धि=
शिरस्थ=शिरसि तिष्ठति, सहस्रधी=एतन्नामा मत्स्यश्च
यित्वा नीयते मत्स्यव्याधैरिति शेष, अहम्—
विमले=निर्मले जले=सरोवरे क्रीडामि=सानन्दं

लाशयं दृष्ट्वा मिथः प्रोचु·—अहो ! बहुमत्स्योऽयं (१) ह्रदो दृश्यते स्वल्पसलिलश्च। तत्प्रभातेऽत्रागमिष्यामः । एवमुक्त्वा स्वगृहं गताः। मत्स्याश्च (२) विषण्णवदना मिथो मन्त्रं चक्रुः। ततो मण्डूक आह—भोः! शतबुद्धे! श्रुतं धीवरोक्तं भवता। तत्किमत्र युज्यते कर्तुम्। (३) पलायनमवष्टम्भो वा। यत्कर्तुं युक्तं भवति तदादिश्यतामद्य। तच्छ्रुत्वा सहस्रबुद्धिः प्रहस्य आह—भो! मित्र! मा भैषीः, यतो वचनस्मरणमात्रादेव भयं न कार्यम्। ( न भेतव्यम् )। उक्तं च—

सर्पाणां च खलानां च सर्वेषां दुष्टचेतसाम्।
अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत्॥ ४४॥

तत्तावत् (४) तेषामागमनमपि न सम्पत्स्यते। भविष्यति वा तर्हि त्वां बुद्धिप्रभावेणात्मसहितं रक्षयिष्यामि। यतोऽनेकां (५) सलिलगतिचर्यामहं जानामि। तदाकर्ण्य शतबुद्धिराह—भोः! युक्तमुक्तं भवता। सहस्रबुद्धिरेव भवान्। अथवा साध्विदमुच्यते—

बुद्धेर्बुद्धिमतां लोके नास्त्यगम्यं हि किञ्चन।
बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः॥ ४५॥

---

(१) ह्रदः=सरोवरः। स्वल्पसलिलः=अल्पजल। (२) विषण्णवदनाः=म्लानमुखा। (३) पलायनम्=स्थानत्याग इत्यर्थः। अवष्टम्भ=स्तब्धीभूयात्रैव गुप्तमवस्थानम्।

"सर्पाणाम्"इति—सर्पाणाम्=भुजङ्गमानाम्, खलानाम्=दुष्टाना धूर्तानामिति यावत्, तथा सर्वेषा दुष्टचेतसाम्=दुर्हृदयाना दुर्जनानाञ्च अभिप्राया=मनोरथा लोकान् विनाश्य स्वाभीष्टसाधनरूपा· सङ्कल्पाः न=नैव सिद्ध्यन्ति, तेन=हेतुना इदं जगत्=विश्वं वर्त्तते=विद्यते। यद्येषा मनोरथा· सिद्ध्येयुस्तदा क्षिप्रमेव जगद् विध्वस्तं भवेदिति भाव.॥४४॥

(४) तेषाम्=धीवराणाम्, मत्स्यव्याधानामित्यर्थ.। (५) सलिलगतिचर्याम्=सलिले जले या गतिश्चलनं तस्या चर्या प्रकारमित्यर्थ।

"बुद्धे"रिति—लोके=संसारे बुद्धिमताम्=मतिमतां बुद्धे. किञ्चन=

तथा च—

न यत्रास्ति गतिर्वायो रश्मीनां च विवस्वतः ।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा ॥ ४६ ॥

ततो वचनश्रवणमात्रादपि (१) पितृपर्यायागतं जन्मस्थानं त्यक्तुं न शक्यते । उक्तं च—

न तत्स्वर्गेऽपि सौख्यं स्याद् दिव्यस्पर्शनशोभने ।
कुस्थानेऽपि भवेत् पुंसां जन्मनो यत्र सम्भवः ॥ ४७ ॥

तन्न कदाचिदपि गन्तव्यम् । अहं त्वां सुबुद्धिप्रभावेण रक्षयिष्यामि । मण्डूक आह—भद्रौ ! मम तावदेकैव बुद्धिः पलायनपरा । तदहमन्यं जलाशयमद्यैव सभार्यो यास्यामि, एवमुक्त्वा स मण्डूको रात्रावेवान्यजलाशयं गतः ।(२) धीवरै-

---

किञ्चिदपि वस्तुजातम् अगम्यम्=अगोचरोऽसाध्यमिति यावत्, नास्ति । "हि" इति निश्चितमेतत् । यत —चाणक्येन=कौटिल्येन चन्द्रगुप्तस्य प्रधानामात्येन बुद्धया=बुद्धिबलेनैव असिपाणय =खड्गहस्ताः ( महाबलिन इत्यत्र तात्पर्यम् ) नन्दा हता =मारिता । नन्दवंश्या नव राजानो महाबलिनोऽपि चाणक्येन कुटिलनीत्या हता इतीयमतिप्रसिद्धा कथा पुराणादिमूला च ॥ ४५ ॥

"ने"ति—यत्र वायो =पवनस्य, विवस्वत =सूर्यस्य रश्मीना=किरणानाञ्च गति =प्रसरणं नास्ति । बुद्धिमता बुद्धि. तत्रापि आशु=शीघ्रं सदा प्रविशति । उक्तमेव तात्पर्यम् ॥ ४६ ॥

(१) पितृपर्यायागतम्=पितृपरम्परया प्राप्तम् ।

"न"इति—यत्र=यस्मिन् स्थाने जन्मन सम्भव =उत्पत्तिरस्ति तत्र कुस्थाने अपि=नीचे घृणितेऽपि स्थाने पुसा=नराणा यत्सौख्यम्=यादृश आनन्दो भवति तत्सौख्यं दिव्यस्पर्शनशोभने=दिव्याना रूपरसगन्धादिविषयाणा स्पर्शनेन भोगेन शोभने मनोहरे अलौकिकवैषयिकानन्दप्रदातरीत्यर्थ , एवम्भूते स्वर्गे=नाकलोके न=नैव भवितुमर्हतीत्यर्थ ॥ ४७ ।

(२) धीवरै =मत्स्यग्राहिभि ।

रपि प्रभात आगत्य जघन्यमध्यमोत्तमजलचरा मत्स्यकूर्म-मण्डूककर्कटादयो गृहीताः। तावपि शतबुद्धिसहस्रबुद्धी सभार्यौ पलायमानौ चिरमात्मानं गतिविशेषविज्ञानैः कुटिलचारेण रक्षन्तौ जाले पतितौ व्यापादितौ च। अथापराह्णसमये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः। गुरुत्वाच्चैकेन शतबुद्धिः स्कन्धे कृतः। सहस्रबुद्धिः प्रलम्बमानो नीयते। ततश्च (१) वापीकण्ठोपगतेन मण्डूकेन तौ तथा नीयमानौ दृष्ट्वाभिहिता स्वपत्नी—प्रिये! पश्य पश्य—

शतबुद्धिः शिरःस्थोऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे! क्रीडामि विमले जले॥ ४८॥

अतोऽहं ब्रवीमि—"शतबुद्धिः शिरःस्थोऽयम्" इति॥
(२) नैकान्ते बुद्धिरपि प्रमाणम्। सुवर्णसिद्धिराह—यद्यप्येतदस्ति तथापि मित्रवचनमनुल्लङ्घनीयम्। परं किं क्रियते। निवारितोऽपि मया न स्थितोऽतिलौल्याद् विद्याहङ्काराच्च। अथवा साध्विदमुच्यते—

साधु मातुल! गीतेन मया प्रोक्तोऽपि न स्थितः।
अपूर्वोऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणम्॥ ४९॥

चक्रधर आह—कथमेतत्। सोऽब्रवीत्—

---

(१) वापीकण्ठोपगतेन=वापी दीर्घिका तस्याः कण्ठं सामीप्यं तदुपगतेन।

"शतबुद्धि"रिति—व्याख्यातमवस्तात्॥ ४८॥

(२) नैकान्त इति—एकान्तभावेन बुद्धिरपि न प्रमाणम्। कदाचित् प्रबले दैवे बुद्धिकुण्ठतादर्शनादित्यर्थः।

"साधु"इति—हे! मातुल! माम! साधु=भद्रं कल्याणमस्तु, तुभ्यमिति शेषः, मया प्रोक्तोऽपि=सङ्केतेन बोधितोऽपि भवान् गीतेन=गानेन हेतुना गीतप्रीतिपरवशतया न स्थितः=नैव रुद्धः मौनं नाश्रितवानसि, अयं=गलस्य अपूर्वो मणिः बद्धः=धृतः, त्वया गीतलक्षणम्=गीतस्य गानस्य लक्षणं चिह्नं पुरस्काररूपं सम्प्राप्तम्॥ ४९॥

## कथा ६ ।

कस्मिंश्चिदधिष्ठाने उद्धतो नाम गर्दभः प्रतिवसति स्म। स सदैव रजकगृहे भारोद्वहनं कृत्वा रात्रौ स्वेच्छया पर्यटति। ततः प्रत्यूषे बन्धनभयात् स्वयमेव रजकगृहमायाति। रजकोऽपि ततस्तं बन्धनेन नियुनक्ति। अथ तस्य रात्रौ पर्यटतः क्षेत्राणि कदाचिच्छृगालेन सह मैत्री सञ्जाता। स च (१) पीवरत्वात् वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रे शृगालसहितः प्रविशति। एवं तौ यदृच्छया चिर्भटिकाभक्षणं कृत्वा प्रत्यहं प्रत्यूषे स्वस्थानं व्रजतः। अथ कदाचित्तेन मदोद्धतेन रासभेन क्षेत्र-मध्यस्थितेन शृगालोऽभिहितः—भो! भगिनीसुत! पश्य पश्य! अतीव निर्मला रजनी। तदहं गीतं करिष्यामि। तत्कथय कतमेन रागेण करोमि। स आह—माम! किमनेन (२) वृथा-नर्थप्रचालनेन। यतश्चौरकर्मप्रवृत्तावावाम्। निभृतैश्च चौर-जारैरत्र स्थातव्यम्। उक्तं च—

कासयुक्तस्त्यजेच्चौर्यं निद्रालुश्चेत् स चौरिकाम्।
जिह्वालौल्यं रुजाक्रान्तो जीवितं योऽत्र वाञ्छति॥ ५०॥

---

(१) पीवरत्वात्=स्थूलदेहवत्त्वात्। वृतिभङ्गम्=वृते कण्टकशाखा-दिकृतस्यावरणस्य भङ्गं त्रोटनम्। कर्कटिकाक्षेत्रे=चिर्भटीक्षेत्रे। (२) वृथे-ति—वृथा व्यर्थम्, अनर्थप्रचालनेन विपत्सङ्घटनेन। निभृतैः=गुप्तैः। चौरजारैः=चौरैर्जारैश्च। तत्र चौरस्तस्करः, जारः उपपतिः।

"कासयुक्त" इति—अत्र=संसारे यः=यो जनः जीवितम्=प्राणान्धा-रयितुमिति वाञ्छति=अभिलषति, सः कासयुक्तः=कासरोगेणाक्रान्तश्चेत् चौर्यम्=स्तेयकर्म, निद्रालुः=निद्रया आतुरश्चेत् चौरिकाम्=पुंश्चलीं कुलटां व्यभि-चारिणीम्, रुजाक्रान्तः=रोगेण ज्वरादिना आक्रान्तो व्याप्तश्चेत् जिह्वालौ-ल्यम्=जिह्वाया रसनायाः लौल्यं चापल्यमपथ्यकरणमिति यावत्, त्यजेत्=परिहरेत्। अन्यथैतेषां महाननर्थः सम्पद्यत इति भावः।

तत्र कासिनि चौर्ये प्रवृत्ते तच्छब्देन गृहिणा निद्राभङ्गे जाते निग्रहः,

अपरं त्वदीयं गीतं न मधुरस्वरम् । शङ्खशब्दानुकारं दूरादपि श्रूयते । तदत्र क्षेत्रे रक्षापुरुषाः सुप्ताः सन्ति । त उत्थाय वधं बन्धं वा करिष्यन्ति । तद्भक्षय तावदमृतमयीश्चिर्भटीः । मा त्वमत्र गीतव्यापारपरो भव । तच्छ्रुत्वा रासभ आह—भोः ! वनाश्रयत्वात् त्वं गीतरसं न वेत्सि । तेनैतद् ब्रवीषि । उक्तं च—

शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा ॥ ५१ ॥

शृगाल आह—माम ! अस्त्येतत् । परं न वेत्सि त्वं गीतम् । केवलम् (१) उन्नदसि । तत्किं तेन स्वार्थभ्रंशकेन । रासभ आह—धिग्धिङ्मूर्ख ! किमहं न जानामि गीतम् । तद्यथा तस्य भेदाः शृणु—

सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः ।
तालास्त्वेकोनपञ्चाशत् तिस्रो मात्रा लयास्त्रयः ॥ ५२ ॥
स्थानत्रयं यतीनां च षडास्यानि रसा नव ।
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत् ततः स्मृताः ॥ ५३ ॥

---

निद्रालो. सूर्योदये सति कुलटागृहे प्रतिष्ठाभङ्ग, रोगिण कुपथ्यकरणे मृत्युभीतिरिति सङ्क्षिप्तसार ॥ ५० ॥

"शरदि" ति—तमसि=अन्धकारे, दूरम्=अत्यर्थं शरज्ज्योत्स्नाहते= शरदि या ज्योत्स्ना चन्द्रिका तया हते विनाशिते सति प्रियसन्निधौ=प्रियस्य कान्तादेर्जनस्य सन्निधौ समीपे गीतझङ्कारजा=गीतस्य गानस्य यो झङ्कार शब्द. तज्जा सुधा=पीयूषं धन्यानाम्=पुण्यकृतामेव श्रोत्रे=कर्णे विशति नत्व-पुण्यकृतामित्याशय. ॥ ५१ ॥

(१) उन्नदसि=उच्चैर्ध्वानं कुरुषे ।

"सप्ते"ति—स्वराः निषादर्षभगान्धारषड्जमध्यमधैवताख्या सप्त, ग्रामा स्वराणामेकीभूताना सन्दोहा. त्रय, षड्जग्राम, मध्यमग्राम, निषादग्राम इति नामानस्त्रय इत्यर्थ, मूर्च्छना स्वराणामारोहावरोहक्रमरूपा एकविंशति, ताला तु एकोनपञ्चाशत्, मात्राः तिस्र, लया त्रय', यती-

पञ्चाशीत्यधिकं ह्येतद् गीताङ्गानां शतं स्मृतम्।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम्॥ ५४॥
नान्यद् गीतात् प्रियं लोके देवानामपि दृश्यते।
शुष्कस्नायुस्वराह्लादात् त्र्यक्षं जग्राह रावणः॥ ५५॥

तत्कथं भगिनीसुत ! मामनभिमतं वदन्निवारयसि। शृगाल आह—माम ! यद्येवं तदहं तावद् (१) वृतेर्द्वारस्थितः (२) क्षेत्रपालमवलोकयामि। त्वं पुनः स्वेच्छया गीतं कुरु। तथानुष्ठिते (३) रासभरटनमाकर्ण्य क्षेत्रपः क्रोधाद्दन्तान् घर्षयन् प्रधावितः। यावद्रासभो दृष्टस्तावल्लगुडप्रहारैस्तथा हतः, यथा प्रताडितो भूपृष्ठे पतितः। ततश्च सच्छिद्रम् (४) उलूखलं गले बद्ध्वा क्षेत्रपालः प्रसुप्तः। रासभोऽपि स्वजातिस्वभावात् गतवेदनः क्षणेनाभ्युत्थितः। उक्तं च—

---

नाम्=विरामाणां स्थानत्रयम्, आस्यानि=मुखानि षट्, रसा· शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतवात्सल्याभिधाना नव, रागा· षट्त्रिंशति, तत=तदनन्तरं भावाः चत्वारिंशत् स्मृता·=कथिता, एतान्हि गीताङ्गानाम्=गीतस्य अङ्गाना पञ्चाशीत्यधिकं शतं (१८५) स्मृतम्=कथितम्।

भरतेन=नाट्यशास्त्रप्रणेत्रा स्वयमेव श्रुते=वेदस्य परम्=सारभूतमेतत् प्रोक्तम्, देवानाम्=अमराणामपि गीतात् अन्यत्=अपरं प्रियम्=आनन्दकारणं न दृश्यते, तथाहि—रावण=दशास्य शुष्कस्नायुस्वराह्लादात्=शुष्का प्रचुरकठिनतरतपोऽनुष्ठानात् नीरसा स्नायव· सूक्ष्मशिरा यस्य तस्य शरीरस्य य· स्वर· कण्ठध्वनिविशेष तेन य आह्लादः आनन्द तस्माद्धेतो· त्र्यक्षं=महादेवं जग्राह=वशीचकार, अर्थात् सङ्गीतविद्ययैव शङ्करं तोषयाम्बभूव॥ ५२–५५॥

(१) वृते=वाटस्य। (२) क्षेत्रपालम्=क्षेत्राधिपतिम्। (३) रासभरटनम्=गर्दभचीत्कारम्। क्षेत्रप=क्षेत्रपति। दन्तान् घर्षयन्=पेषयन्। क्रुद्धस्य लक्षणमिदम्। (४) उलूखलम्=उदूखलं धान्यादिकण्डनसाधनं "उक्खल" इति पञ्जाबी भाषा।

अपरं त्वदीयं गीतं न मधुरस्वरम् । शङ्खशब्दानुकारं दूरादपि श्रूयते । तदत्र क्षेत्रे रक्षापुरुषाः सुप्ताः सन्ति । त उत्थाय वधं बन्धं वा करिष्यन्ति । तद्भक्षय तावदमृतमयीश्चिर्भटीः । मा त्वमत्र गीतव्यापारपरो भव। तच्छ्रुत्वा रासभ आह—भोः ! वनाश्रयत्वात् त्वं गीतरसं न वेत्सि। तेनैतद् ब्रवीषि। उक्तं च—

शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा ॥ ५१ ॥

शृगाल आह—माम ! अस्त्येतत् । परं न वेत्सि त्वं गीतम्। केवलम् (१) उन्नदसि । तत्किं तेन स्वार्थभ्रंशकेन । रासभ आह—धिग्धिङ्मूर्ख ! किमहं न जानामि गीतम् । तद्यथा तस्य भेदाः शृणु—

सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः ।
तालास्त्वेकोनपञ्चाशत् तिस्रो मात्रा लयास्त्रयः ॥ ५२ ॥
स्थानत्रयं यतीनां च षडास्यानि रसा नव ।
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत् ततः स्मृताः ॥ ५३ ॥

---

निद्रालोः सूर्योदये सति कुलटागृहे प्रतिष्ठाभङ्गः, रोगिणः कुपथ्यकरणे मृत्युभीतिरिति सङ्क्षिप्तसारः ॥ ५० ॥

"शरदि" ति—तमसि=अन्धकारे, दूरम्=अत्यर्थं शरज्ज्योत्स्नाहते=शरदि या ज्योत्स्ना चन्द्रिका तया हते विनाशिते सति प्रियसन्निधौ=प्रियस्य कान्तादेर्जनस्य सन्निधौ समीपे गीतझङ्कारजा=गीतस्य गानस्य यो झङ्कार शब्दः तज्जा सुधा=पीयूषं धन्यानाम्=पुण्यकृतामेव श्रोत्रे=कर्णे विशति नत्वपुण्यकृतामित्याशयः ॥ ५१ ॥

(१) उन्नदसि=उच्चैर्ध्वानं कुरुषे ।

"सप्ते"ति—स्वराः निषादर्षभगान्धारषड्जमध्यमधैवताख्याः सप्त, ग्रामाः स्वराणामेकीभूतानां सन्दोहाः त्रयः, षड्जग्रामः, मध्यमग्रामः, निषादग्रामः इति नामानस्त्रय इत्यर्थः, मूर्च्छनाः स्वराणामारोहावरोहक्रमरूपाः एकविंशतिः, तालाः तु एकोनपञ्चाशत्, मात्राः तिस्रः, लयाः त्रयः, यती-

पञ्चाशीत्यधिकं ह्येतद् गीताङ्गानां शतं स्मृतम् ।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम् ॥ ५४ ॥
नान्यद् गीतात् प्रियं लोके देवानामपि दृश्यते ।
शुष्कस्नायुस्वराह्लादात् त्र्यक्षं जग्राह रावणः ॥ ५५ ॥

तत्कथं भगिनीसुत ! मामनभिज्ञं वदन्निवारयसि । शृगाल आह—माम ! यद्येवं तदहं तावद् (१) वृतेर्द्वारस्थितः (२) क्षेत्रपालमवलोकयामि । त्वं पुनः स्वेच्छया गीतं कुरु । तथानुष्ठिते (३) रासभरटनमाकर्ण्य क्षेत्रपः क्रोधाद्दन्तान् घर्षयन् प्रधावितः । यावद्रासभो दृष्टस्तावल्लगुडप्रहारैस्तथा हतः, यथा प्रताडितो भूपृष्ठे पतितः । ततश्च सच्छिद्रम् (४) उलूखलं गले बद्ध्वा क्षेत्रपालः प्रसुप्तः । रासभोऽपि स्वजातिस्वभावात् गतवेदनः क्षणेनाभ्युत्थितः । उक्तं च—

---

नाम्=विरामाणा स्थानत्रयम्, आस्यानि=मुखानि षट्, रसा शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतवात्सल्याभिधाना नव, रागाः षट्त्रिंशति, तत =तदनन्तरं भावाः चत्वारिंशत् स्मृताः=कथिता, एतान्हि गीताङ्गानाम्=गीतस्य अङ्गानां पञ्चाशीत्यधिकं शतं (१८५) स्मृतम्=कथितम् ।

भरतेन=नाट्यशास्त्रप्रणेत्रा स्वयमेव श्रुते =वेदस्य परम्=सारभूतमेतत् प्रोक्तम्, देवानाम्=अमराणामपि गीतात् अन्यत्=अपरं प्रियम्=आनन्दकारणं न दृश्यते, तथाहि—रावण =दशास्य. शुष्कस्नायुस्वराह्लादात्= शुष्का प्रचुरकठिनतरतपोऽनुष्ठानात् नीरसा स्नायव. सूक्ष्मशिरा यस्य तस्य शरीरस्य य. स्वरः कण्ठध्वनिविशेष तेन य आह्लाद. आनन्द· तस्माद्धेतो त्र्यक्षं=महादेवं जग्राह=वशीचकार, अर्थात् सङ्गीतविद्ययैव शङ्करं तोषयाम्बभूव ॥ ५२–५५ ॥

(१) वृते =वाटस्य । (२) क्षेत्रपालम्=क्षेत्राधिपतिम् । (३) रासभरटनम्=गर्दभचीत्कारम् । क्षेत्रप =क्षेत्रपति· । दन्तान् घर्षयन्=पेषयन् । क्रुद्धस्य लक्षणमिदम् । (४) उलूखलम्=उदूखलं धान्यादिकण्डनसाधनं :"उक्खल" इति पञ्जाबी भाषा ।

सारमेयस्य चाश्वस्य रासभस्य विशेषतः ।
मुहूर्तात् परतो न स्यात् प्रहारजनिता व्यथा ॥ ५६ ॥

ततस्तमेवोलूखलमादाय वृतिं (१) चूर्णयित्वा पलायितुमारब्धः। अत्रान्तरे शृगालोऽपि दूरादेव तं दृष्ट्वा सस्मितमाह—

साधु मातुल ! गीतेन मया प्रोक्तोऽपि न स्थितः ।
अपूर्वोऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणम् ॥ ५७ ॥

तद्भवानपि मया वार्यमाणोऽपि न स्थितः । तच्छ्रुत्वा चक्रधर आह—भो ! मित्र ! सत्यमेतत् । अथवा साध्विदमुच्यते—

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः ।
स एव निधनं याति यथा मन्थरकौलिकः ॥ ५८ ॥

सुवर्णसिद्धिराह—कथमेतत्। सोऽब्रवीत्—

## कथा ७।

कस्मिंश्चिदधिष्ठाने मन्थरको नाम कौलिकः प्रतिवसति स्म। तस्य कदाचित् (२) पट्टकर्माणि कुर्वतः सर्वपट्टकर्मकाष्ठानि भग्नानि। ततः स कुठारमादाय वने काष्ठार्थं गतः। स च

---

"सारमेयस्ये"ति--सारमेयस्य=श्वानस्य, अश्वस्य=घोटकस्य, विशेषत =विशेषतस्तु (बाहुल्येन) रासभस्य=गर्दभस्य मुहूर्त्तात् परत'= क्षणात्पर प्रहारजनिता=आताडनोत्था व्यथा=पीडा न स्यात्=नैव भवति। अत्यल्पसमयोत्तरमेवामीषा व्यथाविस्मरण जायते । "मुहूर्त्त"शब्दो घटिकाद्वयवाच्यपि अत्र क्षणमात्रपर । ५५२ पृ० ॥ ५६ ॥

(१) चूर्णयित्वा=भञ्जयित्वा।

"साधु" इति—व्याख्यातमधस्तात्। ५५२ पृ० ॥ ५७ ॥

"यस्य" इति—यस्य=जनस्य स्वयं प्रज्ञा=स्वीया बुद्धि नास्ति यश्च मित्रोक्तम्=सुहृद्वच न करोति=नैव मानयति, स एव निधनं=विनाशं याति यथा मन्थरकौलिक'=मन्थराख्यस्तन्तुवायविशेष ॥ ५८ ॥

(२) पट्टकर्माणि=वस्त्रवयनानि । सर्वपट्टकर्मकाष्ठानि=वस्त्रवयनयन्त्राणि तुरीवेमादीनि। भग्नानि=त्रुटितानि।

समुद्रतटं यावद्भ्रमन् प्रयातः, ततश्च तत्र शिंशपापादपस्तेन दृष्टः। ततश्चिन्तितवान्—महानयं वृक्षो दृश्यते। तदनेन (१) कर्तितेन प्रभूतानि पट्टकर्मोपकरणानि भविष्यन्ति—इत्यवधार्य तस्योपरि कुठारमुत्क्षिप्तवान्। अथ तत्र वृक्षे कश्चिद् (२) व्यन्तरः समाश्रित आसीत्। अथ तेनाभिहितम्—भोः! (३) मदाश्रयोऽयं पादपः सर्वथा रक्षणीयः, यतोऽहमत्र महासौख्येन तिष्ठामि (४) समुद्रकल्लोलस्पर्शनाच्छीतवायुनाप्यायितः। कौलिक आह—भोः! किमहं करोमि। दारुसामग्री विना मे कुटुम्बं बुभुक्षया पीड्यते। तस्मादन्यत्र शीघ्रं गम्यताम्। अहमेनं कर्तयिष्यामि। व्यन्तर आह—भोः! तुष्टस्तवाहम्। तत्प्रार्थ्यतामभीष्टं किञ्चित्। रक्षैनं पादपमिति। कौलिक आह—यद्येवं तदहं स्वगृहं गत्वा स्वमित्रं स्वभार्यां च पृष्ट्वागमिष्यामि। ततस्त्वया देयम्। अथ तथा इति प्रतिज्ञाते व्यन्तरेण स कौलिकः प्रहृष्टः स्वगृहं प्रतिनिवृत्तः। यावदग्रे गच्छति तावद् ग्रामप्रवेशे निजसुहृदं नापितमपश्यत्। ततस्तस्य व्यन्तरवाक्यं निवेदयामास—यदहो! मित्र! मम कश्चिद् व्यन्तरः सिद्धः। तत्कथय किं प्रार्थये। अहं त्वां प्रष्टुमागतः। नापित आह—भद्र! यद्येवं तद्राज्यं प्रार्थय। येन त्वं राजा भवसि. अहं त्वन्मन्त्री च। द्वावपीह सुखमनुभूय परलोकसुखमनुभवावः। उक्तं च—

राजा दानपरो नित्यमिह कीर्तिमवाप्य च।
तत्प्रभावात्पुनः स्वर्गे स्पर्धते त्रिदशैः सह ॥ ५६ ॥

---

(१) कर्तितेन=कुठारद्वारा खण्डितेन। (२) व्यन्तर=कश्चिद् देवयोनिविशेष। (३) मदाश्रय=ममावासभूत। पादप=वृक्षः। (४) समुद्रेति—समुद्रस्य सागरस्य ये कल्लोला लहर्य. तेषां स्पर्शनात् संसर्गात् शीतवायुना शीतलपवनेन। आप्यायित.=आनन्दित·।

"राजे"ति—इह=अस्मिन् संसारे नित्यम्=निरन्तरम् दानपर=त्यागी

एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः।
न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना॥ ६३॥

कौलिक आह—तथापि प्रष्टव्या सा मया। यतः पतिव्रता सा। अपरं तामपृष्ट्वाहं न किञ्चित्करोमि। एवं तमभिधाय सत्वरं गत्वा तामुवाच—प्रिये! अद्यास्माकं कश्चिद् व्यन्तरः सिद्धः। स वाञ्छितं प्रयच्छति। तदहं त्वां प्रष्टुमागतः। तत्कथय किं प्रार्थये। एष तावन्मम मित्रं नापितो वदत्येवं यद्राज्यं प्रार्थयस्व। साह—आर्यपुत्र! का मतिर्नापितानाम्। तन्न कार्यं तद्वचः। उक्तं च—

चारणैर्वन्दिभिर्नीचैर्नापितैर्बालकैरपि।
न मन्त्रं मतिमान् कुर्यात् सार्धं भिक्षुभिरेव च॥ ६४॥

अपरं महती (१) क्लेशपरम्परैषा राज्यस्थितिः सन्धि-विग्रह-याना-ऽऽसन-संश्रय-द्वैधीभावादिभिः कदाचित्पुरुषस्य सुखं न प्रयच्छतीति। यतः—

---

"एता"इति—एता. नार्य=योषा. केवलं स्वार्थपरा.=स्वप्रयोजनमात्र-परायणा स्वसुखे=विषयेन्द्रियजन्यभोगात्मके आनन्दे रता.=संलग्ना सन्तीति शेष, तासा स्वसुखं विना=वैषयिकं निजास्वादमन्तरेण न कोऽपि वल्लभः=प्रिय, किमधिकम्—सुतोऽपि=पुत्रोऽप्यासा न प्रियो भवति यदि स्वसुखसिद्धिर्न-स्यादित्यर्थ॥ ६३॥

"चारणै"रिति—चारणै=नटै, वन्दिभिः=स्तुतिपाठकै, नीचै=क्षुद्रहृदयै पिशुनस्वभावैरिति यावत्, नापितै.=क्षुरकृत्येन जीविका कुर्वाणै-र्हीनजातिभि, बालकैरपि=वीथीषु खेलाकूर्दनप्रियैर्बालै तथा भिक्षुभिरेव च=याचकैश्चापि सह मन्त्रं=मन्त्रणा रहस्यविषयविवेचना न कुर्यात्=नैव विदध्यात्॥ ६४॥

(१) क्लेशपरम्परा=दुःखसमुदायरूपा। राज्यस्थिति=राष्ट्रपालनम्। सन्धिविग्रहेति—सन्ध्यादीना स्वरूपं प्राग्—व्याख्यातं काकोलूकीये।

यदैव राज्ये क्रियतेऽभिषेकस्तदैव याति व्यसनेषु बुद्धिः।
घटा नृपाणामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥६५॥

तथा च--

रामस्य व्रजनं वने निवसनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम्।
सौदासं तदवस्थमर्जुनवधं सञ्चिन्त्य लङ्केश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तद्वाञ्छयेत् ॥६६॥
यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः।
वधं राज्यकृतां राज्ञां तद्राज्यं दूरतस्त्यजेत् ॥ ६७ ॥
कौलिक आह—सत्यमुक्तं भवत्या। तत्कथय किं प्रार्थये।

---

"यदैवे"ति—अयं श्लोकः प्राग्व्याख्यातः काकोलूकीये मेघवर्णं प्रति स्थिरजीविमन्त्रिण उपदेशप्रसङ्गे। ४६२ पृ० ॥ अत्र किञ्चित्पाठभेदोऽपि निगदार्थ एवेति स्वयमूह्यम् ॥ ६५ ॥

"रामस्ये"ति—रामस्य=दाशरथेः वने=दण्डकारण्ये व्रजनम्=पितुराज्ञया वनवासः, पाण्डोः सुतानाम्=पञ्चानामपि युधिष्ठिरादिपाण्डवानां वनम्=अरण्यश्रयणम्, वृष्णीनां=यादवानां महोग्राणामपि निधनम्=पारस्परिककलहेन विनशनम्, नलस्य नृपतेः=निषधेश्वरस्य राज्ञः राज्यात् परिभ्रंशनम्=प्रच्युतिः, सौदासम्=सूर्यवंशोद्भवं कल्माषपादापरनामानं तदवस्थं गुरोः शापाद् राक्षसयोनिप्राप्तिम्, अर्जुनवधम्=सहस्रबाहोः कार्त्तवीर्यस्य परशुरामद्वारा ध्वंसं समूलमुन्मूलनम्, लङ्केश्वरम्=रावणं राज्यकृते=स्वराज्यरक्षार्थं विडम्बनगतम्=विडम्बनां प्राप्तं कष्टस्य परां सीमां प्राप्तमित्यर्थः, सञ्चिन्त्य=विचार्य, दृष्ट्वा=इतिहासपुराणादिग्रन्थेषु स्वयमप्यालोक्य तस्माद्धेतोः तत्=राज्यं न वाञ्छयेत्=नैवाभिलषेत् प्राज्ञ इति शेषः ॥ ६६ ॥

"यदर्थम्" इति—ये निजाः=स्वीयाः भ्रातरः=सहोदराः तथा ये च पुत्राः=औरसाः सुताः तेऽपि राज्यकृताम्=न्यायेन राज्यं पालयतामपि राज्ञां=भूपानां यदर्थम्=यत्कृते वधम्=मृत्युं वाञ्छन्ति तत् राज्यं दूरतः त्यजेत् प्रागेव परिहरेत् ॥ ६७ ॥

## कथा ८।

कस्मिंश्चिन्नगरे कश्चित् स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म। तेन भिक्षार्जितैः (१) सक्तुभिर्भुक्तशेषैः कलशः सम्पूरितः। तं च घटं (२) नागदन्तेऽवलम्ब्य तस्याधस्तात् खट्वां निधाय सततमेकदृष्ट्या तमवलोकयति। अथ कदाचिद् रात्रौ सुप्तश्चिन्तयामास—यत्परिपूर्णोऽयं घटस्तावत्सक्तुभिर्वर्तते। तद्यदि दुर्भिक्षं भवति तदनेन रूप्यकाणां शतमुत्पद्यते। ततस्तेन मयाऽजाद्वयं ग्रहीतव्यम्। ततः (३) षाण्मासिकप्रसववशात् ताभ्यां यूथं भविष्यति। ततोऽजाभिः प्रभूता गा ग्रहीष्यामि, गोभिर्महिषीः, महिषीभिर्वडवाः, वडवाप्रसवतः प्रभूता अश्वा भविष्यन्ति। तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति। सुवर्णेन (४) चतुःशालं गृहं सम्पद्यते। ततः कश्चिद् ब्राह्मणो मम गृहमागत्य (५) प्राप्तवयस्कां रूपाढ्यां कन्यां दास्यति। तत्सकाशात् पुत्रो मे भविष्यति। तस्याहं सोमशर्मेति नाम करिष्यामि। ततस्तस्मिन् (६) जानुचलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वाऽश्वशालायाः पृष्ठदेश उपविष्टस्तदवधारयिष्यामि। अत्रान्तरे सोमशर्मा मां दृष्ट्वा (७) जनन्युत्सङ्गाज्जानुप्रचलनपरोऽश्वखुरासन्नवर्ती मत्समीपमागमिष्यति। ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि—गृहाण तावद्बालकम्। सापि

(१) सक्तुभि=भृष्टयवचूर्णैः। (२) नागदन्ते=भित्तिखाते कीलके। (३) षाण्मासिकेति—षड्भिर्मासैर्निष्पन्न षाण्मासिक स चासौ प्रसव. प्रसूतिः तद्वशात् तद्द्वारेत्यर्थ। "षण्मासाण्ण्यच्च" (५।१।८३) इति ठन् प्रत्ययः। (४) चतु.शालम्=चतसृषु दिक्षु शाला गृहाणि यत्र तादृशम्। गृहम्=हर्म्यम्। (५) प्राप्तवयस्काम्=युवतीम्। रूपाढ्याम्=सुन्दरीम्। (६) जानुचलनयोग्ये=जानुद्वयेन रिङ्खणं कुर्वति सति। (७) जनन्युत्सङ्गात्=मातुः क्रोडात्। अश्वखुरासन्नवर्ती=घोटकखुर-(शफ)-समीपस्थ।

(१) गृहकर्मव्यग्रतयास्मद्वचनं न श्रोष्यति। ततोऽहं समुत्थाय तां पादप्रहारेण ताडयिष्यामि। एवं तेन (२) ध्यानस्थितेन तथैव पादप्रहारो दत्तो यथा स घटो भग्नः सक्तुभिः (३) पाण्डुरतां गतः। अतोऽहं ब्रवीमि—"अनागतवतीं चिन्ताम्" इति॥ सुवर्णसिद्धिराह — एवमेतत्। कस्ते दोषः। यतः सर्वोऽपि लोभेन विडम्बितो बाध्यते। उक्तं च—

यो लौल्यात् कुरुते कर्म नैवोदर्कमवेक्षते।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः॥ ६६॥

चक्रधर आह—कथमेतत्। स आह—

## कथा ६।

कस्मिंश्चिन्नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म। तस्य पुत्रा वानरक्रीडारता वानरयूथं नित्यमेवानेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म। अथ वानरयूथाधिपो यः स (४) औशनस-बार्हस्पत्य-चाणक्यमतवित्तदनुष्ठाता च तान् सर्वानप्यध्यापयति स्म। अथ तस्मिन् राजगृहे (५) लघुकुमारवाहनयोग्यं मेषयू-

---

(१) गृहेति—गृहकर्मणि रन्धनादौ व्यग्रतया तत्परतया। (२) ध्यानस्थितेन=चिन्तापरेण। (३) पाण्डुरताम्=श्वेतरक्तताम्। "श्वेतपीतताम्" इति व्याख्यानं सम्यक् प्रपद्ये।

"य" इति—यः=यो जन लौल्यात्=लोभादिसमुत्थचापल्यात् कर्म कुरुते, उदर्कम्=उत्तरकालभवं फलन्तु नैव अवेक्षते=पर्यालोचयते, स पुरुष तथा विडम्बनाम्=न्यक्कारणा अवाप्नोति=श्रयते यथा चन्द्रभूपति= चन्द्रनामा भूपाल॥ ६६॥

(४) औशनसेति—उशनसा प्रोक्तमौशनसम्। बृहस्पतिना प्रोक्तं बार्हस्पत्यम्। चाणक्येन प्रोक्त चाणक्यम् तच्च तन्मतम्, तद्वेत्तीति औशनसबार्हस्पत्यचाणक्यमतवित्। तदनुष्ठाता=औशनसादिमतदर्शितनीतिमार्गानुयायी। (५) लघ्विति—लघूना क्षुद्राणा कुमाराणा बालाना वाहनयोग्यम्।

थमस्ति। (१) तन्मध्यादेको जिह्वालौल्यादहर्निशं निःशङ्कं महानसे प्रविश्य यत् पश्यति तत् सर्वं भक्षयति। ते च (२) सूपकारा यत्किञ्चित्काष्ठं मृण्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति तेनाशु ताडयन्ति। सोऽपि वानरयूथपस्तद् दृष्ट्वा व्यचिन्तयत्—अहो! मेषसूपकारकलहोऽयं वानराणां क्षयाय भविष्यति, यतो (३) ऽन्नास्वादलम्पटोऽयं मेषो महाकोपाश्च सूपकारा यथासन्नवस्तुना प्रहरन्ति। तद्यदि वस्तुनोऽभावात् कदाचिद् (४) उल्मुकेन ताडयिष्यन्ति (५) तदोर्णाप्रचुरोऽयं मेषः स्वल्पेनापि वह्निना प्रज्वलिष्यति। तद्दह्यमानः पुन (६) रश्वकुट्यां समीपवर्तिन्यां प्रवेक्ष्यति। सापि (७) तृणप्राचुर्याज्ज्वलिष्यति। ततोऽश्वा वह्निदाहमवाप्स्यन्ति। (८) शालिहोत्रेण पुनरेतदुक्तम्—यद् (९)वानरवसयाश्वानां वह्निदाहदोषः प्रशाम्यति। तन्नूनमेतेन भाव्यम्। अत्र निश्चयः। एवं निश्चित्य सर्वान् वानरानाहूय रहसि प्रोवाच—यतः—

मेषेण सूपकाराणां कलहो यत्र जायते।
स भविष्यत्यसन्दिग्धं वानराणां क्षयावहः॥ ७०॥
तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः।
तद् गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत्॥ ७१॥

---

(१)तदिति—तस्य मेषयूथस्य मध्यात्। एकः=मेषः। (२) सूपकाराः=सूदाः पाचका इत्यर्थः। (३) अन्नास्वादलम्पटः=अन्नरसलिप्सुः। (४) उल्मुकेन=ज्वलता काष्ठेन। (५) तदा=तर्हि। ऊर्णाप्रचुरः=बहुलोमोपेतः। (६) अश्वकुट्याम्=वाजिशालायाम्। (७) तृणप्राचुर्यात्=घासबाहुल्यात्। (८) शालिहोत्रेण=अश्वचिकित्साविदा। (९) वानरवसया=वानरवपया। "मेदस्तु वपा वसा" इत्यमरः।

"मेषेणे"ति—यत्र मेषेण सह सूपकाराणाम्=सूदानां कलहः जायते, स कलहः असन्दिग्धम्=निःसंशयं वानराणां क्षयावहः=विनाशकरः भविष्यति ७०

"तस्मादि"ति—तस्मात्=कारणात् यत्र गृहे नित्यं=सततम्, अ-

तथा च—

कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम्।
कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥७२॥

तन्न यावत् सर्वेषां संक्षयो भवति, तावदेतद्राजगृहं सन्त्यज्य वनं गच्छामः। अथ तत्तस्य वचनमश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः—भोः! भवतो (१) वृद्धभावाद् बुद्धिवैकल्यं सञ्जातं येनैतद्ब्रवीषि। उक्तं च—

वदनं दशनैर्हीनं लाला स्रवति नित्यशः।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः ॥ ७३ ॥

न वयं(२)स्वर्गसमानोपभोगान् नानाविधान् भक्ष्यविशेषान् राजपुत्रैः स्वहस्तदत्तानमृतकल्पान् परित्यज्य तत्राटव्यां कषाय-

---

कारण=निर्हेतुक कलह स्यात्, जीवितं वाञ्छन्=अभिलषन् पुरुष दूरत एव तद् गृहं परिवर्जयेत्=जह्यात् ॥ ७१ ॥

"कलहान्तानी"ति—हर्म्याणि=धनिना वासभवनानि कलहान्तानि=कलहेन विग्रहेण अन्तोऽवसानो येषा तानि, येषु गृहेषु कलह समुत्थितो भवति तेषा सद्यो विनाशो जायत इत्यर्थ । सौहृदञ्च=मैत्री तु कुवाक्यान्तम्=कुवाक्येन कटुवचनभाषणेनान्तोऽवसानं यस्य तत्तादृशम्, कुवाक्यप्रयोगे सौहृदं विनश्यतीत्यर्थ । राष्ट्राणि=राज्यानि कुराजान्तानि=कुराजेन अन्तो नाशो येषा तानि, यत्र राजा दोषवान् स्यात् तद्राज्यं राजदोषेण विलयं यातीति भाव । नृणा=मनुष्याणा यश =कीर्ति कुकर्मान्तम्=कुकर्मणा अन्तो यस्य तत् दुष्कर्मैव यशोविनाशकादित्यर्थ ॥ ७२ ॥

(१) वृद्धभावात्=वार्धक्यात्। बुद्धिवैकल्यम्=मतिह्रास ।

"वदनम्"इति—वदनम्=मुख (वृद्धस्य बालस्य च) दशनै =दन्तै हीनम्=रहितम्, नित्यश =निरन्तरं लाला=स्यन्दिनी स्रवति=क्षरति, क्वापि=कस्मिंश्चिदपि विषये मति =बुद्धि बाले=शिशौ न स्फुरति=प्रकाशते, वृद्धे=जरठे तु विशेषतो न स्फुरतीत्यनुषङ्ग ॥ ७३ ॥

(२)स्वर्गेति—दिव्यभोगतुल्यानित्यर्थ । अमृतकल्पान्=सुधासदृशान् ।

कटुतिक्तक्षाररूक्षफलानि भक्षयिष्यामः। तच्छ्रुत्वाश्रुकलुषां दृष्टिं कृत्वा स प्रोवाच—रे! रे! मूर्खाः! यूयमेतस्य सुखस्य परिणामं न जानीथ। (१) किम्पाकरसास्वादनप्रायमेतत् सुखं परिणामे विषवद्भविष्यति। तदहं कुलक्षयं स्वयं नावलोकयिष्यामि। साम्प्रतं वनं यास्यामि। उक्तं च—

मित्रं व्यसनसम्प्राप्तं स्वस्थानं परपीडितम्।
धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम्॥ ७४॥

एवमभिधाय सर्वांस्तान् परित्यज्य स यूथाधिपोऽटव्यां गतः। अथ तस्मिन् गतेऽन्यस्मिन्नहनि स मेषो महानसे प्रविष्टो यावत् सूपकारेण नान्यत्किञ्चित् समासादितम् (२) तावदर्धज्वलितकाष्ठेन ताड्यमानो जाज्वल्यमानशरीरः शब्दायमानोऽश्वकुट्यां प्रत्यासन्नवर्तिन्यां प्रविष्टः। तत्र तृणप्राचुर्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि (३) वह्निज्वालास्तथा समुत्थिता यथा केचिदश्वाः (४) स्फुटितलोचनाः पञ्चत्वं गताः, केचिद्बन्धनानि त्रोटयित्वार्धदग्धशरीरा इतश्चेतश्च ह्रेषमाणा धावमानाः सर्वमपि जनसमूहमाकुलीचक्रुः। अत्रान्तरे

---

(१) किम्पाकेति—किम्पाकः फलविशेषः आदौ स्वादु परिणामे दुःखप्रदः तस्य यो रसः तदास्वादनम् उपभोगः तत्प्रायं तत्सदृशं क्षुद्रमित्यर्थः। एतत्सुखम्=राजान्नास्वादनानन्दः।

"मित्रमि"ति—ये=जनाः व्यसनसम्प्राप्तम्=विपद्ग्रस्तं मित्रम्, परपीडितं=परैः शत्रुभिः पीडितमाक्रान्तं स्वस्थानम्=स्वजन्मभूमिं स्वगृहं वा ...—देशभङ्गम्=राजविग्रहे सति उपद्रुतं देशमित्यर्थः, कुलक्षयं=वंशविनाशञ्च न पश्यन्ति, ते धन्याः=पुण्यात्मानः सन्ति॥ ७४॥

(२) अर्धज्वलितकाष्ठेन=उल्मुकेन। जाज्वल्यमानशरीरः=भस्मीक्रियमाणदेहः। (३) वह्निज्वालाः=अनलशिखाः। (४) स्फुटितलोचनाः=स्फुटितानि बहिर्निर्गतानि लोचनानि येषां ते तादृशाः। अर्धदग्धशरीराः=अर्धप्लुष्टकायाः। ह्रेषमाणाः=अश्वध्वनिं कुर्वाणाः।

राजा सविषादः शालिहोत्रज्ञान् वैद्यानाहूय प्रोवाच—भोः! प्रोच्यतामेषामश्वानां कश्चिद्दाहोपशमनोपायः। तेऽपि शास्त्राणि विलोक्य प्रोचुः—देव! प्रोक्तमत्र विषये भगवता शालिहोत्रेण। यत्—

कपीनां मेदसा दोषो वह्निदाहसमुद्भवः।
अश्वानां नाशमभ्येति तमः सूर्योदये यथा॥ ७५॥

तत्क्रियतामेतत् (१) चिकित्सितं द्राक्, यावदेते न दाहदोषेण विनश्यन्ति। सोऽपि तदाकर्ण्य समस्तवानरवधमादिष्टवान्। किं बहुना, सर्वेऽपि ते वानरा विविधायुधलगुडपाषाणादिभिर्व्यापादिता इति। अथ सोऽपि वानरयूथपस्तं पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं ज्ञात्वा परं विषादमुपागतः। स त्यक्ताहारक्रियो वनाद्वनं पर्यटति। अचिन्तयच्च—कथमहं तस्य (२) नृपापसदस्यानृणताकृत्येनापकृत्यं करिष्यामि। उक्तं च—

मर्षयेद् धर्षणां योऽत्र वंशजां परनिर्मिताम्।
भयाद्वा यदि वा कामात् स ज्ञेयः पुरुषाधमः॥ ७६॥

---

"कपीनाम्"इति—वह्निदाहसमुद्भव =अग्निदाहोत्पन्न अश्वाना=वाजिना दोष =व्रणादिरोग कपीनाम्=वानराणा मेदसा=वसया नाशम् अभ्येति=शाम्यति। अत्रार्थे उपमा—यथा सूर्योदये तमोऽन्धकारो नश्यतीत्यर्थ ॥ ७५ ॥

(१) चिकित्सितम्=भैषज्यम्। द्राक्=शीघ्रम्। (२) नृपापसदस्य=नीचराज्ञ। अनृणताकृत्येन=आनृण्यसम्पादनेन, स्ववैरभावपरिशोधार्थमित्यर्थ.। अपकृत्यम्=अपकार वैरनिर्यातनाम्।

"मर्षयेदि" ति—अत्र=इह जगति यः जन भयाद्वा=त्रासाद्वा यदि वा कामात्=स्वेच्छावशात् परनिर्मिताम्=शत्रुकृता वंशजाम्=स्वकुले सङ्क्रान्ता प्राप्तामिति यावत्, धर्षणाम्=तिरस्कारम् अवमाननामिति यावत्, मर्षयेत्=सहेत, स पुरुषाधमः=पुरुषेषु अधमो नीचः ज्ञेयो नीतिकुशलैरिति शेष. ॥७६॥

अथ तेन वृद्धवानरेण कुत्रचित् पिपासाकुलेन भ्रमता (१) पद्मिनीखण्डमण्डितं सरः समासादितम्। तद्यावत् (२) सूक्ष्मेक्षिकयावलोकयति तावद् (३) वनचरमनुष्याणां पदपङ्क्तिप्रवेशोऽस्ति न निष्क्रमणम्। ततश्चिन्तितम्—नूनमत्र(४) जलान्ते दुष्टग्राहेण भाव्यम्। तत्पद्मिनीनालमादाय दूरस्थोऽपि जलं पिबामि। (५) तथानुष्ठिते तन्मध्याद्राक्षसो निष्क्रम्य (६) रत्नमालाविभूषितकण्ठस्तमुवाच—भोः! अत्र यः सलिले प्रवेशं करोति स मे भक्ष्यः इति। तन्नास्ति धूर्ततरस्त्वत्समोऽन्यो यत्पानीयमनेन विधिना पिबसि। ततस्तुष्टोऽहम्। प्रार्थयस्व हृदयवाञ्छितम्। कपिराह—भोः! कियती ते भक्षणशक्तिः। स आह—शतसहस्रायुतलक्षाण्यपि जलप्रविष्टानि भक्षयामि। बाह्यतः शृगालोऽपि मां दूषयति। वानर आह—अस्ति मे केनचिद्भूपतिना सहात्यन्तं वैरम्। यद्येनां रत्नमालां मे प्रयच्छसि तत्सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन लोभयित्वात्र सरसि प्रवेशयामि। सोऽपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह—भो! मित्र! यत्समुचितं भवति तत्कर्तव्यम् इति। वानरोऽपि रत्नमालाविभूषितकण्ठो वृक्षप्रासादेषु परिभ्रमञ्जनैर्दृष्टः पृष्टश्च—भो! यूथप! भवानियन्तं कालं कुत्र स्थितः। भवतेदृग्रत्नमाला कुत्र लब्धा? या दीप्त्या सूर्यमपि तिरस्करोति। वानरः प्राह—अस्ति कुत्रचिदरण्ये गुप्ततरं महत्सरो

---

(१) पद्मिनीखण्डमण्डितम्=कमलिनीवृन्दसज्जितम्। (२) सूक्ष्मेक्षिकया=सूक्ष्मदृष्ट्या। (३) वनचरमनुष्याणाम्=जङ्गलवासिनां नराणाम्। पदपङ्क्तिप्रवेशः=पदपङ्क्तेः चरणराजेः प्रवेशोऽभ्यन्तरगमनम्। निष्क्रमणम्=प्रत्यावर्तनम्। (४) जलान्ते=जलमध्ये। दुष्टग्राहेण=दुष्टेन धूर्तेन जलचरजन्तुविशेषेण नक्रादिना। (५) तथानुष्ठिते=पद्मिनीनालद्वारा जले पीते सति। (६) रत्नेति—रत्नानां मणीनां मालाभिर्विभूषितो मण्डितः कण्ठो गलो यस्य स तथाविधः।

धनदनिर्मितम्। तत्र सूर्येऽर्धोदिते रविवारे यः (१) कश्चिन्निमज्जति स धनदप्रसादादीदृग्रत्नमालाविभूषितकण्ठो निःसरति। अथ भूभुजा तदाकर्ण्य स वानरः समाहूतः, पृष्टश्च—भो! यूथाधिप! किं सत्यमेतत्। रत्नमालासनाथं सरोऽस्ति क्वापि। कपिराह—स्वामिन्! एष प्रत्यक्षतया मत्कण्ठस्थितया रत्नमालया (२) प्रत्ययस्ते। तद्यदि रत्नमालया प्रयोजनं तन्मया सह कमपि प्रेषय येन दर्शयामि। तच्छ्रुत्वा नृपतिराह-यद्येवं तदहं सपरिजनः स्वयमेष्यामि। येन प्रभूता रत्नमालाः सम्पद्यन्ते। वानर आह—एवं क्रियताम्। तथानुष्ठिते भूपतिना सह रत्नमालालोभेन सर्वे कलत्रभृत्याः प्रस्थिताः। वानरोऽपि राज्ञा (३) दोलाधिरूढेन स्वोत्सङ्ग आरोपितः सुखेन प्रीतिपूर्वकमानीयते। अथवा साध्विदमुच्यते—

तृष्णे! देवि! नमस्तुभ्यं यया वित्तान्विता अपि।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि ॥७७॥

तथा च—

इच्छति शती सहस्रं सहस्री लक्षमीहते।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते ॥ ७८ ॥

---

(१) निमज्जति=स्नाति। (२) प्रत्यय=विश्वास। (३) दोलाधिरूढेन=दोलामधिष्ठितेन। स्वोत्सङ्गे=स्वीये क्रोडे। आरोपितः=स्थापितः।

"तृष्णे" इति—हे! तृष्णे!=आशे! देवि!=दिव्यस्वरूपे! तुभ्यं नमः। यया=भवत्या वित्तान्विता=धनाढ्या अपि अकृत्येषु=करणानर्हेषु कर्मसु नियोज्यन्ते=प्रेर्यन्ते प्रवर्त्त्यन्त इति यावत्, तथा—दुर्गमेषु=अगम्येष्वपि स्थानेषु भ्राम्यन्ते=पर्याट्यन्ते इत्यर्थः ॥ ७७ ॥

"इच्छती"ति—शती=शतसङ्ख्यामुद्रावान् सहस्रं=सहस्रसङ्ख्यं धनम् इच्छति, सहस्री लक्षमीहते=लक्षधनस्यार्जनाय यतते, तथा—लक्षाधिपः=लक्षस्वामी राज्यम् "ईहते" इत्यनुषङ्गः। राज्यस्थः=सम्राट् सन् स्वर्गं=नाकमीहते ॥ ७८ ॥

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
जीर्यतश्चक्षुषी श्रोत्रे तृष्णैका तरुणायते ॥ ७६ ॥

अथ तत्सरः समासाद्य वानरः (१) प्रत्यूषसमये राजानमुवाच—देव ! अत्रार्धोदिते सूर्येऽत्र प्रविष्टानां सिद्धिर्भवति । यत् सर्वोऽपि जन एकदैव प्रविशतु । त्वया पुनर्मया सह प्रवेष्टव्यं येन पूर्वदृष्टस्थानमासाद्य प्रभूतास्ते रत्नमाला दर्शयामि । अथ प्रविष्टास्ते लोकाः सर्वे भक्षिता राक्षसेन । अथ तेषु चिरायमाणेषु राजा वानरमाह—भो ! यूथाधिप ! किमिति चिरायते मे जनः । तच्छ्रुत्वा वानरः सत्वरं वृक्षमारुह्य राजानमुवाच—भो ! दुष्टनरपते ! राक्षसेनान्तःसलिलस्थितेन भक्षितस्ते परिजनः । साधितं मया कुलक्षयजं वैरम् । तद्गम्यताम् । त्वं स्वामीति मत्वा नात्र प्रवेशितः । उक्तं च—

कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम् ।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥ ८० ॥

तत्त्वया मम कुलक्षयः कृतः मया पुनस्तव इति । अथैतदाकर्ण्य राजा (२) कोपाविष्टः पदातिरेकाकी यथायातमार्गेण निष्क्रान्तः । अथ तस्मिन् भूपतौ गते राक्षसस्तृप्तो जलान्निष्क्रम्य सानन्दमिदमाह—

---

"जीर्यन्त" इति—अयं श्लोकः प्राग् ५२६ पृ० व्याख्यातः ॥ ७६ ॥

(१) प्रत्यूषसमये=प्रातःकाले ।

"कृत" इति—कृते=उपकारे अपकारे वा कृते सति प्रतिकृतिम्=प्रति-... उपकारमपकारं वा यथायोगं कुर्यात्, हिंसिते=हनने कृते सति प्रतिहिंसितम्=प्रतिहननं कुर्यात्, हे ! राजन् ! तत्र=एवं कृते सति अहं दोषम्=पापं न पश्यामि, यतः दुष्टे=दुर्जने दुष्टम्=अनिष्टं समाचरेत्=अनुतिष्ठेत् ॥ ८० ॥

(२) कोपाविष्टः=कोपेन व्याप्तः । पदातिः=पद्गः । एकाकी=एकलः । यथायातमार्गेण=येन मार्गेण आयातस्तेनैव वर्त्मनेत्यर्थः ।

हतः शत्रुः कृतं मित्रं रत्नमाला न हारिता।
नालेनापिबता तोयं भवता साधु वानर!॥ ८१॥

अतोऽहं ब्रवीमि—"यो लौल्यात् कुरुते कर्म" इति॥ एवमुक्त्वा भूयोऽपि स चक्रधरमाह—भो! मित्र! प्रेषय मां येन स्वगृहं गच्छामि। चक्रधर आह—भद्र! आपदर्थे धनमित्रसङ्ग्रहः क्रियते। तन्मामेवंविधं त्यक्त्वा क्व यास्यसि। उक्तं च—

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत्।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम्॥ ८२॥

सुवर्णसिद्धिराह—भोः! सत्यमेतद्यदि (१) गम्यस्थाने शक्तिर्भवति। एतत्पुनर्मनुष्याणामगम्यस्थानम्। नास्ति कस्यापि त्वामुन्मोचयितुं शक्तिः। अपरं यथायथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि तथा तथाहमेतज्जानामि यद् द्रागगच्छामि, मा कश्चिन्ममाप्यनर्थो भवेदिति। यतः—

यादृशी वदनच्छाया दृश्यते तव वानर!।
विकालेन गृहीतोऽसि यः परैति स जीवति॥ ८३॥

चक्रधर आह—कथमेतत्। सोऽब्रवीत्—

---

"हत" इति—हे! वानर! नालेन=पद्मखण्डेन तोयम्=पानीयं पिबता भवता साधु=सुष्ठु यथा तथा कृतम्=अनुष्ठितम्। तथाहि—शत्रुः=वैरी हतः=मारितः, मित्रम्=सुहृत् कृतः, तथा रत्नमाला न=नैव हारिता=विनाशिता॥८१॥

"य" इति—यः सुहृत् सापदम्=विपद्ग्रस्तं मित्रं त्यक्त्वा निष्ठुरताम्=कठोरतां याति=अर्थात् आपदः सकाशात्तस्य मोचनाय यत्नं न कुरुते, स कृतघ्नः तेन पापेन=निष्ठुरतारूपेण असंशयं नरके=निरये याति, तस्य नरकगमने संशयो नास्तीत्यर्थः॥ ८२॥

(१) गम्यस्थाने=गन्तुं योग्ये स्थाने। शक्तिः=सामर्थ्यम्। शक्तिसान्निध्ये सति यदि सुहृदन्यमित्रस्य साहाय्यं न कुर्यात्तदाऽसौ नरकभागभवतीत्याशयः सुवर्णसिद्धेः।

"यादृशी" ति—हे! वानर! तव वदनस्य=मुखस्य छाया=कान्तिः

## कथा १० ।

कस्मिंश्चिन्नगरे भद्रसेनो नाम राजा प्रतिवसति स्म। तस्य (१) सर्वलक्षणसम्पन्ना रत्नवती नाम कन्यास्ति । तां कश्चिद्राक्षसो (२) जिहीर्षति । रात्रावागत्योपभुङ्क्ते । परं (३) कृतरक्षोपधानां हर्तुं न शक्नोति । सापि (४) तत्समये रक्षःसान्निध्यजामवस्थामनुभवति कम्पादिभिः । एवमतिक्रामति काले कदाचित् स राक्षसो मध्यनिशायां गृहकोणे स्थितः। सापि राजकन्या स्वसखीमुवाच—सखि ! पश्यैष (५) विकालः समये नित्यमेव मां कदर्थयति । अस्ति तस्य दुरात्मनः प्रतिषेधोपायः कश्चित् । तच्छ्रुत्वा राक्षसोऽपि व्यचिन्तयत्—नूनं यथाहं तथान्योऽपि कश्चिद्विकालनामास्या हरणाय नित्यमेवागच्छति परं सोऽप्येनां हर्तुं न शक्नोति । तत्तावदश्वरूपं कृत्वाश्वमध्यगतो निरीक्षयामि किंरूपः स किंप्रभावश्चेति । एवं राक्षसोऽश्वरूपं कृत्वाश्वानां मध्ये तिष्ठति । तथानुष्ठिते निशीथसमये राजगृहे कश्चिदश्वचौरः प्रविष्टः। स च सर्वानश्वा-

---

यादृशी=यद्रूपावच्छिन्ना दृश्यते=विलोक्यते मयेति शेष, तेन त्व विकालेन=विशिष्टकालेन यमसदृशेन केनचिद् भयङ्करेण सत्त्वेन, तथा विपरीतेन कालेन दुष्टेन भाग्यावसरेण, किंवा—रलयोरैक्यात् केनचिद् विकारेण गृहीतोऽसि=कवलितोऽसि आक्रान्तोऽसीति यावत्, तस्मात् य =य कश्चित् परैति=पलायते स जीवति सङ्कटान्मुक्तो भवतीत्यर्थ ॥ ८३ ॥

(१) सर्वलक्षणसम्पन्ना=सर्वै विशालनेत्रादिभि स्त्रासौन्दर्यहेतुभूतैर्लक्षणै सम्पन्ना समुपेता महासुन्दरीत्यर्थ । (२) जिहीर्षति=हर्त्तुमिच्छति । उपभुङ्क्ते=रमते । (३) कृतेति—कृतं रक्षाया उपधानमुपबर्हं यस्या सा ताम्, अथवा—कृतं सम्पादितं रक्षार्थं उपधानं कश्चन व्रतविशेषो यया सा ता तादृशीम् । (४) तत्समये=राक्षसरमणकाले । रक्ष सान्निध्यजाम्=राक्षससामीप्यजनिताम् । अवस्थाम्=दशाम् । (५) विकाल =यमरूपी दुष्टाचार । कदर्थयति=भोगेन क्लेशयतीत्यर्थ ।

नवलोक्य तं राक्षसमश्वतमं विज्ञायाधिरूढः। अत्रान्तरे राक्षसश्चिन्तयामास—नूनमेष विकालनामा मां चौरं मत्वा कोपान्निहन्तुमागतः। तत्किं करोमि। एवं चिन्तयन् सोऽपि (१) तेन खलीनं मुखे निधाय कशाघातेन ताडितः। (२) अथासौ भयत्रस्तमनाः प्रधावितुमारब्धः। चौरोऽपि दूरं गत्वा खलीनाकर्षणेन तं स्थिरं कर्तुमारब्धवान्। स तु केवलं वेगाद्वेगतरं गच्छति। अथ (३) तं तथाऽगणितखलीनाकर्षणं मत्वा चौरश्चिन्तयामास—अहो! नैवंविधा वाजिनो भवन्त्यगणितखलीनाः। तन्नूनमनेनाश्वरूपेण राक्षसेन भवितव्यम्। तद्यदि कश्चित् (४) पांशुलं भूमिदेशमवलोकयामि, तदात्मानं तत्र पातयामि। नान्यथा मे जीवितव्यमस्ति। एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोऽश्वो वटवृक्षस्य तले निष्क्रान्तः। चौरोऽपि (५) वटप्ररोहमासाद्य तत्रैव विलग्नः। ततो द्वावपि तौ पृथग्भूतौ परमानन्दभाजौ जीवितविषये लब्धप्रत्याशौ सम्पन्नौ। अथ तत्र वटे कश्चिद्राक्षससुहृद्वानरः स्थित आसीत्। तेन राक्षसं त्रस्तमालोक्य व्याहृतम्—भो! मित्र! किमेवं पलाय्यतेऽलीकभयेन। त्वद्भक्ष्योऽयं मानुषो भक्ष्यताम्। सोऽपि वानरवचो निशम्य स्वरूपमाधाय शङ्कितमनाः (६) स्खलितगतिर्निवृत्तः। चौरोऽपि तं वानराहूतं ज्ञात्वा कोपात्तस्य लाङ्गूलं लम्बमानं मुखे निधाय चर्वितवान्। वानरोऽपि तं

(१) तेन=अश्वचौरेण। खलीनम्=कविकाम्। कशाघातेन=ताडनीताडनेन। (२) असौ=अश्वरूपी राक्षस। भयेति—भयेन त्रस्तं मनो यस्य सः। (३) तम्=अश्वरूपिणं राक्षसम्। अगणितेति—अगणितम् अनालोचितं खलीनस्याकर्षणं येन स तम्। (४) पांशुलम्=धूलिसहितम्। (५) वटप्ररोहम्=वटस्य न्यग्रोधस्य प्ररोहम् शाखाग्रम्। विलग्न=संसक्त। (६) स्खलितगति=स्खलिता शैथिल्यं प्राप्ता गतिर्गमनव्यापारो यस्य स तादृश।

राक्षसाभ्यधिकं मन्यमानो भयान्न किञ्चिदुक्तवान्, केवलं व्यथार्तो निमीलितनयनस्तिष्ठति। राक्षसोऽपि तं तथाभूतमवलोक्य श्लोकमेनमपठत्—

याद‍ृशी वदनच्छाया दृश्यते तव वानर!।
विकालेन गृहीतोऽसि यः परैति स जीवति॥ ८४॥

प्रनष्टश्च। तत्प्रेषय मां येन गृहं गच्छामि। त्वं पुनरनुभुङ्क्ष्वात्र स्थित एव लोभवृक्षफलम्। चक्रधरः प्राह—भोः! अकारणमेतत्। दैववशात् सम्पद्येत नृणां शुभाशुभम्। उक्तं च—

दुर्गस्त्रिकूटः परिखा समुद्रो
रक्षांसि योधा धनदाच्च वित्तम्।
शास्त्रं च यस्योशनसा प्रणीतं
स रावणो दैववशाद्विपन्नः॥ ८५॥

तथा च—

अन्धकः कुब्जकश्चैव त्रिस्तनी राजकन्यका।
त्रयोऽप्यन्यायतः सिद्धाः संमुखे कर्मणि स्थिते॥ ८६॥

सुवर्णसिद्धिराह—कथमेतत्। सोऽब्रवीत्—

---

"**याद‍ृशी**"ति—व्याख्यातमवस्तात्॥ ८४॥

"**दुर्ग**"इति—यस्य त्रिकूट=त्रिकूटाख्यो दुर्ग=कोट, समुद्र=सागर परिखा=खेयम्, रक्षासि=राक्षसा· योधा=सैनिकाः, धनदात् च=कुवेराच्च वित्त=धन कोष इति यावत्, शास्त्रञ्च=नीतिशास्त्रन्तु उशनसा=शुक्राचार्येण प्रणीतम्=रचितम्,य शुक्रनीतिमनुरुध्य व्यवहारमकरोदित्यर्थ, स=सोऽपि रावण=दशास्य दैववशात्=प्रतिकूलदैवात् विपन्न=विपत्तिं प्राप्त सपरिवारो विनष्ट इत्यर्थ।

दैवे प्रातिकूल्यं गते प्रभूतपुरुषकारा अपि विनश्यन्तीति भाव.॥ ८५॥

"**अन्धक**" इति—कर्मणि=प्रारब्धकर्मणि संमुखे स्थिते=अनुकूले सति अन्धक·=चक्षुर्हीन, कुब्जक=कुब्ज, तथा त्रिस्तनी=स्तनत्रयोपेता राजकन्यका, एते त्रयोऽपि अन्यायत=अन्यायेन अतर्कितभावेनेत्यर्थ, सिद्धा·=सिद्धिम्प्राप्ता·। अनुकूलेन दैवेन स्वस्वविरूपान्मुक्ता इत्यर्थ.॥ ८६॥

## कथा ११ ।

अस्त्युत्तरापथे मधुपुरं नाम नगरम् । तत्र मधुसेनो नाम राजा बभूव । तस्य कदाचित् (१) विषयसुखमनुभवतस्त्रिस्तनी कन्या बभूव । अथ तां त्रिस्तनीं जातां श्रुत्वा स राजा कञ्चुकिनः प्रोवाच—यद्भो ! त्यज्यतामियं त्रिस्तनी गत्वा दूरेऽरण्ये यथा कश्चिन्न जानाति । तच्छ्रुत्वा कञ्चुकिनः प्रोचुः—महाराज ! ज्ञायते यदनिष्टकारिणी त्रिस्तनी कन्या भवति । तथापि ब्राह्मणा आहूय प्रष्टव्या येन (२) लोकद्वयं न विरुध्यते । यतः—

> यः सततं परिपृच्छति शृणोति सन्धारयत्यनिशम् ।
> तस्य दिवाकरकिरणैर्नलिनीव विवर्धते बुद्धिः ॥ ८७ ॥

तथा च—

> पृच्छकेन सदा भाव्यं पुरुषेण विजानता ।
> राक्षसेन्द्रगृहीतोऽपि प्रश्नान्मुक्तो द्विजः पुरा ॥ ८८ ॥

राजा आह—कथमेतत् । ते प्रोचुः—

---

(१) विषयेति—विषयाणां शब्दस्पर्शरूपादीनां सुखमिन्द्रियसंसर्गजनित आनन्दस्तमित्यर्थः । (२) लोकद्वयं न विरुध्येत=इह लोकः परलोकश्च विरुद्धो न भवेदित्यर्थः, इह निन्दा न भवेत् परत्र धर्मो न हीयेतेत्यर्थः ।

"य" इति—यः=यो जनः सततं=नित्यं परिपृच्छति=तत्तत्कर्मानुष्ठानकाले परकीयसम्मतिं गृह्णाति, शृणोति=परोपदेशमाकर्णयति, तथा—अनिशम्=निरन्तरम् सन्धारयति=उपदिष्टं स्वमनसि निवेशयति, तस्य पुरुषस्य दिवाकरकिरणैः=सूर्यमयूखैः नलिनी इव=पद्मिनीव बुद्धिः=मतिः विवर्धते=विशेषेण वृद्धिं=प्राप्नोति, बहुविषयव्यापिनी भूत्वा क्वापि न स्खलतीति तात्पर्यम् ॥ ८७ ॥

"पृच्छकेने" ति—विजानता=बुद्धिमताऽपि पुरुषेण सदा पृच्छकेन=कृतप्रश्नेन भाव्यम्, स्वेष्टसिद्ध्युपायं जानन्नपि पुरुषः परं पृष्ट्वैव कार्यं कुर्यादित्याशयः । यतः—राक्षसेन्द्रगृहीतः=महाराक्षसेनाक्रान्तोऽपि द्विजः=कश्चिद् ब्राह्मणः प्रश्नात्=प्रश्नकरणात् मुक्तः=राक्षसाक्रमणं परिजहावित्यर्थः । तदिदमग्रे कथायां स्फुटति ॥ ८८ ॥

## कथा १२।

देव! कस्मिंश्चिद्वनोद्देशे चण्डकर्मा नाम राक्षसः प्रतिवसति स्म। एकदा तेन भ्रमताटव्यां कश्चिद् ब्राह्मणः समासादितः। ततस्तस्य स्कन्धमारुह्य प्रोवाच—भोः! अग्रेसरो गम्यताम्। ब्राह्मणोऽपि भयत्रस्तमनास्तमादाय प्रस्थितः। अथ तस्य (१) कमलोदरकोमलौ पादौ दृष्ट्वा ब्राह्मणो राक्षसमपृच्छत्—भोः! किमेवंविधौ ते पादावतिकोमलौ। राक्षस आह—भोः! (२) व्रतमस्ति। नाहमार्द्रपादो भूमिं स्पृशामि। ततस्तच्छ्रुत्वात्मनो (३) मोक्षोपायं चिन्तयन् सरः प्राप्तः। ततो राक्षसेनाभिहितम्—भोः! यावदहं स्नानं कृत्वा देवतार्चनविधिं विधायागच्छामि तावत्त्वयातः स्थानादन्यत्र न गन्तव्यम्। तथानुष्ठिते द्विजश्चिन्तयामास—नूनं देवतार्चनविधेरूर्ध्वं मामेष भक्षयिष्यति। तद् द्रुततरं गच्छामि, येनैष आर्द्रपादो न मम पृष्ठमेष्यति। तथानुष्ठिते राक्षसो व्रतभङ्गभयात्तस्य पृष्ठं न गतः। अतोऽहं ब्रवीमि—"पृच्छकेन सदा भाव्यम्" इति। अथ तेभ्यस्तच्छ्रुत्वा राजा द्विजानाहूय प्रोवाच—भो! ब्राह्मणाः! त्रिस्तनी मे कन्या समुत्पन्ना। तत्किं तस्याः प्रतिविधानमस्ति न वा। ते प्रोचुः—देव! श्रूयताम्—

हीनाङ्गी वाधिकाङ्गी वा या भवेत् कन्यका नृणाम्।
भर्तुः स्यात् सा विनाशाय स्वशीलनिधनाय च॥८६॥

---

(१) कमलोदरकोमलौ=कमलोदरवत् कोमलौ मृदुलौ। (२) व्रत=नियम। आर्द्रपाद=क्लिन्नाङ्घ्रि। (३) मोक्षोपायम्=उद्धारप्रकारम्।

"हीनाङ्गी"ति—नृणां=मनुष्याणां या कन्यका=कुमारी हीनाङ्गी=केनचिदङ्गेन विकला, वा=अथवा अधिकाङ्गी=अधिकेनाङ्गेन विशिष्टा भवेत् सा कन्या भर्तुः=स्वामिनः विनाशाय=मृत्यवे तथा-स्वशीलनिधनाय च=स्वस्य शीलमाचारो व्यभिचाराभावः तस्य निधनाय विनाशनाय च स्यात्॥ ८६॥

या पुनस्त्रिस्तनी कन्या याति लोचनगोचरम्।
पितरं नाशयत्येव सा द्रुतं नात्र संशयः॥ ९०॥

तस्मादस्या दर्शनं परिहरतु देवः। तथा यदि (१) कश्चिदुद्वाहयति, तदेनां तस्मै दत्त्वा देशत्यागेन नियोजयितव्य इति। एवं कृते लोकद्वयाविरुद्धता भवति। अथ तेषां तद्वचनमाकर्ण्य स राजा (२) पटहशब्देन सर्वत्र घोषणामाज्ञापयामास—अहो! त्रिस्तनीं राजकन्यां यः कश्चिदुद्वाहयति स सुवर्णलक्षमाप्नोति देशत्यागं च। एवं तस्यामाघोषणायां क्रियमाणायां महान् कालो व्यतीतः। न कश्चित्तां प्रतिगृह्णाति। सापि (३) यौवनोन्मुखी सञ्जाता सुगुप्तस्थानस्थिता यत्नेन रक्ष्यमाणा तिष्ठति। अथ तत्रैव नगरे कश्चिदन्धस्तिष्ठति। तस्य च मन्थरकनामा कुब्जोऽग्रेसरो यष्टिग्राही। ताभ्यां तं पटहशब्दमाकर्ण्य मिथो मन्त्रितम्—(४)स्पृश्यतेऽयं पटहः। यदि कथमपि दैवात् कन्या लभ्यते, तदा सुवर्णप्राप्तिश्च भवति। सुखेन सुवर्णप्राप्त्या कालो व्रजति। अथ यदि तस्या दोषतो मृत्युर्भवति (५)दारिद्र्योपात्तस्यास्य क्लेशस्य पर्यन्तो भवति। उक्तं च—

लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः
कान्तासङ्गः स्वजनममता दुःखहानिर्विलासः।
धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता
पूर्णे सर्वे जठरपिठरे प्राणिनां सम्भवन्ति॥ ९१॥

---

"या" इति—या पुनः त्रिस्तनी=त्रयः स्तनाः यस्याः सा त्रिस्तनी कन्या लोचनगोचरम्=नेत्रविषयताम् याति=प्राप्नोति सा द्रुतं=शीघ्रमेव पितरं=जनकं नाशयति, अत्र=अस्मिन् विषये संशयः=सन्देहो नास्तीत्यर्थः॥ ९०॥

(१) उद्वाहयति=परिणयते। (२) पटहशब्देन=ढक्काध्वानेन (३) यौवनोन्मुखी=तारुण्योपेतेत्यर्थः। (४) स्पृश्यते=श्रूयत इत्यर्थः। (५) दारिद्र्योपात्तस्य=निर्धनताजन्यस्य।

"लज्जा" इति—जठरपिठरे=उदरस्थाले पूर्णे=भक्ष्यभोज्यपेय-

एवमुक्त्वान्धेन गत्वा स पटहः स्पृष्टः—भो! अहं तां कन्यामुद्वाहयामि यदि राजा मे प्रयच्छति। ततस्तै राजपुरुषैर्गत्वा राज्ञे निवेदितम्—देव! अन्धकेन केनाचित् पटहः स्पृष्टः। तदत्र विषये देवः प्रमाणम्। राजा प्राह—

अन्धो वा बधिरो वापि कुष्ठी वाप्यन्त्यजोऽपि वा।
प्रतिगृह्णातु तां कन्यां सलक्षां स्याद्विदेशगः॥ ६२॥

अथ राजादेशात्तै रक्षापुरुषैस्तं नदीतीरे नीत्वा सुवर्णलक्षेण समं विवाहविधिना त्रिस्तनीं तस्मै दत्त्वा (१) जलयाने विधाय कैवर्ताः प्रोक्ताः—भोः! देशान्तरं नीत्वा कस्मिंश्चिदधिष्ठाने

लेह्यचोष्यादिभिर्भरिते सति प्राणिनाम्=जीवाना लज्जा=व्रीडा दुष्टकर्मण सकाशात्, स्नेह=प्रीति पुत्रादिषु, स्वरमधुरता=स्वरसौष्ठवं सुन्दरभाषणभङ्गिर्जनेष्विति शेष, बुद्धय=मतय कर्त्तव्येषु कर्मसु, यौवनश्री=यौवनस्य तारुण्यस्य श्रीः शोभा कान्तिरित्यर्थ, कान्तासङ्ग=कान्तया स्वप्रियया सह सङ्गम, स्वजनममता=स्वजनेषु स्वबन्धुषु कलत्रादिषु ममता स्वत्वबुद्धिर्नतु पररमणीषु, दु खहानि=दु खाना क्लेशाना हानिर्विनाश, विलास=खेलाकूर्दनादिर्मनोरञ्जनव्यापार अथवा सुखभोगाभिलाप, धर्म.=धृतिक्षमादिर्मन्वादिशास्त्रप्रतिपादितो वेदविहितो वा यागदानादिरूप, शास्त्रम्=हितानुशासकं वेदादि, सुरगुरुमति=सुरगुरुर्बृहस्पति तद्वत् मति कर्त्तव्याकर्त्तव्यविवेचनारूपा बुद्धि, शौचम्=बाह्याभ्यन्तरशुद्धि जलादिभि सत्यभाषणादिभिश्च, आचाराचिन्ता=सदाचारस्मृति तदनुष्ठानञ्च, एते सर्वेऽपि सञ्जायन्ते।

बुभुक्षया ( दारिद्र्येण ) पीडितानान्त्वेते गुणा सम्भवन्तोऽपि परिपालयितुमशक्या भवन्तीति भाव। मन्दाक्रान्तावृत्तम्॥ ६१॥

"अन्ध" इति—अन्धो वा, बधिर=श्रोत्रशक्तिविहीनो वा, अपि वा कुष्ठी=कुष्ठरोगी, अपि वा=अथवा—अन्त्यज=चण्डालादिः ताम्=तादृशी त्रिस्तनी मे=मम कन्या सलक्षाम्=लक्षमुद्रासहिता प्रतिगृह्णातु=विवाहविधिना स्वीकरोतु, तथा—विदेशग=विदेशगत स्यादित्यर्थ॥ ६२॥

(१) जलयाने=नौकायाम्। कैवर्ता=धीवरा नौकोपजीविन कर्णधारा इति यावत्।

ऽन्धः सपत्नीकः कुब्जकेन सह मोचनीयः। तथानुष्ठिते चिरं शमासाद्य कस्मिंश्चिदधिष्ठाने कैवर्तदर्शिते त्रयोऽपि मूल्येन गृहं प्राप्ताः सुखेन कालं नयन्ति स्म। केवलमन्धः पर्यङ्के सुप्तस्तिष्ठति। गृहव्यापारं मन्थरकः करोति। एवं गच्छता कालेन त्रिस्तन्याः कुब्जकेन सह (१) विकृतिः समपद्यत। अथवा साध्विदमुच्यते—

यदि स्याच्छीतलो वह्निश्चन्द्रमा दहनात्मकः।
सुस्वादः सागरः स्त्रीणां तत् सतीत्वं प्रजायते॥ ६३॥

अथान्येद्युस्त्रिस्तन्या मन्थरकोऽभिहितः—भोः! सुभग! यद्येषोऽन्धः (२) कथञ्चिद्व्यापाद्यते, तदावयोः सुखेन कालो याति। तदन्विष्यतां कुत्रचिद्विषम्, येनास्मै तत्प्रदाय सुखिनी भवामि। अन्यदा कुब्जकेन परिभ्रमता मृतः कृष्णसर्पः प्राप्तः। तं गृहीत्वा प्रहृष्टमना गृहमभ्येत्य तामाह—सुभगे! लब्धोऽयं कृष्णसर्पः। तदेनं खण्डशः कृत्वा (३) प्रभूतशुण्ठ्यादिभिः संस्कार्यास्मै विकलनेत्राय मत्स्यामिषं भणित्वा प्रयच्छ, येन द्राग्विनश्यति। यतोऽस्य मत्स्यामिषं सदा प्रियम्। एवमुक्त्वा मन्थरको बाह्ये गतः। सापि प्रदीप्ते वह्नौ कृष्णसर्पं

---

(१) विकृतिः=विकारः व्यभिचाररूप इत्यर्थः।

"यदि" इति—यदि नाम वह्निः=अग्निः शीतलः=शिशिरः, चन्द्रमाः=शशी वा दहनात्मकः=वह्निरूपः वह्निवद्दाहजनकः तथा सागरः=वारिधिः सुस्वादः=सुष्ठु अनायासेन पेयः स्यात्, तत्=तदा स्त्रीणाम्=योषाणामपि सतीत्वम् सतीभावः पतिव्रतात्वं प्रजायते=भवेदित्यर्थः। वह्न्यादीनां शैत्यादिवत् नारीणां सतीत्वमप्यसम्भवीति भावः। निदर्शनालङ्कारः॥ ६३॥

(२) कथञ्चित्=केनापि व्यापारेण। व्यापाद्यते=हन्यते। (३) प्रभूतेति—प्रभूतैः प्रचुरैः शुण्ठीप्रभृतिभिश्चूर्णीकृतैरित्यर्थः। संस्कार्य=पाचयित्वा। विकलनेत्राय=अन्धाय। मत्स्यामिषम्=मीनमांसम्। भणित्वा=कथयित्वा। प्रयच्छ=देहि भोजनवेलायामिति शेषः।

खण्डशः कृत्वा तक्रमादाय (१) गृहव्यापाराकुला तं विकलाक्षं सप्रश्रयमुवाच—आर्यपुत्र ! तवाभीष्टं मत्स्यमांसं समानीतम् यतस्त्वं सदैव तत् पृच्छसि। ते च मत्स्या वह्नौ पाचनाय तिष्ठन्ति। तद्यावदहं गृहकृत्यं करोमि तावत्त्वं (२) दर्वीमादाय क्षणमेकं तान् प्रचालय। सोऽपि तदाकर्ण्य हृष्टमनाः (३) सृक्कणी परिलिहन् द्रुतमुत्थाय दर्वीमादाय प्रमथितुमारब्धः। अथ तस्य मत्स्यान् मथ्नतो (४) विषगर्भवाष्पेण संस्पृष्टं नीलपटलं चक्षुर्भ्यामगलत्। असावप्यन्धो (५) वहुगुणं मन्यमानो विशेषान्नेत्राभ्यां वाष्पग्रहणमकरोत्। ततो लब्धदृष्टिर्जातो यावत् पश्यति तावत्तक्रमध्ये कृष्णसर्पखण्डानि केवलान्येवावलोकयति। ततोऽचिन्तयत्—अहो ! किमेतत् मम मत्स्यामिषं कथितमासीदनया। एतानि तु कृष्णसर्पखण्डानि। तत्तावद्विजानामि सम्यक् त्रिस्तन्याश्चेष्टितं किं मम वधोपायक्रमः कुब्जस्य वा। उताहो अन्यस्य वा कस्यचित्। एवं विचिन्त्य स्वाकारं (६) गूहन्नन्धवत्कर्म करोति यथा (७) पुरा। अत्रान्तरे कुब्जः समागत्य (८) निःशङ्कतयालिङ्गनचुम्बनादिभिस्त्रिस्तनीं (९) सेवितुमुपचक्रमे। सोऽप्यन्धस्तमवलोकयन्नपि यावन्न किंचिच्छस्त्रं पश्यति, तावत्कोपव्याकु-

---

(१) गृहव्यापाराकुला=गृहस्य व्यापारे भोजनरन्धनादौ आकुला व्यापृता। सप्रश्रयं=सविनयम्। (२)दर्वीम्=खजाकाम्, 'दर्वी' कम्बी खजाका चे'त्यमर। (३) सृक्कणी=ओष्ठप्रान्तभागौ। परिलिहन्=रसनया पुनः पुनः परिमार्जयन्। प्रमथितुम्=सञ्चालयितुम्। (४)विषगर्भवाष्पेण=विष गर्भे मध्ये यस्य तादृशेन वाष्पेण धूमविशेषेण। संस्पृष्टम्=संलग्नम्। नीलपटलम्=कालिमनिचय दृष्टेरावरकं यदित्यर्थः। (५) वहुगुणम्=प्रचुरगुणकरम्। (६) गूहन्=गोपायन्। (७) पुरा=पूर्ववदित्यर्थः। (८) नि शङ्कतया=निर्भीकतया। (९) सेवितुम्=रन्तुम्।

लमनाः पूर्ववच्छ्रयनं गत्वा कुब्जं सङ्गृह्य चरणाभ्यां (१) सामर्थ्यात् स्वमस्तकोपरि भ्रामयित्वा त्रिस्तनीं हृदये (२) व्यताडयत्। अथ कुब्जप्रहारेण तस्यास्तृतीयः स्तनो (३) उरसि प्रविष्टः। अथ बलान्मस्तकोपरि भ्रामणेन कुब्जः (४) प्राञ्जलतां गतः। अतोऽहं ब्रवीमि—"अन्धकः कुब्जकश्चैव" इति॥ सुवर्णसिद्धिराह—भोः! सत्यमेतत्। दैवानुकूलतया सर्वं कल्याणं सम्पद्यते। तथापि पुरुषेण (५) सतां वचनं कार्यम्। न पुनरेवमेव यो वर्तते स त्वामिव विनश्यति। तथा च—

एकोदराः पृथग्ग्रीवा अन्योन्यफलभक्षिणः।
असंहता विनश्यन्ति भारण्डा इव पक्षिणः॥ ६४॥

चक्रधर आह—कथमेतत्। सोऽब्रवीत्—

## कथा १३।

कस्मिंश्चित् सरोवरे भारण्डनामा पक्ष्येकोदरः पृथग्ग्रीवः प्रतिवसति स्म। तेन च समुद्रतीरे परिभ्रमता किञ्चित्फल(६)ममृतकल्पं तरङ्गाक्षिप्तं सम्प्राप्तम्। सोऽपि भक्षयन्निदमाह—अहो! बहूनि मयामृतप्रायाणि (७) समुद्रकल्लोलाहृ-

---

(१) सामर्थ्यात्=बलात्। (२) व्यताडयत्=विशेषेण अधिक दया परित्यज्येत्यर्थः, हतवान्। (३) उरसि=वक्षसि। (४) प्राञ्जलताम्=ऋजुताम्। गत =प्राप्त कुब्जदोषरहितोऽभूदित्यर्थ। (५) सता वचनम्="नैक शून्याटवीं गच्छेत्" इत्यादिरूप उपदेश प्रागुक्त। एतत्तत्त्वमग्रे स्फुटीभविष्यति।

"एकोदरः" इति—असहता = न संहताः मिलिता इति असंहता ऐक्यहीना इत्यर्थ, लोका इति शेष, एकोदरा =समानोदराः, पृथग्ग्रीवा =द्विमुखाः, किन्तु—अन्योन्यफलभक्षिण =परस्परफलखादनेच्छवः भारण्डा =एतन्नामानः पक्षिण =शकुनय इव विनश्यन्ति=नाशमुपयान्ति॥६४॥

(६) अमृततुल्यम्=सुधासदृशम्। तरङ्गाक्षिप्तम्=तरङ्गैर्लहरीभिर्वेलाम्प्रत्यानीतम्। (७) समुद्रेति—समुद्रस्य=सागरस्य कल्लोलैर्वीचिभिराहृतान्यानीतानि।

तानि फलानि भक्षितानि । परमपूर्वोऽस्यास्वादः । तत्किं (१) पारिजातहरिचन्दनतरुसम्भवम्। किं वा किञ्चिदमृतमयफलम् (२) अव्यक्तेनापि विधिनापतितम्। एवं तस्य ब्रुवतो द्वितीय-मुखेनाभिहितम्—भोः! यद्येवं तन्ममापि स्तोकं प्रयच्छ, येन जिह्वासौख्यमनुभवामि । ततो विहस्य प्रथमवक्त्रेणाभिहि-तम्—आवयोस्तावदेकमुदरम्, एका तृप्तिश्च भवति। ततः किं पृथग्भक्षितेन। वरमनेन (३) शेषेण प्रिया तोष्यते। एवम-भिधाय तेन शेषं भारण्ड्याः प्रदत्तम् । सापि तदास्वाद्य प्रहृ-ष्टतमा(४)ऽऽलिङ्गनचुम्बनसम्भावनानेकचाटुपरा बभूव। द्वितीयं मुखं तद्दिनादेव प्रभृति सोद्वेगं सविषादं च तिष्ठति। अथान्ये-द्युर्द्वितीयमुखेन विषफलं प्राप्तम् । तद् दृष्ट्वापरमाह—भो! (५) निस्त्रिंश! पुरुषाधम! निरपेक्ष! मया विषफलमासा-दितम्। तत्तवापमानाद्भक्षयामि । अपरेणाभिहितम्—मूर्ख! मा मैवं कुरु। एवं कृते द्वयोरपि विनाशो भविष्यति। अथैवं वदता तेन (६) अपमानेन फलं भक्षितम्। किं बहुना। द्वावपि विनष्टौ। अतोऽहं ब्रवीमि—"एकोदराः पृथग्ग्रीवाः" इति। चक्र-धर आह—सत्यमेतत्। त्वद्वचनमनाकर्ण्य त्वां परित्यज्य च एकाकिना चागच्छता मया दुःखमेतदनुभूयते, तद्गच्छ गृहम्।

---

(१) पारिजातेति—पारिजातो देवतरु, हरिचन्दनं मलयजवृक्ष तौ भव उत्पत्तिस्थान यस्य तत्तादृशम् । (२) अव्यक्तेन=अलक्षितेन । विधिना=दैवेन शुभेनादृष्टेनेत्यर्थः । आपतितम्=आपातितं प्रेषितमिति यावत्। (३) शेषेण=भुक्तावशिष्टेन। प्रिया=स्त्री भार्या भारण्डी। तोष्यते=प्रसन्नीक्रियते। (४) आलिङ्गनेति—आलिङ्गनमाश्लेष, चुम्बनम् वक्त्रसंयोगोऽधरपानादि, सम्भावनमादरपूर्विका दृष्टि, तान्यादीनि येषामेवम्भूता ये चाटव प्रिया व्यवहारास्तत्परा. तदभिमुखी बभूवेत्यर्थ । (५) निस्त्रिंश=दयाशून्य। निरपेक्ष!=परानपेक्षिन्!। (६) अपमानेन=स्वतिरस्कारहेतुना । अथवा—जाततिरस्कारेण ।

एवं श्रुत्वा सुवर्णसिद्धिस्तमनुज्ञाप्य स्वगृहम्प्रति निवृत्तः।

अथ ब्राह्मणी एवमुक्त्वा पुनः ब्राह्मणम् आह—यत् त्वयाऽपि अतिलुब्धेन न कृतं मद्वचः, तेनैव ईदृशी अवस्था उपागता। अतोऽहं ब्रवीमि—"अतिलोभो न कर्त्तव्यः" इत्यादि॥

तत् श्रुत्वा देवशर्मा कथयति—यस्य गृहे अशनजात किमपि नास्ति, तस्य जीविकाऽर्थं भिक्षाऽटनं न पुनरतिलोभकारणं भवितुमर्हति। त्वमेव अपरीक्षितकारिणी, येन चिरं पुत्रवत् स्निह्यमानं सुखप्रसुप्तस्य स्वपुत्रस्य कृष्णसर्पात् रक्षितारम्, अमुं नकुलं सविशेषमज्ञात्वैव सहसा विनाशयन्त्या त्वया अतीव अकार्य्यमनुष्ठितम्। सा तु तथाविधं भर्त्तृवाक्यं निशम्य अपरीक्षितकारितायाः दोषं विभाव्य च नकुलार्थं परं सन्तापमाययौ, तद्वधशोकेन च प्रमुक्तकण्ठं चिरमरुदत्। अतोऽस्माभिरुच्यते—"अपरीक्ष्य न कर्त्तव्यम्" इत्यादि॥

मणिभद्र आह—सत्यमेतत्, सम्यगुपादिष्टम् अत्रभवद्भिः, साम्प्रतमनुमन्यतामयं जनः स्वगृहगमनाय। ततो धर्माधिकारिभिरुक्तम्—"गच्छतु स्वगृहं भवान्" परमेकाकिना न गन्तव्यम्। उक्तं च—

एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात्।
एको न गच्छेदध्वानं नैकश्चार्थान् प्रचिन्तयेत्॥ ६५॥

---

"एक" इति-एक =एकाकी स्वादु=मधुर द्रव्य लड्डुकपेटादिकं न भुञ्जीत=नाश्नीयात्, सुप्तेषु=शयनेषु सत्सु एक न जागृयात्=जागरितो न भवेत्, एक = असहाय अध्वान=मार्ग न गच्छेत् एक सन् अर्थान्=अपेक्षितानवश्यकर्त्तव्यान् पदार्थान् न प्रचिन्तयेत्=नैव विचारयेत् किन्त्वपरेण केनापीष्टेन मित्रादिना सहैव मन्त्रणा कुर्यादित्यर्थ॥ ६५॥

अपि च—

अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः ।
कर्कटेन द्वितीयेन जीवितं परिरक्षितम् ॥ ६६ ॥

* सुवर्णसिद्धिराह—कथमेतत् । सोऽब्रवीत्—

## कथा १४ ।

कस्मिंश्चिदधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणः प्रतिवसति स्म । स च प्रयोजनवशाद् ग्रामे प्रस्थितः स्वमात्राभिहितः—यद्वत्स ! कथमेकाकी व्रजसि । तदन्विष्यतां कश्चिद् द्वितीयः । स आह—अम्ब ! मा भैषीः । (१) निरुपद्रवोऽयं मार्गः । कार्यवशादेकाकी गमिष्यामि । अथ तस्य तं निश्चयं ज्ञात्वा (२) समीपस्थवाप्याः सकाशात् कर्कटमादाय मात्राभिहितः—वत्स ! अवश्यं यदि गन्तव्यं तदेष कर्कटोऽपि सहायो भवतु । तदेनं गृहीत्वा गच्छ । सोऽपि मातुर्वचनादुभाभ्यां पाणिभ्यां तं सङ्गृह्य (३) कर्पूरपुटिकामध्ये निधाय पात्रमध्ये संस्थाप्य शीघ्रं प्रस्थितः । अथ गच्छन् (४) ग्रीष्मोष्मणा सन्तप्तः कञ्चिन्मार्गस्थं वृक्षमासाद्य तत्रैव प्रसुप्तः । अत्रान्तरे वृक्षकोटरान्निर्गत्य सर्पस्तत्समीपमागतः । सोऽपि (५) कर्पूरसुगन्धसहजप्रियत्वात्तं परित्यज्य वस्त्रं विदार्याभ्यन्तरगतां कर्पूरपुटिकामतिलौल्याद-

---

"अपी"ति—(यदि) मार्गे=वर्त्मनि कापुरुषोऽपि=शक्तिहीनोऽपि नर द्वितीय =सहाय स्यात् तदासौ क्षेमकारक =शुभकरो भवेदित्यर्थ । थाहि—द्वितीयेन=सहायभूतेन कर्कटेन=कुलीरेण ( कस्यचित् पान्थस्य ) -ीवितं परिरक्षितम्=भुजङ्गात्परित्रातमित्यर्थ· ॥६६॥

(१) निरुपद्रवः=विघ्नशून्य नि शङ्क इत्यर्थ । (२) समीपस्थवाप्या = निकटवर्त्तिन्या दीर्घिकाया· । कर्कटम्=कुलीरम् । आदाय=गृहीत्वा । "स्यात् कुलीर· कर्कटक·" इत्यमर । (३) कर्पूरपुटिकामध्ये=हिमवालुकापेटारिकामध्ये (४) ग्रीष्मोष्मणा=निदाघतापेन । (५) कर्पूरेति—कर्पूरस्य यो गन्ध सौरभं तत्र सहजप्रियत्वात् स्वाभाविकप्रीतिमत्त्वादित्यर्थ । तम्=ब्राह्मणम् ।

---

* "मणिभद्र आह—कथमेतत् । धर्माधिकारिणः प्रोचुः—" इति पाठान्तरम् ।

भक्षयत्। सोऽपि कर्कटस्तत्रैव स्थितः सन् सर्पप्राणानपाहरत्। ब्राह्मणोऽपि यावत्प्रबुद्धः पश्यति तावत् समीपे कृष्णसर्पो निजपार्श्वे कर्पूरपुटिकोपरि स्थितास्तिष्ठति। तं दृष्ट्वा व्यचिन्तयत्—कर्कटेनायं हत इति प्रसन्नो भूत्वाब्रवीत्—भोः! सत्यमभिहितं मम मात्रा यत्पुरुषेण कोऽपि सहायः कार्यः, नैकाकिना गन्तव्यम्। यतो मया (१) श्रद्धापूरितचेतसा तद्वचनमनुष्ठितम्, तेनाहं कर्कटेन सर्पव्यापादनाद्रक्षितः। अथवा साध्विदमुच्यते—

क्षीणः स्रवति शशी तनुवृद्धौ वर्धयति पाथसां नाथम्।
अन्ये विपदि सहाया धनिनां श्रियमनुभवन्त्यन्ये ॥ ६७ ॥

---

(१) श्रद्धेति—श्रद्धया पूरितं परिपूर्णं व्याप्तं चेतो यस्य तेन, मातृवचसि विश्वस्तान्तःकरणेनेत्यर्थः। तद्वचनम्=मातुर्वाक्यम्। अनुष्ठितम्=परिपालितम्। सर्पव्यापादनात्=सर्पकृतहननादित्यर्थः।

सहायस्य माहात्म्यं प्रतिपादयति—"क्षीण" इति—क्षीण=क्षयगत शशी=चन्द्र "चतुर्दश्यष्टमे यामे क्षीणो भवति चन्द्रमाः" इति वचनबलाद् यदा क्षीणोऽपि भवति चन्द्रस्तदापि तनुवृद्धौ=अर्थात् समुद्रस्य शरीरवृद्धिनिमित्तं स्रवति=सुधामयूखान् वर्षयति, अथ च—पाथसां नाथम्=समुद्रं वर्धयति=उच्छालयति, चन्द्रोदये सति समुद्र उच्छलितो भवतीति सर्वप्रसिद्धम्। तात्पर्यन्तु—क्षीणस्यापि चन्द्रमसः साहाय्यं विना समुद्रो न वर्द्धत इति।

उक्तमेवार्थं पुष्टीकरोति—धनिनाम्=आढ्यानां विपदि=आपत्तौ सम्प्राप्तायां सत्यां अन्ये=अपरे सहायाश्चेत् तदा अन्ये=परे धनिनः धनिनाम्=धनवतां श्रियम्=सम्पदम् अनुभवन्ति=भुञ्जते। धनवन्तोऽपि परस्परसाहाय्येनैव सुखिनो भवितुमर्हन्ति तस्मात् सुखसम्पत्त्यभिलाषिणः सर्वेऽपि परस्परसाहाय्येनैव वर्त्तेरन्निति भावः।

कस्मिंश्चिद् ग्रन्थे "क्षीणः स्रवति शरीरविवृद्ध्यै वर्धयति पयसां नाथम्" इत्येव पाठ उपलभ्यते क्लिष्टकल्पनया चार्थ आकृष्टः, सोऽयं पाठोऽस्माभिः छन्दोभङ्गादिदोषादुपेक्षितः। क्वचित्तु मूलपुस्तके "रविवृद्धौ" इति पाठः, सोऽप्ययुक्तार्थो भाति। अत्र पण्डिता प्रमाणम्। अस्मत्कृतोऽर्थस्तु "सुबोधिन्या" अनु

मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ ६८ ॥

एवमुक्त्वासौ ब्राह्मणो (१) यथाभिप्रेतं गतः। अतोस्माभिरुच्यते—"अपि कापुरुषो मार्गे" इति॥ एवं श्रुत्वा सुवर्णसिद्धिस्तमनुज्ञाप्य स्वगृहं प्रतिनिवृत्तः।*

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रकेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं समाप्तम्।

---

## समाप्तमिदं पञ्चतन्त्रकम्।

### शुभं भूयात्।

---

* सोऽपि मणिभद्रस्तेषामेतदुपदेशवचनमाकलय्यताननुज्ञाप्य केनचित्सहायेन स्वगृहं गत्वा सुखेन भोगं भुञ्जानश्चिरं तस्थौ" इति क्वचिदधिकः पाठः।

---

श्रद्धैव परमभीष्टसाधिका सुखोदर्का चेत्याह—"मन्त्रे" इति—मन्त्रे=वैदिके तान्त्रिके वा जप्ये, तीर्थे=हरिद्वारादौ पुण्ये क्षेत्रे, द्विजे=(वेदादिशास्त्रवेत्तरि) ब्राह्मणे, देवे=इन्द्रादिदेवतायाम्, दैवज्ञे=ज्योति शास्त्रविदि के, भेषजे=ब्राह्मयाद्यौषधे तथा गुरौ=पूजार्हे पित्रादौ विद्यादातरि च, =जनस्य यादृशी=यद्रूपा भावना=श्रद्धा आस्तिक्यबुद्धिरिति यावत् ति, तस्य तादृशी=तद्रूपैव सिद्धि =फलं भवतीत्यनुषङ्ग । श्रुतिरपि—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन ॥

( श्वेता० अ० ६, मं० २६ )

इति श्रद्धामूलां भक्तिमिष्टामाख्यातवतीति सूक्ष्मं निरीक्ष्यम्।

प्रकृते तु—"कर्कटोऽयं तवसाहाय्यं करिष्यती"ति मातुर्वचसि श्रद्धा कृत्वा क्षुद्रमपि कर्कटकं सह नीतवान् ब्राह्मणीपुत्र, तस्य च तथा गुरुवचसि श्रद्धावशादेव सर्पदंशात् कर्कटकेन रक्षा कृतेति फलितोऽर्थ ॥६८॥

(१) यथाभिप्रेतम्=स्वाभिलषितं स्थानमिति। शिवोम्।

## टीकारम्भसमाप्तिकालः

शुचौ मास्यसिते पक्षे चतुर्थ्यां बुधवासरे।
समारभ्य परेशस्य नामोच्चार्य शिवोमिति ॥ १ ॥
नवाष्टनवचन्द्रेब्दे वैक्रमे पार्थिवाभिधे।
तृतीयाया भृगौ शुभ्रे दले वर्षर्तुसंयुते ॥ २ ॥
"भल्ला" ज्ञात्या प्रसिद्धस्य "देवदत्तस्य" केतने।
बी. ए शास्त्रिपदस्येति शिष्यस्य मम धीमत. ॥ ३ ॥
स्थित्वा त्रिगर्तदेशेऽस्मिन् "धर्मसा (शा) ला" गरांधरे।
टीका पूरितवानस्मि पञ्चतन्त्रे **"सुबोधिनीम्"** ॥ ४ ॥
प्राज्ञचित्तप्रसादाय सेयं जीव्याच्चिरं बुधा।
विश्वेश्वरप्रसादेन विश्वेश्वरपदेऽर्पिता ॥ ५ ॥
पञ्चमे जार्जभूपेन्द्रे भारते सति शासति।
टीकेयं निर्मिता तेन "प्रीयन्तां पितृदेवता." ॥ ६ ॥

## सम्राजः प्रशस्ति

इन्द्रो वह्निः कुवेरो रविरथ वरुण संवहन्तो यदाज्ञा
यद्राज्ये राष्ट्रभागा नियमितदिशया संविविक्ता सुवद्धा.।
सोऽयं भूपालमौलि-प्रकरमणिगणो-द्घृष्ट-पादाब्जपीठ
जीव्यात्सम्राड् नितान्तं विहत-परवल पञ्चमो **जार्जभूपः** ॥

## टीकाकारस्यातिसङ्क्षिप्तः परिचय —

यस्य प्रसूर्विष्णुदेवी सतीधर्मपरायणा।
**देवीदासा**भिधस्तात स्मार्त्तकर्मविचक्षण ॥ ६ ॥
मातामहो महाविद्वान् **गङ्गारामे**ति विश्रुत।
अभूद्वेदान्तसिद्धान्ते तन्त्रशास्त्रे च पण्डित. ॥ ७ ॥
गुरुष्वनेकशास्त्रज्ञमुख्येषु बहुषु श्रुता (कृता)।
श्रद्धा न भिद्यते यस्य सदैवाव्यभिचारिणी ॥ ८ ॥

तेनेयं पूरिता टीका नानाग्रन्थकृता मया (विदा)।
सोऽयं गुरुजनस्यैव महो जागर्त्ति भूतले ॥ ९ ॥
यदि वात्र प्रमाद स्यात् पण्डिता शोधयन्तु तम्।
यतोहं विज्ञपादाब्जरेणुरस्मि सदाऽनघा ! ॥ १० ॥

**समाप्ति-मङ्गलम्—**

कुर्वन्नाद डमरुवरेणा नृत्यन् सन् गङ्गाभङ्गै प्लावितजूटकवृन्दो य ।
कामध्वंसी मुनिचेत.सु स्वा विद्या सञ्चार्यात्माराम पूर्ण पायान्न ॥११॥

**इति श्रीपण्डितदेवीदासतनुज-सतीविष्णुदेवी-गर्भज-
जैनन्यायविशारद-कवितार्किक-नृसिंहदेवशास्त्रि-
दर्शनाचार्यविरचितायां पञ्चतन्त्रस्य "सुबो-
धिनी" टीकायामपरीक्षितकारकं
नाम पञ्चमं तन्त्रम् ।**



# मध्यसिद्धान्त कौमुदी

## सटिप्पण

**टिप्पणकार**—व्याकरणाचार्य पं० श्रीधरानन्द जी शास्त्री, प्रोफेसर, ब्राह्ममहाविद्यालय, लाहौर। मूल्य १।।

आज तक जितनी भी इस पुस्तक पर टिप्पणियां हुई हैं, उन सब में से यह टिप्पण अतीव सरल, विस्तृत और सुगम है। टिप्पण क्या है एक प्रकार से टीका ही समझिए। दूसरी मध्यकौमुदियों से इसमें यह विशेषताएं हैं —

१ मूलपाठ को शुद्ध कर रखा गया है। अन्यत्र मूलपाठ अशुद्धि बहुल होने से अनेक स्थलों पर भ्रम पैदा कर देता है।

२ टिप्पणी को उपयोगी बनाया गया है, सरलता पर विशेष ध्यान रखा है। अनावश्यक अंश नहीं दिये गये।

३ प्रारम्भ में स्थान प्रयत्न-बोधक चक्र और प्रत्याहारों की तालिका सुगमता के लिए दे दी गई हैं।

४ उणादि प्रकरण को पाठ्यक्रम निरस्त होने के कारण मूलपाठ के मध्य से निकाल पृथक् रखा गया है।

५ भूमिका संक्षिप्त पर गवेषणापूर्ण दी गई है। उसमें कई ज्ञातव्य अंशों पर प्रकाश डाला गया है। संक्षिप्त होने पर भी विद्यार्थियों के बड़े काम की चीज है। अपर्याप्त नहीं है।

६ आवश्यकतानुसार गणपाठ भी सम्मिलित किया गया है।

७ विद्यार्थियों के लाभ के लिये परिशिष्ट के रूप में प्रश्न पत्र भी—जो कि यूनिवर्सिटी परीक्षा में आचुके हैं—जोड़ दिये हैं।

८ परीक्षा में किस प्रकार प्रश्नों का उत्तर लिखना चाहिये—विद्यार्थियों के हित को दृष्टि में रख—इस विषय पर काफी लिख दिया है—और लिखने का प्रकार उदाहरण देकर समझाया गया है।

---

**वृत्तरत्नाकर**—संस्कृत तथा भापा टीकाद्वय सहित। टीकाकार-कवितार्किक पं० नृसिंहदेव शास्त्री दर्शनाचार्य। यह टीकाए खास तौर पर विद्यार्थियो के उपयोग के लिए बनाई गई है, कई एक विद्वानों ने मुक्तकण्ठ से इन टीकाओं की प्रशंसा की है। आज तक जितने भी अन्य वृत्तरत्नाकर छप चुके हैं, उन सब को इसने मात कर दिया है। दाम १।)

## कर्मकाण्डग्रन्थाः

विवाह पद्धति मूलमात्र स्थूलाक्षर ॥=)

विवाहपद्धति निवाहूरामकृत-संस्कृतटीका १।)

यजुर्वेदी सन्ध्या मूलमात्र अति-स्थूलाक्षर ≡)

लग्नपत्रिका (साहेचिट्ठी) सचित्र तीन रंग ।)

एकोद्दिष्टश्राद्धपद्धति भापा टीका ≡)

पार्वण श्राद्ध पद्धति भा टी ।)

श्राद्धप्रश्नोत्तरावली भा टी ।=)

संस्कारभानु भा टी ।-)

विवाहांगचतुर्थी कर्म पद्धति भा टी ।)

श्लेपाशाति =)

} ।० तथा स्वस्त्ययन कलश प्रतिष्ठापूजाविधि -)

शिलास्थापन विधि =)

नवग्रहजपविधि =)

तुलादानपद्धति -)

वापीकूपतड़ागाराम पद्धति ≡)

संकल्प कल्पना ।=)

एकादशीव्रतोद्यापन विधि ≡)

सपिंडीनिर्णय भा टी ।)

नादीमुखश्राद्धपद्धति =)

गृहप्रतिष्ठा =)

कात्यायनीशाति-नवीन संस्करण ≡)

गोदानविधि =)

धर्मशाति-नवीन संस्करण ≡)

जन्मदिनकृत्य नवीन संस्करण ≡)

मघारेवत्यश्विनीशाति -)

शय्यादानपद्धति =)

वैशाखोद्यापनविधि =)

त्रिखल शाति =)

मूलर्क्षजननशाति =)

कार्त्तिकस्त्रीप्रसूता शाति नवीन संस्करण =)

ज्येष्ठाशाति =)

बृहत्पंचकशाति-नवीन संस्करण ॥)

दुर्गाहवनपद्धतिबलिदान विधि सहित।)

———

# छात्रोपयोगी पुस्तकें ।

**लोकोक्तिरत्नप्रभा**—इस में संस्कृत की १५०० ... का अपूर्व संग्रह है । प्रस्ताव लिखने के लिये अत्यन्त उपयोगी है ... लोकोक्तियों के प्रयोग से संस्कृत अवश्य मुहावरेदार ( ... ) हो जावेगी, जिससे प्रस्ताव और अनुवाद रोचक और ... ...

**पञ्चतन्त्रमूलमात्र**—बहुत मोटे निर्णयसागर टाइप में ... गया है । अतीव सुन्दर और पुष्ट कपड़े की जिल्द भी बंधी हुई है । ... अजिल्द का दाम

**लघुसिद्धान्त कौमुदी**—मूलमात्र सजिल्द ।=)

**लघुसिद्धान्त कौमुदी**—रणछोड़ शास्त्री कृत ... व्याख्या सहित १।)

**विक्रमोर्वशी**—संस्कृत तथा हिन्दी भाषा टीका सहित ... ।)

**कारिकावली सहित न्यायसिद्धान्त मुक्तावली**—... प्रश्नोत्तरावली समेत । टिप्पणाकार-कवितार्किक पं० नृसिंहदेव शास्त्री दर्शनाचार्य १।)

**विदग्धमुखमडन**—पं० परमेश्वरानन्द शास्त्री प्रिंसिपल, सनातन धर्म संस्कृत कालिज लाहौर कृत संस्कृत व्याख्या सहित । १)

**प्रस्ताव चन्द्रिका**—कवितार्किक पं० नृसिंहदेव जी दर्शनाचार्य कृत सजिल्द । १॥)

**साहित्यबिन्दु**—साहित्य विषय की प्रारम्भिक पुस्तक । पं० ... राम जी शास्त्रीकृत । ॥)

**न्यायसिद्धान्त मुक्तावली**—कवितार्किक पं० नृसिंहदेव शास्त्री दर्शनाचार्य कृत विस्तृत 'प्रभा' व्याख्या सहित । विद्यार्थियों के लिये यह व्याख्या विशेष सुगम और सरल है । सजिल्द ४॥)

**काव्यादर्श**—पं० नृसिंहदेव जी शास्त्री कृत संस्कृत व्याख्या सहित द्वितीय संस्करण छपता है